# BIBLIOTHECA INDICA;

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

---

THE

# SANHITA OF THE BLACK YAJUR VEDA,

WITH THE

COMMENTARY OF MÁDHAVA ÁCHÁRYA.

EDITED BY

E. B. COWELL, M.A.

VOL. II.

KÁṆḌA I. PRAPÁṬHAKA VIII.—KÁṆḌA II.






---

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1866.

# PREFACE.

THE first volume was edited under the joint superintendence of the late Dr. Röer and the present Editor, but for the second the latter is alone responsible. Dr. Röer's absence from Calcutta, and his subsequent return to Europe, necessarily obliged him to give up his connection with the work.

The same MSS. have been used for the text of the present which were used for that of the former volume, except in the commentary of the second Káṇḍa. Here I have been dependent on two only, *A. C.*,[1] as the MS. *B.* became so hopelessly corrupt that it was quite useless to consult it any longer.

It is not without a feeling of pain that I now sever my connection with this edition of the Black Yajur Veda, which I had hoped to have carried on to its completion. I turn away, like Virgil's ploughman,

> it tristis arator,
> Atque opere in medio defixa relinquit aratra;

but I rejoice to think that the unfinished task will be resumed under other and, I trust, more fortunate auspices; and that the Asiatic Society of Bengal will still have the glory of perpetuating by the press this curious monument of the old Hindú world.

E. B. COWELL.

LONDON, *Aug.* 10, 1866.

[1] I may add here that I subsequently discovered that the several portions of the MSS. *C.* and *D.* had been, by accident, intermixed, and that it is *D.*, and not *C.*, which is imperfect in the first Káṇḍa. (see Pref. Vol. I.)

# INDEX TO THE SECOND VOLUME.

THE FIRST KÁṆḌA OF THE TAITTIRÍYA SANHITÁ.
(*Continued*).

*Prapáṭhaka* VIII.

THE SECOND KÁṆḌA.

*Prapáṭhaka* I.



*Prapáṭhaka* II.



*Prapáṭhaka* III.



*Prapáṭhaka* IV.



*Prapáṭhaka* V.

*Dárśyam Bráhmaṇam.*

*Prapáṭhaka* VI.

*Dárśyam Bráhmaṇam* (*continued.*)

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठा | पङ्क्तिः |
|---|---|---|---|
| दृध्यर्षभः | दृध्यृषभः * | १ | ९ |
| ऽभुञ्जन्तः | भुञ्जन्तः | २५ | ७ |
| भुञ्जन्तः | ऽभुञ्जन्तः | २५ | ८ |
| धूपायोज्वरति | धूपायज्वरति | ८४ | १९ |
| शीर्ष्णीः ः | शीर्ष्णीः | २९७ | १० |

* एकस्मिन्नेव पुस्तके शुद्धः पाठो दृश्यते।

श्रीवेदव्यासाय नमः।

## अथ तैत्तिरीयसंहिताभाष्ये

### प्रथमकाण्डे ऽष्टमप्रपाठकः।



हरिः ॐ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तन्नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा वीहि स्वाहाहुतिं जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहा नमो य इदं चकारादित्यं चरुं निर्वपति वरो दक्षिणाग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाग्नीषोमीयं ॥ १ ॥

एकादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणाग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथ-

मजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वा
दक्षिणा सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गा
दक्षिणा ॥ २ ॥

अग्नीषोमीयं चतुस्त्रिꣳशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपा
प्रथमोऽनुवाकः ॥ * ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
प्रपाठकेऽथाष्टमेऽस्मिन् राजसूयो निगद्यते।
द्वाविंशत्यनुवाकेषु विंशत्या राजसूयके ॥
अनेकानि प्रधानानि कर्माणि विहितान्यथ।
द्वाभ्यां सौत्रामणीमन्त्राः काम्या याज्याश्च वर्णिताः
अष्टमे मन्त्रकाण्डस्थे कर्मणां बहुलत्वतः।
तत्तत्सन्निधये प्रोक्ता मन्त्रा विधिपुरःसराः ॥
अनूद्य तान् विधीनर्थवादो ब्राह्मण ईरितः।
सम्प्रदायविदोऽतोऽत्र ब्राह्मणद्वयमूचिरे ॥
ब्राह्मणं मन्त्रकाण्डस्थविधिजातमितीरितं।
अनुब्राह्मणमन्यत्तु कथितं सार्थवादकं ॥

तत्र प्रथमानुवाके प्रथमं तावद् ब्राह्मणेन कर्मद्वयं वि

यते “अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तन्नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा” इति। चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिदेवताऽनुमतिः, अमावास्या सिनीवाली पौर्णमास्यनुमतिरिति श्रुतेः। कलाहीने सानुमतिः पूर्णे राका निशाकरे इत्यभिधानात्। सा चानुमतिरत्र देवता। पुरोडाशो द्रव्यमित्येतदेकं कर्म, दक्षिणाभिधानेन वक्ष्यमाणेभ्यः कर्मभ्यो भिन्नाधिकारावगमात्। अस्मिन् कर्मणि पुरोडाशार्थं तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याधातुमधःस्थापितायाः शम्यायाः पश्चाद्ये तण्डुलपिष्टलेशा अवशीयन्ते अधःपतन्ति तल्लेशजातं द्रव्यं निर्ऋतिदेवताकं तदिदमपरं कर्म, पृथग् दक्षिणाभिधानात्। कृष्णं वासोऽत्र दक्षिणा, तच्च कृष्णतूषं कृष्णदशान्तं। केषाञ्चिद्वस्त्राणां वैचित्र्याय दशाभागमुपेक्ष्य मध्यमभाग एव काषायहरिद्रादिभीरञ्जितो भवति। तन्मा भूदिति कृष्णतूषत्वेन विशेष्यते। एतस्मिन् मुख्ये ब्राह्मणे प्रधानं कर्म विहितं। अनुब्राह्मणन्तु ग्रन्थान्तरे प्रथमकाण्डे षष्ठसप्तमाष्टमप्रपाठकरूपं। तत्र षष्ठप्रपाठकस्यादौ पूर्वोदाहृतं कर्मविधिमनूद्य प्रशंसति “अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति। ये प्रत्यञ्चः शम्याया अवशीयन्ते तन्नैर्ऋतमेककपालं। इयं वा अनुमतिः। इयं निर्ऋतिः” (ब्रा०१का०६प्र०१अ०) इति। भूमिर्द्विविधा शालिगोधूमादिसर्वसस्याढ्या तदयोग्या वा, तत्राद्यभूमिरूपानुमतिर्द्वितीयभूमिरूपा निर्ऋतिः। पश्चा-

श्चिद्गस्य नैर्ऋतस्यानुमतादुत्तरकाले न्यायप्राप्तं प्रधानयाग-प्रचारं बाधितुं पूर्वकालं विधत्ते "नैर्ऋतेन पूर्वेण प्रचरति। पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते" (ब्रा०) इति। लोके रुग्णानां पुरुषाणां अनिष्टं रोगं प्रथमं निवार्य पश्चा-दिष्टा शरीरपुष्टिः सम्पाद्यते, तद्वदत्रापि पाप्मानं प्रतिकूलां निर्ऋतिं प्रथमतो भागदानेन निवारयति। विधिवाक्यगतं कपालैक्यमनूद्य प्रशंसति "एककपालो भवति। एकधैव निर्ऋतिं निरवदयते" (ब्रा०) इति। एकधैवैकेनैव प्रयत्नेन, कपालबाहुल्ये हि प्रयत्नबाहुल्यं प्रसज्येतेति। तत्त्विदमानु-मतनैर्ऋतादिकं अन्वारम्भणीयास्थानीयात् पवित्राख्यादग्नि-ष्टोमादूर्द्धमनुष्ठेयं। तथाचापस्तम्ब आह 'राजा स्वर्गकामो राजसूयेन यजेत गवां शतसहस्रं दक्षिणाग्निष्टोमः पञ्चाप-वर्गः प्रथममहः, पञ्च सहस्राणि पवित्रे ददाति त्रिंशतमभि-षेचनीये त्रिंशतं दशपेये दश केशवपनीये विंशतिं व्युष्टिद्वि-रात्रे पञ्च क्षत्रस्य धृतावपि वा चत्वार्यभिषेचनीये प्रतिसह-स्राणीतराण्यहानि षष्टिं शतानि सहस्राणि ददाति' इति। बह्वृचब्राह्मणं भवति तथा दक्षिणा अतिनयेद्यथास्याहानि समकालानि स्युः। शेषमनुदिशति 'श्वोभूत आनुमतादिभिर-ष्टाभिरन्वहं यजेत त्रिंक्तानुमतं पश्चादुत्तरतश्च व्यवशातयति ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालं' इति। 'अत्र च आनुमतमासाद्य नैर्ऋतेन प्रचरति' इति। बोधायनो-ऽप्येतदेव विशदयति 'राजसूयेन यक्ष्यमाणो भवति पुरस्तात्

फाल्गुण्यै पौर्णमास्यै चैत्र्यै वा पौर्णमास्या अमावास्येन हवि-षेष्ट्वा दीक्षते तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः सन्तिष्ठत एष प्रायणीयोऽग्निष्टोमः चतुष्टोमः सहस्रदक्षिण उदवसनीयान्तोऽथाष्टमे ऽन्वानुमतं निर्वपति हविः पेष्यै प्रय-च्छन्नाह प्राचश्च प्रतीचश्च व्यवघ्रातयेति ये प्राञ्चः शम्या-या अवशीयन्ते तानध्वर्युः समोप्य संयुत्यानुमतं श्रपयति अथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान् प्रतिप्रस्थाता समोप्य संयुत्य नैर्ऋतं श्रपयति' इति च। प्रधानकर्ममात्राभिधा-यकेन मुख्यब्राह्मणेनोपेते प्रकृते मन्त्रकाण्डे नैर्ऋतयागविधि-सन्निधौ वीहीत्यादयस्त्रयो मन्त्रा आम्नातास्तेषां विनियोगं बोधायन आह 'गार्हपत्ये स्रुवाहुतिं जुहोति "वीहि स्वा-हाहुतिं जुषाणः" इति। अथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणं स्यात् भवति प्रदरो वा। तदेतदेकोल्मुकमुपसमाधायाङ्गुष्ठाभ्यां परिगृह्य नैर्ऋतं जुहो-ति "एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहसः" स्वाहेति। अत्र कृष्णं वासः कृष्णतूषं निदधाति। अथापो व्यतिषिच्य पराङ् पात्रं निदधात्यनवेक्षमाणा आयन्त्यथ हस्तपादान् प्रक्षाल्येतेनैव पथा यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति "स्वाहा नमो य इदं चकार" इति। अथानुमतेन सञ्स्थां करोति धेनुं ददाति' इति। हे गार्हपत्य स्वाहा तुभ्यं दत्तामाहुतिं जुषाणः सेवमानो वीहि दक्षिणां दिशं जिगमिषुभिरस्माभिर्विगतो भव मास्मानन्वायाय बाधिष्ठाः।

कृत्स्नाङ्गविधायके सार्थवादेऽनुब्राह्मणे यथोक्ताहुतिविधिर-न्वयव्यतिरेकाभ्यामुन्नीयते "यदहुत्वा गार्हपत्य ईयुः। रुद्रो भूत्वाग्निरनूत्थाय*। अध्वर्युञ्च यजमानञ्च हन्यात्। वीहि स्वाहाहुतिं जुषाण इत्याह। आहुत्यैवैनꣳ शमयति" (ब्रा०) यत् यदि रुद्रः क्रूरदेवः। रुद्रो वै क्रूर इति श्रुतेः। "नार्ति-मार्च्छत्यध्वर्युर्न यजमानः" (ब्रा०) इति। अध्वर्युयजमानयो-रार्तिनिवारणाय जुहुयादित्यर्थः। दक्षिणाग्नेरुल्मुकनयनं विधत्ते "एकोल्मुकेन यन्ति। तद्धि निर्ऋत्यै भागधेयं" (ब्रा०) इति। उल्मुकेन युक्ता इत्यध्याहारः, निर्ऋतेरेकोल्मुकप्रियत्व-मर्थवादान्तरगतं हिशब्देन सूच्यते। दक्षिणपश्चिमयोरवा-न्तरदेशमङ्गुलिनिर्देशेन विधत्ते "इमां दिशं यन्ति। एषा वै निर्ऋत्यै दिक्। स्वायामेव दिशि निर्ऋतिं निरवदयते" (ब्रा०) इति। नीतस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते "स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वै निर्ऋत्या आय-तनं। स्व एवायतने निर्ऋतिं निरवदयते" (ब्रा०) इति। इरिणमूषरक्षेत्रं, तच्च स्वकृतं स्वतःसिद्धं न तु यतः कुतश्चिदा-दायोषाः प्रक्षिप्ताः। प्रदरः स्वतःसिद्धं भूच्छिद्रं। द्वितीयमन्त्र-स्यायमर्थः। हे निर्ऋते पापदेवते एष एककपालपुरोडाशस्तव भाग', हे भूते स्वकीयभागे परितोषेणास्मदीयैश्वर्यहेतोः त्वमिदानीं हविषत्यसि। अत इमं यजमानमंहसो दारिद्र्य-प्रदात् पापात् मुञ्च। अत्र स्वाहाकारो बोधायनेनाध्याहृतः।

* अनूत्थायेति पाठान्तरः।

निर्ऋतिमुद्दिश्य प्रत्यक्षमेव भागं समर्पयितुमेतच्छब्द इत्यभिप्रेत्य व्याचष्टे "एष ते निर्ऋते भाग इत्याह। निर्दिशत्येवैनां" (ब्रा०) इति। भूतिशब्देन निर्ऋतिपरामर्शस्याभिप्रायमाह "भूते हविष्मत्यसीत्याह। भूतिमेवोपावर्तते" (ब्रा०) इति। प्राप्नोतीत्यर्थः। मन्त्रसामर्थ्यात् सर्वथा मुञ्चतीत्यमुमभिप्रायं दर्शयति "मुञ्चेममꣳहस इत्याह। अꣳहस एवैनं मुञ्चति" (ब्रा०) इति। चोदकप्राप्तं जुह्वा होममपवदितुं विधत्ते "अङ्गुष्ठाभ्यां जुहोति। अन्तत एव निर्ऋतिं निरवदयते" (ब्रा०) इति। अन्तत एव हस्ताग्रेणैव निर्ऋतिमपसारितवान् भवति। मुख्यब्राह्मणे विहितां दक्षिणां प्रशंसति "कृष्णं वासः कृष्णतूषं दक्षिणा। एतद्वै निर्ऋत्यै रूपं। रूपेणैव निर्ऋतिं निरवदयते" (ब्रा०) इति। राक्षसजातेः पापरूपाया निर्ऋतेर्देहः कृष्णवर्णः। पृष्ठभागदर्शनरहितं प्रत्यागमनं विधत्ते "अप्रतीक्षमायन्ति। निर्ऋत्या अन्तर्हित्यै" (ब्रा०) इति। अदर्शनायेत्यर्थः। तृतीयमन्त्रस्यायमर्थः। यो गार्हपत्य इदमस्माभिर्वो होतिशब्देन प्रार्थितमनुष्ठानं तथैव चकार तस्मै स्वाहा हविर्दत्तं नमस्कारश्च कृतः। विधत्ते "स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति। आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते" (ब्रा०) इति। नैर्ऋतप्रचारादूर्ध्वं लब्धावसरस्यानुमतहविषः प्रचारं विधत्ते "आनुमतेन प्रचरति। इयं वा अनुमतिः। इयमेवास्मै राज्यमनुमन्यते" (ब्रा०) इति। सर्वसख्याख्यायां भूमावयमनुमतिशब्दोऽन्वर्थ इत्यभिप्रायः। 'नवस्तुति-

कायां गोर्दानं प्रशंसति "धेनुर्दक्षिणा। इमामेव धेनुं कुरुते" (ब्रा०) इति। इमामेवानुमतिरूपां भूमिमेव। आनुमतादिभिरष्टाभिरिति यदुदाहृतं तत्रैकस्मिन् दिनेऽनुष्ठितादानुमतादन्यान् क्रमेण दिनान्तरेष्वनुष्ठेयानादित्यादीन् सप्त मुख्यान् यागान् विधत्ते "आदित्यं चरुं निर्वपति वरो दक्षिणाग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाग्नीषोमीयमेकादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणाग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा" इति। गौर्वै वर इति सूत्रकारेणोदाहृतत्वात् वरो गौः, वही भारवाही बलीवर्दः, ऋषभः सेचनसमर्थः षण्डः। आग्नेयैन्द्राभ्यां हविर्भ्यामुपेत एको यागः। ऐन्द्राग्नवैश्वदेवसौम्यैस्त्रिभिर्हविर्भिर्युक्त आग्रयणरूप एक एव यागः। सरस्वतीसरस्वद्देवताभ्यां हविर्भ्यां युक्तो याग एकः। तदेवमादित्यादयः सप्त सम्पद्यन्ते। अदितिदेवताकं कर्म प्रशंसति "आदित्यं चरुं निर्वपति। उभयीष्वेव प्रजास्वभिषिच्यते। दैवीषु च मानुषीषु च" (ब्रा०) इति। अनुमतिर्मानुषभूमिः, अत एव राज्यमनुमन्यत इत्युक्तं भवति। अदितिर्देवभूमिरित्यभिप्रेत्य दैवीषु प्रजास्वभिषेकं दर्शयति। अतः पूर्वराज्येन सह समुच्चित्योभयीष्वित्युच्यते। श्रेष्ठस्य गोर्दानं प्रशंसति "वरो दक्षिणा। वरो हि राज्यꣳ समृद्ध्यै" (ब्रा०) इति। वरः श्रेष्ठो

गोः तस्य राजगृहार्हत्वात् राजत्वम्। अग्निं विष्णुञ्च पृथक् प्रशंसति "आग्नावैष्णवमेकादशकपालं निर्वपति। अग्निः सर्वा देवताः। विष्णुर्यज्ञः। देवताश्चैव यज्ञञ्चावरुन्धे" (ब्रा०) इति। अग्नेः सर्वदेवतारूपत्वमन्यत्रोपपादितं। 'ते देवा अग्नौ तनूः सन्न्यदधत। तस्मादाहुरग्निः सर्वा देवताः' इति। पुनरप्यन्यत्राम्नातं 'ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः' इति। फलव्यापित्वाद्यज्ञस्य विष्णुत्वं। अग्नेर्विष्णोश्च प्रीतिकरं वहित्वं वामनत्वञ्च दर्शयति "वामनो वही दक्षिणा। यद्वही। तेनाग्नेयः। यद्वामनः। तेन वैष्णवः समृद्ध्यै" (ब्रा०) इति। अग्नीषोमीयस्य वैरिघातित्वं याजमानमन्त्रब्राह्मणयोर्वृत्रवधब्राह्मणे च प्रसिद्धमित्यभिप्रेत्याह "अग्नीषोमीयमेकादशकपालं निर्वपति। अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति। यदग्नीषोमीयमेकादशकपालं निर्वपति। वार्त्रघ्नमेव विजित्यै" (ब्रा०) इति। तत्कर्म शत्रुघ्नमेव भूत्वा विजयाय पर्याप्तं भवति। हिरण्यस्य समृद्धिहेतुत्वं लोकप्रसिद्धमेव दर्शयति "हिरण्यं दक्षिणा समृद्ध्यै" (ब्रा०) इति। मुख्यब्राह्मणगतेनैन्द्रेण सह विकल्पितमैन्द्राग्नं प्रशंसति "इन्द्रो वृत्रꣳ हत्वा। देवताभिश्चेन्द्रियेण च व्यार्ध्यत। स एतमैन्द्राग्नमेकादशकपालमपश्यत्। तं निरवपत्। तेन वै स देवताश्चेन्द्रियञ्चावारुन्धे" (ब्रा०) इति। व्यार्ध्यत वृद्धो वियुक्तोऽभूत्। विधत्ते "यदैन्द्राग्नमेकादशकपालं निर्वपति। देवताश्चैव तेनेन्द्रियञ्च यजमानोऽवरुन्धे" (ब्रा०) इति। देवद्वयप्रीत्यर्थं गुणद्वयमित्येतद्दर्शयति "ऋषभो वही

दक्षिणा । यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै"(ब्रा० इति । एकस्मिन् यागे विहितं हविर्द्वयं गोगतं गुणद्वयञ्च पृथक् प्रशंसति "आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि यदाग्नेयो भवति । अग्निर्वै यज्ञमुखं । यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते । यदैन्द्रं दधि । इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै" (ब्रा० इति । अग्निमन्तरेण यज्ञस्याप्रवृत्तेरग्नेर्यज्ञमुखत्वं, तादृशाग्नेः प्रथमहविःप्रदानेन यागस्यादावेव समृद्धिं धृतवान् भवति हविर्द्वये दक्षिणाद्वये श्रूयमाणेऽपि कर्मैकत्वमिद्ध्यर्थमाग्रयणवतीमङ्गरूपां विधातुं प्रस्तौति "यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन्" (ब्रा०) इति । यावत्य ओषधीनां सम्बन्धिन्य इति शेषः । विधत्ते "आग्रयणं भवति हुताद्याय । यजमानस्यापराभवाय" (ब्रा०) इति । तस्मिन मन्त्रे स्थितस्यैन्द्राग्नस्योपाख्यानेन जयहेतुत्वं दर्शयति "देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयतां । तावेतमैन्द्राग्नं द्वादशकपालं निरवृणातां । यदैन्द्राग्नो भवत्युज्जित्यै" (ब्रा० इति । मासमामान्येन कपालसङ्ख्यां प्रशंसति "द्वादशकपालो भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे" (ब्रा०) इति । वैश्वदेवमन्नं रुचिहेतुरित्येतद्दर्शयति "वैश्वदेवश्चरुर्भवति । वैश्वदेवं वा अन्नं । अन्नमेवास्मै स्वदयति" (ब्रा०) इति । प्रथमजस्य जनिष्यमाणवत्सापेक्षया समृद्धिहेतुत्वमित्याह "प्रथमजो वत्सो दक्षिणा समृद्ध्यै" (ब्रा०) इति । तृतीय-

हविषः सोमदेवतायाः खीकारे कारणमाह "सैाम्यꣳ श्यामाकं चरुं निर्वपति। सोमो वा अकृष्टपच्यस्य राजा। अकृष्टपच्यमेवास्मै स्वदयति" (ब्रा०) इति। प्रतिग्रहमन्त्रे सोमाय वास इति श्रुतिमनुसन्धाय दक्षिणां प्रशंसति "वासो दक्षिणा। सैाम्यꣳ हि देवतया वासः समृद्ध्यै" (ब्रा०) इति। समृद्धिहेतुत्वेन सरस्वतीसरस्वतोः चरुमिथुनदक्षिणाश्च प्रशंसति "सरस्वत्यै चरुं निर्वपति। सरस्वते चरुं। मिथुनमेवावरुन्धे। मिथुनैा गावैा दक्षिणा समृद्ध्यै" (ब्रा०) इति। अत्र द्रव्यदेवतासम्बन्धानामष्टभ्योऽधिकत्वाद् यागेष्वप्याधिक्यशङ्काभ्रमवारणायाष्टसङ्ख्यां विधातुं प्रस्तौति "एति वा एष यज्ञमुखादृद्ध्याः। योऽग्नेर्देवताया एति" (ब्रा०) इति। एति पृथग्भवत्यपगच्छतीत्यर्थः। वक्ष्यमाणप्रकारेणाग्नेरष्टत्वसङ्ख्यात्मकत्वात् तत्सङ्ख्याया अपगम एवाग्निसकाशादपगमः, योऽग्नेरपगच्छति स यज्ञमुखाद्यज्ञप्रारम्भादृद्ध्या यज्ञसमाप्तेश्चापगच्छति। विधत्ते "अष्टावेतानि हवीꣳषि भवन्ति। अष्टाक्षरा गायत्री। गायत्रोऽग्निः। तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति" (ब्रा०) इति। गायत्र्या अग्नेश्च मुखजत्वेन सहोत्पन्नत्वलक्षणः सम्बन्धः। तेनैव तेषां हविःशब्दवाच्यानां कर्मणामष्टत्वेन यज्ञप्रारम्भसमाप्तिभ्यामग्निदेवतायाश्च नापगच्छति।

तत्र विधिविवेकसहितो विनियोगसङ्ग्रहः।

"आद्दावानुमतं तस्य मध्ये नैर्ऋतमत्र च।
वीहीत्याद्यास्तयो मन्त्रा विनियोगस्तु वर्ण्यते॥
वीह्येष नम इत्यग्निप्रदराग्निषु हूयते।

सहैवानुमतेनाष्टौ यागाः प्रथम ईरिताः॥ इति।

अथ मीमांसा। चतुर्थाध्यायस्य चतुर्थपादे चिन्तितं।

"राजसूयेऽनुमत्यादि देवनादि च, ते उभे।

मुख्ये उतैकमुख्यत्वं स्यादाद्यः प्रक्रियैक्यतः॥

यागानां राजसूयत्वादङ्गित्वं फलवत्त्वतः।

देवनाद्यफलं यत्तदङ्गं फलवतो यजेः॥

राजसूयप्रकरणे यागरूपा अनुमत्यादयो बह्व्य इष्टयः श्रुताः। अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति। नैर्ऋतमेककपालं। आदित्यं चरुं निर्वपति। आग्नावैष्णवमेकादशकपालमित्यादयः। यथैता इष्टयः तथा पशवोऽपि श्रुताः। आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीमिति। मल्हा मणिला गले स्तनयुक्तेत्यर्थः। तस्या अदितिर्देवता। पृश्निरल्पतनुः। तस्या मरुतो देवताः। यावता वयसा वर्षत्रयरूपेण पृष्ठे भारं वोढुं शक्तिर्भवति तावद्वयस्का पष्ठौही। एवमभिषेचनीयादयः सोमयागाः श्रुताः। तथा वल्मीकवपायां होम इत्यादयो दर्विहोमाः श्रुताः। यथैत इष्टिपशुसोमदर्विहोमाश्चतुर्विधा यागरूपा एवमयागरूपा अपि द्यूतादयः श्रुताः पष्ठौहीं दीव्यति अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेफमाख्यापयत इत्येवमादयः। तत्र यागा यथा मुख्याः तथा देवनादीनामपि मुख्यत्वं युक्तं प्रकरणपाठस्योभयत्रसमानत्वादिति प्राप्ते ब्रूमः। राजा स्वाराज्यकामो राजसूयेन यजेतेत्यत्राख्यातवाच्यायां भावनायां धातुवाच्यो यागः करणं राजसूय-

शब्दस्याप्रसिद्धार्थत्वाद् यागसामानाधिकरण्येन तन्नामधेयं भवति। तथा सति राजसूयेन यागेन स्वाराज्यं भावयेदिति वाक्यार्थपर्यवसानात्। अनुमत्यादीनां यागानामेव फलवत्त्वादङ्गित्वं तत्सन्निधौ श्रूयमाणमफलं देवनादिकं यागाङ्गं।

दशमाध्यायस्य प्रथमपादे चिन्तितं।

"सा किमस्त्यनुमत्यादौ न वाऽस्त्यङ्गिन्युपक्रमात्।
सङ्घस्योपक्रमो नेष्टौ द्वारलोपान्न सा भवेत्"॥

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयो बह्व्यो विहितास्तासु आरम्भणीयास्ति न वेति सन्देहः। दीक्षणीयादिवत् अनुमत्यादीनामन्याङ्गत्वाभावात् सोमयागवत् सर्वासामङ्गित्वेनोपक्रमसम्भवात् तद्द्वारेणारम्भणीयास्तीति पूर्वपक्षः। यद्यप्यङ्गिभूता अनुमत्यादयस्तथाप्येकैकस्या इष्टेः पृथगारम्भो नास्ति अन्यथा प्रधानेषु आग्नेयादिष्वन्वारम्भणीयायाः षट्कृत्वोऽनुष्ठानं प्रसज्येत। अथोच्यते प्रधानानां षण्णामाग्नेयादीनां सङ्घस्य दर्शपूर्णमासेष्टित्वात् तस्यैक आरम्भ इति। तर्ह्यत्रापीष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां सङ्घस्य राजसूयत्वात् सङ्घस्योपक्रमोऽस्तु, न चासौ सङ्घो दर्शपूर्णमासविकृतिर्येन तत्रारम्भणीयां शङ्केत। अस्ति चात्रापरः सर्वारम्भार्थो यागः, अग्निष्टोममग्रे ज्योतिष्टोममाहरतीति। ज्योतिष्टोमावान्तरसंस्थाभेदरूपस्य अग्निष्टोमस्याम्नातत्वात् तस्मादनुमत्यादिष्विष्टिषु आरम्भद्वारलोपात् सारम्भणीया न भवेत्।

तत्रैव तृतीयपादेऽन्यच्चिन्तितं।

"वासोवत्सं समुच्चेयमन्वाहार्येण वा न वा।
अविरोधात् समुच्चेयं न कार्य्यैक्याद्विरोधतः" ॥

आग्रयणे श्रूयते 'वासो दक्षिणा वत्सः प्रथमजो दक्षिणा' इति। तदेतत्प्राकृतेनान्वाहार्येण सह विरोधाभावात् समुच्चीयत इति मन्दः पूर्वपक्षः। एककार्यत्वेन विरोधित्वान्न समुच्चयः किन्तु बाध इति राद्धान्तः।

अत्रैवान्यच्चिन्तितं।

"अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथ वा।
न तद्धर्मत्वतो मैवं साधनत्वप्रयुक्तितः" ॥

सन्त्यन्वाहार्यधर्मास्तान् कल्पसूत्रकार उदाजहार 'दक्षिणसद्म उपहर्तवै' इति सम्प्रेष्यति। ये ब्राह्मणा उत्तरतस्तान् यजमान आह 'दक्षिणत एत' इति तेभ्योऽन्वाहार्यं ददाति 'ब्राह्मणा अयं व ओदनः' इति। प्रतिगृह्णतः 'उत्तरतः परीत' इति सम्प्रेष्यति। सोऽयं धर्मो वासोवत्से न कार्यस्तस्यान्वाहार्यनिमित्तत्वात्। मैवं। अन्वाहार्यस्य दक्षिणारूपत्वेनानतिसाधनत्वप्रयुक्त्या तद्धर्माः क्रियन्ते। तत्साधनत्वं वासोवत्सेऽपि समानं तस्मादत्रापि सन्ति ते धर्माः।

अत्रैवान्यच्चिन्तितं।

"पाकोऽस्ति नो वा वत्से स्यादन्वाहार्यस्य दर्शनात्।
न वत्सनाशाद्श्रौती दक्षिणा मांसदानतः" ॥

अन्वाहार्ये पाकोऽस्ति पूर्वन्यायेन तद्धर्मातिदेशात् वत्सेऽपि

पाकः स्यादिति चेत् न वस्त्रनाशप्रसङ्गात्। अस्त्विति चेत् न, तथा सति मांसदानेन श्रुतहान्यश्रुतकल्पने प्रसज्येयातां तस्मान्नास्ति वस्त्रपाकः।

तत्रैवान्यच्चिन्तितं।

"वाससोऽस्ति न वा पाको विनाशाभाववतोऽस्त्यसौ।
वैयर्थ्यादप्यशक्यत्वात् पाको वाससि नोचितः" ॥

वासस उष्णोदकभाण्डप्रक्षेपेण वस्त्रस्येव विनाशो नास्ति। तस्मादन्वाहार्यवत्पाकोऽस्तीति चेत्। मैवं। ओदनत्वार्थो हि पाकः। न हि वाससः सहस्रधा पच्यमानस्यौदनता सम्भवति न च पाकः कर्तुं शक्यते। न ह्युष्णोदकसम्बन्धः पाकशब्दार्थः किन्तु तण्डुलादीनां विक्लित्तिं जनयितुं कृतः पुरुषयत्नः। न च विक्लित्तिर्वाससोऽस्ति तस्मादतिदिष्टः पाको बाध्यते।

तत्रैवान्यच्चिन्तितं।

"अभिघारोऽस्ति नो वात्र शक्यत्वादस्त्यवाससः।
अस्त्वन्वाहार्यवन्नैवं स्यादुताया असम्भवात्" ॥

स्पष्टोऽर्थः।

सप्तमाध्यायस्य तृतीयपादे चिन्तितं।

"वासोऽनसी वानतक्षणातिदेशकरे न वा।
आद्यः क्रियानिमित्तत्वात् जातिवाचित्वतोऽन्तिमः" ॥

वासो ददात्यनो ददातीति श्रूयते। तत्र यूपशब्दस्य यथा शास्त्रीयच्छेदनतक्षणादिक्रिया प्रवृत्तिनिमित्तं तथा वासः-शब्दस्य लौकिकी कुविन्दकर्तृकी तन्तुवायक्रिया। अनःशब्दस्य

वर्द्धकिकर्तृका दारुतक्षणादिक्रिया। तस्माद्वासोऽनःशब्दयोः क्रियातिदेशकत्वाद् वानतक्षणे कारयित्वा तदुभयं दातव्यमिति चेत्। न। गवाश्वादिशब्दवत् जातिवाचित्वात्। पाचकादिशब्दानां क्रियामुपलक्ष्य प्रयुज्यमानत्वात् क्रियैव प्रवृत्तिनिमित्तं वासःशकटादिषु क्रियामनुपलक्ष्यापि जातिमुपलक्ष्य शब्दं प्रयुञ्जते तस्माद्वासोऽनःशब्दौ न क्रियामतिदिशतः।

द्वादशाध्यायस्य द्वितीयपादे चिन्तितं।

"बर्हिराग्रयणे किञ्चित् प्रसूनं बाऊलत्वतः।

प्राथम्याच्चाग्रिमो मैवमलोपात्कांस्यभोजिवत्"॥

ऐन्द्राग्नवैश्वदेवद्यावापृथिव्ययागा आग्रयणेष्टौ सह प्रयुज्यन्ते। तत्रैन्द्राग्नवैश्वदेवयोर्बर्हिर्मात्रं चोदकप्राप्तं तत्प्रकृतौ बर्हिर्विशेषस्यानुक्तत्वात्। द्यावापृथिव्ये तु स्वप्रकृत्यनुसारेण प्रसूनं बर्हिः प्रतिदिश्यते। प्रसूनं पुष्पितं लूनशेषान्मूलात्पुनरुत्पन्नं वा। तत्राग्रयणे यत्किञ्चिद् बर्हिर्मात्रमाहर्तव्यं, ऐन्द्राग्नवैश्वदेवयोरनेकत्वेन प्रथमत्वेन च तदानुगुण्यस्य न्याय्यत्वादिति प्राप्ते ब्रूमः। बर्हिरन्तरस्वीकारे द्यावापृथिव्ये प्रमाणप्राप्तः प्रसूननियमो लुप्येत। प्रसूनस्वीकारे त्वैन्द्राग्नवैश्वदेवयोर्न किञ्चिल्लुप्येत तस्मादलोपाय कांस्यभोजिन्यायेन प्रसूनमेव कर्तव्यं। शिष्यस्य कांस्यभोजनव्रतमस्ति गुरोस्तु तन्नास्ति तयोस्तु सहभोजने यथोपसर्जनमपि शिष्यमनुसृत्य व्रतमलोपयितुं कांस्यमाद्रियते तथात्रापि द्रष्टव्यं।

तत्रैवान्यच्चिन्तितं।

"द्यावापृथिव्यस्तन्त्री स्यात् सर्वे वा तन्त्रिणोऽग्रिमः।
प्रैषन्यायात्, प्रस्तनस्य तन्त्रिताचोदकत्वतः॥
प्रस्तनत्वं नोपदिष्टमविरोधात् समाश्रितं।
तन्त्रित्वं नियतौ शक्तं नाऽतः सर्वेऽच तन्त्रिणः"॥

यथा मैत्रावरुणप्रैषमन्त्रविकारः पशुसमवन्यात् पशोस्तन्त्रित्वमापादयति, तथा प्रस्तनं द्यावापृथिव्यसम्बन्धित्वात् द्यावापृथिव्यस्य तन्त्रित्वमापादयतीति प्राप्ते ब्रूमः। उक्तप्रैषमन्त्रविकारः प्रत्यक्षश्रुतः, इह तु प्रस्तनत्वमतिदिष्टत्वान्न तन्त्रित्वमापादयितुं क्षमं। न च प्राबल्याभावे कथं तदाश्रयणमिति वाच्यं, ऐन्द्राग्नादिना सह विरोधाभावमात्रेण तदाश्रयणात्। तस्मादेकस्य तन्त्रित्वनियमाभावे आग्नेयादिवत् सर्वेऽप्यत्र तन्त्रिणः॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे ऽष्टमप्रपाठके प्रथमोऽनुवाकः॥ ० ॥

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं॥ ॥ १ ॥

आग्नेयꣳ सौम्यं मारुतमष्टादश ॥ २ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

प्रथमानुवाके प्रायणीयादङ्ग उत्तरभाविन आनुमतादयोऽष्टौ यागाः नैर्ऋतमन्त्रास्तोक्ताः। द्वितीये चातुर्मास्येषु प्रथमपर्वरूपं हविरष्टकं विधत्ते "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं" इति। स्पष्टोऽर्थः। एतेषां वैश्वदेवादीनां चातुर्मास्यानामानुमताद्यनन्तरभावित्वं पाठप्राप्तमापस्तम्बो विशदयति 'एताभिरन्वहमिष्ट्वा चातुर्मास्यान्यारभते तैः संवत्सरं यजते' इति। तेषु चातुर्मास्येषु प्रथमपर्वणो वैश्वदेवस्य देशकालौ स एवाह 'प्राचीनप्रवणे वैश्वदेवेन यजते' इति। 'फाल्गुन्यां पौर्णमास्यां चैत्रियां वा वैश्वदेवेन यजते' इति। तस्मिन् वैश्वदेवकर्मणि प्रथमभावीन्याग्नेयादीनि पञ्च हवींष्युपाख्यानेन प्रशंसति "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ताः सृष्टा न प्राजायन्त। सोऽग्निरकामयत। अहमिमाः प्रजनयेयमिति। स प्रजापतये शुचमदधात्। सोऽशोचत् प्रजामिच्छमानः। तस्माद्यञ्च प्रजा भुनक्ति यञ्च न। तावुभौ शोचतः प्रजामिच्छमानौ। तास्वग्निमप्यसृजत्। ता अग्निरध्यैत्। सोमो रेतोऽदधात्। सविता प्राजनयत्। सरस्वती वाचमदधात्। पूषापोषयत्। ते वा

एते त्रिः संवत्सरस्य प्रयुज्यन्ते। ये देवाः पुष्टिपतयः। संवत्सरो वै प्रजापतिः। संवत्सरेणैवास्मै प्रजाः प्राजनयत्" (ब्रा०।१का०।६प्र०।२अ०) इति। पुरा कदाचित् प्रजापतिः प्रजाकामः सन् तत्साधनत्वेनेदं वैश्वदेवाख्यं कर्मानुष्ठाय तेनैव प्रजा असृजत। तास्तु सृष्टाः प्रजा न प्राजायन्त स्वकीयान्यपत्यानि न लेभिरे। तदानीं प्रजापतिसृष्टाववस्थितः सोऽग्निर्मनस्येवमकामयत किमित्यपत्यरहिता इमाः प्रजा अहं प्रजनयेयं अपत्योत्पादिकाः करिष्यामीत्येवं कामयमानः सोऽग्निः प्रजाः सृष्टवते प्रजापतये शोकमुत्पादितवान्। प्रजापतिसृष्टानां प्रजानामपत्याभावस्यापत्योत्पादनकामिना वह्निना स्मारितत्वात् प्रजापतौ वह्निः शोकोत्पादक उच्यते। सोऽग्निः प्रजापतेः शोकमुत्पाद्य स्वस्याप्यपत्याभावेन प्रजामपत्यरूपां इच्छमानोऽशोचत्। यस्मात् पुत्रवान् प्रजापतिः पौत्रमिच्छन्नशोचत्, यस्मात् पुत्राभावादग्निरशोचत्तस्माल्लोकेऽपि यं पितरमुत्पन्ना पुत्ररूपा प्रजा भुनक्ति पालयति, यश्चापत्यरहितमनुत्पन्ना प्रजा न पालयति तावुभावपि पौत्ररूपां पुत्ररूपां च प्रजामिच्छन्तौ तदलाभाच्छोचतः। प्रजापतिः स्वासु प्रजासु प्रजामपत्यमुत्पादयितुमग्निमप्यसृजत् अभ्यनुज्ञातवान्। अनुज्ञातः सोऽग्निस्ताः प्रजा अध्येत् प्राप्तवान् मिथुनभावेन सङ्गतवानित्यर्थः। ततः सोम आग्नेयं रेतस्तासु प्रजासु गर्भभावेन धारितवान्। ततः सविता प्रसवकाले प्राजनयत् प्रजाः। तेषु अपत्येषु सरस्वती वाचमदधात्, सम्भाषितुमभ्यासं कार-

यामास। ततः सम्भाषमाणान् बालकान् पूषाभ्यवर्द्धयत्। ये देवा अग्निसोमादयोऽपत्यपोषा अपत्यपालकाः त एतेऽग्न्यादयः पूषान्ताः पञ्च देवाः पुष्टिकरत्वेन संवत्सरस्य मध्ये चातुर्मास्येषु त्रिः प्रयुज्यन्ते, वैश्वदेववरुणप्रघाससाकमेधाख्येषु पर्वसु पञ्चानामेतेषामाग्नेयादीनां सञ्चारित्वात्। सोऽयं प्रयोगत्रयकालः संवत्सर एव प्रजापतिस्वरूपः। अतः प्रजापतिरूपेण प्रयोगत्रययुक्तेन संवत्सरेणैवास्मै अनुष्ठात्रे प्रजा उत्पादितवान् भवति। पञ्च यागान् प्रशस्य षष्ठं प्रशंसति "ताः प्रजा जाता मरुतोऽघ्नन्। अस्मानपि न प्रायुच्छतेति। स एतं प्रजापतिर्मारुतꣳ सप्तकपालमपश्यत्। तं निरवपत्। ततो वै प्रजाभ्योऽकल्पत। यन्मारुतो निरूप्यते। यज्ञस्य क्लृप्त्यै। प्रजानामघाताय" (ब्रा०) इति। एकोनपञ्चाशन्मरुत उत्पन्नास्ताः प्रजा हतवन्तः। केनाभिप्रायेण। अस्मानप्येतस्मिन् वैश्वदेवे कर्मणि एताः प्रजा न प्रयुक्तवत्य इति। प्रजाभ्योऽकल्पत तासां प्रजानां रक्षणाय समर्थोऽभूत्। अतोऽयं षष्ठो यागः यज्ञस्य सम्पूर्त्यै प्रजानामहिंसायै च सम्पद्यते। कपालसङ्ख्यां प्रशंसति "सप्तकपालो भवति। सप्त गणा वै मरुतः। गणश एवास्मै विशं कल्पयति" (ब्रा०) इति। सप्तानां समूह एकैको गणः। तादृशास्र गणाः सप्तसङ्ख्याकाः। तया सप्तसङ्ख्यास्मै यजमानाय बहुगणरूपां प्रजां सम्पादयति। सप्तमयागे द्रव्यं प्रशंसति "स प्रजापतिरशोचत्। याः पूर्वाः प्रजा असृक्षि। मरुतस्ता अवधिषुः। कथमपराः सृजेयेति। तस्य शुष्म आण्डं भूत

निरवर्तत। तह्युदहरत्। तदपोषयत्। तत्प्राजायत। आण्डस्य वा एतद्रूपं। यदामिक्षा। यद्युद्धरति। प्रजा एव तद्यजमानः पोषयति" (ब्रा०) इति। तस्य प्रजापतेः शुष्मो बलमाण्डं भूतं आण्डवत्पिण्डाकारं प्राप्य निर्गतं पिण्डीभूतं व्युदहरत् विभज्योद्धृतवान्, उद्धृत्य च तत्पोषयित्वा प्रजारूपेणोदपादयत्। पिण्डरूपाया आमिक्षाया अण्डरूपत्वात् तद्युद्धरणेन प्रजापतिवद्यजमानः प्रजाः पोषयति पोषितवान् भवति। अनेनार्थवादेनाऽपूर्वार्थत्वाद्युद्धरेदिति विधिरुन्नेतव्यः। तदीयां देवतां प्रशंसति "वैश्वदेव्यामिक्षा भवति। वैश्वदेव्यो वै प्रजाः। प्रजा एवास्मै प्रजनयति" (ब्रा०) इति। बहुभिर्देवैरग्न्यादिभिरुक्तप्रकारेणोत्पादितत्वात् प्रजानां वैश्वदेवत्वं। विभज्योद्धृतयोरामिक्षाभागयोर्वाजिनसेचनं विधत्ते "वाजिनमानयति। प्रजास्वेव प्रजातासु रेतो दधाति" (ब्रा०) इति। दध्यानयनेन घनीभूतामिक्षाशब्दवाच्यक्षीरपिण्डस्य प्रजारूपेणाविर्भावः पूर्वार्थवादे निरूपितः। अतस्तस्मिन् पिण्डे वाजिनाख्येन क्षीरगतनीरेण सेचने सति प्रजातासु प्रजासु रेतो धारितं भवति। अष्टमयागदेवतां प्रशंसति "द्यावापृथिव्य एककपालो भवति। प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति" (ब्रा०) इति। अथाद्यावुक्तानां पञ्चानां पाठे प्राप्तं क्रमं प्रशंसति "देवासुराः संयत्ता आसन्। सोऽग्निरब्रवीत्। मामग्रे यजत। मया मुखेनासुरान् जेष्यथेति। मां द्वितीयमिति सोमोऽब्रवीत्। मया राज्ञा जेष्यथेति। मां

तृतीयमिति सविता। मया प्रसूता जेष्यथेति। मां चतुर्थी-मिति सरस्वती। इन्द्रियं वोऽहं धास्यामीति। मां पञ्चम-मिति पूषा। मया प्रतिष्ठया जेष्यथेति। तेऽग्निना मुखेनासु-रानजयन्। सोमेन राज्ञा। सवित्रा प्रसूताः। सरस्वतीन्द्रि-यमदधात्। पूषा प्रतिष्ठासीत्। ततो वै देवा व्यजयन्त। यदेतानि हवीꣳषि निरुप्यन्ते विजित्यै" (ब्रा०) इति। लोके युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो योद्धुं गच्छन्ति। तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन सन्निधत्ते। केचन दण्डहस्ताः पृष्ठतः स्थित्वा योद्धृनपरावृत्तये बलात् प्रेरयन्ति। अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धृणामुत्साहं जनयन्ति। अपरा कियत्यपि सेना पुरोगतायाः युध्यन्त्याः सेनायाः पृष्ठतः सहायत्वेनावतिष्ठते। तानेतान् पञ्चविधव्या-पारान् अग्न्यादयः क्रमेण स्वीकृतवन्तः। ततो देवानां जयो-ऽभूत्। ततोऽत्रापि पञ्च हविषां निर्वापे जयो भवति। शाखा-न्तरगतेनोपवपन्तीति वाक्येन वैश्वदेवादिषु चतुर्षु चातुर्मास्य-पर्वसु साधारण्येनोत्तरवेद्युपवापः प्राप्तः, तमुपवापं वैश्वदेव-पर्वणि प्रतिषेधति "नोत्तरवेदिमुपवपति। पशवो वा उत्तर-वेदिः। अजाता इव ह्येतर्हि पशवः" (ब्रा०) इति। उत्तर-वेदिसमीपे तदाभिमुख्येन पशूनां बन्धनात् उत्तरवेदेः पशु-त्वं। पूर्वोक्तरीत्या वैश्वदेवस्य प्रजापतिसृष्टिसाधनत्वात् स्रष्ट-व्यासु प्रजासु अन्तर्भूतानां पशूनां वैश्वदेवादूर्द्ध्वमुत्पत्ति-कालो न त्विदानीं, अतः पशुरूपा उत्तरवेदिर्नात्रोपवप-

नीया। तदेवमनुब्राह्मणगतेन वैश्वदेवेन वै प्रजापतिरित्यनुवाकेन वैश्वदेवपर्वगतान्याग्नेयादीनि अष्ट हवींषि प्रशस्तानि। अथानुवाकान्तरेण वैश्वदेवपर्वगतानि विशेषाङ्गानि विधीयन्ते। तत्र चोदकप्राप्तस्य बर्हिषस्त्रैगुण्यं विधत्ते "त्रिवृद्बर्हिर्भवति। माता पिता पुत्रः। तदेव तन्मिथुनं। उल्वं गर्भो जरायु। तदेव तन्मिथुनं" (ब्रा०१का०।६प्र०।३अ०)इति। मात्रादित्रयं यदस्ति तदेव पुत्रयुक्तत्वात्तन्मिथुनं सार्थकं। गर्भस्यान्तर्वेष्टनमुल्वं बहिर्वेष्टनं जरायु। गर्भादित्रयं यदस्ति तदेव सारभूतेन गर्भेणोपेतत्वात्तन्मिथुनं सफलं, उल्वजराय्वोर्द्वित्वसामान्येन मिथुनत्वं। बर्हिषस्त्रैगुण्ये सति यथोक्तमिथुनद्वयसाम्यं सम्पद्यते। विधत्ते "त्रेधा बर्हिः सन्नद्धं भवति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति" (ब्रा०) इति। प्रकृतौ दर्भमुष्टीनां पृथग्बन्धनं नैव विहितं सूत्रकारेण 'अदित्यै रास्नासीत्युदगग्रं वितत्य सुसम्भृता त्वा सम्भरामीति तस्मिन्निधनानि सम्भृत्य' इति प्रसारिते शुल्बे मुष्टीनां सम्भरणमात्रस्यैवाभिधानात्। इह तु मुष्टित्रयस्य पृथग्बन्धनं विशेषः। विधत्ते "एकधा पुनः सन्नद्धं भवति। एक इव ह्ययं लोकः। अस्मिन्नेव तेन लोके प्रतितिष्ठति" (ब्रा०) इति। पृथग्बद्धानां त्रयाणां मुष्टीनां पुनर्मिलित्वा बन्धनं कार्यं। चोदकप्राप्तस्य बन्धनस्य त्रेधाबन्धनेन बाधप्राप्तौ प्रतिप्रसवरूपोऽयं विधिः। चोदकेन सामान्यतः प्राप्तानां दर्भाणां पुष्पितत्वरूपं विशेषमत्र विधत्ते "प्रसुवो भवन्ति। प्रथमजामेव पुष्टिमवरुन्धे"

(ब्रा०) इति। प्रसूनोपेता दर्भाः प्रसुवं। विधत्ते "प्रथमजो वत्सो दक्षिणा समृद्ध्यै" (ब्रा०) इति। अनूयाजार्थस्य द्रव्यस्य ग्रहणं विधत्ते "पृषदाज्यं गृह्णाति। पशवो वै पृषदाज्यं। पशूनेवावरुन्धे" (ब्रा०) इति। दधिमिश्रमाज्यं पृषदाज्यं। ग्रहणे सङ्ख्यां विधत्ते "पञ्च गृहीतं भवति। पाङ्क्ता हि पशवः" (ब्रा०) इति। सपुच्छपादैः पञ्चभिर्युक्तत्वात् पङ्क्तिच्छन्दसः साध्यत्वाद्वा पशूनां पाङ्क्तत्वं। मिश्रणं प्रशंसति "बहुरूपं भवति। बहुरूपा हि पशवः समृद्ध्यै" (ब्रा०) इति। दधिबिन्दूनामाज्यबिन्दूनामनेकरूपत्वात् बहुरूपत्वं, गोमहिषादिरूपेण पशवः बहुरूपाः। हविरासादनादूर्ध्वं सामिधेनीभ्यः पुरा मन्थनं विधत्ते "अग्निं मन्थन्ति। अग्निमुखा वै प्रजापतिः प्रजा असृजत। यदग्निं मन्थन्ति। अग्निमुखा एव तत्प्रजा यजमानः सृजते" (ब्रा०) इति। हविःसादनादूर्ध्वभावित्वमापस्तम्बो दर्शयति 'पञ्च होत्रा यजमानः सर्वाणि हवीꣳष्यासन्नान्यभिमृशति पश्ववनिर्मन्थ्यः सामिधेन्यश्च' इति। होतृमन्त्रब्राह्मणे श्रूयते 'तद्भूयो ऽतप्यत। तस्मात्तेपानादग्निरजायत' इति। 'स प्रजननादेव प्रजा असृजत' इति च। तत्राग्नेः प्रथमसृष्टत्वात्प्रजानामग्निमुखत्वं। शाखान्तराभिहितां प्रयाजानूयाजसङ्ख्यां हृदि कृत्वा यागं प्रशंसति "नव प्रयाजा इज्यन्ते। नवानूयाजाः। अष्टौ हवीꣳषि। द्वावाघारौ। द्वावाज्यभागौ। त्रिꣳशत्सम्पद्यन्ते। त्रिꣳशदक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" (ब्रा०) इति। दशाक्षरपादैस्त्रिभिर्युक्तस्य विराट्-

छन्दसः त्रिंशदक्षरत्वं। अलङ्करणकाले आज्येनैककपालमभि-
पूरयतीत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा प्रशस्य विधत्ते "यज-
मानो वा एककपालः। तेज आज्यं। यदेककपाल आज्य-
मानयति। यजमानमेव तेजसा समर्द्धयति। यजमानो वा
एककपालः। पशव आज्यं। यदेककपाल आज्यमानयति।
यजमानमेव पशुभिः समर्द्धयति" (ब्रा०) इति। विशेषान्तरं
विधातुं प्रस्तौति "यदल्पमानयेत्। अल्पा एनं पशवोऽभुञ्जन्त
उपतिष्ठेरन्। यद्बह्वानयेत्। बहव एवैनं पशवो भुञ्जन्त उप-
तिष्ठेरन्" (ब्रा०) इति। भुञ्जन्तः क्षीरदानादिना पालयन्तः।
अभुञ्जन्त इति तद्विपर्ययः। पशूनामल्पत्वमपालयितृत्वं चे-
त्युभौ दोषौ। बहुत्वं पालयितृत्वं चेत्युभौ गुणौ। तत्र गुण-
सम्पादनेन प्रशंसन् विधत्ते "बह्वानीयाविः पृष्ठं कुर्यात्। बहव
एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते" (ब्रा०) इति। बहुन्याज्ये
पुरोडाशस्य पृष्ठमतिमज्य यथा दृश्यते तथा तावद्बह्वाज्यमा-
नयेत् तथा सत्याज्यस्य बहुत्वात् पशूनामल्पत्वदोषो न भ-
विष्यति। पुरोडाशपृष्ठस्याविर्भूतत्वादपालयितृत्वमपि न भवति।
कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति "यजमानो
वा एककपालः। यदेककपालस्यावद्येत्। यजमानस्यावद्येत्।
उद्वा माद्येद्यजमानः। प्र वा मीयेत" (ब्रा०) इति। इतरपुरो-
डाशेषु भक्षणार्थमवशेष्य किञ्चिदेवावदीयते। तद्वदत्राप्यव-
दानेन यजमानस्यावयवः छिद्येत, अथवा उन्मत्तो भवेत्
यद्वा प्रमीयेत। कृत्स्नहोमं विधत्ते "सकृदेव होतव्यः। सकृ-

दिव हि सुवर्गो लोकः” (ब्रा०) इति। सकृदेव कृत्स्न एव, स्वर्गलोकस्य सकृत्त्वमखण्डितत्वं। एककपाले पूर्वमानीतस्य सकलाज्यस्य होमं विधत्ते “हुत्वाभिजुहोति। यजमानमेव सुवर्गं लोकं गमयित्वा। तेजसा समर्द्धयति” (ब्रा०) इति। आदौ पुरोडाशं हुत्वा तस्योपर्याज्यं जुहुयादित्यर्थः। चोदकप्राप्तेनाहवनीयेनैककपालं प्रशंसति “यजमानो वा एककपालः। सुवर्गो लोक आहवनीयः। यदेककपालमाहवनीये जुहोति। यजमानमेव सुवर्गं लोकं गमयति” (ब्रा०) इति। कथाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा होममपोद्य हस्तेन होमः प्रसक्तः तद्वारयितुं स्रुचा होमस्य प्रतिप्रसवं विधत्ते “यद्धस्तेन जुहुयात्। सुवर्गाल्लोकाद्यजमानमवविध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य समष्ट्यै” (ब्रा०) इति। अवविध्येत् प्रच्यावयेत्। पुरोडाशो येन सन्निवेशेन पात्रेऽवस्थितस्तेनैव सन्निवेशेनाग्नौ तस्य स्थितिः। शाखान्तरे विहितः स्रुचा हूयमानस्त्ववाङ्मुखो वह्नौ पतेत् अतस्तद्विधिविरोधं परिहर्तुं हस्तेन होतव्यमित्येषां मन्दानामुपपत्तिः। हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति “यत्प्राङ् पद्येत। देवलोकमभिजयेत्। यद्दक्षिणा पितृलोकं। यत्प्रत्यक्। रक्षाꣳसि यज्ञꣳ हन्युः। यदुदङ्। मनुष्यलोकमभिजयेत्” (ब्रा०) इति। यद्यपि लोकादिजयो न स्वरूपेण दोषस्तथाप्यधिकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव। विधत्ते “प्रतिष्ठितो होतव्यः। एककपालं वै

प्रतितिष्ठन्तं द्यावापृथिवी अनुप्रतितिष्ठतः। द्यावापृथिवी ऋतवः। ऋतून् यज्ञः। यज्ञं यजमानः। यजमानं प्रजाः। तस्मात्प्रतिष्ठितो होतव्यः" (ब्रा०) इति। प्रागादिदिक्षु पतन-परिहारेण होमस्थान एव प्रतिष्ठितः निश्चलो यथा भवति तथा होतव्यः। ऋतव इत्यादिषु अनुप्रतितिष्ठन्तीत्यादिकं द्रष्टव्यं। तस्मादिति पूर्वस्य विधेरुपसंहारः। तदेतदुक्तं कल्प-होमादिकमापस्तम्बेन स्पष्टमुदाहृतं 'उपांशु प्रचरति सर्व-हुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं हस्तेन जुहुयात्' इति। स्रुचा होमेऽप्यपर्यावृत्तिं सम्प्रदायविद एवं सम्पादयन्ति 'शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्याग्रं धृत्वा दक्षिणहस्तेन स्रुचमधस्ताद्धारयित्वा तया स्रुचा होमं कुर्वन् वामहस्तेन शिक्यमीषदुद्धृत्य वह्नौ स्थापयेत्' इति। वैश्वदेव्यामिक्षायाः निःसृतं वाजिनशब्दाभिधेयं यन्नीरं तस्य वाजिसञ्ज्ञकान् दे-वानुद्दिश्य यागं विधत्ते "वाजिनो यजति। अग्निर्वायुः सूर्यः। ते वै वाजिनः। तानेव तद्यजति। अथो खल्वाहुः। छ-न्दाꣳसि वै वाजिन इति। तान्येव तद्यजति" (ब्रा०) इति। तस्य यागस्य कालं विधातुं प्रस्तौति "ऋक्सामे वा इन्द्रस्य हरी सोमपानौ। तयोः परिधय आधानं। वाजिनं भाग-धेयं। यदप्रहृत्य परिधीञ्जुहुयात्। अन्तराधानाभ्यां घासं प्रयच्छेत्" (ब्रा०) इति। हरी अश्वौ तयोर्वशीकरणाय मुखे प्रक्षिप्तो लोहविशेष आधानं। अन्तर्मुखमध्येऽवस्थितमाधानं ययोस्तावन्तराधानौ। हस्तेन मखे प्रक्षिप्यमाणः सान्द्रशर्क-

रमुद्गादिपिण्डो घासतृणविशेषो वा, न ह्याधानेऽन्तरवस्थिते सति घासो भक्षयितुं शक्यः। विधत्ते "प्रहृत्य परिधीञ्जुहोति। निराधानाभ्यामेव घासं प्रयच्छति" (ब्रा०) इति। परिधीनामग्नौ प्रहारेण आधानस्यापनीतत्वात् घासो भक्षयितुं शक्यते। सोऽयं काल आपस्तम्बेन स्पष्टोक्तः 'परिधीन् प्रहृत्य सꣳस्रावान्तं कृत्वा वाजिनपात्रमुपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन् वाजिनं गृह्णाति नाभिघारयति' इति। तत्र पात्रग्रहणकाले पात्रस्याभिक्षरणेन अधोऽवस्थितस्य बर्हिषो विशेषेण सेचनं विधत्ते "बर्हिषि विषिञ्चन् वाजिनमानयति। प्रजा वै बर्हिः। रेतो वाजिनं। प्रजास्वेव रेतो दधाति" (ब्रा०) इति। सोमवत्परस्परोपह्वपूर्वकं भक्षणमप्राप्तत्वादिह विधत्ते "समुपहूय भक्षयन्ति। एतत्सोमपीथा ह्येते। अथो आत्मन्नेव रेतो दधते" (ब्रा०) इति। वाजिनयागस्य सान्नाय्यविकृतित्वेऽपि सान्नाय्यवदिडाभक्षणं न कर्तव्यं, किन्तु सोमवद्भक्षयेत्। एतदेव वाजिनभक्षणं सोमपीथः सोमपानं येषामृत्विजां ते एतत्सोमपीथाः। वाजिनभक्षणे यजमानस्य चरमभक्षणं विधत्ते "यजमान उत्तमो भक्षयति। पशवो वै वाजिनं। यजमान एव पशून् प्रतिष्ठापयन्ति" (ब्रा०) इति। एतस्मिन् वैश्वदेवकर्मणि मन्त्रे विशेषाभावान्मन्त्रकाण्डे प्रधानविधय एवाम्नाताः। अतो नास्ति विनियोगसङ्ग्रहः।

अथ मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"चातुर्मास्याद्यपर्वस्थाग्नेयाद्यष्टकान्तिमे।

वैश्वदेवेति शब्दोक्तो गुणः सप्तस्य नाम वा ॥
नामत्वे रूपराहित्यादविधिर्गुणता ततः।
अग्न्यादिभिर्विकल्प्यन्ते विश्वे देवास्तु सप्तसु ॥
अनूद्याष्टौ यजेतेति तत्सङ्गे नाम वर्णितं।
अविधित्वेऽप्यर्थवत् स्यान्नाम प्राक्प्रवणादिषु ॥
इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी।
निरुक्तिर्न विकल्पः स्यादुत्पत्त्युत्पन्नशिष्टतः" ॥

चातुर्मास्ययागस्य चत्वारि पर्वाणि वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीर्यश्चेति। तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं" इति। तेषामष्टानां सन्निधाविदमाम्नायते 'वैश्वदेवेन यजेत' इति। तत्राग्नेयादीन् यजेतेत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते। यद्यपि वैश्वदेव्यामिक्षायां विश्वे देवाः प्राप्तास्तथाप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयते। तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्। तर्हि गत्यभावात्तेषु देवता विकल्प्यन्तां। नामधेयत्वे तु नाममात्रस्याविधेयत्वाद् द्रव्यदेवतयोरभावेन यागस्यात्र स्वरूपासम्भवात् श्रूयमाणो विधिरनर्थकः स्यात्। तस्माद् गुणविधिरिति प्राप्ते ब्रूमः। उत्पत्तिवाक्ये विहिताग्नेयादीनष्टौ यागान् यजेतेत्यनूद्याष्टानां सङ्घे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते। न च विधित्वाभावेऽपि नामोपदेशवैयर्थ्यं। प्राचीनप्रवणे वैश्वदेवेन

यजेतेत्यादिषु वैश्वदेवशब्देनैवाष्टानां समुहस्य व्यवहर्तव्यत्वात्। नामप्रवृत्तिनिमित्तभूता निरुक्तिविशेषाः, आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वं। अथवा विश्वे देवा अष्टानां कर्तार इति वैश्वदेवत्वं। तथा च ब्राह्मणं "यद्विश्वे देवाः समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वं" इति। देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते। अत्रैव गुरुमतमाह।

"गुणनामत्वसन्देहादप्रमा चोदनेति चेत्।
नोक्तन्यायेन समूहस्य नामधेयत्वनिर्णयात्"॥

स्पष्टोऽर्थः।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

"गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति।
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः॥
आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनं।
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजिदेवकं"॥

तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते। घनीभूतपिण्ड आमिक्षा, वाजिनं जलं। तत्र आमिक्षाद्रव्यभाजो यागे विश्वे देवा उक्ताः। ते च वाजिभ्य इत्यनेनानूद्यन्ते, वाजोऽन्नमामिक्षारूपमेषामस्तीति तन्निष्पत्तेः।ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते। तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते ब्रूमः। उत्पत्तिशिष्टेनामिक्षाद्रव्येण अवरुद्धे वैश्वदेवयागे वा-

जिनद्रव्यस्य उत्पन्नशिष्टतया अवकाशाभावात् वाजिनशब्दो वाजिशब्दार्थस्य देवतान्तरतामापादयति। ततो द्रव्यदेवता-लक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरं।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

"आमिक्षा वाजिनञ्च स्याद्दध्यानीतेः प्रयोजिका।
उतामिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः॥
आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात्।
प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनं"॥

इदमाम्नायते 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं' इति। तत्र पयसि दधिप्रक्षेपादामिक्षा-द्रव्यं यथा निष्पद्यते तथा वाजिनद्रव्यमपीति दध्यानयनस्य जनकत्वसामर्थ्यमुभयद्रव्यविषयं तुल्यमेव। तस्मादुभयमपि प्रयोजकमिति प्राप्ते ब्रूमः। न द्रव्यान्तरमामिक्षा, किन्तु पय एवेति तच्छब्दादिभिरवगम्यते। यस्मिन् पयसि दधिप्रक्षेपः सामिक्षेति तच्छब्देन पयः परामृश्यते। आमिक्षायागे पुरो-ऽनुवाक्यायामप्येवमाम्नातं 'जुषन्तां युज्यं पयः' इति। पयो रसस्य मधुर आमिक्षायामनुवर्तते। न तु वाजिने। ततः प्राधान्येन पयसो घनीभावं कर्तुं दध्यानीतमित्यामिक्षैव प्रयोजिका। अनुनिष्पाद्येव वाजिनं न तु प्रयोजकं।

अष्टमाध्यायस्य द्वितीयपादे चिन्तितं।

"सुरावाजिनयोः सोमस्येष्टेर्वा सोमशब्दतः।
आद्यो मैवं हविःसाम्यात् सोमशब्दः प्रशस्तये"॥

सौत्रामण्यां सुराग्रहाः श्रुताः 'सुराग्रहान् गृह्णाति' इत्यादिना। चातुर्मास्येषु वाजिनयागः श्रुतः 'वाजिभ्यो वाजिनं' इति। तत्रोभयत्र सोमस्य विध्यन्तः कार्यः। कुतः। 'सोमो वै वाजिनं सुरा सोमः' इति वाजिने सुरायाश्च सोमशब्दप्रयोगात्। सोमशब्दस्याग्निहोत्रशब्दवद्धर्मानतिदिशतीति चेत्, मैवं, ऐष्टिकहविःसाम्यात्। ओषधिविकृतं सुरा, सान्नाय्यविकृतं वाजिनं। तस्मादैष्टिको विध्यन्तः। सोमशब्दस्त्वर्थवादगतत्वान्नाग्निहोत्रादिनामवदतिदेशकः। यदि वाजिनस्य प्रतिपत्तिकर्मत्वान्नास्ति धर्मापेक्षा तर्ह्येतस्मिन्नंशे कृत्वा चिन्तास्तु।

तत्रैवान्यच्चिन्तितं।

"द्वयोर्दध्नोऽथ पयस आमिक्षायां हितत्वतः।
द्वयोर्द्ध्नो घनत्वेन प्राधान्यात् पयसो भवेत्"॥

तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति श्रुताया आमिक्षायाः सान्नाय्ययागीययोर्दधिपयसोर्धर्माः कार्याः, आमिक्षाया उभयजन्यत्वादित्येकः पक्षः। घनत्वस्याधिक्याद्दधिधर्मा इति द्वितीयः पक्षः। पयस्यामिक्षामुत्पादयितुं सहकारित्वेन दध्यानीयते, ततः पयस एव मुख्यकारणत्वात्तद्धर्म एव न्याय्यः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः॥ * ॥

ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणी-मामिक्षां कायमेककपालं प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः। मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया। मही ह्यस्य मीढुषो यव्या। हविष्मतो मरुतो वन्दते गीः। यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये यच्छूद्रे यदर्य एनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा। अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥ १ ॥

वयं यदिश्शतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे ऽष्टमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीये वैश्वदेवाख्यं प्रथमपर्वोक्तं। तृतीये वरुणप्रघासाख्यं द्वितीयं पर्वोच्यते। तत्र विशेषहवींषि चत्वारि विधत्ते "ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालं" इति। निर्वपतीति पूर्वानुवाकादनुवर्तते। तानेतान् वरुणप्रघासान् विधातुं प्रस्तौति "प्रजापतिः सविता भूत्वा प्रजा असृजत। ता एनमत्यमन्यन्त। ता अस्मादपाक्रा-

मन्। ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत्। ताः प्रजा वरुणगृहीताः। प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः। स एतान् प्रजापतिर्वरुणप्रघासानपश्यत्। तान् निरवपत्। तैर्वै स प्रजा वरुणपाशादमुञ्चत्" (ब्रा०१का०।६प्र०।४अ०) इति। सविता भूत्वोत्पादको भूत्वा। अत्यमन्यन्त अवज्ञां कृतवत्यः। वरुणो भूत्वा वरुणेन वरुणपाशरूपेण जलोदररोगेण, नाथं स्वामिनं रोगशान्त्यै, वरुणप्रघासानेतन्नामकान् यागविशेषान्। इदानीं विधत्ते "यद्वरुणप्रघासा निरुप्यन्ते। प्रजानामवरुणग्राहाय" (ब्रा०) इति। अस्य पर्वणः कालमापस्तम्बो दर्शयति 'ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वा उदवसाय वरुणप्रघासैर्यजेत' इति। उदवसाय पूर्वदेशान्निर्गत्य। अस्मिन् वरुणप्रघासपर्वणि द्वितीयां वेदिं विधातुं प्रस्तौति "तासां दक्षिणो बाहुर्न्यक्न आसीत्। सव्यः प्रसृतः। स एतां द्वितीयां दक्षिणतो वेदिमुदहन्। ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत्" (ब्रा०) इति। तासां प्रजानां, न्यक्नः शीतवातरोगेण नितरां सङ्कुचितः, वेदिमुदहन् वेदेरुद्धननं कृतवान्। विधत्ते "यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति। प्रजानामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति। तस्माच्चातुर्मास्ययाज्यमुष्मिँल्लोके उभयाबाहुः। यज्ञाभिजितꣳ ह्यस्य" (ब्रा०) इति। दक्षिणतस्सोदकप्रासाया वेदेर्दक्षिणभागे। यस्माच्चातुर्मास्येषु वेदिद्वयमस्ति तस्मात्तद्याजी स्वर्गे बाहुद्वयोपेतो भवति। यद्यपि सर्वेषां बाहुद्वयमस्ति तथाप्येक एव बाहुस्तेषां सामर्थ्योपेतः।

अत एवाम्नातं 'तस्माद्दक्षिणोऽर्द्ध आत्मनो वीर्यावत्तरः' इति। अस्य बाहुद्वयमपि सामर्थ्यातिशयोपेतमिति विशेषः। तदेतदस्य यज्ञाभिजितं अनेन यज्ञेन सम्पादितं। उभयोर्वेद्योर्मध्ये त्रयोदशाङ्गुलिपरिमितं व्यवधानं विधत्ते "पृथमात्रादेदी असम्भिन्ने भवतः। तस्मात् पृथमात्रं व्यꣳसौ" (ब्रा०) इति। यस्माद्देद्योरुक्तं व्यवधानं तस्माल्लोकेऽपि वामदक्षिणावंसौ पृथमात्रौ यद्वा पृथमात्रं त्रयोदशाङ्गुलपरिमाणं यथा भवति तथा विभक्तौ दृश्येते। विधत्ते "उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति। पशवो वा उत्तरवेदिः। पशूनेवावरुन्धे। अथो यज्ञपरुषोऽनन्तरित्यै" (ब्रा०) इति। यज्ञपरुषो यज्ञावयवस्यानन्तरित्यै अन्तरायाभावार्थं। उत्तरवेदेरभावे तद्रूपो यज्ञावयवोऽन्तरितः स्यात्। वैश्वदेवपर्वण्युक्तानामाग्नेयमष्टाकपालमित्यादीनां पञ्च हविषां ब्राह्मणमनुब्राह्मणस्यात्रातिदिशति "एतद्ब्राह्मणान्येव पञ्च हवीꣳषि" (ब्रा०) इति। आग्नेयादीनां पञ्चानां विधायकं पूर्वस्मिन् पर्वणि यद्ब्राह्मणमेतदेवास्मिन् पर्वणि ब्राह्मणं विधायकं येषां पञ्चानां तान्येतद्ब्राह्मणानि। अत्रापि तथैवादौ पञ्च हवींष्यनुतिष्ठेदित्यर्थः। मुख्यब्राह्मणे विहितस्यैन्द्राग्नस्यातिदिष्टपञ्चहविरानन्तर्यं विधत्ते "अथैष ऐन्द्राग्नो भवति" (ब्रा०) इति। तस्मिन् यागे श्रुतौ देवौ प्रशंसति "प्राणापानौ वा एतौ देवानां। यदिन्द्राग्नी। यदैन्द्राग्नो भवति। प्राणापानावेवावरुन्धे। ओजो बलं वा एतौ देवानां। यदिन्द्राग्नी। यदैन्द्राग्नो भवति।

ओजो बलमेवावरुन्धे" (ब्रा०) इति। ओजो मानस उत्साहः, बलं शारीरमिति विशेषः। मुख्यब्राह्मणविहितमामिक्षायागमनूद्य तद्देवताकावेव मेषीमेषौ यवमयौ विधत्ते "मारुत्यामिक्षा भवति। वारुण्यामिक्षा। मेषी च मेषश्च भवतः। मिथुना एव प्रजा वरुणपाशान्मुञ्चति" (ब्रा०) इति। मारुत्यामिक्षा भवति मेषी च, वारुण्यामिक्षा भवति मेषश्चेति तत्तत्साहित्याभिधानार्थौ चकारौ। स्त्रीपुरुषरूपयोर्मेषीमेषयोरनुष्ठानेन मिथुनात्मकाः प्रजाः रोगान्मुक्ता भवन्ति। मेषीमेषयोर्गुणविशेषं विधत्ते "लोमशौ भवतो मेध्यत्वाय" (ब्रा०) इति। एतच्च सूत्रकारेण स्पष्टीकृतं 'ऊर्णाभिर्मेषप्रतिकृती लोमशौ कुरुते' इति। तयोर्मेषीमेषयोः पुरतः शमीपर्णस्थापनं विधत्ते "शमीपर्णान्युपवपति। घासमेवाभ्यामपि यच्छति" (ब्रा०) इति। घासमपीत्यन्वयः। शमीपर्णानां शताधिकसङ्ख्यां विधातुं प्रस्तौति "प्रजापतिमन्नाद्यं नोपानमत्। स एतेन शतेध्मेन हविषान्नाद्यमवारुन्ध। यत्परःशतानि शमीपर्णानि भवन्ति। अन्नाद्यस्यावरुध्यै" (ब्रा०) इति। अन्नं योग्यं शाल्यादिजन्यं यदन्नं तत्प्रजापतिर्न प्राप्नोत्। स च प्रजापतिरेतेन शमीवृक्षजन्येन शतसङ्ख्यायुक्तेन काष्ठसमूहेन दीपितेऽग्नौ हुतेन हविषा तदन्नाद्यं सम्पादितवान्। अतः परःशतानि शताधिकसङ्ख्यानि पर्णान्युपवपेत्। तत्र करीरोद्वापं विधातुं प्रस्तौति "सौम्यानि वै करीराणि। सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति" (ब्रा०) इति। करीरनामकान्यङ्कु-

राणि सोमवल्लीसदृशत्वात् सौम्यानि, आकृतिरपि सोमसम्बन्धिनी वृष्टिहेतुः। विधत्ते "यत्करीराणि भवन्ति। सौम्यैवाकृत्या दिवो वृष्टिमवरुन्धे" (ब्रा०) इति। करीरशब्देन खर्जुरीफलान्युच्यन्त इति केचित्। तानि शमीपर्णवद्भच्यत्वेपचारेण तयोः पुरत उपवपेत्। तथा च सूत्रकारः 'अथाभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि च' इति। नवमयागं प्रशंसति "काय एककपालो भवति। प्रजानां कन्त्वाय" (ब्रा०) इति। सुखित्वायेत्यर्थः। कायः प्रजापतिदेवताकः। दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि विधत्ते "प्रतिपुरुषं करम्भपात्राणि भवन्ति। जाता एव प्रजा वरुणपाशान्मुञ्चति। एकमतिरिक्तं। जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति" (ब्रा०) इति। दधिमिश्रा यवसक्तवः करम्भः। यजमानस्य गृहे यावन्तः पुरुषाः मनुष्याः तत्सङ्ख्यया पात्राणि विधायैकं पात्रमधिकं कुर्यात्। अत एव सूत्रकार आह 'आमपेषाणां पत्नी करम्भपात्राणि करोति। यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि'। तदेवमनुब्राह्मणगतेनानुवाकेन वरुणप्रघासादिविधयो देवताप्रशंसाश्चोक्ताः। अथानुवाकान्तरेण हविरासादनादिप्रयोगा उच्यन्ते। तत्र वेदिद्वये हविःसादनव्यवस्थां विधत्ते "उत्तरस्यां वेद्यामन्यानि हवीꣳषि सादयति। दक्षिणायां मारुतीं। अपधुरमेवैना युनक्ति। अथो ओज एवासामवहरति। तस्माद्ब्राह्मणस्य चत्रायं विशोऽन्यतोऽपक्रमिणीः" (ब्रा०१का०।६प्र०।५अ०)

इति। मारुत्या आमिक्षाया अन्यान्याग्नेयादीनि अष्टौ हवींषि। मरुतो देवानां मध्ये विशः। अतो मारुत्याः पृथग्वेदिसादनादिना विशः। अपधुरमेव युनक्ति अपक्रमणमेव प्रापयति, धुरो गमनमपधुरं, धुःशब्देन बहुविधहविर्वहनयोग्या भूमिरुच्यते, सा चोत्तरगता वेदिः। तस्या अपगमनं यथा भवति तथा मरुद्रूपा एना विशो वेद्यन्तरे योजितवान् भवति। किञ्च। आसां विशामोजो बलमवहरत्येव न्यक्करोत्येव। यस्माद्विशां न्यक्कारः तस्माद्ब्राह्मणात् क्षत्रियाच्चेमा विशोऽन्यतः ग्रामान्तरे वा पीठिकान्तरे वा अपक्रामन्ति। प्रचारपौर्वापर्यं पाठेनैव प्राप्तं प्रशंसति "मारुत्या पूर्वया प्रचरति। अनृतमेवावयजते। वारुण्योत्तरया। अन्तत एव वरुणमवयजते" (ब्रा०) इति। मारुत्या आमिक्षायाः प्रथमप्रचारेण अनृतमयथाशास्त्रार्थानुष्ठानेन दोषमवयजते विनाशयति। वारुण्यामिक्षाया उत्तरकालीनप्रचारेण वरुणं वरुणपाशरूपं जलोदररोगमन्तत एवावयजते सर्वथैव विनाशयति। प्रचारात्प्राचीनेष्वङ्गेषु पूर्वोक्तपौर्वापर्यवैपरीत्यं विधत्ते "यदेवाध्वर्युः करोति। तत्प्रतिप्रस्थाता करोति। तस्माच्छ्रेयान् करोति। तत्पापीयान् करोति" (ब्रा०) इति। अध्वर्युरुत्तरवेद्यवस्थिताया वारुण्यामिक्षाया अनुष्ठाता, प्रतिप्रस्थाता तु दक्षिणवेद्यां मारुतीमनुतिष्ठति। तत्र यद्यदन्वाधानादिकमेकैकमङ्गमध्वर्युरनुतिष्ठति तत्तदङ्गं प्रतिप्रस्थाता तदनन्तरमेवानुतिष्ठेत। अत एव च लोकेऽपि सन्दिग्धेषु लौकिकवैदिकव्यवहारेषु श्रेयान्

प्रामाणिकत्वेन सम्प्रतिपन्नः पुरुषो यदेव करोति तदेव पापीयान् मूढोऽपि करोति। अत्र बोधायनेन यदिदमुक्तं 'अथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कस्ते जार इति। असाविति तं वरुणो गृह्णातु' इति। तदिदं विधत्ते "पत्नीं वाचयति। मेध्यामेवैनां करोति। अथो तप एवैनामुपनयति" (ब्रा०) इति। पापं प्रख्यापयेत् पापीति स्मृतिकारैरुक्तत्वाद् विद्यमानं जारमुद्दिश्य पत्नीं वाचयेत्। तेन च प्रख्यापनेन पत्नीं यागयोग्यां करोति। किञ्च सभामध्ये मानहानिसहिष्णुत्वरूपं यत्तपः तदप्येनां पत्नीं प्रतिप्रस्थाता प्रापयति। तस्याश्च पत्न्या लज्जां मुक्त्वा जारनिर्देशं विधत्ते "यज्जारꣳ सन्तं न प्रब्रूयात्। प्रियं ज्ञातिꣳ रुन्ध्यात्। असौ मे जार इति निर्दिशेत्। निर्दिश्यैवैनं वरुणपाशेन ग्राहयति" (ब्रा०) इति। मन्त्रकाण्डे प्रधानयागविधिभ्य ऊर्द्ध्वं प्रघास्यान् मो षू णो यद्ग्रामे अकन् कर्मत्येते चत्वारो मन्त्रा आम्नाताः। तत्र प्रथममन्त्रस्य विनियोगमापस्तम्ब आह 'प्रघास्यान् हवामह इति प्रतिप्रस्थाता पत्नीमुदानयति' इति। पाठस्तु "प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः" इति। वरुणपाशरूपं कर्म प्रघ्नन्तीति वरुणप्रघासाः, तानर्हन्तीति वरुणप्रघास्याः। यज्ञं वहन्तीति यज्ञवाहसः। दधिसर्पिर्मिश्रैः सक्तुभिर्निष्पादितं पात्रजातं करम्भशब्देनोच्यते। तेन करम्भेण दक्षिणवेदिस्थिते अग्नौ दम्पतिभ्यां हूयमानेन परस्परं समानप्रीतयः सजोषसः। तथाविधान् मरुतो हवामहे आह्वयामः। विधत्ते

"प्रघास्यान् हवामह इति पत्नीमुदानयति। अकृतैवेनां" (आ०) इति। एनां पत्नीं, अनेन मन्त्रपाठेनाकृतैवाहूतवानेव भवति। अवशिष्टस्य मन्त्रत्रयस्य विनियोगमाहापस्तम्बः 'अथा-न्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेणोत्तरां वेदिमै-षीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधि निधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः मो षू ण इन्द्रेति यज-मानः पुरोऽनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्यामक्रन् कर्म कर्मकृत इति विपर्यन्तौ जपतः' इति। तत्र प्रथममन्त्रपाठस्तु "मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया। मही ह्यस्य मीढुषो यव्या। हविष्मतो मरुतो वन्दते गीः" इति। हे इन्द्र देव नोऽस्मान् पृत्सु सङ्ग्रामेषु मो मैव प्रवर्तयेति शेषः। तदेत-दप्रवर्तनं सु समीचीनं वैरिणामेवासम्भवात्। हे शुष्मिन् बल-वन् ते तव प्रसादादवया अवयजनं अनिष्टनाशनमस्तु स्म सर्व-दा भवतु। यस्मात् कारणात् मीढुषो वृष्टिसेचनसमर्थस्य तव प्रसादादस्माकं मही भूमिर्यव्या यवादिकृत्स्नधान्ययोग्या तस्मादनिष्टनाशनमित्यन्वयः। गीरस्मदीया स्तुतिरूपा वाक् हविष्मतः करम्भपात्ररूपहविर्युक्तान् मरुतो वन्दते नमस्करो-ति स्तौतीत्यर्थः। द्वितीयमन्त्रपाठस्तु "यद्ग्रामे यदरण्ये यत्स-भायां यदिन्द्रिये यच्छूद्रे यदर्य एनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा" इति। अत्र सप्त यच्छब्दाः सप्तधा वाक्यभेदार्थाः स चादरार्थः। अर्ये स्वामिनि वैश्ये वा। एकस्य दम्पत्योर्मध्ये कस्यचिद्धर्मणि आत्मीये धर्मे वयं

यजमानो दारा दासाश्च ग्रामविषये यत्पापमधिकं चक्रम, तस्य सर्वस्यावयजनं विनाशकं करम्भपात्रजात त्वमसि, अतः स्वाहा त्वां ददामीत्यर्थः। एतयोरुभयोर्याज्यापुरोऽनुवाक्ययोर्होतृत्वम- पवदितुं विधत्ते "यत्पत्नी पुरोऽनुवाक्यामनुब्रूयात्। निर्वीर्यो यजमानः स्यात्। यजमानोऽन्वाह। आत्मन्नेव वीर्यं धत्ते। उभौ याज्याꣳ सवीर्यत्वाय" (ब्रा०) इति। याज्यादृष्टान्तेन पुरोऽनुवा- क्यायामपि प्राप्तां पत्नीमर्थवादेन वारयति। पापरूपेण प्रविश्य वरुणो यज्ञघातीति वरुणो याज्यायामेनःशब्देन विवक्षित इति दर्शयति "यद्ग्रामे यदरण्य इत्याह। यथोदितमेव वरुणमवयज- ते" (ब्रा०) इति। दक्षिणवेदिगतेऽग्नौ होमं विधातुं प्रशंसति "यजमानदेवत्यो वा आहवनीयः। भ्रातृव्यदेवत्यो दक्षिणः। यदाहवनीये जुहुयात्। यजमानं वरुणपाशेन ग्राहयेत्" (ब्रा०) इति। उत्तरदिक्स्थायां वेद्यामुत्तरवेद्युपवापेन निष्पन्न आ- हवनीयः। इतरवेदिगतोऽग्निर्दक्षिणः। विधत्ते "दक्षिणेऽग्नौ जुहोति। भ्रातृव्यमेव वरुणपाशेन ग्राहयति" (ब्रा०) इति। शुक्लमपवदितुं विधत्ते "शूर्पेण जुहोति। अन्नमेव वरुणमव- यजते" (ब्रा०) इति। अन्नसाधने शूर्पे भवमन्नं *भोज्यद्रव्यविना- शिनमित्यर्थः। होमगुणद्वयं क्रमेण विधत्ते "शीर्षन्नधि निधाय जुहोति। शीर्षत एव वरुणमवयजते। प्रत्यङ्तिष्ठन् जुहोति। प्रत्य ेव वरुणपाशान्निर्मुच्यते" (ब्रा०) इति। करम्भपात्रपूर्णं

*अन्नं भोक्तव्यद्रव्यानिष्टविनाशिनमिति काशीस्थपुस्तकत्रयस्य पाठः। अन्यथा भोज्यद्रव्यविनाशनमिति तै०।

शूर्पं शिरसि सकृन्निधाय पश्चाज्जुहुयात् तेन शिरोरोगादिकं शाम्यति, पश्चिमाभिमुखेन होमेन प्रत्यङ्ङेव वरुणस्य प्रतिकूलत्वेन प्रबल एव सन् वरुणपाशान्निष्कृष्टो मुच्यते। तृतीयमन्त्रपाठस्तु "अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः" इति। कर्मकृतोऽध्वर्युप्रमुखा यजमानपत्न्यन्ताः सर्वे। मयोभुवा, मयः शिवं सुखं। यद्वै शिवं तन्मय इति श्रुतेः। तत्सुखं भावयित्र्या मन्त्रोच्चारणरूपया वाचा सह करम्भपात्रहोमान्तं कर्माक्रन् कृतवन्तः। हे सुदानवः सुष्ठु हविषः प्रदातारोऽध्वर्युप्रभृतयो देवार्थमिदं कर्म कृत्वा अस्तं प्रेत स्वगृहं गच्छत। अस्मिन्मन्त्रे उत्तरार्द्धतात्पर्यं दर्शयति "अक्रन् कर्म कर्मकृत इत्याह। देवानृणं निरवदाय। अनृणा गृहानुपप्रेतेति वावैतदाह" (ब्रा०) इति। देवान् प्रति प्रत्यर्पणीयं यदृणं तन्निरवदाय निःशेषेण प्रत्यर्प्य। अथावभृथद्रव्यं विधातुं प्रस्तौति "वरुणगृहीतं वा एतद्यज्ञस्य। यद्यजुषा गृहीतस्यातिरिच्यते। तुषाश्च निष्कासश्च" (ब्रा०) इति। वारुणयागे मेषार्थेषु यवेषु ये तुषाः यश्च निष्कासः पात्रलग्न आमिक्षांशलेपः, तदुभयं पूर्वमन्त्रेण गृहीतस्य द्रव्यस्यातिरिक्तोंऽशः। अतो यज्ञसम्बद्धमेतद्वरुणगृहीतमेव। विधत्ते "तुषैश्च निष्कासेन चावभृथमवैति। वरुणगृहीतेनैव वरुणमवयजते" (ब्रा०) इति। अत्रावभृथशब्देन सौमिकावभृथधर्मोपेतं कर्मोच्यते। तदेतत्प्रत्यभिज्ञापयितुं तत्रत्यविधीन् सार्थवादाननुवदति "अपोऽवभृथमवैति। अप्सु वै वरुणः। साक्षादेव वरुण-

मवयजते। प्रतियुतो वरुणस्य पाश इत्याह। वरुणपाशादेव निर्मुच्यते। अप्रतीक्षमायन्ति। वरुणस्यान्तर्हित्यै। एधोऽस्येधिषीमहीत्याह। समिधैवाग्निं नमस्यन्त उपायन्ति। तेजोऽसि तेजो मयि धेहीत्याह। तेज एवात्मन्धत्ते" (ब्रा०) इति। अपः प्रत्यवभृथमनुतिष्ठेत् अप्सु कुर्यादित्यर्थः। अपामधिपतित्वादप्सु वरुणस्तिष्ठति, अतोऽत्र होमेन वरुणं साक्षादेव व्यवधानमन्तरेणैव विनाशयति, कर्मानुष्ठानादूर्द्ध्वमुदकसमीपं प्रतियुत इत्यनेन मन्त्रेण परित्यजेत्। उदकेषु स्थितो यो वरुणस्य पाशः स एष प्रतियुतः परित्यक्तः। परित्यज्य पृष्ठदेशमपश्यन्त एव प्रत्यागच्छेयुः। आगत्य एधोऽसि तेजोऽसीति द्वाभ्यामाहवनीये समिधावादध्यात्। हे अग्ने एधोऽसि अनया समिधाभिवृद्धोऽसि, अतस्त्वत्प्रसादाद्वयमप्येधिषीमहि समृद्धा भवेम। समिज्जन्यज्वालया तेजोऽसि, अतो मयि तेजः स्थापय।

अत्र विनियोगसङ्ग्रहः।

"पत्न्याक्तानं प्रघासेति प्रतिप्रस्थातृकर्म तत्।
स्वासी मो ष्वित्यनुब्रूयाद् यद्ग्राम इति दम्पती॥
अक्रन्नित्यपि॰ तावेव मन्त्रास्त्वार ईरिताः"। इति।

अथ मीमांसा। सप्तमाध्यायस्य प्रथमपादे चिन्तितं।

"वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रकः।
सवादाङ्गविधिस्तो वा हविर्विध्यन्वयाद्भवेत्॥
अर्थवादैकमिष्टोऽसौ नैवमङ्गविधेरपि।
समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यतां"॥

चातुर्मास्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकानि चत्वारि पर्वाणि। तत्र वैश्वदेवेऽष्टौ हवींषि विहितानि 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं' इति। तेषां हविषां ब्राह्मणेऽर्थवाद आम्नातः 'वार्त्रघ्नानि वा एतानि हवीꣳषि' इति। अङ्गविधयोऽपि तत्राम्नाताः 'त्रेधा सन्नद्धं बर्हिर्भवति त्रेधा सन्नद्ध इध्मः। नव प्रयाजा इज्यन्ते नवानूयाजाः' इति। एवं स्थिते वरुणप्रघासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेतेषु पञ्चस्वतिदिशति 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि' इति, तत्रार्थवादमात्रस्यातिदेशो न्याय्यः, तस्य हविर्विधिभिः सह स्तुत्याः स्तावकरूपेणान्वयसम्भवात् अङ्गविधिना च तदसम्भवादिति चेत्। मैवं, उपकार्योपकारकभावेन हविषामङ्गानां चान्वयात्, तस्मादर्थवादसहितानामङ्गविधीनामतिदेशः।

तत्रैवान्यच्चिन्तितं।

"श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनं।
तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि"॥

एककपालब्राह्मणं वैश्वदेववरुणप्रघासेषु पठितं, ऐन्द्राग्नब्राह्मणं वरुणप्रघासेष्वाम्नातं। एवं स्थिते साकमेधेषु विहितयोरेककपालैन्द्राग्नयोर्ब्राह्मणातिदेश आम्नायते 'एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरस्येतरस्य' इति।

तत्रोभयत्र पूर्वन्यायेन अर्थवादविधिसहिताङ्गकाण्डस्य सर्वत्रातिदेशः। पूर्वन्यायस्य विषयव्याप्तये वक्ष्यमाणोदाहरणस्मारणाय वाकथनं।

एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"मारुत्या सार्धमष्टाभिरङ्गे तन्त्रं भिदाथवा।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः"॥

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि, तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति, इतराणि त्वष्टावध्वर्युरुत्तरे विहारेऽनुतिष्ठति, तेषामष्टानां प्रयोगैक्यात्तन्त्रेणाङ्गानि उभयवादिसम्मतानि। तथा तान्येव मारुत्या अपीत्यत्रापि तन्त्रं प्राप्तं। कुतः। वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात्। यस्त्वत्र विहारभेद आम्नातः 'पृथगग्नीन् प्रणयतः पृथग्वेदी कुरुतः' इति, सोऽयं पृथगनुष्ठानाभावो व्यर्थः स्यात्। मैवं, हविरासादनमात्रे तद्भेदोपयोगात्। अष्टावध्वर्युरुत्तरविहारे हवींषि आसादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणेऽस्मिन्निति तद्विधानात् तस्मात्तन्त्रमिति प्राप्ते ब्रूमः। देशभेदात्प्रयोगभेदे सत्यङ्गानुष्ठानमपि भिद्यते। न च तस्य हविरासादनमात्रार्थता युक्ता। तदासादनस्य दृष्टदोमार्थत्वे सति त्यागेन अदृष्टार्थत्वकल्पनाप्रसङ्गात् न च प्रयोगभेदेनैव सादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यादिति वाच्यं, अव्यवस्थानात् प्रतिप्रयोगप्राप्तौ तद्व्यवस्थार्थत्वात्। तस्माद्भेदेनाङ्गानुष्ठानं॥

तत्रैवान्यच्चिन्तितं।

"कर्तृभेदो न वा तत्र भेदःस्यादङ्गभेदवत्।

पञ्चर्त्विग्वचनान्नैवं द्वयोरुक्त्या व्यवस्थितिः"॥

तत्र पूर्वोक्तविषये प्रयोगभेदादाघाराद्यङ्गभेद इव होतृ-ब्रह्मादीनां कर्तॄणामपि भेद इति चेत्। नैवं, वाचनिकपञ्च-सङ्ख्याविरोधात्। अध्वर्युप्रतिप्रस्थातृहोतृब्रह्माग्नीध्राः पञ्चर्त्विजः चातुर्मास्येषु विहिताः 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः' इति। यद्याग्नेयाद्यष्टके मारुत्याञ्च होत्रादिभेदः स्यात् तदा पञ्चसङ्ख्या बाध्येत। ननु पञ्चसङ्ख्यासिद्ध्यर्थमाग्नेयाद्यष्टके प्रति-प्रस्थाता प्राप्नुयात् मारुत्यां चाध्वर्युः प्राप्त इति चेत्। सत्यं। प्राप्तावेव तावुभावुभयत्र। व्यवस्था तु वचनाद्भविष्यति। तत्र वचनं पूर्वत्रोदाहृतं तस्मान्नास्ति कर्तृभेदः।

तत्रैवान्यच्चिन्तितं।

"तत्रैव पत्नीसंयाजादि भिन्नं तन्त्रतायवा।

तन्त्रमग्न्यैक्यतो नैवं कर्तृभेदानिवारणात्"॥

तत्रैवाग्नेयाद्यष्टके मारुत्याञ्च गार्हपत्ये होतव्येषु पत्नी-संयाजादिषु तन्त्रं युक्तं। कुतः। गार्हपत्यैकत्वात्। न हि आह-वनीयवद्दक्षिणविहारे गार्हपत्यः पृथगस्ति, तस्मात्तन्त्रमिति प्राप्ते ब्रूमः। न तावत् पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते, तथा सत्यध्वर्युणा कृताः पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकायां मारुत्यां कथमुपकुर्युः। तस्मादध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक् पत्नीसंयाजान् जुहुयातां।

द्वादशाध्यायस्य प्रथमपादे चिन्तितं।

"विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा।
तन्त्रं द्वयोः स्मृतिः सिद्धेदुत्तमोक्त्या पृथग्भवेत्" ॥

वरुणप्रघासेष्वध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषु तयोरर्थस्मृतिसिद्धेः तन्त्रमिति चेत्। न। निर्वपामीत्युत्तमपुरुषार्थपाठमन्तरेण स्मृत्यभावात् तस्मादुभयोः पृथक् पाठः।

सप्तमाध्यायस्य तृतीयपादे चिन्तितं।

"निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते।
नीरोत्सेकः कर्मणो वा विधिः सौमिकधर्मिणः ॥
यो दर्शपूर्णमासाभ्यां वारुण्यां चोदनोद्गतः।
व्युत्सेकोऽनूद्यतामेष मैवं कर्मणि सौमिके ॥
मुख्योऽवभृथशब्दोऽतस्तस्मादृश्यत्रिविवक्षया।
धर्मानतिदिशन् कर्म विधत्ते धर्मसंयुतं" ॥

वरुणप्रघासेषु श्रूयते 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' इति। निष्कास आमिक्षाया लेपः, प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्यादिभिर्मन्त्रैर्दर्शपूर्णमासयोर्दिक्षु सर्वास्वापो विविधमुत्सिच्यन्ते, सोऽयं व्युत्सेको वारुण्यामिक्षायामेव चोदकप्राप्तोऽनूद्यते। अस्ति हि व्युत्सेकस्यापि अवभृथत्वं, एष वै दर्शपूर्णमासयोरवभृथ इति श्रुतत्वादिति प्राप्ते ब्रूमः। सौमिके कर्मण्यवभृथशब्दो मुख्यः, तस्य शब्दस्य उद्भिदादिवद्विधेयक्रियासामानाधिकरण्येन नामधेयत्वात् तत्रैव वैदिकप्रयोगबाहुल्याच्च व्युत्सेके अप्सम्बन्धादुपचर्यते, न हि सौमिककर्मणीवापां व्युत्से-

केऽवभृथभावनामंशचयवर्ती पश्यामो येन तत्र मुख्यत्वमाशङ्क्येत तस्मात् सौमिककर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो मासाग्निहोत्रन्यायेन सौमिकधर्मानतिदिशन् कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते। न च विपर्ययेणात्रैव मुख्योऽवभृथोऽस्त्विति शङ्कनीयं, अपेक्षितस्य कर्मकलापस्यात्राभावात्। तस्मात्सौमिकधर्मोपेतकर्मान्तरविधिः।

तत्रैवान्यच्चिन्तितं।

"तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत।
प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः॥
तुषनिष्कासयोरत्र साक्षात् क्लृप्तोपदेशतः।
अतिदेशप्रापितस्य पुरोडाशस्य बाधना"॥

तत्र पूर्वोक्ते कर्मान्तरे धर्मातिदेशकेन अवभृथशब्देन पुरोडाशोऽतिदिश्यते। अतिदेशस्योपदेशाद्दुर्बलः तस्मात्तुषनिष्कासाभ्यां पुरोडाशो बाध्यते।

एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"निष्कासावभृथे विप्रकर्षोऽस्य प्रतिपादनं।
उतार्थकर्म पश्वादावोऽवभृथशब्दतः॥
कर्मान्तरं तदापि स्यात्प्रतिपत्तिः प्रयाजवत्।
प्राधान्यायार्थकर्म स्यात् तच्चावभृथधर्मकं"॥

चातुर्मास्यगतेषु वारुणीमामिक्षां प्रकृत्य इदमाम्नायते 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' इति। अत्रायं प्रयोगप्रकारः 'वरुणप्रघासेषु नव हवींꣳषि तेष्वष्टमं हवि-

वारुणामिक्षा नवमं हविः काय एककपालः वारुणामिक्षायां यवपिष्टनिर्मितं मेषमवदध्यात्' इति। ततः आमिक्षासंयुक्तं सर्वमवदाय हुत्वा, तत एककपालेन प्रचर्य्य भाण्डलिप्तेन वारुणामिक्षाया निष्कासेन च तुषैश्च अवभृथमनुतिष्ठन्तीति। तत्र संशयः। किं वारुणामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्द्ध्वं निष्कासरूपेणांशान्तरेण तुषैश्च प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः। उत कर्मान्तरं। तत्रापि किं प्रतिपत्तिकर्म आहोस्विदर्थकर्मेति। तत्र विप्रकर्ष इति तावत्प्राप्तं। कुतः, पशौ तथा दृष्टत्वात्। प्रातःसवने वपया प्रचर्य्य तृतीयसवने हृदयाद्यङ्गैः प्रचार इति सवनीयपशौ यथा प्रचारविप्रकर्षः तद्वदत्रापीत्याद्यः पक्षः। तथा सत्यवभृथशब्दवैयर्थ्यप्रसङ्गात् कर्मान्तरमिति पक्षान्तरं। तदाप्यामिक्षाहविःशेषस्य निष्कासस्यान्यस्मिन् कर्मणि हविष्ट्वायोगात् प्रयाजशेषन्यायेनेदं प्रतिपत्तिः स्यात्, यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र तच्छेषं संस्कर्तुमभिघारणमेवमत्रापि निष्कासः संस्क्रियत इति प्राप्ते ब्रूमः। तस्मिन् पक्षे निष्कासस्यैव संस्कार्यद्रव्यत्वेन प्राधान्यान्निष्कासमिति विभक्तिव्यत्ययः स्यात्। अतोऽवभृथस्य प्राधान्यादर्थकर्मत्वमेव द्रष्टव्यं। यदि चातुर्मास्येषु अवभृथः तदा तद्धर्मातिदेशाय तन्नामनिर्देशोऽस्तु, तस्य तदीयद्रव्यशेषस्यापि कर्मान्तरे विनियोगो वाचनिकः, तस्मादर्थकर्म।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डे ऽष्टमप्रपाठके तृतीयोऽनुवाकः॥ * ॥

अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो । देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हरा निहारं ॥ १ ॥

निहरामि ते । मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यताग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालं ॥ २ ॥

हरा निहारं चिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीये वरुणप्रघासाख्यं द्वितीयं चातुर्मास्यपर्वोक्तं । चतुर्थपञ्चमषष्ठेषु साकमेधाख्यं तृतीयं पर्वोच्यते । तच्च पर्वदिनद्वयेऽनुष्ठेयं । तदाहापस्तम्बः 'ततश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजत' इति । तत्र प्रथमदिने कर्तव्यानि त्रीणि हवींषि विधत्ते "अग्नयेऽनीकवते पुरोडाशमष्टाकपालं

निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं" इति। अनीकवते सैन्यवते। उद्यता सूर्येण साकमित्युदयकालविधिः। सम्यक्तपनं सन्तपनं तत्सम्बन्धिनः सान्तपना अनिष्टविनाशिन इत्यर्थः। मेधो यज्ञः, गृहश्च मेधश्च तदुभयवन्तो गृहमेधिन उभयपालका इत्यर्थः। सर्वासां यजमानस्य यावत्यो गावः सन्ति तावतीनां। विहितास्विष्टिषु प्रथमेष्टिदेवतागुणं प्रशंसति "देवासुराः संयत्ता आसन्। सोऽग्निरब्रवीत्। ममेयमनीकवती तनूः। तां प्रीणीत। अथासुरानभिभविष्यथेति। ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन्। सोऽग्निरनीकवान्स्वेन भागधेयेन प्रीतः। चतुर्धानीकान्यजनयत। ततो देवा अभवन्। परासुराः। यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति। अग्निमेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति। सोऽग्निरनीकवान्स्वेन भागधेयेन प्रीतः। चतुर्धानीकानि जनयते" (ब्रा०१का०।६प्र०।६अ०) इति। चतसृष्वपि दिक्षु असुरानवरोद्धुं चतुर्विधानि सैन्यानि। सूर्योदयकालं प्रशंसति "असौ वा आदित्योऽग्निरनीकवान्। तस्य रश्मयोऽनीकानि। साकꣳ सूर्येणोद्यता निर्वपति। साक्षादेवास्मा अनीकानि जनयति" (ब्रा०) इति। उष्णत्वादादित्यस्याग्नित्वं, उत्साहोपेतयोद्धृवत्सर्वतस्त्वरया प्रसरद्रश्मीनामनीकत्वं। द्वितीयाया इष्टेर्देवताया गुणं प्रशंसति "तेऽसुराः पराजिता यन्तः। द्यावापृथिवी उपाश्रयन्। ते देवा मरुद्भ्यः

सान्तपनेभ्यश्चरुं निरवपन्। तान् द्यावापृथिवीभ्यामेवोभयतः समतपन्। यन्मरुद्भ्यः सान्तपनेभ्यश्चरुं निर्वपति। द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्त्सन्तपति" (ब्रा०) इति। तानसुरान् द्यावापृथिवीभ्यामेव कृत्स्नयोरपि द्यावापृथिव्योरुभयत असुरानामधस्ताच्चोपरिष्टाच्च समतपन् प्रहाराद्युपद्रवेण सन्तापितवन्तः। कालं प्रशंसति "मध्यन्दिने निर्वपति। तर्हि हि तेक्ष्णिष्ठं तपति"(ब्रा०)इति। तर्हि मध्याह्नकाले। तेक्ष्णिष्ठमतिशयेन तीक्ष्णं यथा भवति तथा सूर्यस्तपति, हि प्रसिद्धमेतत्। चरुं प्रशंसति "चरुर्भवति। सर्वत एवैनान्त्सन्तपति" (ब्रा०) इति। चरुपाकभाण्डस्य सर्वतस्तप्यमानत्वात् शत्रूणामपि सर्वतः सन्तापः। तृतीयेष्टेर्देवताविशेषणं प्रशंसति "ते देवाः श्वो विजयिनः सन्तः। सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन्। आशिता एवाद्योपवसाम। कस्य वाहेदं। कस्य वा श्वो भवितेति। स शृतोऽभवत्। तस्याहुतस्य नाश्नन्। न हि देवा अहुतस्याश्नन्ति। तेऽब्रुवन्। कस्मा इमꣳ होष्याम इति। मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन्। तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः। ततो देवा अभवन्। परासुराः। यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति। भवत्यात्मना। परास्य भ्रातृव्यो भवति" (ब्रा०) इति। ते देवा अस्मिं दिने प्रथमेष्ट्या सैन्यानि सम्पाद्य द्वितीयेष्ट्या विरोधिनोऽसुरान् सर्वतः सन्तप्य पुनः परेद्युरपि जेष्याम इत्यभिप्रेत्य गृहमेधीयं निरुप्य इत्थं विचारितवन्तः। इदं हविरद्य कस्य वा भवति कस्य वा श्वो

भविष्यतीति न ज्ञायते, तस्माद्वयं सह भुक्तवन्त एवाग्निसमीपे वसामेति। एतावति विचारकाले चरुः पक्वोऽभूत्। तदानीं देवा अहुतत्वात् तं चरुं नैवाशितवन्तः, यस्माद्देवाः क्वाप्यहुतं नाश्नन्ति तस्माद्युक्तमेवैतत्। ततस्ते देवाः परस्परं विचारितवन्तः। किमिति कस्मै देवायेमं चरुं होष्याम इति। ततो निश्चित्य गृहमेधिभ्यो हुत्वा विजयं प्राप्ता असुराश्च पराभूताः। अस्मिन् कर्मणि आज्यभागौ यजतीत्यादिना कानिचिदङ्गानि विधास्यन्ते। तत्र यावदङ्गाकाङ्क्षोपेतमपूर्वमिदं कर्म न तु दर्शपूर्णमासविकृतिरिति जैमिनिर्विचारितवान्। ततोऽर्थप्राप्तः सामिधेन्याद्यभावः। तमिमं विस्पष्टयितुमनुवदति "यद्वै यज्ञस्य पाकत्रा क्रियते। पशव्यं तत्। पाकत्रा वा एतत्क्रियते। यन्नेध्माबर्हिर्भवति। न सामिधेनीरन्वाह। न प्रयाजा इज्यन्ते। नानुयाजाः। य एवं वेद। पशुमान् भवति" (ब्रा०) इति। यज्ञस्य सम्बन्धि यदनुष्ठानं पाकत्रा पाकेषु पाकयज्ञवदित्यर्थः। तस्य पशव्यत्वं युक्तं। पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्त इति श्रुतत्वात्। यस्मादत्रेध्माबर्हिरादयो न सन्ति तस्मादेतत्कर्म पाकयज्ञवदेव क्रियते। प्राच्यमङ्गं विधत्ते "आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरेति" (ब्रा०) इति। यागवेलायामुद्देश्यां देवतां प्रशंसति "मरुतो गृहमेधिनो यजति। भागधेयेनैवैनान्त्समर्धयति" (ब्रा०) इति। उदीच्यमङ्गं विधत्ते "अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै" (ब्रा०) इति। अङ्गान्तरं विधत्ते "इडान्तो भवति।

पशवो वा इडा। पशुष्वेवोपरिष्टात्प्रतितिष्ठति" (ब्रा०) इति। अर्थमिद्धं चतुर्धाकरणायुदीच्याङ्गान्तराभावं द्योतयितुमन्तः शब्दः। तदेवमनुब्राह्मणगतेनैकेनानुवाकेन पूर्वदिनेऽनुष्ठेया मुख्यब्राह्मणविहितास्तिस्र इष्टयो व्याख्याताः। अनुवाकान्तरेण द्वितीयदिने कर्तव्यत्वेन विहिता इष्टयो व्याख्यातव्यास्तत्रादौ तावद्गृहमेधीयशेषभूतं किञ्चिदङ्गं विधातुं प्रस्तौति "यत्पत्नी गृहमेधीयस्याश्नीयात्। गृहमेध्येव स्यात्। वि त्वस्य यज्ञ ऋध्येत। यन्नाश्नीयात्। अगृहमेधी स्यात्। नास्य यज्ञो व्यृध्येत" (ब्रा०६का०।६प्र०।७अ०) इति। यदि पत्नी गृहमेधीयस्य चरोर्भागं भुञ्जीत तदा यजमानो गृहेण यज्ञेन चोपेतो भवति। किन्त्वस्मिन् पक्षे यजमानस्य यज्ञो व्यृद्धो भवेत्। अभोजनपक्षे तु व्यृद्धत्वदोषो न भवति किन्तु गृहमेधित्वाभावः। विधत्ते "प्रतिवेशं पचेयुः। तस्याश्नीयात्। गृहमेध्येव भवति। नास्य यज्ञो व्यृध्यते" (ब्रा०) इति। प्रातिस्विकत्वेन पत्नीं विशतीति प्रतिवेशः पत्न्यर्थ ओदनः, तं दक्षिणाग्नौ पक्कारः पचेयुः। तथा चापस्तम्बः 'दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति' इति। पत्नी तमोदनमश्नीयात्। ततो नोक्तदोषद्वयमभोजनाभावाद् गृहमेधीयभोजनाभावाच्च। भोजनादीन् विधातुं प्रस्तौति "ते देवा गृहमेधीयेनेष्ट्वा। आशिता अभवन्। आञ्जताभ्यञ्जत। अनु वत्सानवासयन्। तेभ्योऽसुराः क्षुधं प्राहिण्वन्। सा देवेषु लोकमवित्त्वा। असुरान् पुनरगच्छत्"(ब्रा०) इति। आशिता भुक्तवन्तः आञ्जत नेत्रयोरञ्जनं प्रक्षिप्त-

वन्तः, अभ्यञ्जत अभ्यङ्गं कृतवन्तः। धेनूरनु वत्सानवासयन् स्तन-पानार्थमवासृजन्। तदानीमसुरा देवानां समीपे क्षुधं प्रेरितवन्तः, सा च तृप्तेषु हृष्टेषु देवेषु स्थानमलब्ध्वा पुनरप्यसुरानेव प्राप्नोत्। विधत्ते "गृहमेधीयेनेष्ट्वा। आशिता भवन्ति। आञ्जतेऽभ्यञ्जते। अनु वत्सान् वासयन्ति। भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति" (ब्रा०) इति। तदेतदभिप्रेत्य पूर्वमाशिता एवाद्योपवसामेत्यादिर्दैवविचार उपाहृतः। अत्र गृहमेधीयसन्निधौ द्वौ मन्त्रावाम्नातौ तयोर्विनियोगमापस्तम्ब आह 'शरनिष्कासस्य दर्वीं पूरयित्वर्षभमाह्वय तस्य रवते पूर्णा दर्वि परापतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयाद् यदृषभो न स्यात् ब्रह्मा ब्रूयाज्जुहुधीति' इति। पच्यमाने चरौ क्षीरमण्डवद्घनीभूतो योऽंश उपरि तिष्ठति सोऽयं शरनिष्कासः। तस्य रवते वृषभस्य शब्दे निष्पन्ने सति। प्रथममन्त्रपाठस्तु "पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो" इति। हे दर्वि त्वं शरनिष्कासेन पूर्णा सती परापत इन्द्रं प्रतिगच्छ, तत्प्रसादाद्धनेन तज्जन्यबलेन सुपूर्णा सती पुनरस्मान् प्रत्यागच्छ। हे शतक्रतो आवां वस्नेव विक्रीणावहै यथा लोके कश्चित्स्वकीयं धनं दत्त्वा तण्डुलादिकं क्रीणाति तद्वदहमिन्द्राय तुभ्यं शरनिष्कासं दत्त्वा त्वत्त इषमूर्जं च क्रीणामि। तदिदमुच्यते वस्नेव वसुनेव धनेनेव क्रीणावहा इति। द्वितीयमन्त्रपाठस्तु "देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारमिन्नि मे हरा निहारं निह-

रामि ते" इति। हे इन्द्र मे यदपेक्षितं तत् त्वं देहि। तव यदपेक्षितं तदहं ददामि। दत्त्वा च त्वं मम समीपे निधेहि अवस्थापय, तव समीपेऽहमवस्थापयामि, तदुभयं सकृदेव न भवति किन्तु निहारमित् पुनः पुनर्निर्हृत्यैव समानीयैव मे समीपे निहर नितरां स्थापय। अहमपि पुनः पुनर्निर्हृत्य ते समीपे स्थापयामि। यथोक्तं निष्कामहोमं प्रशंसति "ते देवा गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कासं न्यदधुः। अस्मानेव स्व इन्द्रो निहितभाग उपावर्तितेति। तानिन्द्रो निहितभाग उपावर्तत" (ब्रा०) इति। उपावर्तिता समागमिष्यति, उपावर्तत समागच्छत्। विधत्ते "गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कासं निदध्यात्। इन्द्र एवैनं निहितभाग उपावर्तते" (ब्रा०) इति। होमाय प्राप्तमाहवनीयं वारयितुं विधत्ते "गार्हपत्ये जुहोति। भागधेयेनैवैनꣳ समर्धयति" (ब्रा०) इति। यागकाले ध्वनिं कर्तुमृषभस्य आह्वानं विधत्ते "ऋषभमाह्वयति। वषट्कार एवास्य सः। अथो इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते" (ब्रा०) इति। द्वितीयदिने ऽनुष्ठेयानि नव हवींषि विधत्ते "मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यताग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालं" इति। आद्यस्य हविष उत्तरहविरष्टकस्य च कालभेदात्प्रयोगभेदो द्रष्टव्यः। क्रीडा एषामस्ति इति क्रीडिनस्तदेतत्क्रीडित्वं विशेषणं। तस्य

हविषः प्राठप्राप्तं प्राथम्यञ्च प्रशंसति "इन्द्रो वृत्रꣳ हत्वा। परां परावतमगच्छत्। अपाराधमिति मन्यमानः। सोऽब्रवीत्। क इदं वेदिष्यतीति। तेऽब्रुवन् मरुतो वरं वृणामहै। अथ वयं वेदाम। अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति। त एनमभ्यक्रीडन्। तत्क्रीडिनां क्रीडित्वं। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै" (ब्रा०) इति। परां परावतमत्यन्तदूरं, अपाराधं द्रोहमकार्षं। भीत्या पलायमानः स इन्द्रो मरुतां समीपे किञ्चिदब्रवीत्, वृत्रो मृतो न वेतीदं समीपे गत्वा को वेदिष्यतीति। ते च मरुतो वरे दत्ते वेदिष्याम इत्यब्रुवन्, इतरेभ्योऽग्न्यादिभ्यः प्रथमो निर्वापो वरः, ततस्ते मरुत एनं भूमौ पतितं वृत्रमधिरुह्य बहुविधेन नृत्येनाक्रीडन् क्रीडित्वा च मृतोऽयमिति ज्ञातवन्तः। तस्मादेतेषां क्रीडित्वं विशेषणसम्पन्नं। निर्वापकालं प्रशंसति "साकꣳ सूर्येणोद्यता निर्वपति। एतस्मिन् वै लोक इन्द्रो वृत्रमहन्नसृमृद्धौ" (ब्रा०) इति। एतस्मिन्नेव लोके सूर्योदयेनावलोक्यमानभूप्रदेशे। वैश्वदेवपर्वण्युक्तमाग्नेयादिपञ्चकप्रशंसकं वरुणप्रघासपर्वण्युक्तमैन्द्राग्नप्रशंसकञ्च ब्राह्मणमत्रातिदिशति "एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। एतद्ब्राह्मण ऐन्द्राग्नः" (ब्रा०) इति। चरोरैन्द्रत्वं प्रशंसति "अथैष ऐन्द्रश्चरुर्भवति। उद्धारं वा एतमिन्द्र उदहरत। वृत्रꣳ हत्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति। उद्धारमेव तं यजमान उद्धरते। अन्यासु प्रजास्वधि" (ब्रा०) इति। अन्यास्वग्न्यादिदेवतासु

अधिकोऽयमित्येतमुद्गारं उत्कर्षाभिमानमुदहरत उत्पादितवान्। विश्वकर्मरूपामन्यहविषा देवतां प्रशंसति "वैश्वकर्मण एककपालो भवति। विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"पूर्णेत्यनूच्य देहीति याज्यामध्वर्युरीरयेत्"।

अथ मीमांसा। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

"साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा।
प्रातरादेर्द्वयोरह्नोः सत्त्वात् प्रकृतिवद् द्व्यहे॥
साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः।
श्रौतं सद्यस्त्वमन्यत्तु चोदकात्तेन दुर्बलं"॥

चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि श्रूयते 'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं' इति। ता एतास्तिस्र इष्टयो द्व्यहकालीना यथा प्रकृतौ पर्वण्यन्वाधानादिकं प्रतिपदीष्टिरिति द्व्यहकालीनत्वं तद्वत्। ननु प्रातर्मध्यन्दिनसायंशब्दैरेकस्मिन्नेवाह्नि त्रयः कालाः तिसृणामिष्टीनां विहिताः, तन्न। द्वयोरप्यह्नोः प्रातरादिकालेषु स्वकीयेषु तासामुपक्रमः परेद्युः प्रातरादिषु ताः समापनीयाः। ततो द्व्यहकालीनतेति प्राप्ते ब्रूमः। तत्राग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपतीति साङ्गप्रधानं प्रातःकालीनतया विधीयते। प्रातःशब्दस्य स्वत एक-

मेव प्रातःकालमभिधाय पर्यवस्यति प्रातरग्निहोत्रमित्यादौ तद्दर्शनात्। तस्मात् साङ्गस्य प्रधानस्यैकस्मिन्नेव प्रातःकाले विधानात् सद्यस्कालीनत्वं श्रौतं चोदकेन त्वन्वाधानाद्यङ्गं पूर्वेद्युः प्रातरिति कल्प्यते। उपदेशश्चोदकाद्बलीयान् तस्मादेकाहकालीना द्रष्टव्याः।

सप्तमाध्यायस्य प्रथमपादे चिन्तितं।

"किं वैश्वदेविकादेककपालादतिदेशनं।
साकमेधेषु वरुणप्रघासस्थादुताग्रिमः॥
प्रकृतावर्थबाहुल्यादन्तिमः सन्निधानतः।
ऐन्द्राग्नसाहचर्याच्च सार्थत्वमधिकत्वतः"॥

वैश्वदेवे द्यावापृथिव्य एककपालः वरुणप्रघासेषु काय एककपालस्तयोः पृथग् ब्राह्मणमाम्नातं। साकमेधेषु वैश्वकर्मण एककपालः तस्मिन् वैश्वदेविकैककपालब्राह्मणमतिदेष्टव्यं। कुतः। प्रकृतित्वेन तस्मिन्नुपदिश्यमानधर्मबाहुल्यात्। वारुणप्रघासिकस्य तद्विकृतित्वाद् अल्पा एव धर्मविशेषा उपदिष्टाः शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्तीत्यादयः। तत्र बहून्ग्रहो न्याय्य इति प्राप्ते ब्रूमः। वारुणप्रघासिकब्राह्मणस्य प्रत्यासन्नत्वात् तस्यैवातिदेशो युक्तः। ऐन्द्राग्नब्राह्मणं तत्रत्यमेवातिदिश्यते वैश्वदेवे तदभावात्। तत्साहचर्यादिदमपि तत्रत्यमेव। ननु प्रकृतिभावाद्वैश्वदेवैककपालादेर्वारुणप्रघासिकवत् साकमेधीयेऽपि चोदकेन धर्मातिदेशसिद्धौ ब्राह्मणातिदेशकं वाक्यमिदं व्यर्थमिति चेत्। न हिरण्मयत्वाद्यधिकधर्मातिदेशाया-

पेक्षितत्वात्। तस्माद्दारुणप्रघासिकैककपालब्राह्मणस्यैवातिदेशः।

दशमाध्यायस्य प्रथमपादे* चिन्तितं।

"गृहमेधीयके त्वाज्यभागावित्यनुवादगीः।
स चोदकविधिर्वार्थवादो वाधिककर्म वा॥
परिसङ्ख्याथ सङ्कोचश्चोदकोऽन्यत्र वात्र वा।
अपूर्वं गृहमेधीयं स्याद्वातो श्रुतचोदकं॥
अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात्।
निर्वापवच्चोदकस्य लिङ्गत्वेन सहायता॥
चोदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनं।
विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः॥
प्रत्यभिज्ञानतोऽङ्गस्य परिसङ्ख्येतरस्य हि।
दोषत्रयाच्चोदकस्य सङ्कोचोऽङ्गान्तरेष्वतः॥
व्यापारैक्याच्चोदकस्य स्वार्थे संहरणं भवेत्।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते॥
आज्यभागेति नाम्नोपकारक्लृप्तिस्ततेरिदं।
नामत्वादि समं तस्मात् लुप्यते तेन चोदकः॥

'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनः' इति विहिते गृहमेधीये श्रूयते 'आज्यभागौ यजति' इति। अष्टधात्र संशयः। चोदकप्राप्तयोराज्यभागयोरिह पुनः श्रवणादनुवादोऽयमित्याद्यः पक्षः। तथा सति वैयर्थ्यप्रसङ्गात् सार्थकत्वाय चोदकैतद्वाक्ययोर्मिलितयोरत्राज्यभागविधायकत्वमभ्युपेतव्यं।

* सप्तमपाद इति पाठान्तरः।

ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः मन्त्रः विकृतावपि श्रूयमाणाश्चोदकस्य लिङ्गं तथाज्यभागावपि लिङ्गत्वेन सहायभूतौ ततो मिलितयोर्विधायकत्वमिति द्वितीयः पक्षः। गृहमेधीयविधिवाक्येऽंशस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा, तस्मात् प्रकृताविष्टौ श्रुतस्याज्यभागकर्मण इह पुनः श्रवणमर्थवादत्वेन तत्प्रशंसार्थमिति तृतीयः पक्षः। भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगाद् अर्थवादत्वमयुक्तं, ततश्चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरमिह विधीयते इति चतुर्थः पक्षः। ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नाङ्गान्तरत्वं युक्तं, तस्मादाज्यभागव्यतिरिक्तस्य प्रयाजाद्यङ्गस्य परिसङ्ख्यानार्थमिदमाज्यभागश्रवणमिति पञ्चमः पक्षः। आज्यभागवाक्येन तद्विधिरूपः स्वार्थस्त्यज्येत प्रयाजादिनिषेधरूपोऽन्योऽर्थः परिगृह्येत चोदकप्राप्तं प्रयाजाद्यनुष्ठानं बाध्येतेति दोषत्रयप्रसङ्गात् न परिसङ्ख्या युक्ता, तेन प्रत्यक्षविधिरूपादस्मादाज्यभागवाक्यादानुमानिकचोदकवाक्यमाज्यभागव्यतिरिक्तप्रयाजाद्यङ्गेषु सङ्कोचनीयमिति षष्ठः पक्षः।, यदि चोदकस्य प्रत्यङ्गं पृथग् व्यापारास्तदा प्रयाजाद्यङ्गगोचरैर्व्यापारैस्तेषामतिदेशः सिद्ध्यति। आज्यभागगोचरस्थानेन प्रत्यक्षविधिना बाधितत्वात् न चोदकेनाज्यभागातिदेश इत्येवं सङ्कोचो वर्णयितुं शक्यते। इह तु शब्दबुद्धिकर्मणां विरम्य व्यापाराभावेनैक एव चोदकस्य व्यापारः। तथा सति युगपदतिदेशोऽनतिदेशश्चेति विरुद्ध-

धर्मत्वं प्रसज्येत। तस्मात्प्रयाजाद्यङ्गेषु सङ्कोचो न युक्तः, तेन चोदकोऽत्राज्यभागकर्मणि सङ्कोचनीयः, न चोक्तदोषापत्तिः। अस्य सङ्कोचस्योपसंहाररूपत्वात्। आज्यभागयोरेव शक्तस्य चोदकस्य तज्ज्ञातशक्तिज्ञापनमुपसंहारः। तथा सति आज्यभागातिदेशव्यापृतस्य चोदकस्य को नामातिदेशतन्निवृत्तिरूपविरुद्धधर्मप्रसङ्गः, तत्राज्यभागकर्मणि चोदकावस्थापनमिति सप्तमः पक्षः। पुरोडाशं चतुर्धा करोत्याग्नेयं चतुर्धा करोतीत्यनयोरुभयोरपि प्रत्यक्षवचनत्वेन सरूपत्वादस्तु तत्रोपसंहारः। इह तु प्रत्यक्षपरोक्षयोर्वचनचोदकयोर्विरूपत्वान्नासौ युक्तः। किन्तु प्रत्यक्षवचनेनैव आज्यभागविधिसिद्धेः चोदककल्पना निरर्थका, अतस्तस्या उपसंहारो न युक्तः। तस्मादपूर्वो गृहमेधीयो न चोदकेनान्याङ्गानि गृह्णातीतिकर्तव्यताकाङ्क्षा तु प्रत्यक्षवचनेनैव पूर्यते। एवं सत्युक्तदोषाभावादयमष्टमः पक्षोऽभ्युपगन्तव्यः। ननु साङ्ग्रहण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः सह चोदकातिदिष्टानामनूयाजानां समुच्चयोऽङ्गीकृतः, तद्वदत्रापि विधीयमानयोराज्यभागयोश्चोदकप्राप्तैः प्रयाजाद्यङ्गैः सर्वैः सह समुच्चयोऽस्तु। न। वैषम्यात्। प्रकृतावाज्यभागयोस्तूपकारः क्लृप्तः सोऽत्र नामसाम्येन स्मर्यते, तस्मात् क्लृप्तोपकाराभ्यां विधीयमानाभ्यामाज्यभागाभ्यां निराकाङ्क्षो गृहमेधीयः, आमनहोमास्तु न क्लृप्तोपकारा इति तैः साङ्ग्रहण्या अङ्गाकाङ्क्षा न पूर्यते। तच्च क्लृप्तोपकारैरनूयाजाद्यङ्गैश्चोदकेन सहातिदिष्टैः पूर्यते। ततो विधिवैयर्थ्यपरिहाराया-

मनहोमेषु उपकारे क्लृप्ते सति तस्मिन् प्रवर्तमानैः प्रयोगवचनैः* समुच्चित्यानुष्ठापयति ततो वैषम्यात् क्लृप्तोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीयचोदको लुप्यते। तस्माद्विकृतिरूपं साङ्गमपूर्वं कर्माच विधीयत इति सिद्धान्तः।

तत्रैवान्यच्चिन्तितं।

"तत्रान्यदङ्गं नो कार्यं कार्यं वान्यानपेक्षणात्।
न कार्यं विहितत्वेन कार्यं स्विष्टकृदादिकं"॥

तत्र गृहमेधीये आज्यभागाभ्यामेव निराकाङ्क्षत्वाद् अन्यत् स्विष्टकृदादिकं न कार्यमिति चेत्। मैवं, आज्यभागवद्विहितत्वाद्, यदग्नये स्विष्टकृते समवद्यति इडामुपह्वयत इति विहितं। तस्माद् यावदुक्तं कर्तव्यं।

तत्रैवान्यच्चिन्तितं।

"तत्रैव परिसङ्ख्यात्वे प्राशित्राद्यस्ति वा न तत्।
अस्तीडादर्शनान्मैवं तदुक्त्याऽस्त्वत्र नेतरत्"॥

गृहमेधीये स्विष्टकृत्याज्यभागवदष्टधा संशयं हृदि निधाय परिसङ्ख्यार्थं प्रश्नमपक्षमभ्युपेत्येयं कृत्वा चिन्तावतारिता। तत्र प्राशित्रादिभक्षणं न परिसङ्ख्यातं किन्तु तदस्ति। कुतः। भक्षणाद्यर्थस्येडोपाह्वानस्य तत्र दर्शनादिति प्राप्ते ब्रूमः। अत्र गृहमेधीये तदिडाभक्षणं वचनबलेनास्तु, स्विष्टकृद्वाक्यप्रापिता परिसङ्ख्या, तस्य वचनेन निवारितत्वात्, इतरत् प्राशित्रादिभक्षणं परिसङ्ख्यातत्वान्नास्ति।

---

* प्रवर्तमानः प्रयोगवचन इत्यसङ्गतः पाठः।

सप्तमाध्यायस्य तृतीयपादे चिन्तितं।

"सौमिकं प्राकृतं वा स्यात् तयोः प्रणयनं श्रुतं।

आद्योऽप्राप्तत्वतो मैवमनामत्वेन वाग्मिमः" ॥

चातुर्मास्येषु श्रूयते 'द्वयोः प्रणयति तस्माद्द्वाभ्यां यन्ति' इति। अत्र सौमिकधर्मकमग्निप्रणयनं यत् तदेव ग्रहीतव्यं। कुतः। सोमस्य चातुर्मास्यप्रकृतित्वाभावेन तदीयप्रणयनस्यात्र चोदकादप्राप्तस्य विध्यर्हत्वात्। दर्शपूर्णमासगतं त्वग्निप्रणयनं चोदकप्रापितत्वादविधेयं, तस्मात् सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्त इति प्राप्ते ब्रूमः। नायं प्रणयनशब्दः सौमिकस्य प्रणयनकर्मणो नामधेयं, किन्तु निर्मन्थ्यबर्हिरादिशब्दवल्लौकिक एव, ततो न धर्मातिदेशः। यदि प्राकृतप्रणयनस्य प्राप्तत्वाद्विधिवैयर्थ्यं तर्ह्यर्थवादसम्बन्धार्थं तद्वाक्यमस्तु।

तत्रैवान्यच्चिन्तितं।

"आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्प्रसङ्गकात्।

आद्यन्तयोरूरुगत्या मध्ययोः पर्वणोर्भवेत्" ॥

तस्माद्द्वाभ्यां यन्तीत्यर्थवादेन सम्बन्धाय पुनर्विधिना यत्प्राकृतमग्निप्रणयनं चोदकप्राप्तमपि श्रूयत इत्युक्तं तद्वैश्वदेवशुनासीर्ययोः पर्वणोर्भवितुमर्हति। कुतः। प्रसङ्गकात्। तथा हि 'न वैश्वदेव उत्तरवेदिमुपवपति न शुनासीर्ये' इत्युत्तरवेदिप्रतिषेधस्तयोः पर्वणोर्वेदिं प्रसञ्जयति अप्रसक्तप्रतिषेधायोगात्। उत्तरवेदिस्त्वग्निप्रणयनार्था तस्मादुत्तरवेदिप्रसक्तिद्वारेणाद्यन्तयोरिदमग्निप्रणयनमिति प्राप्ते ब्रूमः। ऊरू वा एतौ यज्ञस्य

यद् वरुणप्रघासाः साकमेधश्चेति गमनसाधनत्वमूहत्वं मध्य-मयोः पर्वणोरुपन्यस्तं। तत्सन्निधौ द्वयोः प्रणयन्तीति चोदक-प्राप्तमग्निप्रणयनमर्थवादार्थं पुनर्विधाय द्वाभ्यां यन्तीत्यर्थवा-देनोहत्वकल्पना युक्ता द्वाभ्यां पर्वभ्यां गमनमुपन्यस्यते। तस्मा-न्मध्यमयोस्तत्प्रणयनं। न चात्रोत्तरवेदेरभावात्प्रणयनाभाव इति शङ्कनीयं। उपवपतीत्यनारभ्यश्रुतेन वाक्येनोत्तरवेद्युप-वापस्य विहितत्वात्। सा चोत्तरवेदिराद्यन्तयोः पर्वणोर्निषे-धान्मध्यमयोरवतिष्ठते। तस्माच्चोत्तरवेद्यां प्रणीतोऽग्निर्विधी-यते। एतदर्थमेव हि सार्थवादं पुनर्विधानं। उक्तमधिकरण-द्वयमेकीकृत्य वार्तिककारेण यो निर्णयोऽभिहितस्तं दर्शयति।

"अनामत्वाच्च वैयर्थ्यात् सौमिकं प्राकृतञ्च न।
अपूर्वं तत्प्रणयनं शाखान्तरसमीरितं"॥

आहवनीयादग्निं प्रणयत इति शाखान्तरे मध्यमयोर्नूतनं प्रणयनं विहितं, तेन समानवचनत्वादत्राप्यपूर्वं प्रणयनं विधत्ते॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः॥ * ॥

सोमा॑य पि॒तृम॑ते पुरो॒डाश॒ꣳ षट्क॑पालं॒ निर्व॑पति पि॒तृभ्यो॑ ब॒र्हि॒षद्भ्यो॑ धा॒नाः पि॒तृभ्यो॑ऽग्नि॒ष्वा॒त्तेभ्यो॑ऽभि-

बान्यायै दुग्धे मन्थमेतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्रं पितरो यथाभागं मन्दध्वꣳ सुसन्दृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी ॥ १ ॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी । अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः । परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथा पितृन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति । मनो न्वाहुवामहे नाराशꣳसेन स्तोमेन पितृणाञ्च मन्मभिः । आ ॥ २ ॥

न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳ सचेमहि । यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसं० ॥ ३ ॥

हरी मन्मभिरा चतुश्चत्वारिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे ऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

चतुर्थे साकमेधाख्ये तृतीये पर्वणि प्रधानहवींष्युक्तानि। पञ्चमे तदीयशेषो महापितृयज्ञ उच्यते। आदौ तावत्त्रीणि हवींषि विधत्ते "सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थं" इति। पितरोऽस्य सन्तीति पितृमान् पितृस्वामीत्यर्थः। बर्हिषि यज्ञे सीदन्तीति बर्हिषदः, धानाः भृष्टयवाः, अग्निष्वात्ता अयज्ञनिष्ठाः, अभिवान्या मृतवत्सा धेनुः, क्षीरे यवपिष्टं प्रक्षिप्य मिश्रीकृतं द्रव्यं मन्थः। तदिदं हविस्त्रयं पितृयज्ञस्तस्य च पितृयज्ञस्य विधिमर्थवादेनोन्नयति "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ता वरुणप्रघासैर्वरुणपाशादमुञ्चत्। साकमेधैः प्रत्यस्थापयत्। त्र्यम्बकै रुद्रं निरवादयत। पितृयज्ञेन सुवर्गं लोकमगमयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमानः सृजते। ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति। साकमेधैः प्रतिष्ठापयति। त्र्यम्बकै रुद्रं निरवदयते। पितृयज्ञेन सुवर्गं लोकं गमयति" (ब्रा०१का०६प्र०८अ०) इति। प्रतिपुरुषमेककपालान्निर्वपतीति विधास्यमाना यागास्त्रैयम्बकाः, तैः क्रूरं रुद्रं परितोष्य निःसारितवान्। तत्र स्वर्गादिलोकहेतुत्वेनात्यन्तप्रशस्तत्वात् पितृयज्ञः कर्तव्य इत्यभिप्रायः। अत्र द्वेयं पक्षं पूर्वपक्षतया विधत्ते "दक्षिणतः प्रा-

चीनावीती निर्वपति। दक्षिणावृद्धि पितॄणां'' (ब्रा०) इति। गार्हपत्यस्य दक्षिणदेशे स्थित्वा प्राचीनावीती मन्त्रकानां हविषां निर्वापं कुर्यात्, यस्मात् पितॄणां सम्बन्धि कर्म दक्षिणावृत् प्रायेण दक्षिणस्यां दिशि वर्तते। तं पक्षं दूषयित्वा सिद्धान्तं विधत्ते "अनादृत्य तत्। उत्तरत एवोपवीय निर्वपेत्। उभये हि देवाश्च पितरश्चेज्यन्ते'' (ब्रा०) इति। यत्रैकोद्दिष्ट-श्राद्धादौ पितर एव पूज्यन्ते, तत्र दक्षिणावृत्त्वमस्तु। इह त्वाज्यभागादिदेवा अग्निष्वात्तादिपितरश्चेज्यन्ते। अतो देवानां प्रियार्थोत्तरतोऽवस्थानमुपवीतञ्च। तर्हि पितॄणां प्रीतिर्न स्या-दित्याशङ्क्य विध्यन्तरेण दक्षिणावृत्त्वं सम्पादयति "अथो यदेव दक्षिणार्धेऽधिश्रयति। तेन दक्षिणावृत्'' (ब्रा०) इति। हविःपाकाय गार्हपत्यस्य दक्षिणभागेऽधिश्रयेत्। तेनैतत्कर्म पितृप्रीत्यै दक्षिणावृदपि भविष्यति। एतदेव कालरूपेण प्रशंसति "सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति। संवत्सरो वै सोमः पितृमान्। संवत्सरमेव प्रीणाति। पितृभ्यो बर्हिषद्भ्यो धानाः। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। यस्मिन् वा ऋतौ पुरुषः प्रमीयते। सोऽस्यामुष्मिं-ल्लोके भवति'' (ब्रा०) इति। वसन्ते ज्योतिषा यजेतेति विधा-नात् सोमस्य संवत्सरत्वं। स एव पितॄणां पतिरित्यस्य पितृमत्त्वं। मासि पितृभ्यः क्रियत इति अमावास्याश्राद्धाभिधानात् पितॄणां मासत्वेनोपचर्यते। यदि वसन्ते प्रमीयते वसन्तो भवति यदि ग्रीष्मे ग्रीष्म इत्यभिधानात् तत्तदृतुदेवताप्रीति-

रेवास्यामुष्मिन् ऋतुसम्बन्धः। भर्जनेन क्वचिदीषत्कृष्णत्वं क्वचित्कृष्णत्वं क्वचिदकृष्णत्वमित्येवंविधं त्रैविध्यं विधत्ते "बहु-रूपा धाना भवन्ति। अहोरात्राणामभिजित्यै" (ब्रा०) इति। अहान्यकृष्णानि अमावास्यारात्रिः कृष्णा अन्यास्तु रात्रय ईषत्कृष्णाः। तृतीययागदेवतां प्रशंसति "पितृभ्योऽग्निष्वात्तेभ्यो मन्थं। अर्धमासा वै पितरोऽग्निष्वात्ताः। अर्धमासानेव प्री-णाति" (ब्रा०) इति। बर्हिषदामनुष्ठितयागत्वान्मासत्वं। अग्नि-ष्वात्तानां यागाभावात् अर्धमासत्वं। एतच्च ये वै यज्वानः ते पितरो बर्हिषद इत्यादिना वक्ष्यते। सृतवत्सां प्रशंसति "अभिवान्यायै दुग्धे भवति। सा हि पितृदेवत्यं दुहे" (ब्रा०) इति। पितृदेवत्यं पितृदेवताभ्यो हितं। मृताः पुरुषाः पितरो भवन्ति, अभिवान्या च मृतवत्सेति सजातीयत्वात्तत्र तेषां प्रीतिः। यदुक्तमापस्तम्बेन 'उद्वासनकाले धाना उद्वास्य वि-भागमन्त्रेण विभज्यार्धा आज्येन संयौति अर्धाः पिष्टानामा-वृता सक्तून् कृत्वा अभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेषु-शलाकयेषुकाण्डेन वा दक्षिणामुखस्तिःप्रसव्यमनारभ्योपमन्थ-ति' इति। तत्रार्धशरावे मन्थनं विधत्ते "यत्पूर्णं। तन्मनु-ष्याणां। उपर्यर्धो देवानां। अर्धः पितृणां। अर्ध उपमन्थति। अर्धो हि पितृणां" (ब्रा०) इति। भुञ्जाना मनुष्याः पात्रपूर्ण-मेव घृतमिच्छन्ति, प्रयाजदेवता जुहूगतेनोपरितनाज्यभागेन तृप्यन्ति, अधोभागेन हविरभिघारणात्। अग्निहोत्रे चोप-रिभागं देवेभ्यो हुत्वा अर्धभागं स्वधा पितृभ्यः पितॄन्

जिन्वेति भूमौ निमृजन्तीति तद्विधानात्तदेतत्सर्वमभिप्रेत्य यत् पूर्णमित्याद्युक्तं । इत्नुशलाकां विधत्ते "एकयोपमन्थति । एका हि पितॄणां" (ब्रा०) इति । यदेकमेकꣳ सम्भरेत् पितृदेवत्यानि स्युरित्यादौ पितॄणामेकत्वसङ्ख्याप्रीतिः प्रसिद्धा । दक्षिणामुखत्वं विधत्ते "दक्षिणोपमन्थति । दक्षिणावृद्धि पितॄणां" (ब्रा०) इति । प्राची देवा दक्षिणा पितर इत्यादौ दक्षिणादिक्-प्रीतिः प्रसिद्धा । हस्ताभ्यां मन्थनं विधत्ते "अनारभ्योपमन्थति । तद्धि पितॄन् गच्छति" (ब्रा०) इति । तृतीयसवनगताशिरादौ मन्थनं स्तम्भे निबध्य मन्थति तत्तु देवानां प्रियं, अत्र त्वनारभ्य मन्थनमकृत्वा हस्ताभ्यामेवोपमन्थति तच्च देववैलक्षण्यात् पितॄणां प्रियं । यदुक्तमापस्तम्बेन 'न प्राचीं वेदिमुद्धन्ति पितृयज्ञो हि न दक्षिणां देवयज्ञो ह्युभे दिशावन्तरोद्धत्य' इति । तामाग्नेयीं दिशमङ्गुल्या निर्दिशन् विधत्ते "इमां दिशं वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते" (ब्रा०) इति । तस्या वेदेश्चतुर्विधं दैविकवैलक्षण्यं क्रमेण विधत्ते "चतुस्रक्तिर्भवति । सर्वा ह्यनुदिशः पितरः । अखाता भवति । खाता हि देवानां । मध्यतोऽग्निराधीयते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै" (ब्रा०) इति । दैविकी वेदिर्दीर्घा न तु समचतुरस्रा, इयं तु समचतुरस्रेति व्यावृत्तिः । अग्निषु प्रकारविशेषं सूत्रकारो दर्शयति 'प्रतिदिशं स्रक्त्योऽवान्तरदेशान् प्रति मध्यानि' इति । परितः कटादिभिराच्छादनं विधत्ते "परिश्रयति । अन्तर्हिता हि पितृ-

लोको मनुष्यलोकात्" (ब्रा०) इति। उन्मूलनं विधत्ते "यत् परुषि दिनं। तद्देवानां। यदन्तरा। तन्मनुष्याणां। यत्स-मूलं। तत्पितॄणां। समूलं बर्हिर्भवति व्यावृत्त्यै" (ब्रा०) इति। परुषि पर्वसन्धौ दिनं छिन्नं तादृशं बर्हिरहिंसितत्वाद्देवानां प्रियं। अत एव बर्हिर्लवनब्राह्मणे श्रूयते 'प्रजापतिर्वा ओषधीः पर्वशो वेद स एना न हिनस्ति' इति। 'ओषधीनामहिं-सायै' इति च। यदन्तरा पर्वमध्ये छिन्नं तन्मनुष्याणां प्रियं सन्धिविशेषस्य तैरज्ञातत्वात्। परिशेषेण समूलत्वं पितॄणां प्रियं। बर्हिषां दक्षिणायत्वं विधत्ते "दक्षिणा स्तृणाति। दक्षिणावृद्धि पितॄणां" (ब्रा०) इति। यदुक्तमापस्तम्बेन 'आस्त-रणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन् पर्येत्योद्धवान्धारय-माणस्त्रिरस्तृणन् प्रतिपर्येत्योद्धवः प्रस्तरः' इति। प्रसव्यमप्रदक्षि-णत्वं यथा भवति तथा। तदिदमप्रदक्षिणत्वप्रदक्षिणत्वाभ्यां षट्कृत्व आवर्तनं विधत्ते "त्रिः पर्येति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। त्रिः पुनः पर्येति। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति" (ब्रा०) इति। इतो भू-लोकादारभ्य तृतीयः पितृलोकः भोगभूमेः स्वर्गस्यान्तरिक्षा-दूर्द्ध्वभावित्वात्। प्रस्तरस्यामन्त्रकमासादनं विधत्ते "यत्प्रस्तरं यजुषा गृह्णीयात्। प्रमायुको यजमानः स्यात्। यन्न गृह्णी-यात्। अनायतनः स्यात्। तूष्णीमेव न्यस्येत्। न प्रमायुको भवति। नानायतनः" (ब्रा०) इति। गृह्णीयात् सादयेदिति। दक्षिणपरिधिवर्जनमभिप्रेत्य विधत्ते "यत्त्रीन् परिधीन् परि-

दध्यात्। मृत्युना यजमानं परिगृह्णीयात्। यन्न परिदध्यात्। रक्षाꣳसि यज्ञꣳ हन्युः। द्वौ परिधी परिदधाति। रक्षसा-मपहत्यै। अथो मृत्योरेव यजमानमुत्सृजति” (ब्रा०) इति। मध्यमोत्तराविति सूत्रेऽभिहितं। हविषामनुक्रमेण सादनं विधत्ते “यत्त्रीणि त्रीणि हवीꣳष्युदाहरेयुः। त्रयस्त्रय एषाꣳ साकं प्रमीयेरन्। एकैकमनूचीनान्युदाहरन्ति। एकैक एषा-मन्वञ्चः प्रमीयते” (ब्रा०) इति। उदाहरेयुरासादयेयुः, एषां यजमानबन्धूनां मध्ये, अन्वञ्चः वृद्धबालानुक्रमगताः, एतेषां मध्ये एकैक एव प्रमीयते न तु युगपत्। दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्येति सूत्रे यदुक्तं तद्विधत्ते “कशिपु कशिपव्याय। उपबर्हणमुपबर्ह-णाय। आञ्जनमाञ्जन्याय। अभ्यञ्जनमभ्यञ्जन्याय। यथाभाग-मेवैनान् प्रीणाति” (ब्रा०) इति। कशिपु तूलपूरितशय्यादि, उपबर्हणं शिरस आधारः, कशिपुप्रभृतीन्युदाहरन्तीत्यनुवर्तते। कशिपुप्रियः कशिपव्यः पिता, तत्परितोषार्थं कशिपु सादयेत् एवमन्यत्। तथा सत्येनान् पितॄन् स्वस्वभागमनतिक्रम्य तो-षयति। तदेवमनुब्राह्मणगतेनानुवाकेन पितृयज्ञे हविरासा-दनपर्यन्तः पूर्वप्रयोगोऽभिहितः। अनुवाकान्तरेण सामिधे-न्यादिक उत्तरप्रयोगोऽभिधीयते। तत्राध्वर्योः प्रैषमन्त्रमुत्पाद्य मन्त्रं व्याचष्टे “अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूही-त्याह। उभये हि देवाश्च पितरश्चेज्यन्ते” (ब्रा०१का०। ६प्र०।९अ०) इति। देवानां पितॄणां चोपकारी योऽग्निः

तस्मै। उशन्तस्त्वेत्येतामृचं सामिधेनीत्वेन विधत्ते "एकामन्वाह। एका हि पितॄणां" (ब्रा०) इति। तस्यामावृत्तिं विधत्ते "त्रिरन्वाह। त्रिर्हि देवानां" (ब्रा०) इति। चोदकप्राप्तावाघारौ प्रशंसति "आघारावाघारयति। यज्ञपरुषोरनन्तरित्यै" (ब्रा०) इति। यज्ञपरुषोर्यज्ञांशयोरलोपाय। वरणं पर्युदस्यति "नार्षेयं वृणीते। न होतारं। यदार्षेयं वृणीत। यद्धोतारं। प्रमायुको यजमानः स्यात्। प्रमायुको होता। तस्मान्न वृणीते। यजमानस्य होतुर्गोपीथाय" (ब्रा०) इति। अग्निर्देवो होता देवान् यक्षदित्यादिनिगदपाठ आर्षेयवरणं। निगदावसाने विष्णुशर्मा मानुष इत्यादिनामोच्चारणं होतृवरणं। बर्हिर्नामकं चतुर्थं प्रयाजं निषेधति "अपबर्हिषः प्रयाजान् यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति" (ब्रा०) इति। चोदकप्राप्तावाज्यभागौ प्रशंसति "आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरेति"(ब्रा०) इति। हविःप्रचारकाले प्राचीनावीतं विधत्ते "प्राचीनावीती सोमं यजति। पितृदेवत्या हि। एषाहुतिः" (ब्रा०) इति। चतुरवदानमपवदितुं विधत्ते "पञ्चकृत्वोऽवद्यति। पञ्च ह्येता देवताः। द्वे पुरोऽनुवाक्ये। याज्या देवता वषट्कारः। ता एव प्रीणाति" (ब्रा०) इति। त्वꣳ सोम प्रचिकितः, त्वया हि नः पितर इत्युभे पुरोऽनुवाक्ये, त्वꣳ सोम पितृभिः संविदान इत्येका याज्या, पितृमान् सोमो देवता, वषट्कारः, ता एताः पञ्च देवता उच्यन्ते। एकैकदेवतार्थं त्रिषु हविःष्वविच्छिन्नाव-

नं विधत्ते "सन्ततमवद्यति। ऋतूनाꣳ सन्तत्यै" (ब्रा०) इति।
ाहापस्तम्बः 'जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति
द्यति सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य'
।। द्वयोः पुरोऽनुवाक्ययोरेकस्या याज्यायाश्च विधिं मनसि
ाय प्रशंसति "प्रैवैभ्यः पूर्वया पुरोऽनुवाक्ययाह। प्रण-
। द्वितीयया। गमयति याज्यया। तृतीये वा इतो
के पितरः। अह्न एवैनान् पूर्वया पुरोऽनुवाक्ययात्या-
ति। रात्रियै द्वितीयया। एवैनान् याज्यया गमयति"
०) इति। त्वꣳ सोम प्रचिकित इत्यनया पूर्वया पितृभ्यो
ः प्रकर्षेण कथितवान् भवति। त्वया हि नः पितर
नया द्वितीयया पितॄन् प्रति हविर्नयति। त्वꣳ सोम
भिरित्यनया तद्धविः पितॄन् गमयति याज्यया। पितॄणां
यलोकवर्तित्वादत्र मन्त्रत्रित्वं युक्तं। किञ्च त्रिभिर्मन्त्रैः
णाह्नो रात्र्याश्च पितॄनानीय हविः प्रति तानागमयत्येव।
हत्तरत उपविश्यावदाय दक्षिणामुखो वेदिमतिक्रम्योद-
त्तिष्ठन् जुहोति। अत्र तु तद्वैपरीत्यं सूत्रकार आह 'दक्षि-
ऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्' इति।
तद्विधत्ते "दक्षिणतोऽवदाय। उदङ्ङतिक्रामति व्यावृत्त्यै"
०) इति। आश्रावयास्तु श्रौषट्वौषडिति मन्त्रत्रयमपवदितुं
ण विधत्ते "ओ स्वधेत्याश्रावयति। अस्तु स्वधेति प्रत्या-
वयति। स्वधा नम इति वषट्करोति। स्वधाकारो हि
तॄणां" (ब्रा०) इति। पितॄन् प्रति यद्वक्तव्यं तस्य सर्वस्य

स्वधाकारो वाचकः, अत आश्रावयेत्यादिशब्दान् न ब्रूते यस्मात् स्वधाकारः पितॄणां प्रियः। विधिवाक्ये पाठादेव प्राप्तं प्रचारक्रमं प्रशंसति "सोममग्रे यजति। सोमप्रयाजा हि पितरः। सोमं पितृमन्तं यजति। संवत्सरो वै सोमः पितृमान्। संवत्सरमेव तद्यजति। पितॄन् बर्हिषदो यजति। ये वै यज्वानः। ते पितरो बर्हिषदः। तानेव तद्यजति। पितॄनग्निष्वात्तान् यजति। ये वा अयज्वानो गृहमेधिनः। ते पितरोऽग्निष्वात्ताः। तानेव तद्यजति" (ब्रा०) इति। सोमः प्रथमं यष्टव्यो येषां पितॄणां ते सोमप्रयाजाः, पितृस्वामित्वेन तस्य प्राथम्यं युक्तं, संवत्सरत्वं तु सोमस्य पूर्वमेवोक्तं। इह लोके यज्ञं कृत्वा पितृलोकं प्राप्ताः बर्हिषदः, इह यज्ञरहिताः गृहमेधिनो ये गृहस्थाः ते पितृलोकं प्राप्य अग्निष्वात्ता उच्यन्ते। स्विष्टकृत्स्थानीयां देवतामपवदितुं विधत्ते "अग्निं कव्यवाहनं यजति। य एव पितृणामग्निः। तमेव तद्यजति। अथो यथाग्निꣳ स्विष्टकृतं यजति। तादृगेव तत्" (ब्रा०) इति। पित्र्यं हविः कव्यं तद्वहतीति कव्यवाहनः। अत एवान्यत्र श्रूयते 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणां' इति। मुख्यब्राह्मणे पैतृकानि त्रीणि हवींषि विधाय एतत्ते ततेत्यादि एकादश मन्त्रा आम्नाताः। तत्र विनियोगमापस्तम्बः 'हविःशेषान् सम्प्लाव्य पिण्डान् कृत्वा तिसृषु स्रक्तीषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामित्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रति मन्त्रं' इति।

सम्प्रोक्षाय सम्यक् मर्दनेनैकीकृत्य। पाठस्तु "एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामनु" इति। तत हे पितः तुभ्यं एतत्पिण्डीकृतमन्नं दत्तं ये चान्ये त्वामनुवर्तन्ते तेभ्योऽप्येतद्दत्तं। मध्यममन्त्रे ये च त्वामन्वित्यनुषङ्गः। प्रपितामहमन्त्रे एतत्त इत्यनुषङ्गः। विधत्ते "एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु निदधाति। तस्मादातृतीयात् पुरुषान्नाम न गृह्णन्ति। एतावन्तो होज्यन्ते" (ब्रा०) इति। यस्मान्मन्त्रेषु तत पितामह प्रपितामहेत्येवं साधारणशब्दनिर्देशः कृतः तस्माल्लोकेऽप्यातृतीयात् पुरुषात् प्रपितामहपर्यन्तं सम्बन्धविशेषेणैव व्यवहरन्ति, न तु तदीयं देवदत्तविष्णुशर्मादि नामोच्चारयन्ति। यस्मात् पार्वणश्राद्धेषु पित्रादयस्त्रय एव पूज्यन्ते न तूपरितनाः, तस्मादत्रापि त्रयाणां निर्देशो युक्तः। कल्पः "अत्र पितरो यथाभागं मन्दध्वं" इत्युक्त्वोदञ्चो निष्क्रम्य "सुसन्दृशं त्वा वयं" इत्यैन्द्रियर्चाहवनीयमुपतिष्ठन्त इति। हे पितरः, अत्र स्रक्तिगतपिण्डेषु स्वस्वभागमनतिक्रम्य हृष्टा भवत। मन्दध्वमिति पदस्याभिप्रायं व्याचष्टे "अत्र पितरो यथाभागं मन्दध्वमित्याह। ह्रीका हि पितरः" (ब्रा०) इति। यस्मात् पितरो लज्जाशीलास्तस्मात् स्वस्वभागादूर्द्धं लज्जां वारयितुं विस्रम्भेण मन्दध्वमित्युच्यते। विधत्ते "उदञ्चो निष्क्रामन्ति। एषा वै मनुष्याणां दिक्। स्वामेव तद्दिशमनुनिष्क्रामन्ति" (ब्रा०) इति। पितृत्वदशायां दक्षिणा दिक् प्राप्ता। ततः पूर्वं मनुष्यतादशायामु-

त्तरा दिगेव परिशिष्यते। आहवनीयोपस्थानमन्त्रपाठस्तु "सुसन्दृशं त्वा वयं मघवन्मन्दिषीमहि। प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु। योजा न्विन्द्र ते हरी" इति। हे मघवन् सुसन्दृशं सुष्ठु कटाक्षवीक्षणेनास्मान् पश्यन्तं त्वां मन्दिषीमहि वयं तर्पयामः। त्वमप्यस्मद्दत्तैर्हविर्भिः पूर्णवन्धुरः परिपूरितरथपृष्ठोऽस्माभिः स्तुतः सन् वशानभीष्टान् देशान् अनुलक्ष्य नूनं प्रयासि प्रायेणागमिष्यसि। हे इन्द्र ते हरी तवाश्वौ योजा नु रथे नियुङ्क्ष्व हि। विधत्ते "आहवनीयमुपतिष्ठन्ते। न्येवास्मै तद्भुवते। यत्तस्त्याहवनीये। अथान्यत्र चरन्ति" इति। आहवनीये पुरोऽवस्थिते सति तमुपेक्ष्याथ तदाऽन्यत्र पैतृकवेदिमध्यस्थेऽग्नौ चरन्तीति यत् तेनास्मै निह्नुवते एनमाहवनीयमपलपन्त्येव तत्क्षमापणायोपस्थानमित्यर्थः। उपस्थानस्यावधिं विधत्ते "आतमितोरुपतिष्ठन्ते। अग्निमेवोपद्रष्टारं कृत्वा। पितॄन्निरवदयन्ते" (ब्रा०) इति। आतमितोराग्लानेः, अनुच्छासेन मन्त्रमुच्चारयता यावता कालेन या निरोधरूपा ग्लानिर्भवति तावदुपस्थातव्यं। तेनोपस्थानेनाग्निमेव साक्षिणं कृत्वा पितॄन् स्वभागप्रदानेन विसृष्टवन्तो भवन्ति। मन्त्रगतस्य सुसन्दृशमित्येतस्याभिप्रायं व्याचष्टे "अन्तं वा एते प्राणानां गच्छन्ति। य आतमितोरुपतिष्ठन्ते। सुसन्दृशं त्वा वयमित्याह। प्राणो वै सुसन्दृक्। प्राणमेवात्मन्दधते" (ब्रा०) इति। श्वासनिरोधेन ग्लानिं प्राप्तेषु कटाक्षनिरीक्षणं नाम प्राणनिरोधपरिहारः, तदेतदभिप्रेत्य प्राणो वै सुसन्दृगित्यु-

च्यते। योऽयं परिहृतनिरोधः प्राणः स एवेन्द्रस्य कटाक्षः, तं कुर्वन्तं त्वामिति मन्त्रे योजनीयं। योजेति पदस्याभिप्राय- माह "योजा न्विन्द्र ते हरी इत्याह। प्राणमेव पुनरयुङ्क्त" (ब्रा०) इति। यथा त्वदीयावश्वौ रथे युक्तौ एवं प्राणम- स्मासु योजयेत्यभिप्रायः। कल्पः। अथ गार्हपत्यमुपतिष्ठन्ते "अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती। योजा न्विन्द्र ते हरी" इति। अक्षन् पितरो हविरशितवन्तः अमीमदन्त भृशं हृष्टाः हि यतः प्रियास्तनूरवाधूषत हविर्भोजनसौकर्येण शिरःप्रभृत्यङ्गानि अकम्पयन्त, स्वभानवः वपुषि जनितेन स्वकीयेन तेजसा भा- समानाः, विप्राः भोजनदृष्ट्या ब्राह्मणसदृशाः सन्तः, नविष्ठया मती अतिशयेन नूतनया बुद्ध्या अस्तोषत भृशमिष्टमेतदित्यादि- वचनैः स्तुतिं कृतवन्तः। योजेत्यादि व्याख्यातं। विधत्ते "अक्ष- न्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते" (ब्रा०) इति। नन्वक्ष- न्नित्यादिमन्त्रः पितृप्रतिपादकः, उपस्थेयस्तु गार्हपत्य इति वैयधिकरण्यमाशङ्क्य मन्त्रस्यापेक्षितशेषपूरणेन वैयधिकरण्य- परिहारं श्रुतिरेव दर्शयति "अक्षन्नमीमदन्ताथ त्वोपतिष्ठा- मह इति वावैतदाह" (ब्रा०) इति। पितरो भुक्तवन्तो हृष्टास्स, अथ तदा साक्षिणं त्वामुपतिष्ठामह इत्येवं मन्त्रवाक्यमाह। मन्त्रस्थौ मघवन्निन्द्रेत्येतावपि शब्दावग्निपरत्वेन व्याख्येयौ। धनवान् परमैश्वर्ययुक्त इति तयोरर्थः। कल्पः। प्राचीनावीतं कृत्वान्वाहार्यपचनमभिप्रपद्यन्ते "अक्षन् पितरोऽमीमदन्त

पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः" इति। अतीतृपन्त अस्मांश्च तर्पयन्तः, अमीमृजन्त अस्मान् शोधितवन्तः। अत्र सूत्रकारः शाखान्तरमन्त्रमपि विनियुङ्क्ते 'अमीमदन्त पितरः सोम्या इत्यातमितोरुपतिष्ठन्ते' इति। तदेतदुपस्थानं विदधानः पूर्ववद्वैयधिकरण्यं परिहरति "अमीमदन्त पितरः सोम्या इत्यभिप्रपद्यन्ते। अमीमदन्त पितरोऽथ त्वाभिप्रपद्यामह इति वावैतदाह" (ब्रा०) इति। कल्पः। परेत पितरः सोम्या इति प्रवाहण्या पितृन् प्रवाहयतीति। पाठस्तु "परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितृन्त्सुविदत्रा२ँ अपीत यमेन ये सधमादं मदन्ति" इति। हे सोम्याः पितरः पथिभिः परेत परावृत्य गृहान् गच्छतेति। कीदृशैः पथिभिः। गम्भीरैः सुलभान्तरायैः पूर्व्यैः पूर्वं कृतैः प्रवृत्तैः। अथ तदा गृहान् गत्वा तस्मिन् पितृलोके यमेन साकं ये पितरः सधमादं सहस्थानस्थमादं यथा भवति तथा मदन्ति हृष्यन्ति, तान् सुविदत्रान् सुष्ठु वेदितृन् चिरवासेन तत्रत्यवृत्तान्तज्ञान् पितृनपि यूयमित प्राप्नुत। कल्पः। मनो न्वाहुवामह इति मनस्वतीभिरुपतिष्ठन्त इति। तिसृषु ऋक्षु प्रथमायाः पाठस्तु "मनो न्वाहुवामहे नाराशꣳसेन स्तोमेन पितृणाञ्च मन्मभिः" इति। नाराशꣳसेन मनुष्यप्रशंसायोग्येन स्तोमेन वाक्यसमूहेन पितृणामपि मन्मभिः मननीयैर्वाक्यैः मनः पितृयज्ञानुष्ठानपरं चित्तं नु क्षिप्रं आहुवामहे आह्वयामः। अथ द्वितीया "आ न एतु मनः पुनः क्रत्वे

दक्षाय जीवसे। ज्योक् च सूर्यं दृशे" इति। क्रत्वे कर्मानुष्ठानाय दक्षाय तत्तत्सामर्थ्याय जीवसे जीवितुं, ज्योक् चिरं सूर्यं दृशे द्रष्टुञ्च योग्यं मन आगत्य नोऽस्मान् पुनरेतु असकृत् प्राप्नोतु। अथ तृतीया "पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहि" इति। हे पितरः दैव्यो जनः देवसम्बन्धिपुरुषसमूहः नोऽस्माकं मनः कर्मानुष्ठानपरं चित्तं ददातु असकृत् प्रयच्छतु। वयमपि व्रातं संवत्सरसङ्घातरूपं जीवं जीवनं सचेमहि सेवेमहि। कल्पः। यदन्तरिक्षमिति पत्न्या गार्हपत्यमुपतिष्ठत इति। पाठस्तु "यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसं" इति। पृथिव्यादीन् लोकान् मनसा जिहिंसिम हिंसितुमिच्छेम यन्मातरं पितरं वा हिंसितुमिच्छेमेति यत् तस्मात्सर्वस्मादेनसः पापात् गार्हपत्यो मां प्रमुञ्चतु अन्यान्यपि दुरितानि यानि चकृम तेभ्योऽपि मुञ्चतु मामनेनसं सर्वपापरहितं करोतु। यदुक्तमापस्तम्बेन 'उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन् पर्येति' इति। तदेतद्विधत्ते "अपः परिषिञ्चति। मार्जयत्येवैनान्। अथो तर्पयत्येव" (ब्रा०) इति। एनान् पितॄन्। तद्वेदनं प्रशंसति "तृप्यति प्रजया पशुभिः। य एवं वेद" (ब्रा०) इति। चतुर्थप्रयाजवत् बर्हिर्नामकं प्रथमानूयाजं निषेधति "अपबर्हिषावनूयाजौ यजति। प्रजा वै बर्हिः।

प्रजा एव मृत्योरुत्सृजति" (ब्रा०) इति। बर्हिर्यागवर्जनात्। प्रयाजानूयाजान् प्रशंसति "चतुरः प्रयाजान् यजति। द्वावनूयाजौ। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति" (ब्रा०) इति। सूत्रकारो युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यतीति प्रैषानुसारेण गार्हपत्यसमीप उपविष्टायाः पत्न्याः पूर्णपात्रनयनपर्यन्तं यदन्वासनमवोचत् तच्च पत्नीसंयाजांश्च चोदकप्राप्तान् प्रतिनिषेधति "न पत्न्यन्वास्ते। न संयाजयन्ति। यत्पत्न्यन्वासीत। यत्संयाजयेयुः। प्रमायुका स्यात्। तस्मान्नान्वास्ते। न संयाजयन्ति। पत्नियै गोपीथाय" (ब्रा०) इति।

अथ विनियोगसङ्ग्रहः।

"एतत्ते इति दत्ते त्रीन् वेद्याः कोणेषु पिण्डकान्।
ब्रूयुरत्रेत्युपस्थानं पूर्वस्याग्नेः सुसन्दृशं॥
अत्रन्निति प्रतीचोऽग्नेस्तथात्रन् दक्षिणानलं।
परेतेति प्रवाह्याय मन आह्वेरुपस्थितिः॥
यत् पश्चिमाग्न्युपस्थानं मन्त्रा द्वादश वर्णिताः"। इति।

अथ मीमांसा। दशमाध्यायस्य द्वितीयपादे चिन्तितं।

"नावघातोऽवघातो वा धानानां न विनष्टये।
न नाशः क्रमबाधेऽतो नावघातोऽत्र बाध्यते"॥

महापितृयज्ञे हविः किञ्चिच्छ्रूयते 'पितृभ्यो बर्हिषद्भ्यो धानाः' इति। धानाशब्देन भृष्टं धान्यमभिधीयते। तासां धानानामवघाते सति सक्तुभावापत्तेः धानात्वमेव विनश्येत,

अतस्तासामविनाशाय नास्त्यवघात इति पूर्वः पक्षः। धाना अवहन्तव्या इति सूत्र चोदकवाक्यं, तस्मिंश्च वाक्ये भर्जनसम्पादितं धानात्वं पूर्वभावि, पश्चाद्भावी त्ववघात इति क्रमः प्रतीयते। तं बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः, अवघातस्य पदार्थस्य बाधाद्वरं तद्धर्मस्य क्रममात्रस्य बाधनं, तस्मादवहन्तव्याः। तदेवाधिकरणं वार्तिककारमतेनारचयति।

"पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात्।
नूतनं प्राकृतं धर्ममात्रादाद्यस्य लाघवात्" ॥

महापितृयज्ञे एवं श्रूयते 'पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थं' इति। मृतवत्सा धेनुरभिवान्या, दुग्धे द्रव्ये प्रक्षिप्य मथिताः सक्तवो मन्थः। तत्र यत्पेषणं तन्न प्राकृतं। कुतः। क्रमव्यत्यासात्। प्रकृतौ हि प्रथमतः पेषणं पश्चात् पुरोडाशश्रपणं। अत्र तु प्रथमतः श्रपणेन धानाः सम्पाद्य पश्चात् सक्तुभावाय पेषणं। तस्मान्नूतनमिति प्राप्ते ब्रूमः। चोदकप्राप्तप्राकृतपेषणतत्क्रमयोरुभयोर्बाधगौरवात् क्रममात्रं बाध्यं। पेषणपदार्थस्तु स एवेति तद्धर्मा दृषन्मन्त्रा इत्यादयोऽत्र कर्तव्याः ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

प्रतिपूरुषमेककपालान् निर्वपत्येकमतिरिक्तं याव-न्तो गृह्याः स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म य-जमानस्य शर्म मे यच्छैक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्रा-म्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं ॥ १ ॥

यथाऽसति। सुगं मेषाय मेष्या अवाम्ब रुद्रमदि-मह्यव देवं त्र्यम्बकं। यथा नः श्रेयसस्करद्यथा नो व-स्यसस्करद्यथा नः पशुमतः करद्यथा नो व्यवसाय-यात्। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं। उर्वा-रुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवतत-धन्वा पिनाकहस्तः कृत्तिवासाः ॥ २ ॥

सुभेषजमिहि त्रीणि च ॥ ६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

पञ्चमे पितृयज्ञोऽभिहितः। षष्ठे त्र्यम्बकपुरोडाशाः साक-मेधशेषा उच्यन्ते। तान् विधत्ते "प्रतिपूरुषमेककपालान् निर्व-पत्येकमतिरिक्तं" इति। तद्विधिं प्रशंसति "प्रतिपूरुषमेककपा-

त्वान् निर्वपति। जाता एव प्रजा रुद्रान्निरवदयते। एक-मतिरिक्तं। जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते। एक-कपाला भवन्ति। एकधैव रुद्रं निरवदयते" (ब्रा०१का०। ६प्र०।१०अ०) इति। करम्भवाक्यवन्नैर्ऋतवाक्यवच्च व्याख्येयं। मुख्यविधिसन्निधौ यावन्त इत्यादय एकादशमन्त्रा आम्नाताः। कल्पः "यावन्तो गृह्याः स्मस्तेभ्यः कमकरं" इति निरुप्य-माणेषु यजमानो जपतीति। गृहे भवा मनुष्या गृह्याः, ते वयं यावन्त इह स्थिताः तेभ्यः सर्वेभ्यः कं सुखं अकरं अकार्षं। अपि तेषु पुरोडाशेषु चोदकप्राप्तमभिघारणं निषेधति। "नाभिघारयति। यदभिघारयेत्। अन्तरवचारिणꣳ रुद्रं कुर्यात्" (ब्रा०) इति। रुद्रमनिष्टकारिणं क्रूरदेवं, अन्तरवचा-रिणं गृहस्यान्तःप्रविश्य अस्मानवरोद्धुं चरन्तं। कल्पः। तान-भिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यामासाद्य पशूनाꣳ शर्मासी-ति मूते समावपति' इति। कर्षकैर्व्रीह्यादिबीजानि सङ्ग्रहीतुं तृणकटादिना पुटबन्धनं क्रियते। तदिदं मूतशब्देनोच्यते। पाठस्तु "पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छ" इति। हे मूत भक्ष्यैस्तृणादिभिर्बीजैश्चोपेतत्वात् पशूनां शर्मासि अतो यजमानस्य मेऽध्वर्योश्च सुखं यच्छ। कल्पः "एक एव रुद्रो न द्वितीयाय तस्थे" इति दक्षिणाग्नेरेकोल्मुकं धूपायो-द्धरति उत्तरपूर्वमवान्तरदेशं गत्वेति। रुद्रो जगत्येक एवास्ति द्वितीयाय न तस्थे द्वितीयो रुद्रो न कोऽप्यवस्थितः। विधत्ते "एकोल्मुकेन यन्ति। तद्धि रुद्रस्य भागधेयं। इमां दिशं यन्ति।

एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते'' (ब्रा०) इति। कल्पः। आखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपत्यसौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन् यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयादिति। आखूत्करो मूषकै-र्बिलादुद्धृतः पांसुराशिः। पाठस्तु "आखुस्ते रुद्र पशुस्तं जुषस्व" इति। हे रुद्र मूषकस्ते प्रियः पशुः। अतस्तं सेवस्व। विधत्ते "रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत। असौ ते पशुरिति निर्दिशेद्यं द्विष्यात्। यमेव द्वेष्टि। तमस्मै पशुं निर्दिशति। यदि न द्विष्यात्। आखुस्ते पशुरिति ब्रूयात्। न ग्राम्यान् पशून् हिनस्ति। नारण्यान्" (ब्रा०) इति। आहुत्यै नातिष्ठत पशुरहितामाहुतिं नाङ्गीकरोतीत्यर्थः। यं द्विष्यात्तमसाविति नामग्रहणेन निर्दिशेत्, तथा सति द्वेष्यमस्मै समर्पयत्येव। कल्पः। चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात् सकृत्सकृदवदायावदाय मध्यमेना-न्तिमेन वा पलाशपर्णेन जुहोति "एष ते रुद्र भागः सह स्वसाम्बिकया तं जुषस्व स्वाहा" इति। अत्र स्वाहाकारोऽध्या-हृतः। हे रुद्र एषोऽवत्तः पुरोडाशानामंशः तवावदीयमानो भागः, तं भागं स्वसा भगिनीवद्धितकारिण्याऽम्बिकया पार्वत्या सहांशं जुषस्व सेवस्व। विधत्ते "चतुष्पथे जुहोति। एष वा अग्नीनां पड्बीशो नाम। अग्निवत्येव जुहोति। मध्यमेन पर्णेन जुहोति। स्रुग्घ्येषा। अथो खलु। अन्तमेनैव होतव्यं। अन्तत एव रुद्रं निरवदयते" (ब्रा०) इति। अग्नीनां पड्बीशः पाद-

प्रदेशस्थानं, यत्राग्नयः पुनः पुनः सञ्चारेण प्रविशन्ति तादृश एवैष चतुष्पथः, अतस्तत्र होमेनाग्निवत्येव देशे कृतं भवति। पलाशशाखायां यानि त्रीणि पर्णानि तत्र मध्यमं पर्णं प्रशस्ततया स्रुग्रूपं। वामदक्षिणपार्श्वस्थयोरन्यतरेण होमेन रुद्रो यागभूमेरन्तान्निष्काशितो भवति। सह स्वस्राम्बिकयेत्यस्य मन्त्रभागस्य तात्पर्यं व्याचष्टे "एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह। शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति। यꣳ हिनस्ति। तयैवैनꣳ सह शमयति" (ब्रा०) इति। शरत्कालो हि पीनसज्वराद्युत्पादनेन हिंसकः, तद्वदियमम्बिका हिंसिका, ततः शरदित्युच्यते। एष रुद्रस्तयैव सहायभूतया प्राणिनं हिनस्ति, अतस्तया सह पुरोडाशभागमेवया तुष्टया तयैव सहैवैनं रुद्रं शमयति हिंसारहितं करोति। कल्पः। भेषजं गवे सुभेषजमित्येताभ्यां चतुष्पथमग्निं परिषिञ्चतीति। पाठस्तु "भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथाऽसति। सुगं मेषाय मेष्यै" इति। भेषजं सुभेषजमित्येतौ मन्त्रयोरादी। हे रुद्र गवेऽस्मदीयायै गोजात्यै भेषजमारोग्यं कुरु। एवमन्यत्र। तात्कालिकं रोगोपशमनं आत्यन्तिकं वा सुभेषजं तद् यथाऽसति यथा भवति तथा कुरु। मेषो वाहकः मेषी दोग्ध्री, तयोः सुगं सुष्ठु गमनं रोगराहित्येन सञ्चरणं यथा भवति तथा कुरु। गवाश्वादिशब्दैः पश्वादयः सर्वेऽप्युपलक्ष्यन्त इत्याह "भेषजं गव इत्याह। यावन्त एव ग्राम्याः पशवः। तेभ्यो भेषजं

करोति" (ब्रा०) इति। कल्पः। अवाम्ब रुद्रमदिमहीति यजमानो जपतीति। पाठस्तु "अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकं। यथा नः श्रेयसस्करद्यथा नो वस्यसस्करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्" इति। हे अम्ब पार्वति रुद्रमुद्दिश्यावादिमहि पुरोडाशावदानमकार्ष्म। त्रीण्यम्बकानि नेत्राणि यस्यासौ त्र्यम्बकः। तमुद्दिश्यावादिमहि। आदरार्थं पुनर्वचनं। किमर्थमवदानं कृतमित्युच्यते। असौ रुद्रो नोऽस्मान् श्रेयसोऽध्ययनादिभिः श्रेष्ठान् यथा करत् करोति, वस्यसः वसुमत्तमान् यथा करोति, पशुमतो गवाश्वादियुक्तान् यथा करोति, व्यवसाययात् व्यवसाययति शास्त्रार्थनिश्चययुक्तान् यथा करोति, तदर्थमवदानं कृतं। यथा नः श्रेयस इत्याद्यभिधानान्मन्त्रस्याशीःपरत्वं दर्शयति "अवाम्ब रुद्रमदिमहीत्याह। आशिषमेवैतामाशास्ते" (ब्रा०) इति। कल्पः। त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं पर्येतीति। पाठस्तु "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्" इति। शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः, यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेः। पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं त्र्यम्बकं यजामहे पूजयामः। लोके यथोर्वारुकफलानि बन्धनात् वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासं, अमृताच्चिरजीवितात् स्वर्गादेर्वा मा मुक्षीय। चतुर्थपादार्थमन्त्रस्य तात्पर्यातिशयं दर्शयति

"त्र्यम्बकं यजामह इत्याह। मृत्योर्मुच्चीय मामृतादिति वावैत-दाह" (ब्रा०) इति। यजमाना यजामह इति यदाह एतद्वचनं मृत्योर्मुच्चीयेत्येवाह मोचन एव तात्पर्यं *तच्छेषत्वेन यजनमित्यर्थः। यदुक्तमापस्तम्बेन 'ऊर्द्धान् पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भगस्य भगस्य वो लप्सीयेत्यपादायैतेनैव कल्पेन त्रिः समावपेयुः' इति। तदे-तत्सर्वमभिप्रेत्य सर्वेषां पुरुषाणां हस्ते स्थितस्य पुरोडाशस्योत्क्षेपणं विधत्ते "उत्किरन्ति। भगस्य लीप्सन्ते" (ब्रा०) इति। यदे-तत्पिण्डानामुपरिक्षेपणं तेन सौभाग्याभिमानिनो भगनामकस्य देवस्य सकाशादेतान् पुरोडाशान् लब्धुमिच्छन्ति। अत एवोत्क्षिप्तः पुनरञ्जलौ पतति। कल्पः। तान् मूते समावपन्ति मूतयोर्मूतेषु वैष ते रुद्र भाग इति वृक्ष आसजन्ति वृक्षयोर्वृक्षेषु वापि वा मूतयोः समोप्याविवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वावधायेति। पाठस्तु "एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीहि" इति। हे रुद्र एष वृक्षादौ सज्यमानः पुरोडाशसङ्घः तव भागस्तं सेवस्व। अवसेन पाथेयरूपतया तव रक्षकेणानेन भागेन युक्तो मूजवत एतन्नामकत्वेन प्रसिद्धात् पर्वतात् परः परभागे वर्तमानो ऽतीहि अतिक्रम्य गच्छ। विधत्ते "मूते कृत्वा सजन्ति। यथा जनं यतेऽवसं करोति। तादृगेव तत्" (ब्रा०) इति। यथा लोके दूरदेशवर्तिनं बन्धुजनं प्रति गच्छते पुरुषायावसं रक्षकं

---

* तच्छेषत्वेनान्यदिति का० पाठः।

पार्थेयं करोति, तद्दद्दचाग्ये पुरोडाशसञ्चनं तादृगेव भवति। मन्त्रे भागनिर्देशो रुद्रस्य निःशेषेण विसर्जनार्थ इति दर्शयति "एष ते रुद्र भाग इत्याह निरवत्यै" (ब्रा०) इति। कल्पः "अवततधन्वा पिनाकहस्तः कृत्तिवासोम्" इति त्रिरवताम्यन्तीति। प्राणायामत्रयं कुर्वन्तीत्यर्थः। ॐमित्यनेन वाक्यशेषः पूरितः। अस्मद्विरोधिनं पाप्मानं हन्तुमयं रुद्रः पिनाकनामकं धनुर्हस्ते गृहीत्वा अवततधन्वा ज्याकर्षणेन विस्तारितधनुष्कः कृत्तिवासाश्चर्मवसनः। ॐ भवतु। अथवा ऽस्मद्विषयेऽवततधन्वारोपितमौर्वीकधनुर्युक्तो भवतु। चतुष्पथप्रत्यागमनादीन् क्रमेण विधत्ते "अप्रतीचमायन्ति। अपः परिषिञ्चति। रुद्रस्यान्तर्हित्यै। प्र वा एतेऽस्माल्लोकाच्च्यवन्ते। ये त्र्यम्बकैश्चरन्ति। आदित्यं चरुं पुनरेत्य निर्वपति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठन्ति" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"स्वामी यावन्त इत्याह पशून् मूते समावपेत्।
एक इत्युल्मुकं नीत्वाखुस्त आखूत्करे हविः॥
क्षिपेदेषोऽर्धहोमः स्यात् भे सुभे परिषिञ्चति।
अवाम्बेति जपेत् स्वामी त्रियम्ब परियन्ति ते॥
एषोऽवस्याय तच्छेषान् मूते बध्नाति शाखिनि।
अवत आसनियमो मन्त्रा एकादश स्मृताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः॥ * ॥

ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणाग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः ॥ १ ॥

नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सन्दहाम्यग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा प्रष्टिवाही रथो दक्षिणा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षो यद्वस्ते तद्दक्षिणा ॥ ॥ २ ॥

तेभ्यः पञ्चचत्वारिꣳशच्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

षष्ठे साकमेधाः समापिताः। सप्तमे शुनासीर्यमिन्द्रतुर्यश्चेति कर्मद्वयं पञ्चेध्मीयमन्त्राः अपामार्गहोममन्त्राश्चोच्यन्ते। तत्र शुनासीर्यहवींषि विधत्ते "ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणा" इति। शुनासीराय शुनो वायुः सीर आदित्यः ताभ्यां युक्तः शुनासीरः। द्वादशगवं द्वादशभिर्बलीवर्दैरुह्यमानं सीरं लाङ्गलं। अत्र वैश्वदेवगतानामाग्नेयादीनां पञ्चानां हविषां ब्राह्मणमनुब्राह्मणश्चातिदिशति। "एतद्ब्राह्मणान्येव पञ्च हवीꣳषि" (ब्रा०१का०।७प्र०।१अ०) इति। अथोपदिश्यमानेषु पञ्चसु ऐन्द्राग्नवैश्वदेवयोः पूर्वमेव प्रशस्तत्वादवशिष्टानि त्रीणि प्रशंसति। अथवा तयोर्विकल्पमभिप्रेत्य तदभावपक्षानुसारेण तावुपेक्ष्य अवशिष्टान्येव प्रशंसति "अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति। संवत्सरो वा इन्द्रःशुनासीरः। संवत्सरेणैवास्मा अन्नमवरुन्धे। वायव्यं पयो भवति। वायुर्वै वृष्ट्यै प्रदापयिता। स एवास्मै वृष्टिं प्रदापयति। सौर्य एककपालो भवति। सूर्येण वा अमुष्मिंल्लोके वृष्टिर्धृता। स एवास्मै वृष्टिं नियच्छति। द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै" (ब्रा०) इति। अस्य च शुनासीर्यस्य कालं बोधायन आह। अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति। तत्र पूर्वेभ्यस्त्रिभ्यः पर्वभ्य ऊर्द्ध्वं प्रत्येकं मासचतुष्टयमतिवाह्य क्रियमाणमिदं संवत्सरादूर्द्ध्वं प्रवर्तते। तदेतदभिप्रेत्य संवत्सरो वा इन्द्रःशुनासीर इत्युक्तं वायुसूर्याभ्यां युक्त इन्द्र

संवत्सरे समाप्ते प्राप्तत्वात् संवत्सर इत्युच्यते। वायोः पुरोवातरूपेण वृष्टिप्रदापयितृत्वं। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिरिति स्मरणात् सूर्यस्य स्वर्गे वृष्टिधारकत्वं। अथेन्द्रतुरीयस्य हवींषि विधत्ते "आग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा" इति। गावीधुकं आरण्यधान्यविशेषनिष्पन्नं। पृष्ठे भारं वहतीति वहिनी। इन्द्रतुर्यं विधातुं प्रस्तौति "देवासुराः संयत्ता आसन्। ते देवा अग्निमब्रुवन्। त्वया वीरेणासुरानभिभवामेति। सोऽब्रवीत्। त्रेधाहमात्मानं विकरिष्य इति। स त्रेधात्मानं व्यकुरुत। अग्निं तृतीयं। रुद्रं तृतीयं। वरुणं तृतीयं। सोऽब्रवीत्। क इदं तुरीयमिति। अहमितीन्द्रोऽब्रवीत्। सं तु सृजावहा इति। तौ समसृजेतां। स इन्द्रस्तुरीयमभवत्। यदिन्द्रस्तुरीयमभवत्। तदिन्द्रतुरीयस्येन्द्रतुरीयत्वं। ततो वै देवा व्यजयन्त" (ब्रा०) इति। वीरत्वमिद्धये शरीरत्रयरूपेण विकारः। स त्रेधा विकृतोऽग्निरिन्द्रं प्रति पप्रच्छ, मयेदं रूपत्रयं युद्धसमर्थं सम्पादितं। अथ कोऽन्य इदं चतुर्थं रूपं विजयसमर्थं करिष्यतीति। अहमेव करिष्यामीतीन्द्रोऽब्रवीत् तत् त्वया तथा क्रियतां किन्त्वावां युद्धविजयक्षमौ संसृष्टौ भवावेति। इन्द्र एव तुरीयो यस्मिन् कर्मणि तत् कर्मेन्द्रतुरीयं। अत्रान्यदीयरूपापेक्षया तुरीयत्वं, अनुष्ठाने तु पाठक्रमेण वरुणस्तुरीयः। विधत्ते "यदिन्द्रतुरीयं निरुप्यते विजित्यै" (ब्रा०) इति। चतुर्देवप्रियांशसम्पादनेन दक्षिणां प्रशंसति "वहिनी धेनुर्दक्षिणा।

यद्वहिनी। तेनाग्नेयी। यद्भीः। तेन रौद्री। यद्धेनुः। तेनैन्द्री। यत्स्त्री सती दान्ता। तेन वारुणी समृद्धी" (ब्रा०) इति। गोत्वं जातिः, धेनुत्वं नवप्रसवत्वं। अस्य चैन्द्रतुरीयस्य कर्मणः शुनासीर्यदिन एवानुष्ठानमापस्तम्बो दर्शयति 'ततश्चतुर्हविषैन्द्रतुरीयेण यजत' इति। इन्द्रतुरीयविधानादूर्ध्वं ये देवाः पुरःसद इत्यादयो मन्त्रा आम्नाताः, तेषां विनियोगमापस्तम्बो दर्शयति 'एतस्या एव रात्रेर्निशायां पञ्चेध्मीयेन यजते चतुर्धाहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पृथगिध्मानुपसमाधाय जुह्वां पञ्चगृहीतं गृहीत्वा ये देवाः पुरःसद इत्येतैर्यथालिङ्गं जुहोति मध्ये पञ्चमेन समूढꣳ रक्ष इति मध्य इध्मानुपसमूह्यैकधोपसमाधाय अपरं पञ्चगृहीतं गृहीत्वा अग्नये रक्षोघ्ने स्वाहेत्युत्तराः पञ्चाहुतीर्जुहोति प्रष्टिवाही रथो दक्षिणा' इति। ये देवा इत्यादिमन्त्रपाठस्तु "ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा" इति। पुरःसदः पूर्वदिग्वर्तिनः, अग्निनेत्राः अग्निप्रमुखाः। ये देवाः रक्षोहणः राक्षसघ्नाः सन्ति ते देवा नोऽस्मान् रक्षोनिवारणेन पान्तु। पुनरपि ते देवाः नोऽस्मान् कर्मानुष्ठानेनावन्तु। तेभ्यो देवेभ्यो नमस्कारोऽस्तु, तेभ्य इदं हव्यं स्वाहुतमस्तु। दक्षिणसदो यमनेत्रा इत्यस्य मन्त्रस्यादौ ये देवा इत्यनुषज्यते अन्ते च रक्षोहण इत्यादिकमनुषज्यते। एवं तृतीयचतुर्थयो-

द्रष्टव्यं। पञ्चमे तु ये देवा इत्येतावद्देवानुषज्यते। प्रथमे तु रक्षोहण इत्यादिकमेवानुषज्यते। तदेतत्पञ्चमीयं विधातुं प्रस्तौति "प्रजापतिर्यज्ञमसृजत। तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन्। स एताः प्रजापतिरात्मनो देवता निरमिमीत। ताभिर्वै स दिग्भ्यो रक्षाꣳसि प्राणुदत" (ब्रा०) इति। विधत्ते "यत्पञ्चावत्तीयं जुहोति। दिग्भ्य एव तद्यजमानो रक्षाꣳसि प्रणुदते" (ब्रा०) इति। पञ्चकृत्वोऽवदाय सम्पादितमाज्यं पञ्चावत्तीयं। समूढमित्यादिमन्त्रपाठस्तु "समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सन्दहामि" इति। रक्षोऽस्मत्प्रतिकूलं राक्षसजातं समूढं नाशयितुं सम्यगेकीकृतं सन्दग्धञ्च। पुनरपीदमिदानीमहं रक्षोऽभि दग्धस्य रक्षसोऽभितः सर्वतोऽवस्थितांस्तत्तदनुचरान् सम्यग् दहामि। एतन्मन्त्रपाठेन तस्य सिद्धिं दर्शयति "समूढꣳ रक्षः सन्दग्धꣳ रक्ष इत्याह। रक्षाꣳस्येव सन्दहति" (ब्रा०) इति। अग्नये रक्षोघ्न इति मन्त्रपाठस्तु "अग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा" इति। यमायेत्यादिषु रक्षोघ्ने स्वाहेत्यनुषज्यते। बृहस्पतेर्दुवस्वत इति विशेषणं परिचर्यावदित्यर्थः। अग्नियमादयो जितवन्त इति युक्तस्तद्धोम इति दर्शयति "अग्नये रक्षोघ्ने स्वाहेत्याह। देवताभ्य एव विजिग्यानाभ्यो भागधेयं करोति" (ब्रा०) इति। विजिग्यानाभ्यो विशेषेण जितवतीभ्यः। देयं रथं विधत्ते "प्रष्टिवाही रथो दक्षिणा" इति। त्रिपादाधारवदश्वत्रयेणोह्यमानः प्रष्टि-

वाही। समृद्धिहेतुत्वेन तं प्रशंसति "प्रष्टिवाही रथो दक्षिणा समृद्ध्यै" (ब्रा०) इति। अपामार्ग"ाममन्त्राणां विनियोगमापस्तम्ब आह 'व्युष्टायां पुराग्निहोत्रादपामार्गहोमेन चरन्ति अपां न्ययनादपामार्गानाहृत्य तान् सक्तून् कृत्वा दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति उत्तरपूर्वमवान्तरदेशं गत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय देवस्य त्वेत्यनुद्रुत्य रक्षसो वधं जुहोमीति पर्णमयेन स्रुवेण जुहोति हतꣳ रक्ष इति स्रुवमनुप्रहृत्यावधिष्म रक्ष इत्युपतिष्ठते' इति। मन्त्रपाठस्तु "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षः" इति। एते त्रयो मन्त्राः स्पष्टार्थाः। तत्र रक्षसो बधमुद्दिश्येति शेषः। होमकाले यदस्तमाच्छादयति तस्य दानं विधत्ते "यद्वस्ते तद्दक्षिणा" इति। अपामार्गहोमं विधातुं प्रस्तौति "इन्द्रो वृत्रꣳ हत्वा। असुरान् पराभाव्य। नमुचिमासुरं नालभत। तꣳ शच्याग्रृह्णात्। तौ समलभेतां। सोऽस्मादभिशुनतरोऽभवत्। सोऽब्रवीत्। सुख्याꣳ सन्दधावहै। अथ त्वाऽवः स्रक्ष्यामि। न मा शुष्केण नार्द्रेण हनः। न दिवा न नक्तमिति। स एतमपां फेनमसिञ्चत्। न वा एष शुष्को नार्द्रो व्युष्टासीत्। अनुदितः सूर्यः। न वा एतद्दिवा। न नक्तं। तस्यैतस्मिँल्लोके। अपां फेनेन शिर उदवर्तयत्। तदेनमन्ववर्त्तत। मित्रध्रुगिति। स एतानपामार्गानजनयत्। तानजुहोत्। तैर्वै स रक्षाꣳस्यपाहत" (ब्रा०) इति। इन्द्रो वृत्रवधादूर्द्ध्वमन्यानसुरान् परिभूतान् कृत्वा नमु-

चिनामानमसुरं नालभत न पराभवितवान्। अपराभूतं तं नमुचिं शच्या स्वशक्त्या ऽगृह्णात्। यथा युध्यन्नेको मल्लः सहृदशक्तोऽपि धैर्येण शक्तिमापाद्य हस्ताभ्यां प्रतिमल्लमालिङ्ग्य गृह्णाति तद्वत्। ततस्ताविन्द्रनमुची समलभेतां परस्परोपमर्दनपरौ संरब्धौ हस्ताभ्यां पादाभ्यामन्योऽन्यं दृढमवष्टभ्य मल्लद्वयवत् भूमौ पतितौ, तदानीं स नमुचिरस्मादिन्द्रादभिशुनतरः अभितो हस्तयोः पादयोश्च बलवत्तरोऽभूत्। ततो मुमूर्षुमिन्द्रमवलोक्य कृपालुरिदमब्रवीत् भो इन्द्र विगृह्यमाणराजद्वयवदावां परस्परमङ्गीकारेण सन्धिं करवाव। अथ त्वां मुमूर्षुमवसृच्यामि मोचयिष्यामीति। ततः प्रहारसाधने काले च समयमेवं कृतवान्। भो इन्द्र शुष्केणार्द्रेण वा काष्ठादिना साधनेन मां न हनः मां मावधीः, दिवा रात्रौ च मावधीरिति। इन्द्रश्च तं समयमङ्गीकृत्य तेन मोचितो धैर्येण स्वस्थो भूत्वा समयानुसारेण तं नमुचिं हन्तुं अपां फेनमायुधं भावयित्वा तस्मिन्नमुचावसिञ्चत्। न चैवं सति समयलोपः शङ्कनीयः। यत एष फेनो नैव शुष्कः, स्पर्शे सति काठिण्याप्रतीतेः। नाप्यार्द्रः, तेन वस्त्रादेरक्लेदनात्। कालश्च समयानुसारेण सम्पादयामास। यदा रात्रिर्व्युष्टा प्रभातासीत् सूर्यश्चानुदितः, तदानीमन्धकाराभावात् न रात्रित्वं सूर्योदयाभावाच्च नैतदहः। एतस्मिन् लोके रात्रेरह्नश्च सन्धिकाले तस्य नमुचेः शिर अपां फेनेनोदवर्तयत् उदच्छिनत्। तत्रोच्छिन्नं शिरो हे मित्रद्रोहिन्

इन्द्रेत्युच्चारयत् एनमिन्द्रमन्ववर्तत सर्वदानुगतमभूत्। ततस्तच्छिरो वारयितुं स इन्द्र एतान् लोकप्रसिद्धानपामार्गानजनयत् तानुत्पन्नानजुहोत्, तैरेव हुतैः स इन्द्रो नमुचेः शिरःसहितानि सर्वाण्यवशिष्टानि रक्षांसि हतवान्। विधत्ते "यदपामार्गहोमो भवति। रक्षसामपहत्यै" (ब्रा०) इति। अङ्गविधीन् मन्त्रव्याख्यानञ्च क्रमेण दर्शयति "एकोल्मुकेन यन्ति। तद्धि रक्षसां भागधेयं। इमां दिशं यन्ति। एषा वै रक्षसां दिक्। स्वायामेव दिशि रक्षाᳪसि हन्ति। स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वै रक्षसामायतनं। स्व एवायतने रक्षाᳪसि हन्ति। पर्णमयेन स्रुवेण जुहोति। ब्रह्म वै पर्णः। ब्रह्मणैव रक्षाᳪसि हन्ति। देवस्य त्वा सवितुः प्रसव इत्याह। सवितृप्रसूत एव रक्षाᳪसि हन्ति। हतᳪ रक्षोऽवधिष्म रक्ष इत्याह। रक्षसाᳪस्तृत्यै। यद्वस्ते तद्दक्षिणा निरवत्यै। अप्रतीक्षमायन्ति। रक्षसामन्तर्हित्यै" (ब्रा०) इति। इमां दिशं वायवीं। स्तृत्यै हननाय। निरवत्यै भागप्रदानेन निःसारणाय। स्पष्टमन्यत्। अत्र शुनासीर्यैन्द्रतुरीयपञ्चेध्मीयापामार्गहोमानां चतुर्णां कर्मभेदेऽप्येकस्मिन्नेव दिने कर्तव्यत्वात् एकेनानुवाकेनोपसंहारः।

अत्र विनियोगसङ्ग्रहः।

"पञ्चेध्मवह्नौ जुहुयाद्ये देवा इति पञ्चभिः।
समूहन्तीध्मान् समिति पञ्चहोमस्तथाग्नये॥
निशि हुत्वा सकृद्धोमः प्रातर्देवेति मन्त्रतः।

हृतं स्रुवप्रहरणमवधिष्मेति चोत्थितिः ॥

अनुवाके सप्तमेऽस्मिन्नुक्ता मन्त्राश्चतुर्दश"। इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणाग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा ॥ १ ॥

वैश्वानरं द्वादशकपालं निरष्टौ च ॥ ८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

सप्तमेऽनुवाके शुनासीर्यादिकर्मचतुष्टयमेकदिनकर्तव्यमुक्तं। अष्टमे देविकादिकर्मषट्कमेकदिनकर्तव्यमुच्यते। तत्रादौ देविकानामकानि पञ्च हवींषि विधत्ते "धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणा" इति। अत्र धात्रादीन् पञ्च देवान् दक्षिणाश्च प्रजोत्पत्त्युपयोगेन प्रशंसति "धात्रे पुरोडाशं द्वादशकपालं निर्वपति। संवत्सरो वै धाता। संवत्सरेणैवास्मै प्रजाः प्रजनयति। अन्वेवास्मा अनुमतिर्मन्यते। राते राका। प्र सिनीवाली जनयति। प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति। मिथुनौ गावौ दक्षिणा समृद्ध्यै" (ब्रा०१का०७प्र०।२अ०) इति। संवत्सरकालस्वामी धाता गर्भधारणमारभ्य संवत्सरादर्वागेव प्रजोत्पत्तिं कारयति। अनुमतिदेवता यजमानार्थं प्रजोत्पत्तिमङ्गीकरोति। राका तु पुत्रपुत्र्यादिरूपं राते ददाति। सिनीवाली तद्रूपं गर्भं निःसारयति। कुहूदेवतयाध्वर्युः प्रजासु वाचमुच्चारयितुं सामर्थ्यञ्च दधाति। अथ त्रिहविष्काणि त्रीणि कर्माणि एकैकहविष्के द्वे कर्मणी च क्रमेण विधत्ते "आग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यव-

मयं चरुमश्वो दक्षिणा" इति। बभ्रुः कपिलः। प्रथमस्य त्रिहविष्कस्य देवता दक्षिणाश्च प्रशंसति "आग्नावैष्णवमेकादशकपालं निर्वपति। ऐन्द्रावैष्णवमेकादशकपालं। वैष्णवं त्रिकपालं। वीर्यं वा अग्निः। वीर्यमिन्द्रः। वीर्यं विष्णुः। प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति। तस्मात् प्रजा वीर्यावतीः। वामन ऋषभो वही दक्षिणा। यद्वही। तेनाग्नेयः। यदृषभः। तेनैन्द्रः। यद्वामनः। तेन वैष्णवः समृद्ध्यै" (ब्रा०) इति। आग्नेयादीनां वीर्यप्रदत्वात् तद्रूपत्वं प्रजानां। स्वस्वव्यापारसामर्थ्यं वीर्यं। वहीत्यादीनामग्न्यादिप्रियत्वादाग्नेयादित्वं। मध्यमस्य त्रिहविष्कस्य देवता दक्षिणाश्च प्रशंसति "अग्नीषोमीयमेकादशकपालं निर्वपति। इन्द्रासोमीयमेकादशकपालं। सौम्यं चरुं। सोमो वै रेतोधाः। अग्निः प्रजानां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति। अग्निः प्रजां प्रजनयति। वृद्धामिन्द्रः प्रयच्छति। बभ्रुर्दक्षिणा समृद्ध्यै" (ब्रा०) इति। गर्भाशये निषिक्तं रेतो यथा बहिर्न निःसरति यथा च न पूयति तथा सोमो धारणसामर्थ्यं प्रयच्छति। धृतस्य च गर्भस्य पतनादिविघ्नं परिहृत्याग्निः प्रजा उत्पादयति। इन्द्रस्तूत्पन्नाः प्रजाः स्वस्वोचितगुणैरभिवृद्धा यथा भवन्ति तथा सामर्थ्यं प्रयच्छति। अन्त्यस्य त्रिहविष्कस्य देवता दक्षिणाश्च प्रशंसति "सोमापौष्णं चरुं निर्वपति। ऐन्द्रापौष्णं चरुं। सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो

दधाति। पूषा पशून् प्रजनयति। वृद्धानिन्द्रः प्रयच्छति। पौष्णश्चरुर्भवति। इयं वै पूषा। अस्यामेव प्रतितिष्ठति। श्यामो दक्षिणा समृद्ध्यै" (ब्रा०) इति। आद्ये त्रिहविष्के व्यासक्तदेवतान्तःपाती यो विष्णुः स एवैकाकी वैष्णवं त्रिकपालमित्यत्रोच्यते न त्वन्यः कश्चित्, अतः सहैव व्याख्यानं कृतं। इह तु व्यासक्तदेवतान्तःपाती पूषा कश्चित्पोषकः पुरुषविशेषः, पौष्णचरौ तु भूमिः पूषा, अतो देवताभेदात् पृथग्व्याख्यानं। एकहविष्के पञ्चमे कर्मणि देवतां दक्षिणाञ्च प्रशंसति "बहु वै पुरुषोऽमेध्यमुपगच्छति। वैश्वानरं द्वादशकपालं निर्वपति। संवत्सरो वा अग्निर्वैश्वानरः। संवत्सरेणैवेनꣳ स्वदयति। हिरण्यं दक्षिणा। पवित्रं वै हिरण्यं। पुनात्येवैनं" (ब्रा०) इति। अमेध्यत्वमशुचित्वं तच्च बहुविधं भोजनादिकालेषु पुनः पुनः प्रवृत्तत्वात्। तत्र संवत्सरस्वामी वैश्वानरोऽग्निः संवत्सरकालेनैनं यजमानं स्वदयति मेध्यं करोति तच्चात्रेष्टिमात्रेण लभ्यते। हिरण्यस्योच्छिष्टादिसंस्पर्शेऽपि मृद्भाण्डवत् परित्यागाभावात् पवित्रत्वं। एकहविष्के षष्ठे कर्मणि देवतां प्रशंसति "बहु वै राजन्योऽनृतं करोति। उप जाम्यै हरते। जिनाति ब्राह्मणं। वदत्यनृतं। अनृते खलु वै क्रियमाणे वरुणो गृह्णाति। वारुणं यवमयं चरुं निर्वपति। वरुणपाशादेवैनं मुञ्चति। अश्वो दक्षिणा। वारुणो हि देवतयाश्वः समृद्ध्यै" (ब्रा०) इति। राजन्यः क्षत्रियो बहुविधं अनृतं अशास्त्रीयं करोति, यथा जाम्यै जायायै आयात्वं सम्पादयितुं उपहरते यस्य कस्यचित्

गृहमुपेत्य स्त्रियं हरति। ब्राह्मणं विद्याप्रसङ्गादिना जिनाति जयति न्यक्करोति। स्पष्टमन्यत्। प्रतिग्रहमन्त्रे वरुणायाश्वमित्याम्नातत्वादश्वस्य वारुणत्वं।

अथ मीमांसा। एकादशाध्यायस्य तृतीयपादे चिन्तितं।

"सोमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता।
तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः" ॥

राजसूये श्रूयते 'सोमापौष्ण एकादशकपाल ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः श्यामो दक्षिणा' इति 'आग्नावैष्णव एकादशकपाल ऐन्द्रापौष्णश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणा' इति। तत्र द्वयोस्त्रिकयोस्तन्त्रेणानुष्ठानं। कुतः। कृत्स्नस्य राजसूयस्य फलैकत्वेनैतदेकदेशयोरनयोरपि फलैक्यात्। न च दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति, येनात्रापि तथा शङ्क्येतेति प्राप्ते ब्रूमः। श्यामवामनयोर्दक्षिणयोर्भेदेन ताभ्यामानमतां कर्तृणां भेदादङ्गानि भिद्यन्ते ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

---

बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणादित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं

चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालं ॥ १ ॥

क्षत्तुर्गृह उपध्वस्तो दक्षिणाश्विनं द्विकपालꣳ *संग्रहीतुर्गृहे संवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणेन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यान्मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयम्मूर्त्ते स्वयम्मथित आज्य आश्वत्थे ॥ २ ॥

पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्रः स्वयङ्कृता वेदिर्भवति स्वयन्दिनं बर्हिः स्वयङ्कृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा ॥ ३ ॥

---

* सङ्गृहीतुरिति पाठान्तरः।

सावित्रं द्वादशकपालमाश्वत्थे चर्यस्त्रिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

अष्टमे देविकादिकं कर्मषट्कमेकदिनकर्तव्यमुक्तं। नवमे रत्निनां हवींषि अनुदिनं क्रमेण कर्तव्यान्युच्यन्ते। तत्र एकादश हवींषि विधत्ते "बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणादित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तो दक्षिणाश्विनं द्विकपालꣳ संग्रहीतुर्गृहे सवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणा" इति। ऋत्विग्विशेषो ब्रह्मा तस्य गृहे राजा गत्वेतामिष्टिं कुर्यात्। एवं सर्वत्र। शितिपृष्ठः श्वेतपृष्ठः। कृताभिषेका राज्ञः स्त्री महिषी। परिवृक्तिः प्रीतिरहिता राज्ञः स्त्री, तद्गृहे गत्वा कृष्णानां व्रीहीणां कृष्णान् व्रीहीन् नखैर्निर्भिन्नानवघातमन्तरेणैव तण्डुलान्निष्पाद्य चरुः कर्तव्यः। कूटा भग्नशृङ्गा गौः। सूतः सारथिः। महानिरष्टः पीडितवृषणः। पृश्निः

शुक्लः अल्पतनुरित्यन्ये। क्षत्ता यष्टिहस्तोऽन्तःपुराध्यक्षः। सङ्कीर्णवर्ण उपध्वस्तः। सङ्गृहीता धनसङ्ग्रहकर्ता कोशाध्यक्षः। सवात्यौ समानमातरौ वत्सौ एकोदरावित्यर्थः। यो राज्ञः प्राप्तं षष्ठं भागं प्रजाभ्यो गृह्णाति स भागदुघः। गावीधुको ऽरण्यगोधूमनिष्पन्नः। अक्षावापो द्यूतकारः। शबलश्चित्रवर्णः। उद्वारो दीर्घपुच्छः। यथोक्तानि सर्वाणि हवींषि समस्य प्रशंसति "रत्निनामेतानि हवीꣳषि भवन्ति। एते वै राष्ट्रस्य प्रदातारः। एतेऽपादातारः। य एव राष्ट्रस्य प्रदातारः। ये ऽपादातारः। त एवास्मै राष्ट्रं प्रयच्छन्ति। राष्ट्रमेव भवति" (ब्रा०१का०।७प्र०।३अ०) इति। रत्नान्येषां सन्तीति रत्निनः, ब्राह्मणराजन्यमहिष्यादयो रत्निनः, तदभिमानिदेवानां प्रियाण्येतानि हवींषि, अतस्तद्गृहेष्वेव गत्वा निर्वपेत्। एते रत्निनामभिमानिनो देवा एव राष्ट्रं प्रदातुमपादातुञ्च समर्थाः। अतः स्वकीयब्रह्मादिगृहेषु निर्वापेण तुष्टा अस्मै राष्ट्रं प्रयच्छन्ति। रत्नीत्येकनाम्ना प्रसक्तं प्रयोगैक्यमपोद्य देशभेदप्राप्तं प्रयोगभेदं प्रशंसति "यत्समाहृत्य निर्वपेत्। अरत्निनः स्युः। यथायथं निर्वपति रत्नित्वाय" (ब्रा०) इति। अरत्निनो रत्नरहिता दरिद्राः। पूर्वोक्तदेविकादिवदेकानुवाकविहितत्वेन प्रसक्तं दिनैक्यमपवदितुं दिनभेदं विधत्ते "यत्सद्यो निर्वपेत्। यावतीमेकेन हविषाशिषमवरुन्धे। तावतीमवरुन्धीत। अन्वहं निर्वपति। भूयसीमेवाशिषमवरुन्धे। भूयसो यज्ञक्रतूनुपैति" (ब्रा०) इति। आशिषं फलं। बहुदिनानुष्ठाने क्रतुबाहुल्यं

जमानां प्रतीयते। गृहस्वामिनं ब्रह्माभिमानिनं बृहस्पतिं प्रशंसति "बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे। मुखत एवास्मै ब्रह्म सꣳश्यति। अथो ब्रह्मन्नेव क्षत्त्रमन्वारम्भयति। शितिपृष्ठो दक्षिणा समृद्ध्यै" (ब्रा०) इति। मुखत एव कर्मोपक्रम एव यजमानार्थं ब्राह्मणजातिं संश्यति सम्यक् तीक्ष्णीकरोति उत्कृष्टं करोतीत्यर्थः। किञ्च प्रथमतो ब्रह्मगृहं पश्चाद्राजन्यगृहमित्येवं ब्राह्मणजातिमनु क्षत्रियजात्यारम्भः कारितो भवति। इन्द्रं प्रशंसति "ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे। इन्द्रियमेवावरुन्धे। ऋषभो दक्षिणा समृद्ध्यै" (ब्रा०) इति। अदितिं प्रशंसति "आदित्यं चरुं महिष्यै गृहे। इयं वा अदितिः। अस्यामेव प्रतितिष्ठति। धेनुर्दक्षिणा समृद्ध्यै" (ब्रा०) इति। अत्र मुख्यब्राह्मण उपेक्षितं हविर्विशेषं विधत्ते "भगाय चरुं वावातायै गृहे। भगमेवास्मिन् दधाति। विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै" (ब्रा०) इति। वावाता महिष्या अभिषिक्ताया अर्वाचीना परिवृक्त्याः प्रीतिरहितायाः उत्तमत्वेन स्वयं मध्यमा राज्ञः स्त्री। अत एवाश्वमेधप्रकरणे अश्वमलङ्कुर्वन्त्यो राजस्त्रिय उत्तममध्यमाधमायक्रमेण एतैरेव नामभिर्निर्दिष्टाः। भूरिति महिषी, भुव इति वावाता, सुवरिति परिवृक्तीति। भगमेव सौभाग्यमेव। विचित्तगर्भा विशेषेण चित्तो ज्ञातोऽभिव्यक्तो गर्भो यस्या इति विग्रहः। पष्ठौही बालगर्भिणी। निर्ऋतिं प्रशंसति "नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं। पाप्मानमेव निर्ऋतिं निरवदयते। कृष्णा

कूटा दक्षिणा समृद्ध्यै" (ब्रा०) इति। पाप्मनो निर्ऋतिशरीर-त्वात्तां प्रति प्रशंसैवैषा। अग्निं गृहस्वामिनश्च प्रशंसति "आ-ग्नेयमष्टाकपालꣳ सेनान्यो गृहे। सेनामेवास्य सꣳश्यति। हिरण्यं दक्षिणा समृद्ध्यै" (ब्रा०) इति। वरुणं प्रशंसति "वा-रुणं दशकपालꣳ सूतस्य गृहे। वरुणसवमेवावरुन्धे। महा-निरष्टो दक्षिणा समृद्ध्यै" (ब्रा०) इति। वरुणसवो वरुणानुज्ञा। मरुतः प्रशंसति "मारुतꣳ सप्तकपालं ग्रामण्यो गृहे। अन्नं वै मरुतः। अन्नमेवावरुन्धे। पृश्निर्दक्षिणा समृद्ध्यै" (ब्रा०) इति। मरुतां वैश्यत्वेनान्नसम्पादकत्वादन्नत्वं। सवितारं प्रशंसति "सा-वित्रं द्वादशकपालं क्षत्तुर्गृहे प्रसूत्यै। उपध्वस्तो दक्षिणा समृद्ध्यै" (ब्रा०) इति। अश्विनौ प्रशंसति "आश्विनं द्विकपा-लꣳ सङ्ग्रहीतुर्गृहे। अश्विनौ वै देवानां भिषजौ। ताभ्यामे-वास्मै भेषजं करोति। सवात्यौ दक्षिणा समृद्ध्यै" (ब्रा०) इति। पूषणं प्रशंसति "पौष्णं चरुं भागदुघस्य गृहे। अन्नं वै पूषा। अन्नमेवावरुन्धे। श्यामो दक्षिणा समृद्ध्यै" (ब्रा०) इति। यथा मरुतां वैश्यत्वेनान्नसम्पादकत्वात् अन्नत्वं तथा पूष्णोऽन्नपोषक-त्वादन्नत्वं। रुद्रं प्रशंसति "रौद्रं गावीधुकं चरुमक्षावापस्य गृहे। अन्तत एव रुद्रं निरवदयते। शबल उद्वारो दक्षिणा समृद्ध्यै" (ब्रा०) इति। भागप्रदानपूर्वकत्वेन रुद्रस्य पुरतो निःसारणमपि प्रशंसैव। पाठेनावगतां हविःसङ्ख्यां प्रशंसति "द्वादशैतानि हवीꣳषि भवन्ति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मै राष्ट्रमवरुन्धे। राष्ट्रमेव भवति" (ब्रा०) इति।

विहितेभ्यो द्वादशहविर्भ्य ऊर्द्ध्वं स्वगृहे हविर्द्वयं विधत्ते "इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रतिनिर्वपतीन्द्रायाꣳहोमुचे" इति। प्रति प्रातिस्विके गृहे। सुत्राम्णे सुष्ठु पालयित्रे। अꣳहोमुचे पापान्मोचकाय, पुरोडाशमेकादशकपालमित्यनुवर्तते। तमिमं प्रतिनिर्वापं प्रशंसति "यन्न प्रतिनिर्वपेत्। रत्निन आशिषोऽवरुन्धीरन्। प्रतिनिर्वपति। इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं। इन्द्रायाꣳहोमुचे। आशिष एवावरुन्धे" (ब्रा०) इति। रत्निनो ब्राह्मणराजन्यादयः आशिषः तद्विहितफलान्यवरुन्धीरन् गृह्णीयुः। एतेषां हविषां समीप एको मन्त्र आम्नातः, तस्य विनियोगमापस्तम्ब आह "अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यात्" इति पुरस्तात् स्विष्टकृतो ऽध्वर्युर्जपति। अयं राजा राजसूयस्य कर्ता अस्माकं राजा योऽस्त्यसौ शत्रुवधक्षमो राजा भूत्वा शत्रुं वध्यात्। वध्यादित्येतस्य पदस्याशिरर्थत्वं द्योतयति "अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्याह। आशिषमेवैतामाशास्ते"(ब्रा०) इति। यदुक्तमापस्तम्बेन 'श्वो भूतेऽभिषेचनीयस्योक्थ्यस्य दीक्षां प्रक्रमयति मैत्राबार्हस्पत्या दीक्षणीया', इति। तामिमामभिषेचनीयनामकस्य सोमयागस्याङ्गभूतां दीक्षणीयां चोदकप्राप्तेष्टिबाधनाय विधत्ते "मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयम्मूर्ते स्वयमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये

मैत्रः स्वयङ्कृता वेदिर्भवति स्वयन्दिनं बर्हिः स्वयङ्कृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा” इति। मैत्राबार्हस्पत्यं हविरिति शेषः। तत्र दुग्धे बार्हस्पत्यश्चरुः, आज्ये मैत्रश्चरुः। कीदृश आज्ये। स्वयम्मूर्ते स्वयम्मथिते। तदिदमापस्तम्बेन स्पष्टीकृतं ‘श्वेतां श्वेतवत्सां गामामस्य दृतौ दुहन्ति तत्स्वयम्मूर्तं संयोगेन परिवहति तत्स्वयम्मथितं आतपे विषजन्ति तत्स्वयं विलीनमाज्यं भवति’। आम्रेण फलपुष्परसेन लेपितायां दृतौ यत् पयः आतञ्चनमन्तरेणैव मूर्तं दधि भवति, तच्च बदरादिफलसंयोगेन परिवहति तक्रवत् परितः चरति, तदिदं स्वयम्मथितं। नात्र मृद्भाण्डे पाकः, किन्त्वाश्वत्थे पात्रे चतुःस्रक्तौ न तु वर्तुले। तच्च पात्रं यया कयाचिच्छिन्नशाखया न कर्तव्यं किन्तु वाय्वाद्यभिघातेन स्वयमेव पतितया निष्पादनीयं। कणाः खण्डिततण्डुलाः, अकणा अखण्डिताः। तत्र खण्डितैः पयसि बृहस्पतेश्चरुर्निष्पादनीयः, अखण्डितैस्तु मित्रस्याज्ये चरुः। स्वयङ्कृता शास्त्रीयोद्धननादिरहिता, स्वयन्दिनं समन्त्रकशास्त्रीयच्छेदनमन्तरेणैव खण्डितं। स्वयङ्कृत इध्म अत्रापि शास्त्रीयसम्पादनमन्तरेणैव निष्पन्नः। तमिमं विधिमनूद्य द्वयोर्हविःपात्रयोः संसर्गं विधत्ते “मैत्राबार्हस्पत्यं भवति। श्वेतायै श्वेतवत्सायै दुग्धे। बार्हस्पत्ये मैत्रमपि दधाति। ब्रह्म चैवास्मै क्षत्रञ्च समीची दधाति। अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति” (ब्रा०) इति। बार्हस्पत्ये चरुपात्रेऽग्नावधिश्रिते तस्योपरि मैत्रं चरुपात्रमपि दध्यात् तथा सति बृहस्पति-

रूपा ब्राह्मणजातिः मित्ररूपा क्षत्रियजातिश्चेति उभयमस्मै सम्यक् सम्पादितं भवति। किञ्चाधारभूते ब्राह्मण एव क्षत्रियजातिमाधेयत्वेन प्रतिष्ठापितवान् भवति। पाठक्रमेण पश्चात्प्राप्तं बार्हस्पत्यप्रचारमपवदितुं विधत्ते "बार्हस्पत्येन पूर्वेण प्रचरति। मुखत एवास्मै ब्रह्म संश्यति। अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति" (ब्रा०) इति। स्वयंशब्दानामभिप्रायमाह "स्वयङ्कृता वेदिर्भवति। स्वयन्दिनं बर्हिः। स्वयङ्कृत इध्मः। अनभिजितस्याभिजित्यै। तस्माद्राज्ञामरण्यमभिजितं" (ब्रा०) इति। यद्देशजातं युद्धप्रयासेन पूर्वमनभिजितं तस्याप्यभिजयः स्वयङ्कृतादिना भवति यस्मादेवं तस्माल्लोकेऽपि राज्ञामरण्यं युद्धप्रयासमन्तरेणैवाभिजितं दृश्यते। दक्षिणां प्रशंसति "सैव श्वेता श्वेतवत्सा दक्षिणा समृद्ध्यै" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"पुरा स्विष्टकृतोऽध्वर्युरयं न इति संजपेत्"।

अथ मीमांसा। दशमाध्यायस्य प्रथमपादे चिन्तितं।

"वेदिः स्वयङ्कृतेत्यादौ प्रकृतं सर्वमाचरेत्।
लुप्तार्थं बाध्यतां वाद्यश्चोदकप्रापितत्वतः॥
अपेक्षासक्तियोग्यत्वहानेरुद्धननादिकं।
बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते"॥

रत्निनामेतानि हवींषीति वाक्येन राजसूये रत्निनामकानां देवानां सम्बन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टि-

विकृतिरूपाणि विहितानि, ऊर्द्धं मैत्रावार्हस्पत्ये हविषि श्रूयते ‘स्वयङ्कृता वेदिर्भवति स्वयन्दिनं बर्हिः स्वयङ्कृत इध्मः’ इति। इष्टौ उद्धननखननपरिलेखनादिभिः क्रियाविशेषैः वेदिर्निष्पाद्यते। स्फ्येनोत्तमां त्वचमुद्धन्ति देवस्य सवितुः सव इति खनति स्फ्येन वेदिं परिगृह्णातीति तद्विधानात्। यज्ञस्य घोषदसीत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैः दात्रच्छिन्नं बर्हिः सम्पाद्यते। त्रीन् परिधीनित्यादिमन्त्रोपेताभिः क्रियाभिरिध्मः सिध्यति। विकृतिरूपे तु हविषि उद्धननाद्यपेक्षां वारयितुं स्वयमित्युक्तं। यथास्थित एव तु प्रदेशो वेदित्वेन स्वीकर्तव्यः। इध्माबर्हिषी अपि स्वत एव छिन्ने शास्त्रीयछेदननिरपेक्षे ग्रहीतव्ये इत्यर्थः। तत्र संशयः। लुप्तार्थमलुप्तार्थञ्च सर्वमङ्गजातं विकृतावनुष्ठेयं, उत लुप्तार्थं वर्जनीयमिति। चोदकस्य साधारणत्वात् सर्वमनुष्ठेयमित्याद्यपक्षे प्राप्ते सिद्धान्तं ब्रूमः। अङ्गी हि अङ्गैरुपकृतः फलं साधयति। तथा सत्यङ्गिनोऽङ्गकृते उपकारे साक्षादपेक्षा, उपकारद्वारा त्वङ्गेषु, प्रत्यासन्नस्याङ्गिनं प्रत्यङ्गेभ्य उपकारः। योग्यतापि साक्षादपेक्षां पूरयितुमुपकारस्यैवास्ति न त्वङ्गानां। वेदिनिष्पादनलक्षणदृष्टोपकारयुक्तानि प्रकृतावुद्धननाद्यङ्गानि। विकृतौ तु वेद्याः स्वतःसिद्धत्वेन निष्पादनोपकारो लुप्यते। उपकारद्वारेोपकारकाणामाकाङ्क्षासन्निधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते। तस्मादुद्धननादीनि नानुष्ठेयानि। सोऽयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्वप्रत्ययस्य आभिलनिश्चयो बाध उच्यते। चोदकस्य

त्वलुप्तोपकारैः उपकारद्वारेण आकाङ्क्षासन्निधियोग्यतायुक्तै-र्द्दविरासादनाद्यङ्गैश्चरितार्थता सम्पद्यते ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ * ॥

अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाᳫं सोमाय वनस्पतये श्यामाकं चरुᳫं सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपाल-माशूनां व्रीहीणाᳫं रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय स-त्यायाम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुᳫं सविता त्वा प्रसवानाᳫं सुवतामग्निर्गृहपतीनाᳫं सोमो वनस्पतीनाᳫं रुद्रः पशूनां ॥ १ ॥

बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां व-रुणो धर्मपतीनां ये देवा देवसुवः स्थ त इममामुष्याय-णमनमित्राय सुवध्वं महते क्षत्राय महत आधिप-त्याय महते जानराज्यायैष वो भरता राजा सोमो

ऽस्माकं ब्राह्मणानाꣳ राजा प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमा-मन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभूव-न्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्यु त्रितो जरिमाणं न आनड्विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ॥ २ ॥

पशूनां व्राताः पञ्चविꣳशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः ॥ * ॥

नवमे रत्निनां हवींष्यभिषेचनीयस्य दीक्षणीया चेत्येता-वदुक्तं। दशमे देवसुवां हवींष्युच्यन्ते। तानि चाभिषेचनीय-गतस्याग्नीषोमीयपशुपुरोडाशस्यानुनिर्वाप्यानि। तथा च बौ-धायनः* 'सह सोमौ क्रीणाति अभिषेचनीयाय दशपेयाय च सह परिवहत्यर्धं राज्ञः पुरोहितस्य गृहे दशपेयार्थं निदधा-त्यग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति समानं तु स्विष्टकृदिडं' इति। तान्येतानि हवींषि विधत्ते "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्य-प्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय

* आपस्तम्ब इति तै०।

पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरु-मिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मि-त्राय सत्यायाम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुं" इति। गृहपत्यादीन्यग्न्यादिदेवताविशेषणानि। सत्यप्रसवाय अमोघाभ्यनुज्ञानाय। षष्टिभिरेव दिनैः पच्यमाना आशुव्री-हयः। स्थूलबीजं महाव्रीहयः। आम्बाः धान्यविशेषाः। तेष्वेतेषु विधिषु श्रूयमाणा देवताः प्रशंसति "देवसुवामेतानि हवीꣳ-षि भवन्ति। एतावन्तो वै देवानाꣳ सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनꣳ सुवन्ते। अग्निरेवैनं गृहपतीनाꣳ सुवते। सोमो वनस्पतीनां। रुद्रः पशूनां। बृहस्पतिर्वाचां। इन्द्रो ज्येष्ठानां। मित्रः सत्यानां। वरुणो धर्मपतीनां। एत-देव सर्वं भवति" (ब्रा०१का०।७प्र०।४अ०) इति। यान्यग्नये गृहपतय इत्यादिभिरुत्पत्तिविधिभिर्विहितान्यष्टौ हवींषि ता-न्येतानि देवसुवां सम्बन्धीनि। भाविनीसञ्ज्ञया यजमानो देवः, तं सुवन्ते अनुजानन्ति इत्यग्न्यादयो देवसुवाः। यावन्तो विधि-वाक्येषु अग्न्यादयः श्रूयन्ते, एतावन्त एव देवानां मध्ये सवा अभ्यनुज्ञातारः। अतस्त एवाग्न्यादयोऽस्मै यजमानाय सवान् स्वोचितान् ऐश्वर्यविशेषान् प्रयच्छन्ति। तेऽग्न्यादय एनं यज-मानं सुवन्ते ईश्वरो यथा भवति तथाभ्यनुजानन्ति। तत्रा-ग्निरेवैनं यजमानमन्येषां गृहपतीनामीश्वरमनुजानाति। एव-मन्यत्रापि ईश्वरं सुवत इति योज्यं। सोमो वनस्पतीनां रुद्रः पशूनामित्यनयोर्मध्ये सविता सत्यप्रसवानामित्यध्याहर्तव्यं।

स्वभृत्यान् प्रत्यैश्वर्यार्थममोघा या अभ्यनुज्ञाः तासामीश्वरं करोतीत्यर्थः। गृहपत्यादीन् धर्मपत्यन्तान् प्रति यत्स्वामित्वमेतदेव लोकेऽपेक्षितं सर्वमैश्वर्यं। उक्तानां हविर्विधीनां सन्निधौ सवितेत्यादयो मन्त्रा आम्नाताः। तत्र कल्पः। पुरस्तात्स्विष्टकृतः सविता त्वा प्रसवानाꣳ सुवतामिति ब्रह्मा यजमानस्य हस्तं गृह्णातीति। पाठस्तु "सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्याय" इति। सविता हविर्विधौ तृतीयो देवः सोऽत्र प्राधान्यात् प्रथमं निर्दिश्यते। यजमानस्य स्वभृत्येषु ऐश्वर्यार्थमनुज्ञाः प्रसवाः। हे यजमान त्वां सविता तेषां प्रसवानां स्वामित्वेन सुवतामभ्यनुजानातु। एवमुत्तरत्र त्वां सुवतामिति पदद्वयानुषङ्गेन योजनीयं। हे देवा अग्न्यादयो ये यूयं देवसुवो यजमानप्रेरकाः स्थ ते यूयमिमं यजमानमामुष्यायणं अमुष्य देवदत्तस्य पुत्रं अमुष्य यज्ञदत्तस्य पौत्रं चानमित्राय शत्रुराहित्यार्थं सुवध्वं अभ्यनुजानीध्वं। किञ्च महते क्षत्रायानुत्तमक्षत्रियकुलाय, महत आधिपत्याय अप्रतिहतनियमनसामर्थ्याय, महते जानराज्याय जनसम्बन्धि यद्राज्यं तच्च सागरपर्यन्तभूमिविषयत्वान्महत्, सार्वभौमत्वाय सुवतामित्यर्थः। विधत्ते "सविता त्वा प्रसवानाꣳ सुवतामिति

हस्तं गृह्णाति प्रसूत्यै" (ब्रा०) इति। मन्त्रगतयोर्मध्यमो-त्तमभागयोः स्पष्टार्थतामाशीःपरतां च दर्शयति "ये देवा देवसुवः स्थेत्याह। यथायजुरेवैतत्। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिषमेवैतामाशास्ते" (ब्रा०) इति। कल्पः। अथैनं रत्निभ्य आवेदयति "एष वो भरता राजा" इति। हे भरता राजन्यवैश्यादयो धनिका एष यजमानो युष्माकं राजा, एनं स्वामिनं यथोचितं सेवध्वमित्यभिप्रायः। कल्पः "सोमोऽस्माकं ब्राह्मणानाꣳ राजा" इति ब्रह्मा जपति। सोम उत्तमदेवो राजा न त्वधमो यः क्षत्रिय इत्यर्थः। भरतानामिव ब्राह्मणानामप्ययमेव राजेति प्राप्तिं वारयितुं व्याचष्टे "एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह। तस्मात् सोमराजानो ब्राह्मणाः" (ब्रा०) इति। यस्मान्मन्त्रेण ब्रह्मा स्वकीयं राजानं विभज्य निर्दिष्टवान् तस्माल्लोकेऽपि अग्निष्टोमादियागेषु सोममेव राजशब्दोपहितैः सोमराजन्नेष्यवरो हेत्यादिभिर्मन्त्रैरुपचरन्ति। कल्पः। प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां यजमानो मुखं विमृष्ट इति। पाठस्तु "प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभूवन्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्यु त्रितो जरिमाणं न आनट्" इति। ऋतस्य नामेत्यन्त आद्यो मन्त्रः। सर्वे व्राता इत्यादिर्द्वितीयः। त्यद्राज्यं महत इत्यादि जानराज्यायेत्यन्तं यत्पूर्वमभिहितं

तद् राज्यं नाम नमनीयं यजमानस्य यथा वश्यं भवति तथा प्रत्यधायि वरुणेन प्रतिस्थापितं। स च वरुणः स्वां तनुवमशिश्रेत् आश्रितवान्, वरुणो धर्मपतीनामिति मन्त्रेऽभिधानात् धर्मपतीन् पुरुषान् प्रति यजमानस्य स्वामित्वमभ्यनुजानन्ती वरुणस्य स्वकीया तनुः। वरुणशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते, अत एवाग्न्यादिदेवास्तत्तदनुज्ञार्थों स्वस्वतनुमाश्रितवन्त इति द्रष्टव्यं। वयमपि शुचेर्मित्रस्यानुज्ञया व्रत्याः कर्मयोग्या अभूम, मित्रः सत्यानामिति मन्त्रेऽभिहितत्वात्। मित्रशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते, अत एवाग्न्यादिदेवैरनुज्ञाता वयं महत ऋतस्य प्रौढस्य यज्ञस्य नामामन्महि राजसूयं कर्म कुर्म इति नामधेयं सर्वदा मन्यामहे। किञ्च। ऋत्विजः सर्वे वरुणस्यानुज्ञया व्राताः कर्मयोग्या अभूवन्। मित्रः एवैरस्मान् प्रति रचकत्वेनागमनैरराति वैरिणं विशेषेणातारीत् वयं यथा वैरिणमतिलङ्घयामस्तथाकरोत्। यज्ञिया ऋत्विजः ऋतेन यज्ञेनासूषुदन्त रचितवन्तः, त्रिभिर्ब्राह्मणादिभिर्वर्णैर्योगेषु विस्तार्यत इति त्रितोऽग्निः स नोऽस्माकं जरिमाणं जरया शैथिल्यं व्यु विशेषेणोद्धृत्य* आनट् आयुष्यं व्यापितवान् भवति दीर्घायुष्यं कृतवानित्यर्थः। तदिदं मन्त्रद्वयं पादशो व्याचष्टे "प्रति त्यन्नाम राज्यमधायीत्याह। राज्यमेवास्मिन् प्रतिदधाति। स्वां तनुवं वरुणो अशिश्रेदित्याह। वरुणसवमेवावरुन्धे। शुचेर्मित्रस्य व्रत्या अभूमेत्याह।

* वीति। उ। इति पदपाठः।

शुचिमेवैनं व्रत्यं करोति। अमन्महि महत ऋतस्य नामेत्याह। मनुत एवैनं। सर्वे व्राता वरुणस्याभूवन्नित्याह। सर्वव्रातमेवैनं करोति। वि मित्र एवैररातिमतारीदित्याह। अरातिमेवैनं तारयति। असूषुदन्त यज्ञिया ऋतेनेत्याह। स्वदयत्येवैनं। व्यु त्रितो जरिमाणं न आनडित्याह। आयुरेवास्मिन् दधाति" (ब्रा०) इति। वरुणसवं वरुणस्यानुज्ञां, एनं राजसूयं, मनुत एव पुनः पुनः कर्तुमिच्छत्येव। सर्वेऽध्वर्युप्रभृतयः व्राताः व्रतयोग्या यस्य यजमानस्यासौ सर्वव्रातः। एनं यजमानमरातिं तारयति वैर्यतिक्रमक्षमं कारयत्येव। एनं यज्ञं स्वदयत्येव स्वादूकरोत्यविघ्नेन पालयतीत्यर्थः। मुखमार्जनं विधत्ते "द्वाभ्यां विमृष्टे। द्विपाद्यजमानः प्रतिष्ठित्यै" (ब्रा०) इति। पुरतोनिर्वाप्यस्यानुनिर्वाप्यैः सहैव स्विष्टकृदवदानं विधत्ते "अग्नीषोमीयस्य चैकादशकपालस्य देवसुवाञ्च हविषामग्नये स्विष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति" (ब्रा०) इति। एकत्राग्नीषोमौ देवता इतरत्राष्टावग्न्यादिदेवताः, एवमुभयतो देवताभिर्यज्ञस्य परिग्रहः। कल्पः। विष्णोः क्रमोऽसीति त्रीन्विष्णुक्रमान् प्राचः क्रामतीति। पाठस्तु "विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि" इति। वाजपेये रथसमीपगमने व्याख्यातं। विधत्ते "विष्णुक्रमान् क्रमते। विष्णुरेव भूत्वेमाँल्लोकानभिजयति" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"सवितेति स्वामिहस्तं ब्रह्मा गृह्णीत एष वः।

रत्निभ्यः स्वामिनं ब्रूयात् सोमेति ब्रह्मणो जपः ॥
प्रति द्वाभ्यां मुखं स्वामी मार्ष्टि विष्णोस्त्रिभिः क्रमः।
दशमे अनुवाकेऽस्मिन्नष्टौ मन्त्रा उदीरिताः" इति ॥

अथ मीमांसा। एकादशाध्यायस्य तृतीयपादे चिन्तितं।

"नानाबीजेषु यागेषु वाग्विसर्गस्य पूर्ववत्।
शङ्किते तद्विधौ तस्यावधित्वेन तु उत्तरं" ॥

राजसूये नानाविधबीजयुक्ता यागाः श्रुताः। अग्नये गृह-पतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुमित्यादिना। प्रकृतौ प्रणीता-प्रणयनकाले नियमिताया वाचो हविष्कृत आह्वानकाले वि-सर्गः श्रुतः, स चात्र चोदकप्राप्तः। तत्र प्रथमे चरमे वा हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पित इति प्राप्ते पूर्वपक्षे चरम एवेति राद्धान्तः। अत्रेयं पूर्वपक्षिणोऽधिकाशङ्का न हस्तेन कण्डूयनं विहितं, वाग्विसर्गस्तु विहित इति तत्रेद-मुत्तरं, विहितस्य वाङ्नियमनस्यावधित्वेनायं हविष्कृदाह्वान-कालीनो वाग्विसर्गोऽनूद्यते रागप्राप्तत्वान्नासौ विधीयत इति तस्मात्कासनवद्विसर्गोऽपि चरम एव काले नियम्यते।

तत्रैव चतुर्थपादे चिन्तितं।

"नानाबीजेषु तन्मन्त्रः सकृद्भूयोऽपि वा सकृत्।
चिकीर्षैक्यात्प्रयोगाणां भिन्नत्वान्न सकृद्भवेत्" ॥

राजसूये नानाबीजयागेषु सोऽवघातमन्त्रः सकृदेव प्रयो-क्तव्यः। कुतः, सर्वावघातविषयायामेकस्यां चिकीर्षायां प्रकृत-

त्वादिति प्राप्ते ब्रूमः। समन्त्रोऽवघातः चोदकातिदेशेन प्राप्तो वीजेषु प्रयुज्यते। तण्डुलनिष्पत्तौ स कृतार्थः सम्पन्नः। पुनर्वीजान्तरे तण्डुलनिष्पत्तये ममयस्यावघातस्य प्रयोक्तव्यत्वादमन्त्रकत्वम्। मन्त्रपाठोऽवघातप्रसङ्गात् प्रथमे प्रपाठके उदाहृतोऽप्यत्र मन्त्रविषयलाभादनुस्मारितः॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः॥ * ॥

---

अर्थेतस्थापां पतिरसि वृषास्यूर्मिर्वृषसेनोऽसि व्रजक्षितस्थ मरुतामोजस्थ सूर्यवर्चसस्थ सूर्यत्वचसस्थ मान्दास्थ वाशास्थ शक्वरीस्थ विश्वभृतस्थ जनभृतस्थाग्नेस्तेजस्यास्थापामोषधीनाꣳ रसस्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वतीराजसूयाय चितानाः। याभिर्मित्रावरुणावभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः। राष्ट्रदास्थ राष्ट्रं दत्त स्वाहा राष्ट्रदास्थ राष्ट्रममुष्मै दत्त॥ ॥ १ ॥

अत्येकादश च॥ ११ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके एकादशोऽनुवाकः॥ * ॥

दशमे देवसुवां हवींष्युक्तानि। एकादशेऽभिषेकार्थजलविषया मन्त्रा उच्यन्ते। कल्पः। अपां ग्रहान् गृह्णात्याग्नीध्रे वायव्यैर्गृह्यन्ते, षोडश सप्तदश वा गृह्यन्ते, तावन्त एव ग्रहा गृह्यन्ते। अर्थेतस्थेति सारस्वतीष्वप्सु जुह्वतैनैव मन्त्रेण गृह्णात्येवमुत्तरैर्येन जुहोति तेन गृह्णाति, अपां पतिरिति समुद्रियाः सैन्धवीर्वापो वान्यः पुनदः स्यात्, पुरुषे पशौ वाभ्यवेते प्रतीपमन्य ऊर्मिर्यध्यत्यन्वीपमन्यो वृषासीति यः प्रतीपं वृषसेनोऽसीति योऽन्वीपं, व्रजक्षित इति कूप्यानां, मरुतामोज इति याः प्रतीपं गच्छन्ति ह्रादुनीनां वा, *प्रहावरीस्थेति या उत्स्यन्दिला तत्रैव प्रत्यवसिच्यन्ते, परिवाहिणीस्थेति परिनदीनां, सूर्यवर्चस इत्यातपति वर्ष्याणां, सूर्यत्वचस इति यासु रूपाणि परिदृश्यन्ते, मान्दा इति स्थावराणां, वाशा इति †पुष्याणां, शक्करीस्थेति गोरुल्व्यानां, विश्वभृत इति पयसो, जनभृत इति दध्नोऽग्नेस्तेजस्या इति घृतस्यापामोषधीनाꣳ रस इति मधुनोऽपो देवीर्मधुमतीरगृह्णन्निति सर्वत्र होमे ग्रहणे वानुषजति राष्ट्रदास्थ राष्ट्रं दत्त स्वाहेति होमसंयुक्ते राष्ट्रदास्थ राष्ट्रममुष्मै दत्तेति ग्रहणसंयुक्त इति। अत्र सूत्रार्थो मन्त्रव्याख्यान एव स्पष्टीभविष्यति। प्रहावरीस्थ परिवाहिणीस्थेति मन्त्रद्वयं शाखान्तरगतं। अत्र मन्त्रपाठस्तु "अर्थेतस्थापां पतिरसि वृषास्यूर्मिर्वृषसेनोऽसि व्रजक्षितस्थ मरुतामोजस्थ सू-

---

* प्रभावरीस्थेति काशीस्थत्रयपुस्तकपाठः।

† पुष्याणामिति सम्भवपाठः।

र्यवर्चसस्थ सूर्यत्वचसस्थ मान्दास्थ वाशास्थ शक्करीस्थ विश्वभृतस्थ जनभृतस्थाग्नेस्तेजस्थास्थापामोषधीनाꣳ रसस्थापो देवीर्मधुमती-रगृह्णन्नूर्जस्वतीराजसूयाय चितानाः। याभिर्मित्रावरुणावभ्य-षिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः। राष्ट्रदास्थ राष्ट्रं दत्त स्वाहा राष्ट्रदास्थ राष्ट्रममुष्मै दत्त" इति। हे सारस्वत्य आपो यूयमर्थेतः स्थ अर्थं प्रयोजनमुद्दिश्य सरस्वत्या नद्याः सकाशात् यस्मद्देशं यन्ति गच्छन्तीत्यर्थेतः, यूयं तथाविधाः स्थ। समुद्रं काञ्चिन्नदीं पुन्नदं वा सम्बोध्यापां पतिरसीत्युच्यते, त्वदीयं जलं गृह्णामीत्यभिप्रायः। हे प्रतीपं युध्यन्नूर्मे त्वं वृषाऽसि सेचकोऽसि। हे अन्वीपं युध्यन्नूर्मे त्वं वृषसेनोऽसि सेचनक्षमा सेना जलराशि-रूपा यस्यासौ वृषसेनः, पुरुषे पशौ वा नदीमुत्तरीतुं प्रविष्टे सति उपरिभागस्य ऊर्मिः प्रवाहस्य ऊर्म्यन्तरेण युध्यति अधोभागस्थः प्रवाहानुकूलः सहमागच्छन्नूर्म्यन्तरेण युध्यति तदुभयमत्रोक्तं। हे कूप्या आपो यूयं व्रजक्षितः स्थ व्रजे गोष्ठवत् बह्वीनां निवास-योग्ये कूपस्थाने क्षियन्ति निवसन्तीति व्रजक्षितः। हे प्रतीप-गामिन्य आपो यूयं मरुतामोजः स्थ वायूनां बलरूपा भवत आवर्तादिषु वायुना प्रतिहताः सत्यः प्रतीपं गच्छन्ति। हे आतपयुक्तवृष्टिसम्बन्धिन्य आपो यूयं सूर्यवर्चसः स्थ सूर्यवत् वर्चस्तेजो यासां ताः सूर्यवर्चसः। हे सूर्यादिप्रतिविम्बग्राहिण्य आपो यूयं सूर्यत्वचसः स्थ सूर्यस्य त्वक् शरीरं प्रतिविम्बरूपेण यासु तिष्ठति ताः सूर्यत्वचसः। हे स्थावरा आपो यूयं मान्दाः स्थ गत्यभावात् मन्दरूपाः स्थ। हे नीहारगता आपो

यूयं वाशाः स्थ वश्या भवत। नीहारो हि नदीप्रवाहवत् मनुष्यगतिं न प्रतिबध्नाति ततो वश्यत्वं। गोर्गर्भवेष्टन उल्वे स्थिता हे आपो यूयं शक्करीः स्थ गर्भरक्षणे शक्ता भवत। हे क्षीरगता आपो यूयं विश्वभृतः स्थ विश्वं बिभ्रतीति विश्वभृतः क्षीरेण हि प्राणिजातं पुष्यते। हे दधिगता आपो यूयं जनभृतः स्थ पूर्ववद्व्याख्येयं। हे घृतद्रवरूपा आपो यूयं अग्नेस्तेजस्याः स्थ ज्वालारूपत्वात् घृतमग्नेस्तेजः तेन भवास्तेजस्याः। हे मधुद्रवरूपा आपो यूयं अपामोषधीनां रसः स्थ पुष्परसजन्यत्वादुभयसारत्वं प्रसिद्धं। राजसूयार्थं चिताना: चिन्तयन्तः ऋत्विजोऽपोऽगृह्णन्। कीदृशीः। देवीः दीप्यमानाः मधुमतीर्मधुराः, ऊर्जस्वतीः बलप्रदाः, ता एव पुनर्विशेष्यन्ते। याभिरद्भिः देवताः पूर्वं मित्रावरुणावभ्यषिञ्चन् पुनरपि याभिरद्भिररातीः शत्रूनतिक्रम्य इन्द्रमनयन्, तादृशीरपोऽगृह्णन्नित्यन्वयः। हे आपो यूयं राष्ट्रप्रदत्वाद्यजमानाय राष्ट्रं दत्त स्वाहा तुभ्यमिदं स्वाहुतं। हे आपो राष्ट्रप्रदत्वादमुष्मै रामयुधिष्ठिरादिवर्मणे राष्ट्रं दत्त। अर्थेत्यादिषु पञ्चदशसु मन्त्रेष्वपो देवीरित्यृगियं शेषत्वेनानुषज्यते। स्वाहाकारान्तो राष्ट्रदा इति मन्त्रो होमकाले शेषत्वेनानुषज्यते, तद्रहितस्तु ग्रहणकाले। विधत्ते "अर्थेतस्थेति जुहोति। आहुत्यैवैना निष्क्रीय गृह्णाति। अथो हविष्कृतानामेवाभिघृतानां गृह्णाति" (ब्रा०१का०।७प्र०।५अ०) इति। एताः सरस्वत्यादिनदीगता अपो निष्क्रीय निःशेषेण क्रीत्वा, किञ्चाहुत्या हविष्कृता

हवीरूपत्वं प्रापिताः भवन्ति, आज्यहोमस्याभिघारणरूपत्वात्। होमादूर्द्ध्वमनेन मन्त्रेण ग्रहणं विधत्ते "वहन्तीनां गृह्णाति। एता वा अपाꣳ राष्ट्रं। राष्ट्रमेवास्मै गृह्णाति। अथो श्रियमेवैनमभिवहन्ति" (ब्रा०) इति। सरस्वत्यामन्यस्यां वा नद्यां प्रवाहरूपा वहन्त्यः तासां सकाशात् गृह्णीयात्, एता एव वहन्त्यः कूल्यारूपेण बहुविधसस्योपकारित्वादपां राष्ट्रमित्युच्यते, तद्ग्रहणेन यजमानार्थं राष्ट्रं कृतं भवति। किञ्चैनं यजमानं प्रति श्रियं वहन्ति। स्त्रीलिङ्गपुंल्लिङ्गस्याभिप्रायं दर्शयति "अपां पतिरसीत्याह। मिथुनमेवाकः" (ब्रा०) इति। यजमानस्य सस्याभिवृद्धये जलसम्पत्तिं प्रदर्शयति "वृषास्यूर्मिरित्याह। ऊर्मिमन्तमेवैनं करोति" (ब्रा०) इति। स्वाधीनसेनायुक्तत्वं दर्शयति "वृषसेनोऽसीत्याह। सेनामेवास्य सꣳश्यति" (ब्रा०) इति। वैश्यादिप्रजासम्पत्तिं दर्शयति "व्रजक्षितस्थेत्याह। एता वा अपां विशः। विशमेवास्मै पर्यूहति" (ब्रा०) इति। नगरस्थितवैश्यवत् कूपे सर्वदावस्थानाद्वैश्यत्वं। अन्नप्राप्तिं दर्शयति "मरुतामोजस्थेत्याह। अन्नं वै मरुतः। अन्नमेवावरुन्धे" (ब्रा०) इति। राष्ट्रस्य वैर्यनभिभवरूपं तेजो दर्शयति "सूर्यवर्चसस्थेत्याह। राष्ट्रमेव वर्चस्व्यकः" (ब्रा०) इति। सत्यानृतप्रयुक्तं स्वातन्त्र्यं दर्शयति "सूर्यत्वचसस्थेत्याह। स॰ं वा एतत्। यद्वर्षति। अनृतं यदातपति वर्षति। सत्यानृते एव॰॰न्धे" (ब्रा०) इति। आतपरहिताया वृष्टेः प्रभूतत्वेन फल पर्यन्तस्थायित्वात् आतपयुक्तायास्तद्वैपरीत्यं

सर्वत्र सत्यं वक्तुमनृतं वर्जयितुं चमत्वं तयोरवरोधः। वेदनं प्रशंसति "नैनᳶ सत्यानृते उदिते हिᳶस्तः। य एवं वेद" (ब्रा०) इति। स्थिरास्वप्सु घर्षणादिकं विस्रम्भेण कर्तुं शक्यत्वात् राष्ट्रगतब्राह्मणवर्गस्य ब्रह्मवर्चसं दर्शयति "मान्दास्थेत्याह। राष्ट्रमेव ब्रह्मवर्चस्यकः" (ब्रा०) इति। नीहारे वशत्वस्य दर्शितत्वाद्राष्ट्रस्यापि वशत्वं दर्शयति "वाशास्थेत्याह। राष्ट्रमेव वश्यकः" (ब्रा०) इति। उल्वगतानामपां पशुसम्बन्धात् पशुप्राप्तिं दर्शयति "शक्करीस्थेत्याह। पशवो वै शक्करीः। पशूनेवावरुन्धे" (ब्रा०) इति। चीरस्थजलेन चीरसम्पत्तिं दर्शयति "विश्वभृतस्थेत्याह। राष्ट्रमेव पयस्यकः" (ब्रा०) इति। दध्न इन्द्रियप्रदत्वात्तज्जलेनेन्द्रियसम्पत्तिं दर्शयति "जनभृतस्थेत्याह। राष्ट्रमेवेन्द्रियाव्यकः" (ब्रा०) इति। घृतस्य तेजोरूपत्वात्तेजःसमृद्धिं दर्शयति "अग्नेस्तेजस्यास्थेत्याह। राष्ट्रमेव तेजस्यकः" (ब्रा०) इति। अत्रौषधिरसस्य मधुत्वान्मधुसम्पत्तिं दर्शयति "अपामोषधीनाᳶ रसस्थेत्याह। राष्ट्रमेव मधव्यमक्रः" (ब्रा०) इति। वहन्तीनां गृह्णातीति नदीमात्रप्रवाहे जलग्रहणं यदुक्तं तस्यानुकल्पत्वं द्योतयन्मुख्यकल्पं विधत्ते "सारस्वतं ग्रहं गृह्णाति। एषा वा अपां पृष्ठं। यत् सरस्वती। पृष्ठमेवैनᳶ समानानां करोति" (ब्रा०) इति। सरस्वत्याख्यानदीविशेषात् आनीयमानः सारस्वतः, अपां पृष्ठं पृष्ठवदुपरिवर्तनी प्रशस्तेत्यर्थः। पृष्ठमेव करोति उत्कृष्टमेव करोतीत्यर्थः। शाखान्तरगतेनैकेन मन्त्रेण सह षोडशसङ्ख्यां

विधत्ते "षोडशभिर्गृह्णाति। षोडशकलो वै पुरुषः। यावानेव पुरुषः। तस्मिन् वीर्यं दधाति" (ब्रा०) इति। षोडशसङ्ख्याकाः कला अवयवा यस्येति षोडशकलः, एकादशेन्द्रियैः पञ्चभूतैश्चोत्पादितत्वात् शरीरस्य षोडशकलत्वं। अर्थेत इत्यादीनां षोडषमन्त्राणां होमशेषत्वं ग्रहणशेषत्वञ्च पूर्वं विहितं। अर्थेतस्थेति जुहोति वहन्तीनां गृह्णातीत्यभिधानात्तत्रोभयत्रावस्थितां षोडशसङ्ख्यां समस्य प्रशंसति "षोडशभिर्जुहोति षोडशभिर्गृह्णाति। द्वात्रिंशत्सम्पद्यन्ते। द्वात्रिंशदक्षरानुष्टुप्। वागनुष्टुप् सर्वाणि छन्दांसि। वाचैवैनं सर्वेभिश्छन्दोभिरभिषिञ्चति" (ब्रा०) इति। अनुष्टुप्छन्दसोऽक्षरसङ्घातगामित्वाद्वाग्रूपत्वं। अनुष्टुभो वा इमानि जायन्त इति तापनीये सर्वजगद्धेतुत्वाभिधानात् सर्वच्छन्दोरूपत्वं।

अत्र विनियोगसङ्ग्रहः।

"सारस्वतीजलेऽर्थेति होमः सामुद्रिके त्वपां।
वृषासीति प्रतीपोर्मावन्वीपोर्मौ पुनर्वृष॥
व्रज कूप्यासु मरुतां वायुप्रतिहतास्वथ।
सूर्यस्यातपवृष्टासु सूर्यविम्बयुतासु च॥
मान्दा स्थिरासु वाशास्थ नीहारस्थासु शक्करीः।
गवोल्बस्थासु विश्वेति चीरगासु जनेति तु॥
दधिगासु घृतस्थासु त्वग्नेर्मधुगतासु तु।
अपां, अपः सर्वशेष स्वगेषा, राष्ट्रदा इति॥
स्वाहान्तो होमगोऽन्यस्तु ग्रहणे दश पञ्च च" इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठक एकादशोऽनुवाकः ॥ * ॥

देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः। सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः। पस्त्यासु चक्रे वरुणः सधस्थमपाᳪ शिशुः ॥ १ ॥

मातृतमास्वन्तः क्षत्रस्योल्बमसि क्षत्रस्य योनिरस्याविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाᳪ राजेन्द्रस्य ॥ २ ॥

वज्रो॑ऽसि वार्त्र॒घ्नस्त्वया॒यं वृ॒त्रं व॑ध्याच्छत्रु॒बाध॑ना स्थ पा॒त मा॑ प्र॒त्यञ्चं॑ पा॒त मा॑ ति॒र्यञ्चं॑म॒न्वञ्चं॑ मा पात दि॒ग्भ्यो मा॑ पात॒ विश्वा॑भ्यो मा ना॒ष्ट्राभ्यः॑ पात॒ हिर॑ण्यवर्णावु॒षसां॑ विरो॒केऽय॑स्स्थू॒णावुदि॑तौ॒ सूर्य॒स्यारो॑हतं वरुण मित्र गर्तं॒ तत॑श्चक्षाथा॒मदि॑तिं॒ दिति॑ञ्च ॥ ३ ॥

शिशु॒रिन्द्र॒स्यैक॑चत्वारिꣳशच्च ॥ १२ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

एकादशेऽभिषेकजलमन्त्रा उक्ताः। द्वादशे तज्जलसंस्कारमन्त्रा उच्यन्ते। कल्पः। देवीराप इति वैतसे सते ग्रहान् समवनीयेति। अप्सु जातो वृक्षविशेषो वेतसस्तेन निर्मितं द्रोणकलशसदृशं पात्रं सतं तस्मिन् सते वायव्यैर्गृहीतास्ता अपोऽवनयेत्। पाठस्तु "देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वानाः" इति। हे आपो देव्यो नानापात्रेषु गृहीता यूयं क्षत्रियाय राज्ञे महि वर्चो वन्वाना महत्तेजः सम्पादयन्त्यः परस्परं संसृज्यध्वं। कीदृश्यः कीदृशीभिः सह मधुमतीर्मधुराः मधुमतीभिर्मधुराभिः सह। मन्त्रसामर्थ्येन परस्परसंसर्गः सम्पद्यत इति दर्शयति "देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह। ब्रह्मणैवैनाः सꣳसृजति" (ब्रा०१का०।७प्र०।६अ०) इति। कल्पः। अनाधृष्टाः सीदतेति

त्यन्तरा होतुर्धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयित्वेति। पाठस्तु "अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीः" इति। हे आपोऽनाधृष्टाः केनाप्यतिरस्कृता ऊर्जस्वतीः सारवत्यः सीदत तिष्ठत। किं कुर्वन्त्यः, राज्ञे महद्वर्चो दधत्यः। मन्त्रसामर्थ्येनैवासामुपवेशनमपि सम्पद्यत इत्याह "अनाधृष्टाः सीदतेत्याह। ब्रह्मणैवैनाः सादयति" (ब्रा०) इति। विधत्ते "अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति। आग्नेयो वै होता। ऐन्द्रो ब्राह्मणाच्छꣳसी। तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परिगृह्णाति" (ब्रा०) इति। प्र वो देवायाग्नय इत्याद्याग्नेयशस्त्रपाठाद्धोताग्नेयः, इन्द्र त्वा वृषभं वयमित्याद्यैन्द्रशस्त्रपाठात् ब्राह्मणाच्छंसिन ऐन्द्रत्वं। कल्पः। अनिभृष्टमसीति तस्मिन् शतमानं हिरण्यमवधायेति। पाठस्तु "अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि" इति। हे हिरण्य त्वं अनिभृष्टमसि यवादिवदग्निसंयोगेऽपि नितरां भृष्टं नासि न भवसि। किञ्च, वाचो बन्धुरसि हिरण्यवत्तया हि राजामात्यादीनां वाक् सर्वैराद्रियते, तपोजा असि सन्तापवतोऽग्नेर्जातोऽसि हिरण्यस्याग्निरेतस्त्वात्, तथा चाधानप्रकरणेऽग्निं प्रकृत्य श्रूयते तस्य रेतः परापतत् तद्धिरण्यमभवदिति। सोमस्य दात्रमसि सोमस्य क्रयार्थं त्वं दत्तमसि हिरण्येन क्रीणातीति श्रुतेः। कल्पः। शुक्रा वः शुक्रेणोत्पुनामीति तेनोत्पूयेति। पाठस्तु "शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः" इति। हे आपः

शुक्रा वो दीप्तिमतीः युष्मान् शुक्रेण दीप्तिमता हिरण्येनो-त्पुनामि। कीदृशीः कीदृशेन, चन्द्राश्चन्द्रेण उभयोराह्लादकत्वं प्रसिद्धं, अमृता अमृतेन स्वादुत्वादापोऽमृताः प्रियत्वाद्धिरण्य-ममृतं। पुनरपि कीदृशीः, स्वाहाकारसम्पादितहोमयुक्ताय राजसूयाय चितानाः सम्पादिताः। विधत्ते "हिरण्येनोत्पु-नाति। आकृत्यै हि पवित्राभ्यामुत्पुनन्ति व्यावृत्यै" (ब्रा०) इति। पात्रे स्थापितं हिरण्यं दर्भेण दीर्घसूत्रेण वा प्रग्रथ्य तत्सूत्रं हस्ताभ्यां धृत्वोत्पुनीयात्। आज्यं त्वाकृत्यर्थं पवित्रा-भ्यामेवोत्पूयते, आपस्त्वभिषेकार्था इत्याज्याद्व्यावृत्यर्थं हिर-ण्येनोत्पवनं। हिरण्यपरिमाणं विधत्ते "शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति। वाजपेये यूपावरोहणप्रसङ्गे वाक्यमेतद्व्याख्यातं। मन्त्रद्वयभागानामर्थो लोकसिद्ध इति दर्शयति "अनिभृष्ट-मसीत्याह। अनिभृष्टꣳ ह्येतत्। वाचो बन्धुरित्याह। वाचो ह्येष बन्धुः। तपोजा इत्याह। तपोजा ह्येतत्। सोमस्य दात्रमसीत्याह। सोमस्य ह्येतद्दात्रं। शुक्रा वः शुक्रेणोत्पुना-मीत्याह। शुक्रा ह्यापः। शुक्रꣳ हिरण्यं। चन्द्राश्चन्द्रेणेत्याह। चन्द्रा ह्यापः। चन्द्रꣳ हिरण्यं। अमृता अमृतेनेत्याह। अमृ-ता ह्यापः। अमृतꣳ हिरण्यं। स्वाहा राजसूयायेत्याह। राजसूयाय ह्येता उत्पुनाति" (ब्रा०) इति। राजसूयाय राजसूयान्तर्गतराजाभिषेकाय। कल्पः। सधमादो द्युम्निनी-रिति चतुर्षूदपात्रेषु व्यानयति पालाश औदुम्बर आश्वत्थे

नैयग्रोधे चेति। पाठस्तु "सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः। पस्त्यासु चक्रे वरुणः सधस्थमपाᳲ शिशुर्मातृतमास्वन्तः" इति। वरुणः पस्त्यासु गृहस्थानीयास्वप्सु अन्तर्मध्ये सधस्थं चक्रे ताभिरद्भिः सहस्थितिं कृतवान्। कीदृशीषु पस्त्यासु, मातृतमासु अतिशयेन मातरो मातृतमा अतिस्नेहयुक्ता मातरो हि पुत्रं पालयन्ति प्रियं, तद्वत्पालयित्र्य इत्यर्थः। कीदृशो वरुणः, अपां शिशुः मातृस्थानीयानामपां पुत्रस्थानीयः। किं कुर्वन् वसानः, एता अपो वस्त्रवदाच्छादयन्। कीदृशीरपः सधमादः स्वान्तःस्थितेन वरुणेन सहैकस्मिन् देशे स्थित्वा तं वरुणं मादयित्रीर्हर्षयित्रीः, द्युम्निनीर्दीप्तिमतीः धनवतीर्वा, ऊर्जा बलहेतुभूताः, अनिभृष्टा यवादिवत् भर्जनायोग्याः, अपस्युवः कर्माणीच्छन्तीः। विधत्ते "सधमादो द्युम्निनीरूर्ज एता इति वारुण्यर्चा गृह्णाति। वरुणसवमेवावरुन्धे" (ब्रा०) इति। वरुणसवं वरुणानुज्ञानं। ऋच एकत्वं प्रशंसति "एकया गृह्णाति। एकधैव यजमाने वीर्यं दधाति" (ब्रा०) इति। कल्पः "क्षत्रस्योल्बमसि" इति तार्प्यं यजमानः परिधत्ते "क्षत्रस्य योनिरसि" इति पाण्डरमुष्णीषं द्वितीयं श्वेतं पाण्डरमित्याचक्षत इति। तार्प्यं घृताक्तं वस्त्रं। वाजपेये व्याख्यातौ मन्त्रौ। विधत्ते "क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति तार्प्यञ्चोष्णीषञ्च प्रयच्छति सयोनित्वाय" (ब्रा०) इति। यजमानो राजत्वात् क्षत्रियः तार्प्योष्णीषयोरपि क्षत्रसम्बन्धित्वे सयोनित्वं समानजातित्वं भ-

वति। विधत्ते. "एकशतेन दर्भपुञ्जीलैः पवयति। शतायुर्वै पुरुषः शतवीर्यः। आत्मैकशतः। यावानेव पुरुषः। तस्मिन् वीर्यं दधाति" (ब्रा०) इति। बहुभिर्दर्भनाडीभिर्युक्तमेकं काण्डं दर्भपुञ्जीलं तादृशैरेकाधिकशतसङ्ख्याकैर्यजमानं शोधयेत्। शतवीर्यः शतेन्द्रियः, आत्मा यजमानजीवः शताधिकामेकत्वसङ्ख्यां पूरयति। द्रव्यत्रयभक्षणं क्रमेण विधत्ते "दध्नाशयति। इन्द्रियमेवावरुन्धे। उदुम्बरमाशयति। अन्नाद्यस्यावरुद्ध्यै। शष्पाण्याशयति। सुराबलिमेवैनं करोति" (ब्रा०) इति। दध्न इन्द्रियप्रियत्वात्तेनेन्द्रियावरोधः, उदुम्बरफलस्य मधुरत्वान्मृदुत्वाच्चात्तुं योग्यत्वं, शष्पाणि बालतृणानि व्रीहियवाङ्कुराणीत्यर्थः। तेषां सुराजनकत्वात् सुरात्वं सा च सुरा बलिः पूजा यस्य सोऽयं यजमानः सुराबलिः। कल्पः। आविन्नो अग्निरित्याविदो यजमानं वाचयन् बहिरुदानीयेति। आविद् आवित्सञ्ज्ञकाः सप्त मन्त्राः, उदानीय आग्नीध्रीयाद्बहिर्निःसार्य। पाठस्तु "आविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्यां विशस्मिन्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्याय" इति। अग्निरिदानीं गृहपतिराविन्नोऽनेन कर्मणा गृहपतित्वं लब्धवान्। इन्द्रः प्रवृद्धकीर्तिं लब्धवान्। पूषा विज्ञानं लब्धवान्। मित्रावरुणौ सत्यवचनवृद्धिं लब्धवन्तौ।

द्यावापृथिव्यौ नियमेन सर्वस्वव्यापाररूपं व्रतधारणं लब्ध-वन्त्यौ। अदितिर्देवमाता च सर्वदेवशरीरयुक्तत्वं लब्धवती, देवतारूपान् बहुपुत्रानुत्पादयतीत्यर्थः। अयं पुरतो वर्तमानो ऽसौ नरसिंहवर्मा आमुष्यायण अमुष्य राजेन्द्रवर्मणः पुत्रः पौत्रो वा तादृशो यजमानोऽस्यां प्रजायामस्मिन्राष्ट्रे महद्भ्यः क्षत्रत्वादिपूर्वव्याख्यातगुणेभ्यः पर्याप्तः सन्नाविन्नस्तान् गुणान् लब्धवानित्यर्थः। कल्पः "एष वो भरता राजा" इत्युक्त्वेति। पूर्ववदनेन मन्त्रेण यजमानं रत्निभ्यः प्रदाय "सोमोऽस्माकं ब्राह्मणानाꣳ राजा" इति ब्रह्मा जपतीत्यर्थः। विधत्ते "आ-विद एता भवन्ति। आविदमेवैनं गमयन्ति" (ब्रा०) इति। एता आविन्न इत्याद्या आवित्सञ्ज्ञका मन्त्रवाचो वाचनीया भवन्तीत्यर्थः। तेनैनं यजमानं आविदं गृहपतित्वादिलाभं प्रापयन्तीर्थः। आद्यमन्त्रचतुष्टयपाठं प्रशंसति "अग्निरेवैनं गार्हपत्येनावति। इन्द्र इन्द्रियेण। पूषा पशुभिः। मित्रा-वरुणौ प्राणापानाभ्यां" (ब्रा०) इति। गार्हपत्यं गृहपतित्वं, इन्द्रियेणावतीत्यनुवर्तते। पञ्चममन्त्रं प्रशंसति "इन्द्रो वृत्राय वज्रमुदयच्छत्। स दिवमलिखत्। सोऽर्यम्णः पन्था अभ-वत्। स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत्। स आभ्यामेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत्। आविन्ने द्यावापृथिवी धृतव्रते इति यदाह। आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति" (ब्रा०) इति। इन्द्रेणो-द्यतस्य वज्रस्य तीक्ष्णतया द्युलोके रेखा सम्पन्ना, सा च सूर्यस्य

मार्गोऽभवत्। तदानीं द्यौरुत्पाटनेन क्षुब्धा यदा वज्रप्रहारायानुज्ञां दत्तवती तदा स इन्द्र अनेन मन्त्रेण द्यावापृथिव्यौ सेवित्वा ताभ्यामनुज्ञातो वृत्राय वज्रं प्राहरत्, एवं यजमानोऽप्यनेन मन्त्रेण वैरिणे वज्रं प्रहरति। षष्ठमन्त्रं प्रशंसति "आविन्ना देव्यदितिर्विश्वरूपीत्याह। इयं वै देव्यदितिर्विश्वरूपी। अस्यामेव प्रतितिष्ठति" (ब्रा०) इति। भूमिरेव काञ्चिन्मूर्तिं धृत्वा देवमाता अदितिरित्युच्यते। सप्तममन्त्रस्य पूर्वभागं प्रशंसति "आविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन्राष्ट्र इत्याह। विशैवैनꣳ राष्ट्रेण समर्धयति" (ब्रा०) इति। विशा करप्रदायिन्या प्रजया राष्ट्रेण सर्वसस्ययुक्तेन भूमिविशेषेण च यजमानं समर्धयत्येव। तस्य मन्त्रस्योत्तरभागमुत्तरौ च मन्त्रौ पूर्ववद्व्याचष्टे "महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिषमेवैतामाशास्ते। एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह। तस्मात् सोमराजानो ब्राह्मणाः" (ब्रा०) इति। कल्पः। इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुर्यजमानाय प्रयच्छतीति। पाठस्तु "इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यात्" इति। हे धनुस्त्वमिन्द्रस्य वज्रवत् प्रहारसाधनमसि अतस्त्वयायं यजमानो वैरिणं वध्यात्। विधत्ते "इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुः प्रयच्छति विजित्यै" (ब्रा०) इति। कल्पः "शत्रुबाधनास्स्थ" इति त्रीन् बाणावत इति। बाणा अस्यं तद्युक्तायानित्यर्थः। त्रीनिषून् प्रयच्छतीति शेषः। हे इषवः यूयं शत्रूणां बाधका

भवथ। विधत्ते "शत्रुबाधनास्येतीषून्। शत्रूनेवास्य बाधन्ते" (ब्रा०) इति। प्रयच्छतीत्यनुवर्तते। कल्पः। पात मा प्रत्यञ्च-मिति प्रदीयमानाननुमन्त्रयत इति। पाठस्तु "पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात" इति। यदा वैरी पुरतः स्थित्वा बाणं मुञ्चति तदानीमयं विध्यमानो बाणस्य प्रत्यङ्मुखो भवति, पार्श्वयोः स्थित्वा बाणमोचनेऽयं तिर्यग्भवति, पृष्ठतः स्थित्वा बाणमोचने पलायमानोऽयमन्वग्भवति। हे मदीया बाणाः प्रत्यगादिरूपं मां पात परकीयेभ्यो यथोक्तप्रकारेण मां प्रत्यागच्छद्भ्यो बाणेभ्यो रक्षत, युद्धकुशला हि स्वकीयै-र्बाणैः परकीयानपसारयन्ति खण्डयन्ति वा। अतो मद्धस्ते ऽवस्थिता हे बाणाः सर्वाभ्यो दिग्भ्यो मां पात, न केवलं पर-कीयबाणेभ्य एव रक्षणं किन्तु विश्वाभ्यः सर्वाभ्यो नाष्ट्राभ्यो नाशहेतुभ्यः शत्रुकृतपीडाभ्यो मां पात। मन्त्रस्य पूर्वभागं व्या-चष्टे "पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पाते-त्याह। तिस्रो वै शरव्याः। प्रतीची तिरश्च्यनूची। ताभ्य एवैनं पान्ति" (ब्रा०) इति। शरव्याः हिंसिकाः परकीय-हेतयः, ताश्च पूर्वोक्तरीत्या प्रत्यगादिरूपाः। मध्यमभागं व्याचष्टे "दिग्भ्यो मा पातेत्याह। दिग्भ्य एवैनं पान्ति" (ब्रा०) इति। दूरदेशवर्तिनीषु दिक्षु स्थित्वा सन्धिविग्रहका-रिमनुष्यमुखेन वैरिणो भीषयन्ति, ताभ्यो दूरदेशवर्तिनीभ्यो दिग्भ्य एनं यजमानं हस्तस्था बाणाः पान्त्येव। तृतीयभागं

व्याचष्टे "विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह। अपरिमितादेवैनं पान्ति" (ब्रा०) इति। अपरिमितात् बहुविधात् ग्रामापहारादिरूपात् बाधात्। कल्पः। हिरण्यवर्णावित्युद्यतावभिमन्त्रयत इति। वेद्धमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ। पाठस्तु "हिरण्यवर्णावुषसां विरोकेऽयस्थूणावुदितौ सूर्यस्यारोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिञ्च" इति। हे वरुण शत्रुनिवारक वामहस्त, हे मित्र शत्रुमारक दक्षिणहस्त युवां गर्तमारोहतं, वेद्धमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ रथस्योपरिभागं गर्तसदृशमारोहतं परकीयबाणेभ्यो रक्षतं, परितश्चर्मफलकादिभिराच्छादिते सति रथस्योपरिभागो गर्तसदृशो भवति। आरोहणं कदा कर्तव्यमित्युच्यते। उषसां विरोके सूर्यस्योदितौ प्रतिदिनं यान्युषांसि सूर्योदयात् पूर्वभावीनि तेषां सम्बन्धिनि विशिष्ट आलोक प्रवर्तमाने सति यः सूर्यस्योदयः तस्मिन्नुत्पन्ने सति। कीदृशौ बाहू। हिरण्यवर्णौ सुवर्णखचितकवचप्रतिमोकेन हिरण्यवद्भासमानौ, अयस्थूणौ लोहस्तम्भवत् ,अत्यन्तदृढौ। ततो रथारोहणादूर्द्धं अदितिं अखण्डितां स्वसेनां, दितिं खण्डितां परसेनाञ्च, चक्षाथां क्रमेणानुग्रहनिग्रहदृष्ट्या समीचेथां। विधत्ते "हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति। इन्द्रियं वै वीर्यं त्रिष्टुक्। इन्द्रियमेव वीर्यमुपरिष्टादात्मन्धत्ते" (ब्रा०) इति। उद्ग्रहणमुद्यतयोरभिमन्त्रणं। बोधायनपक्षे तु यथाब्राह्मणं बाहूद्ग्रहणार्थ एव मन्त्रः।

इन्द्रियं वीर्यं हस्तपादादिगतसामर्थ्यं, तत्सामर्थ्यप्रदत्वात् त्रिष्टुप्छन्दसस्तद्रूपत्वं ।

अत्र विनियोगसङ्ग्रहः ।

"देवीति वैतसे पात्रे सर्वा अपि नयेदपः ।
अनेति सादयेन्मध्ये होतृब्रह्माख्यधिष्ण्ययोः ॥
अग्निभृष्टेति तास्वन्तः शतस्वर्णं विनिक्षिपेत् ।
स्वर्णेनोत्पवनं शुक्राः पात्रेषु व्यानयेत्तथ ॥
क्षत्रेति धारयेत् स्वामी तार्प्यंचोष्णीषद्वयं क्रमात् ।
स्वामिनं वाचयेदाविस्तत्र मन्त्रान् विनिर्गतौ ॥
एष वः स्वामिनं दद्यात् सोमोऽस्मा ब्रह्मणो जपः ।
इन्द्र दद्यात् स्वामिनोऽन्यो धनुः शत्रिति बाणकान् ॥
पातैघूंमन्त्रयेत् स्वामी हिर बाहू तयोद्यतौ ।
अनुवाके द्वादशेऽस्मिन् मन्त्रा विंशतिरीरिताः"॥ इति ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

---

समिधमातिष्ठ गायत्री त्वा छन्दसामवतु *त्रिवृत्स्तोमो रथन्तरꣳ सामाग्निर्देवता ब्रह्म द्रविणमुग्रामातिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशस्तोमो बृह-

---

* त्रिवृत्स्तोम इति का० । त्रिऽवृत् । स्तोमः । इति पदपाठः ।

त्सामैन्द्रो देवता क्षत्रं द्रविणं विराजमातिष्ठ जगती त्वा छन्दसामवतु सप्तदशस्तोमो वैरूपꣳ साम मरुतो देवता विट् द्रविणमुदीचीमातिष्ठानुष्टुप् त्वा ॥ ॥ १ ॥

छन्दसामवत्वेकविꣳशस्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणमूर्द्ध्वामातिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणमीदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्च ॥ २ ॥

अत्यꣳहाः। अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाꣳशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥ ३ ॥

अनुष्टुप् त्वर्तपार्श्वं सरीसृपेभ्यः स्वाहा ॥ १३ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः ॥ * ॥

द्वादशेऽभिषेकार्थजलसंस्कारादिमन्त्रा उक्ताः। त्रयोदशे दिग्व्यास्थापनमन्त्रा उच्यन्ते। कल्पः। अथैनं पञ्चभिर्दिशो व्यास्थापयति समिधमातिष्ठेति मनसा चानुप्रक्रामतीति। व्यास्थापयति विविधदिगभिमुखत्वेन विजयाय प्रस्थापयतीत्यर्थः। तत्र प्रथममन्त्रपाठस्तु "समिधमातिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथन्तरꣳ सामाग्निर्देवता ब्रह्म द्रविणं" इति। समिध्यतेऽस्यामादित्य इति समित् प्राची दिक् तां दिशमातिष्ठ आक्रम्य तिष्ठ, तथा स्थितं त्वां छन्दसां मध्ये गायत्री रक्षतु, स्तोमानां मध्ये त्रिवृत्स्तोमो रक्षतु, साम्नां मध्ये रथन्तरं साम रक्षतु, देवानां मध्येऽग्निर्देवो रक्षतु, ब्रह्म ब्राह्मणस्त्वदीयं द्रविणं धनं रक्षतु। त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे समाम्नातं 'तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः' इति। अयमर्थः। उपास्मै गायतेत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति, तेषु तिसृभ्य ऋग्भ्यः हिङ्करोति गायेत्। काभिस्तिसृभिः। प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत्, तया सति तिसृभिः

गीतं भवति सोऽयं प्रथमः पर्यायः। द्वितीये सूक्तत्रयगतया मध्यमया गायेत्। तृतीये पर्याये सूक्तत्रयगतयोत्तमया गायेत्। अनेन प्रकारेण त्रिवृत्स्तोमसम्बन्धिनी विशिष्टा स्तुतिः सम्पद्यते, सेयं स्तुतिरुद्यतीनाम्नाभिधीयत इति। अभि त्वा शूर नोनुमेत्यस्यामृच्युत्पन्नं साम रथन्तरं। द्वितीयमन्त्रपाठस्तु "उग्रामातिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशस्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं" इति। पूर्वन्यायेन योजनीयं। पापिनां शिक्षकेण यमेनाधिष्ठितत्वात् दक्षिणा दिगुग्रा। पञ्चदशस्तोम एवमाम्नातः 'पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः' इति। पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः, अन्ये तु स्तोमाः एकैकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्रायं क्रमः। प्रथमपर्याय आवृत्तिः पञ्चभिर्ऋग्भिर्गायेत्। तद्यथा प्रथमामृचं त्रिर्गायेत्, इतरे द्वे सकृत्सकृद्गायेत्। द्वितीयपर्याये मध्यमां त्रिर्गायेत्। तृतीयपर्याय उत्तमां त्रिर्गायेत्, सेयं पञ्चदशस्तोमस्य सम्बन्धिनी विष्टुतिरिति। तस्याः पञ्चपञ्चिनीति नाम। त्वामिद्धि हवामह इत्येतस्यामृच्युत्पन्नं साम बृहत्। तृतीयमन्त्रपाठस्तु "विराजमातिष्ठ जगती त्वा छन्दसामवतु सप्तदशस्तोमो वैरूपꣳ साम मरुतो देवता विट् द्रविणं" इति। जलाधिपेन वरुणेन पालिता सती सम्यक् फलितैः सस्यैर्विशेषेण राजत

इति विराट् प्रतीची दिक्। सप्तदशस्तोम एवमाम्नातः 'पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिरिति दशसप्ता सप्तदशस्य विष्टुतिः' इति। प्रथमपर्याये प्रथमामृचं त्रिर्गायेत्। द्वितीयपर्याये मध्यमां त्रिर्गायेत्। तृतीयपर्याये मध्यमामुत्तमाञ्च त्रिर्गायेत्, सेयं सप्तदशस्तोमसम्बन्धिनी विष्टुतिर्दशसप्तेत्यभिधीयते। यद्याव इन्द्रेत्यस्यामृच्युत्पन्नं साम वैरूपं। चतुर्थमन्त्रपाठस्तु "उदीचीमातिष्ठानुष्टुप् त्वा छन्दसामवत्वेकविंशस्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणं" इति। एकविंशस्तोम एवमाम्नातः 'सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिः' इति। प्रथमपर्याये उत्तमां सकृद्गायेत्, द्वितीयपर्याये प्रथमां, तृतीयपर्याये मध्यमां सकृद्गायेत्, सेयमेकविंशस्तोमसम्बन्धिनी विष्टुतिरिति सप्तसप्तिनीत्यभिधीयत इत्यर्थः। पिबा सोममिन्द्र मन्दतु त्वेत्यस्यामृच्युत्पन्नं साम वैराजं। पञ्चममन्त्रपाठस्तु "ऊर्द्ध्वामातिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणं" इति। त्रिणवस्तोम एवमाम्नातः 'नवभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिङ्करोति स

एकया स तिसृभिः स पञ्चभिः नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिः वज्रो वै त्रिणव' इति। प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृद्गायेत्। द्वितीयपर्याये प्रथमां सकृद्गायेत्, मध्यमां त्रिर्गायेत्, उत्तमां पञ्चकृत्वो गायेत्। तृतीयपर्याये प्रथमां पञ्चकृत्वो गायेत्, मध्यमां सकृद्गायेत्, उत्तमां त्रिर्गायेत्, सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् त्रिणवनामको वज्रसमानः। त्रयस्त्रिंशस्तोम एवमाम्नातः 'एकादशभ्यो हिङ्करोति स तिसृभिः स सप्तभिः स एकया एकादशभ्यो हिङ्करोति स एकया स तिसृभिः स सप्तभिः एकादशभ्यो हिङ्करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिꣳशः' इति। प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां सप्तकृत्वः, उत्तमां सकृत्। द्वितीयपर्याये प्रथमां सकृत्, द्वितीयां त्रिस्तृतीयां सप्तकृत्वः। तृतीयपर्याये प्रथमां सप्तकृत्वः, द्वितीयां सकृत्, तृतीयां त्रिरिति। सोऽयं त्रयस्त्रिंशः स्तोमानामन्तः। यत्तु वाजपेय उज्जित्यनुवाके त्रयोदशस्तोमश्चतुर्दशस्तोम इत्यादिकमाम्नातं तत्सर्वमुन्नयस्तोमाभिप्रायेणेति द्रष्टव्यं। उन्नयनप्रकारस्तु सामसूत्रे द्रष्टव्यः। प्रो ष्वस्मै पुरोरथमित्यस्यामृच्युत्पन्नं साम शाक्करं, रेवतीर्नः सधमाद इत्यस्यामृच्युत्पन्नं साम रैवतं। त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्याः द्रव्यरक्षका उक्ताः। चतुर्थे शारीरबलस्य तद्रक्षकत्वं। पञ्चमे वर्षसः प्रख्यातशूरनामकत्वस्य तेजसो धनरक्षकत्वं। विधत्ते "दिशो व्यास्थापयति। दिशाम-

भिजित्यै" (ब्रा०१का०७प्र०७अ०) इति। यजमानं दिक्षु प्रस्थापितवतोऽध्वर्योर्मानसमनुक्रमणं विधातुं प्रस्तौति "यदनुप्रक्रामेत्। अभि दिशो जयेत्। उत्तु माद्येत्" (ब्रा०) इति। यद्यध्वर्युर्यजमानमनु पादेन प्रक्रामेत् दिशामभिजयो भवेत् किन्तु उन्माद्येत् बुद्धिभ्रमं प्राप्नुयात्। विधत्ते "मनसानुप्रक्रामति। अभि दिशो जयति। नोन्माद्यति" (ब्रा०) इति। प्रक्रमणस्य कृतत्वात् दिग्विजयः, पादेन तदकरणात् उन्मादाभावः। समिदादीनि दिशां नामानि प्रशंसति "समिधमातिष्ठेत्याह। तेज एवावरुन्धे। उग्रामातिष्ठेत्याह। इन्द्रियमेवावरुन्धे। विराजमातिष्ठेत्याह। अन्नाद्यमेवावरुन्धे। उदीचीमातिष्ठेत्याह। पशूनेवावरुन्धे। ऊर्द्ध्वामातिष्ठेत्याह। सुवर्गमेव लोकमभिजयति" (ब्रा०) इति। समिच्छब्दस्य दीप्तिप्रतिपादकतया तेजःप्राप्तिः। उग्रशब्द इन्द्रियबलोपेतत्वमाचष्ट इतीन्द्रियप्राप्तिः। अन्नं वै विराडिति श्रुत्यनुसारेणान्नप्राप्तिः। यर्हि पशुमाप्रीतमुदञ्चं नयन्तीति पशोरुत्तरदिक्सम्बन्धश्रवणात्पशुप्राप्तिः। स्वर्गलोकस्योर्द्ध्वभावित्वादभिजयः। विहितं मानसमनुक्रमणं प्रशंसति "अनूज्जिहीते। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०) इति। कल्पः। मारुतमेकविंशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति ईदृङ् चान्यादृङ् चेत्येताभ्यां मध्येऽरण्येऽनुवाक्येनेति। पाठस्तु "ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः। शुक्रज्योतिश्च

चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चात्यꣳ-
हाः” इति। ईदृङ्ङित्यादीनि मरुद्विशेषाणां नामधेयानि
तद्रूपेण भावितत्वात्कपालानामपि तन्नाम। हे प्रथमकपाल
त्वमीदृङ् चासि एतन्नामकमेवासि। एवमन्यत्रापि योज्यं।
विधत्ते “मारुत एष भवति। अन्नं वै मरुतः। अन्नमेवावरुन्धे”
(ब्रा०) इति। एषः पुरोडाश इत्यर्थः। तस्मिन् गुणं विधत्ते
“एकविꣳशतिकपालो भवति प्रतिष्ठित्यै” (ब्रा०) इति। एक-
विंशस्तोमानां प्रतिष्ठेत्युक्तत्वात् प्रतिष्ठाहेतुत्वं। कपालोप-
धानमन्त्राणां शेषं पूरयितुं विधत्ते “योऽरण्येऽनुवाक्यो गणः।
तं मध्यत उपदधाति। ग्राम्यैरेव पशुभिरारण्यान् पशून्
परिगृह्णाति। तस्माद्ग्राम्यैः पशुभिरारण्याः पशवः परिगृही-
ताः” (ब्रा०) इति। अत्राम्नातः ईदृङ् चेत्यादिः सप्तसङ्ख्या-
युक्त एको गणः, शुक्रज्योतिश्चेत्यादिः सप्तसङ्ख्यायुक्तोऽपरो
गणः। तयोर्गणयोर्मध्ये गणान्तरं प्रक्षेपणीयं। अरण्ये गत्वा-
ध्येतव्यो योऽनुवाकः तस्मिन्ननुवाके स गण आम्नातः। तथा हि
‘धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च निलिम्पश्च विलिम्पश्च
विक्षिपः’ इति। एतस्य गणस्य मध्यत उपधाने सत्युभयतोऽव-
स्थितैर्ग्राम्यैः पशुभिः परितोऽवबध्यारण्यान् पशून् गृह्णाति।
यस्मादत्रारण्यगणो मध्ये प्रक्षिप्तः तस्माल्लोकेऽप्यरण्यवासिनो
हरिणादय आनीयमानाः पलायनं वारयितुं ग्रामे परि-
चयवद्भिर्हरिणादिभिरुभयत एकपाशेन बध्वा परिगृहीता
भवन्ति। कल्पः। अग्नये स्वाहेति षट् पार्थानि पुरस्तादभिषेकस्य

जुहोतीति। इन्द्राय स्वाहेति षट् पार्थान्युपरिष्टादभिषेकस्य जुहोतीति च। पृथिव्यै स्वाहेति षड्भूतानामवेष्टीरिति च। अद्भ्यः स्वाहेति षड्भूतानामवेष्टीरिति च। एतस्मिन्नवेष्टिविनियोगेऽप्यभिषेकात् पूर्वं षट्कमेकं तत ऊर्द्धमपरं षट्कमिति द्रष्टव्यं। पाठस्तु "अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहांऽशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा" इति। अत्र चतुर्थ्यन्तोक्ताः सर्वे देवताविशेषा द्रष्टव्याः। तत्र पार्थानि विधातुं प्रस्तौति "पृथिर्वैन्यः। अभ्यषिच्यत। स राष्ट्रं नाभवत्। स एतानि पार्थान्यपश्यत्। तान्यजुहोत्। तैर्वै स राष्ट्रमभवत्" (ब्रा०) इति। वेनस्य पुत्रः पृथिनामा कश्चिद्राजा राजसूये पार्थहोमं विनैवाभ्यषिच्यत ततः स राष्ट्रं न प्राप्नोत्। अतः राष्ट्रप्राप्तये पार्थसञ्ज्ञकानि अग्नये स्वाहेत्यादीनि मन्त्रवाक्यानि अपश्यत् तैर्हुत्वा राष्ट्रं प्राप्नोत्। विधत्ते "यत् पार्थानि जुहोति। राष्ट्रमेव भवति" (ब्रा०) इति। भवत्येव प्राप्नोत्येव। षष्ठसप्तममन्त्रौ प्रशंसति "बार्हस्पत्यं पूर्वेषामुत्तमं भवति। ऐन्द्रमुत्तरेषां प्रथमं। ब्रह्म चैवास्मै क्षत्रञ्च समीची दधाति। अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति" (ब्रा०) इति। बृहस्पतये

स्वाहेत्येतन्मन्त्रवाक्यं पूर्वेषां षण्णां मन्त्राणां चरमं। इन्द्राय स्वाहेत्येतद्वाक्यमुत्तरेषां षण्णां प्रथमं। तथा सति बृहस्पतेरिन्द्रस्य च ब्राह्मणक्षत्रियाभिमानिदेवत्वादस्मै यजमानाय तज्जातिद्वयं समीची दधाति परस्परस्नेहयुक्तं करोतीत्यर्थः। किञ्च तयोर्मन्त्रयोः पूर्वोत्तरभावेन ब्राह्मणे क्षत्रियं प्रतिष्ठापयति ब्राह्मणानुकूलं करोतीत्यर्थः। विधत्ते "षट् पुरस्तादभिषेकस्य जुहोति। षडुपरिष्टात्। द्वादश सम्पद्यन्ते। द्वादश मासाः संवत्सरः। संवत्सरः खलु वै देवानां पूः। देवानामेव पुरं मध्यतो व्यवसर्पति। तस्य न कुतश्चनोपाव्याधो भवति" (ब्रा०) इति। वसन्ते देवैः सोमस्य पीयमानत्वात् भोगस्थानत्वेन संवत्सरो देवानां पुरमिव भवति, यथा पुरे पण्यवीथी व्यवस्थिताभ्यामुभयतो वाटिकाभ्यां युक्ता भवति तस्यां गच्छन् पुरुषः चोरैरविद्धो भवति तद्वत् पार्श्वयोः षट्कयोर्मध्ये अभिषेकाय यजमानो देवपुरमध्ये प्रविशति तस्य कुतोऽप्यन्यस्माद् बाधो न भवति। विधत्ते "भूतानामवेष्टीर्जुहोति। अत्रात्र वै मृत्युर्जायते। यत्र यत्रैव मृत्युर्जायते। तत एवैनमवयजते। तस्माद्राजसूयेनेजानः सर्वमायुरेति। सर्वे ह्यस्य मृत्यवोऽवेष्टाः। तस्माद्राजसूयेनेजानो नाभिचरितवै। प्रत्यगेनमभिचारः स्तृणुते" (ब्रा०) इति। भूतानां यक्षराक्षसपिशाचादीनां मृत्युहेतूनामवयजनस्य विनाशस्य हेतव आहुतयः, पृथिव्यै स्वाहेत्यादिद्वादशमन्त्रसाध्या आहुतयः भूतानामवेष्टयः ताः जुहुयात्, अत्रात्र सन्ध्याकाले मध्यरात्रे निर्जनदेशे उच्छिष्ट-

देशे बाल्याद्यवस्थायाञ्च भूतोपद्रवरूपो मृत्युरुत्पद्यते, अनेन तु होमेन तत एव देशात् कालात् अवस्थाविशेषाच्चैनं मृत्यु मवयजते नाशयति। यस्मात् मृत्युर्नाशितः तस्माद्राजसूयेनेष्टवतो यजमानस्यापमृत्युपरिहारेण कृत्स्नायुःप्राप्तिर्भवति। यस्माद्वैरिभिरापादितो भूताद्युपद्रवो राजसूययाजिनं न प्राप्नोति, तस्मादयं नाभिचरितवै नाभिचरणीयः, स च परैः कृतोऽभिचारः प्रत्यक् कर्तुरेवाभिमुखो भूत्वा तमेनमभिचारकर्तारं स्तृणुते हिनस्ति।

अत्र विनियोगसङ्ग्रहः।

"दिशो व्यास्थापयेद्रूपमध्वर्युः समि पञ्चभिः।
मारुतस्य कपालानि दध्यादीदृङ् चतुर्दश॥
अग्नाभिषेकतः पूर्वं षट् पार्थान्युत्तराणि षट्।
पृथि षड्द्वयं तन्तं स्रुभूतानामवेष्टयः॥
त्रयोदशेऽनुवाकेऽस्मिंस्त्रिचत्वारिंशदीरिताः"। इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः॥ * ॥

---

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाह्यवेष्टा दन्दशूका निर-

स्तं नमुचेः शिरः। सोमो राजा वरुणो देवा धर्मसुवश्च ये। ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्ताꣳ सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेः ॥ १ ॥

तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पाहि समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनुसञ्चरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयानाः। रुद्र यत्ते क्रयी* परं नाम तस्मै हुतमसि यमेष्टमसि। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणां॥ २ ॥

अग्नेस्त्वैकादश च ॥ १४ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे ऽष्टमप्रपाठके चतुर्दशोऽनुवाकः ॥ * ॥

त्रयोदशेऽनुवाके दिग्व्यास्थापनमुक्तं। चतुर्दशेऽभिषेक उच्यते। कल्पः। अग्रेण प्रशास्तुर्धिष्ण्यं खादिरीमौदुम्बरीं

* क्रयि। इति पदपाठः।

वा आसन्दीं प्रतिष्ठाप्य सोमस्य त्विषिरसीति तस्यां शार्दूल-चर्म प्राचीनग्रीवमुत्तरलोमास्तीर्येति। पाठस्तु "सोमस्य त्वि-षिरसि तवेव मे त्विषिर्भूयात्" इति। हे शार्दूलचर्म त्वं सो-मस्य दीप्तिरसि अतस्तवेव मे दीप्तिर्भूयात्। विधत्ते "सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति। यैव सोमे त्विषिः। या शार्दूले। तामेवावरुन्धे" (ब्रा०१का०। ७प्र०।८अ०) इति। शार्दूलचर्मगतां दीप्तिं दृष्ट्वा सोमदीप्ति-त्वेन भावनात् उभयावरोधः। कल्पः। अमृतमसीति तस्मिन् शतमानं हिरण्यं निधायेति। तस्मिन् शार्दूलचर्मणि। पाठस्तु "अमृतमसि मृत्योर्मा पाहि" इति। हिरण्यस्यामृतत्वमस-कृत्पूर्वमुक्तं। हिरण्यस्य स्थापनं तत्प्रमाणञ्च क्रमेण विधत्ते "मृत्योर्वा एष वर्णः। यच्छार्दूलः। अमृतꣳ हिरण्यं। अमृ-तमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति। अमृतमेव मृ-त्योरन्तर्धत्ते। शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति। वर्णो देहः। कल्पः "दिद्योन्मा पाहि" इति सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधि निधत्त इति। हे दिद्योत् द्योतनात्मक शिरस्यभिषेकजलसेचनार्थं स्थापित शतच्छिद्रयुक्त सुवर्णपात्र त्वं मां रक्ष। विधत्ते "दिद्योन्मा पाहीत्युपरिष्टा-दधि निदधाति। उभयत एवास्मै शर्म दधाति" (ब्रा०) इति। उभयतः अधस्तादुपरिष्टाच्चामृतरूपस्य सुवर्णस्य स्थितत्वात् सुखं भवति। कल्पः "अवेष्टा दन्दशूकाः" इति दक्षिणत आ-

सीनं क्लीबं सीसेन विध्यतीति। दन्दशूकाः सर्पाः, अवेष्टा विनाशिताः। विधत्ते “अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति। दन्दशूकानेवावयजते। तस्मात् क्लीबं दन्दशूका दꣳशुकाः” (ब्रा०) इति। यस्मात् सर्पत्वेन भावितं सीसं क्लीबे पातितं तस्माल्लोकेऽपि क्लीबं पुंस्त्वरहितं पलायनाद्यक्षमं बहुवल्मीकोपेतेऽरण्ये गच्छन्तं सर्पा दन्दशूका दंशुका भवन्ति दंशशीला इत्यर्थः। कल्पः। सव्येन पदा लोहितायसं निरस्यति “निरस्तं नमुचेः शिरः” इति। लोहितायसं ताम्रं पूर्वं फेनेन पातितं यन्नमुचेः शिरः तदिदं ताम्ररूपं सन्निरस्तं परित्यक्तं, एतच्च ताम्रं नापि तस्योपरि प्रक्षेप्तव्यं। अत एवापस्तम्ब आह ‘तामारोहन् यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं षण्डकाय प्रत्यस्यति, निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापीय तौ बहिर्वेदि निरस्यते’ इति। विधत्ते “निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति। पाप्मानमेव नमुचिं निरवदयते” इति। कल्पः। ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति सोमो राजेत्यभिमन्त्र्य सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति पालाशेन पुरस्तादध्वर्युरेवमितरश्चौदुम्बरेण दक्षिणतो ब्रह्मा राजन्यो वाश्वत्थेन पश्चाद्वैश्यो नैयग्रोधेनोत्तरतो *जन्य इति। जन्यः सखा। अभिमन्त्रणमन्त्रपाठस्तु “सोमो राजा वरुणो देवा धर्मसुवश्च ये। ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां

* अन्य इति तै०। तथा च अन्यः सखा इति।

ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्तां" इति। यः सोमो राजा वरुणो यो राजा ये चान्ये देवा गृहपत्यग्न्यादयो धर्मसुवो धर्ममनुजानन्तः सन्ति ते सर्वे तव वाचमनुजानन्तु। एवं प्राणादिषु योज्यं। अभिषेकमन्त्रपाठस्तु "सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा" इति। हे यजमान त्वां सोमस्य द्युम्नेन दीप्त्याभिषिञ्चामि। एवमग्नेस्तेजसेत्यादौ योज्यं। अभिमन्त्रणमन्त्रस्य प्रयोजनं दर्शयति "प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः। सोमो राजा वरुणः। देवा धर्मसुवश्च ये। ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तामित्याह। प्राणानेवात्मनः पूर्वानभिषिञ्चति" (ब्रा०) इति। आत्मनो यजमानस्य प्राणा वागादयो ये सन्ति ते यजमानाभिषेकात् पूर्वमभिषिच्या इत्याहुरभिज्ञाः। युक्तो हि तेषाममूर्तानां मन्त्रपाठमात्रेणाभिषेकः, मन्त्रे हि सोमादयो देवा वागादीनभिषिक्ताननुजानन्त्वित्येवावबुध्यते तस्मात्तत्पाठ एवाभिषेकः, स च पाठः प्रथमतः कृत इत्यसौ पूर्वाभिषेकः। अभिषेकमन्त्रे प्रथमभागस्य शाखान्तरपाठं निराकृत्याचत्यं पाठं विधत्ते "यद्ब्रूयात्। अग्नेस्त्वा तेजसाभिषिञ्चामीति। तेजस्व्येव स्यात्। दुश्चर्मा तु भवेत्। सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह। सौम्यो वै देवतया पुरुषः। स्वयैवैनं देवतयाभिषिञ्चति" (ब्रा०) इति। सोमो वै रेतोधा इत्यादौ रेतोधारिणः पुरुषस्य सोमत्वनिरूपणात पुरुषः सोमदेवत्यः, सोमदेवतयाभिषेके सति

स्रावण्याभावात् दुश्चर्मत्वं न भवेत्। उक्तभागानां पाठं तत्त-त्प्राप्त्या प्रशंसति "अग्नेस्तेजसेत्याह। तेज एवास्मिन्दधाति। सूर्यस्य वर्चसेत्याह। वर्च एवास्मिन्दधाति। इन्द्रस्येन्द्रियेणे-त्याह। इन्द्रियमेवास्मिन्दधाति। मित्रावरुणयोर्वीर्येणेत्याह। वीर्यमेवास्मिन्दधाति। मरुतामोजसेत्याह। ओज एवास्मि-न्दधाति" (ब्रा०) इति। कल्पः "क्षत्राणां क्षत्रपतिरसि" इत्यभिषिच्यमानमभिमन्त्रयत इति। हे यजमान त्वं क्षत्रि-याणां पतिरसि, नात्र केषाञ्चित्पतिः किन्तु सर्वेषां क्षत्रिया-णामनेनैवाभिप्रायेण क्षत्रशब्दस्य द्विरुक्तिः। मन्त्रसामर्थ्याद-शेषक्षत्रियपतित्वसिद्धिं दर्शयति "क्षत्राणां क्षत्रपतिरसीत्याह। क्षत्राणामेवैनं क्षत्रपतिं करोति" (ब्रा०) इति। कल्पः। कृष्ण-विषाणया वासांसि विवृत एकं द्वे सर्वाणि वा एतान्युत्कर उदस्यति "अति दिवस्पाहि" इति। यान्यभिषेककाले लेप-लिप्तानि वस्त्राणि तेषामेष त्यागः। हे यजमान दिवो द्यो-तमानानन्यान् पार्थिवानतिक्रम्य त्वमेव सर्वां भूमिं पाहि। द्युशब्दस्येतरपुरुषपरत्वं दर्शयति "अति दिवस्पाहीत्याह। अ-त्यन्यान् पाहीति वावैतदाह" (ब्रा०) इति। कल्पः। समाव-वृत्रन्निति येऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति तान् पात्रेरु-न्मार्ष्टीति। पाठस्तु "समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु-सञ्चरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इया-नाः" इति। या आपो लेपरूपेण स्रवन्ति अधरागधो गताः, उदीचीरूर्ध्वं गताः, समाववृत्रन् सम्यगावृत्य स्थिताः, न च्योयत

इत्यहिः उत्तमाङ्गं, बुभस्य पादस्याग्रभागो बुध्नियः। शिरःप्रभृतिपादाग्रपर्यन्तमनुक्रमेण सञ्चरन्त्यस्ता आपः पर्वतस्य वृषभस्य पृष्ठे पर्वतसदृशस्य वर्षणक्षमस्य मेघस्योपरि नद्यां नाव इव चरन्ति, यद्वा नावो नौयोग्या बहुलाश्चरन्ति। कीदृश्यः स्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्तीति स्वसिचः, इयानाः आगच्छन्त्यः बाहुल्येन सर्वत्र प्रभवन्त्य इत्यर्थः। वस्त्रनिरसनमन्त्रः पूर्वमाम्नातोऽपि सामर्थ्यात् पश्चात् प्रयोक्तव्यः। लेपोदकानामूर्द्धाधोभागयोः सम्यगावृत्य स्थित्या राष्ट्रध्रौव्यसम्पत्तिं दर्शयति "समावद्वत्रन्नधरागुदोचोरित्याह। राष्ट्रमेवास्मिन् ध्रुवमकः" (ब्रा०) इति। कल्पः। आग्नीध्रे प्ररेकं जुहोति "रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहा" इति। अत्र स्वाहाकारोऽध्याहृतः। हे रुद्र यत्तव परमुत्कृष्टं नाम शर्वादिकं नमः शिवाय पशुपतय इत्यादिश्रुतिप्रसिद्धं, क्रयी जयपरान् पुरुषान् फलप्रदानेन क्रीणाति वशीकरोति क्रयि, तस्मै नाम्ने हुतमसि अभिषेकशेषभूतं पात्रस्थं जलं हुतमस्तु, तच्च यमस्येष्टमस्तु। विधत्ते "उत्क्षेपणेन जुहोति। उत्क्षेपणभागो वै रुद्रः। भागधेयेनैव रुद्रं निरवदयते" (ब्रा०) इति। यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयतीति श्रुतत्वाद्रुद्रस्योत्क्षेपणभागत्वं। तत्रैव कश्चिद्विशेषं विधत्ते "उदङ् परेत्याग्नीध्रे जुहोति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते" (ब्रा०) इति। नाम्न आहुतिप्रदानेन प्रयोजनं दर्शयति "रुद्र

यत्ते क्रयी परं नामेत्याह। यद्वा अस्य क्रयी परं नाम। तेन वा एष हिनस्ति। यꣳ हिनस्ति। तेनैवैनꣳ सह शमयति” (ब्रा०) इति। एष रुद्रस्तेनैव शर्वादिनाम्ना स्वक्रोधविषयं पुरुषं हिनस्ति, तथा सति यो वध्योऽस्ति तमेनं पुरुषं तेनैव घातकेन नाम्ना सह शमयति, आहुतिदानेन घातकं नाम शाम्यति, तदानीमेव वध्योऽपि शाम्यति वध्यत्वं निवर्तत इत्यर्थः। यमेष्टमित्यस्य पदस्य तात्पर्यं दर्शयति “तस्मै हुतमसि यमेष्टमसीत्याह। यमादेवास्य मृत्युमवयजते” (ब्रा०) इति। यमस्येष्टिसिद्धौ तदनुग्रहादेव यजमानस्यापमृत्युं विनाशयति। कल्पः। अथैतेषामभिषेकाणां मुख्यपात्रे संस्रावान्समवनीय प्रतिहितस्य गृहामेत्याग्यारभ्यो: प्रतिहिते च महिष्याश्च जुहोति प्रजापते न त्वदेतान्यन्य इति। प्रतिहितोऽस्यन्तप्रियपुत्रः तस्य महिषीश्च स्पर्शयित्वा जुहुयात्। पाठस्तु “प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणां” इति। हे प्रजापते त्वदन्यः कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं समर्थो नाभूत् परिभवः सृष्टेरप्युपलक्षणं सृष्टिसंहारयोरशक्त इत्यर्थः। अतस्ते तव वयं यत्कामा जुहुमस्तत्फलमस्माकमस्तु वयं धनानां पतयः स्याम। विधत्ते “प्रजापते न त्वदेतान्यन्य इति तस्य गृहे जुहुयात्। यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति। राष्ट्रमेवास्यै प्रजा भवति” (ब्रा०) इति। अस्यै प्रजा राष्ट्रं स्यात्, प्रियाया भार्यायाः

पुत्रो राष्ट्रं पालयितुं समर्थो भूयादित्यर्थः। विधत्ते "पर्ण-मयेनाध्वर्युरभिषिञ्चति। ब्रह्मवर्चसमेवास्मिन् त्विषिं दधाति। औदुम्बरेण राजन्यः। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। आश्वत्थेन वैश्यः। विशमेवास्मिन् पुष्टिं दधाति। नैयग्रोधेन जन्यः। मित्राण्येवास्मै कल्पयति। अथो प्रतिष्ठित्यै" (ब्रा०) इति। ब्रह्मवर्चसमेव त्विषिमध्ययनादिकृतमुत्कर्षं, ऊर्जमेवान्नाद्यं बल-प्रदमन्नं प्रियस्वाद्यं, विशमेव पुष्टिं करप्रदाढ्यप्रजासम्पत्तिं।

अत्र विनियोगसङ्ग्रहः।

"सोमामन्त्र्यां व्याघ्रचर्मास्तीर्याऽस्मत्स्वर्णकं क्षिपेत्।
दिद्योद्राजा स्वर्णपात्रं दध्यान्मूर्ध्नि शतक्षरं॥
अवे रोहन्निधामन्द्रीं क्लीबं सीसेन विध्यति।
निरस्तं केशवापाय निरस्तोलोहितायसं॥
सोमोऽध्वर्युर्मन्त्रयेत सोमस्येत्यभिषिञ्चति।
क्षत्राभिषिक्तं समन्य त्यजेद्वत्समतीत्यतः॥
समा लेपान्मार्जनं स्याद्रुद्र शेषं जुहोति हि।
प्रजापते काम्यहोमो मन्त्रा द्वादश वर्णिताः" इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः॥ * ॥

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यान्मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि मरुतां प्रसवे जेषमाप्तं मनः समहमिन्द्रियेण वीर्येण पशूनां मन्युरसि तवेव मे मन्युर्भूयान्नमो मात्रे पृथिव्यै माहं मातरं पृथिवीꣳ हिꣳसिषं मा ॥ १ ॥

मां माता पृथिवी हिꣳसीदियदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेह्यग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

हिꣳसिषं मर्तजास्त्रीणि च ॥ १५ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः ॥ ० ॥

चतुर्दशेऽभिषेक उक्तः। पञ्चदशे रथेन विजयोऽभिधीयते। कल्पः। इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहत्येति।

पाठस्तु "इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यात्" इति। व्याख्यातो वाजपेये। विधत्ते "इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै" (ब्रा०१का०।७प्र०।८अ०) इति। कल्पः। अथ दक्षिणं योग्यं युनक्ति "मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन" इति। हे दक्षिणाश्व त्वां प्रशास्त्रोराज्ञापयित्रोर्मित्रावरुणयोः प्रशिषा प्रशासनेन यज्ञसम्बन्धिनिमित्तं रथे युनज्मि। मित्रावरुणपदाभिप्रायं दर्शयति "मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीत्याह। ब्रह्मणैवैनं देवताभ्यां युनक्ति" (ब्रा०) इति। ब्रह्मणा मन्त्रेण प्रतिपादिताभ्यां मित्रावरुणदेवताभ्यां प्रशासिता युनक्ति। रथस्याश्वत्रयोपेतत्वं विधत्ते "प्रष्टिवाहिनं युनक्ति। प्रष्टिवाही वै देवरथः। दैवरथमेवास्मै युनक्ति" (ब्रा०) इति। तादृशं रथं प्रकारान्तरेण प्रशंसति "त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। द्वौ सव्येष्ठसारथी। षट्सम्पद्यन्ते। षड्वा ऋतवः। ऋतुभिरेवैनं युनक्ति" (ब्रा०) इति। सव्येष्ठेत्यत्र दक्षिणस्थेत्यध्याहार्यं ततः पार्श्वद्वयवर्तिनौ द्वौ सारथी सम्पद्येते। कल्पः। विष्णोः क्रमोऽसीति रथं यजमानोऽत्येतीति। पाठस्तु "विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि" इति। एते त्रयो मन्त्रा वाजपेये व्याख्याताः। विधत्ते "विष्णुक्रमान् क्रमते। विष्णुरेव भूत्वेमाँल्लोकानभिजयति" (ब्रा०) इति। प्रियपुत्रस्यान्वारम्भणं विधत्ते "यः क्षत्रियः प्रतिहितः। सोऽन्वारभते। राष्ट्रमेव भवति" (ब्रा०) इति। प्राप्नोतीत्यर्थः।

प्र समाहिष इत्येतामृचं विधत्ते "त्रिष्टुभान्वारभते। इन्द्रियं वै त्रिष्टुक्। इन्द्रियमेव यजमाने दधाति" (ब्रा०) इति। सेय-मृगुपानुवाक्यकाण्डे चतुर्थप्रपाठकान्ते त्वमग्ने बृहद्वय इत्य-स्मिन्ननुवाके समाम्नातेति तत्रैव व्याख्यास्यते। कल्पः "मरुतां प्रसवे जेषं" इति प्रयातीति। मरुत्सञ्ज्ञकानां देवानामनु-ज्ञायां सत्यामहं जेष्यामि। तदनुज्ञायां जयहेतुतां दर्शयति "मरुतां प्रसवे जेषमित्याह। मरुद्भिरेव प्रसूत उज्जयति" (ब्रा०) इति। कल्पः। सधनू राजन्यः पुरस्तादुत्तरतो वावस्थितो भवति तस्मा एतानिषून्‌स्यति "आप्तं मनः" इति। मनोऽभि-मतमाप्तं प्राप्तं। अमुमेवार्थं दर्शयति "आप्तं मन इत्याह। यदेव मनसैप्सीत्। तदापत्" (ब्रा०) इति। ऐप्सीत् आप्तुमि-ष्टवान् आपत् प्राप्नोति। विधत्ते "राजन्यं जिनाति। अना-क्रान्त एवाक्रमते" (ब्रा०) इति। बाणविमोकेन राजन्ये जिते सति स्वयं शत्रुणानुपक्रान्त एव सन् शत्रुमाक्रान्तवान् भवति। कल्पः। तं जित्वा "समहमिन्द्रियेण वीर्येण" इति प्रदक्षिण-मावर्तत इति। हस्तादीन्द्रियगतेन सामर्थ्येनाहं सङ्गतोऽभूवं। मन्त्रपाठेन वीर्यसङ्गतिं दर्शयति "वि वा एष इन्द्रियेण वी-र्येणर्ध्यते। यो राजन्यं जिनाति। समहमिन्द्रियेण वीर्येणे-त्याह। इन्द्रियमेव वीर्यमात्मन्धत्ते" (ब्रा०) इति। कल्पः। पशूनां मन्युरसीति वाराही उपानहावुपमुञ्चेति। पाठस्तु "पशूनां मन्युरसि तवेव मे मन्युर्भूयात्" इति। हे वराहचर्म-निर्मिते उपानत् त्वं पशूनां मन्युरूपासि अतो यथा तव

मन्युरूपत्वं तद्वन्ममापि वैरिषु मन्युर्भूयात्। विधत्ते "पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावुपमुञ्चते। पशूनां वा एष मन्युः। यद्वराहः। तेनैव पशूनां मन्युमात्मन्धत्ते" (ब्रा०) इति। वराहस्याभिनिवेशाधिक्यं मन्युरूपत्वं। वाराहत्वं प्रशस्य उपानह उपमोकं प्रशंसति "अभि वा इयꣳ सुषुवाणं कामयते। तस्येश्वरेन्द्रियं वीर्यमादातोः। वाराही उपानहावुपमुञ्चते। अस्या एवान्तर्धत्ते। इन्द्रियस्य वीर्यस्यानात्यै" (ब्रा०) इति। इयं भूमिः सुषुवाणं अभिषिक्तमभिलक्ष्य तदीयमिन्द्रियं वीर्यमादातुं कामयते कामयित्वा च तस्येन्द्रियं वीर्यमादातुं ईश्वरा शक्ता भवति। उपानदुपमोकेन भूम्याः सकाशात् अन्तर्धानं कृतवान् भवति। तच्चान्तर्धानमनात्यै भूम्या वीर्यस्यास्वीकाराय भवति। कल्पः। नमो मात्र इत्यवरोहन् पृथिवीमभिमन्त्रयेति। पाठस्तु "नमो मात्रे पृथिव्यै माहं मातरं पृथिवीꣳ हिꣳसिषं मा मां माता पृथिवी हिꣳसीत्" इति। अन्योन्यहिंसाभावप्रार्थनं विस्पष्टं। एतदेव दर्शयति "नमो मात्रे पृथिव्या इत्याहाहिꣳसायै"(ब्रा०) इति। कल्पः। अवरुह्य मणीन् प्रतिमुञ्चते इयदसीति राजतं ऊर्गसीत्यौदुम्बरं युङ्ङसीति सौवर्णमिति। औदुम्बरं ताम्रमयं। पाठस्तु "इयदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेहि" इति। हे राजतमणे त्वमियदसि एतावत्परिमाणोऽसि, अत्र तत्परिमाणं हस्तेनाभिनीयते, परिमितत्वादेवायुःस्वरूपोऽसि तस्मादायुर्मे प्रयच्छ। हे ताम्र-

मणे ऊर्गसि बलरूपोऽसि अतो बलं मे प्रयच्छ। हे सौवर्ण-मणे युङ्ङसि धारयितुं योग्योऽसि धारिते सति च वर्चोऽसि तेजस्वी भवसि अतो मे कान्तिं प्रयच्छ। मन्त्राणां पाठादेव तदुक्तफलसिद्धिं दर्शयति "इयदस्यायुरस्यायुर्मे धेहीत्याह। आयुरेवात्मन्धत्ते। ऊर्गस्यूर्जं मे धेहीत्याह। ऊर्जमेवात्मन्धत्ते। युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्याह। वर्च एवात्मन्धत्ते" (ब्रा०) इति। विधत्ते "एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुरूर्जं वर्चो दधाति" (ब्रा०) इति। तदिदं सूत्रकारेण स्पष्टीकृतं 'उपहूतायामिडायामुन्मुच्य मणीन् ब्रह्मणे ददाति' इति। कल्पः। अग्नये गृहपतये स्वाहेति रथ-विमोचनीयान् होमान् जुहोति। पाठस्तु "अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुता-मोजसे स्वाहा" इति। स्पष्टोऽर्थः। विधत्ते "रथविमोचनीया जुहोति प्रतिष्ठित्यै" (ब्रा०) इति। पाठप्राप्तामाहुतिसङ्ख्यां प्रशंसति "चयोऽश्वा भवन्ति। रथश्चतुर्थः। तस्माच्चतुर्जुहोति" (ब्रा०) इति। कल्पः। हꣳसः शुचिषदिति सव्ये संगृहीता रथवाहने रथमत्यादधातीति। अश्वस्य प्रग्रहं सम्यक् गृह्णा-तीति संगृहीता। पाठस्तु "हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्" इति। हन्ति पृथिवीमिति हंसो रथः। शुचौ देवयजने रथवाहने च सीदतीति शुचिषत्, स्वस्योपरि यजमानं वासयतीति वसुः, तद्गुणाद्यमवद्वद्धेऽन्तरिक्षे

सीदतीत्यन्तरिक्षसत्, होता होमकर्त्ता होतृसमानः, तदेव कथमित्युच्यते, वेद्यां सीदतीति वेदिषत्, अतिथिसदृशश्च, तदपि कथमित्युच्यते, दुरोणेषु गृहेषु सीदतीति दुरोणसत्, यो यस्मारोढुं नयति तस्य तस्य गृहे सीदति, नृषु मनुष्येषूपकारं कर्तुं सीदतीति नृषत्, वरे श्रेष्ठे राजादिगृहे सीदतीति वरसत्, ऋते यज्ञे वाजपेयादौ सीदतीत्यृतसत्, स्वयं वोढुं व्योमन्याकाशे सीदतीति व्योमसत्, अप्सु योनिर्वा अश्व इति श्रुतेरब्जो जातेरश्वैरुपेतत्वादब्जाः, गोशब्दवाच्याद्वृत्राज्जायत इति गोजाः, एतच्च स्फ्यस्तृतीयꣳ रथस्तृतीयमित्याम्नातं, ऋतजाः पृष्ठिवाहिन ऋतार्थं यज्ञार्थं जातत्वात्, अद्रिभ्यः पाषाणसदृशेभ्यः दृढेभ्यः काष्ठेभ्यो जातत्वादद्रिजाः । ईदृशो रथो बृहत् प्रौढं राजसूयाख्यमेतं यज्ञं सम्पादयत्विति शेषः । विधत्ते "यदुभौ सहावतिष्ठेतां । समानं लोकमियातां । सह सङ्गृहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति" (ब्रा०) इति । अश्वप्रग्रहधारी यः सङ्गृहीता यश्च रथादवरूढो यजमानः तावुभौ सह स्वर्गरूपायां वेद्यां यद्यवतिष्ठेतां तदानीं यज्वा चेतरश्च सदृशं लोकं प्राप्नुयातां तच्चायुक्तं तस्माद्रथ एवावस्थितेन सङ्गृहीत्रा सह तं रथं रथवाहने काष्ठे स्थापयेत् तथा सति सङ्गृहीता वेदिरूपात् स्वर्गादन्तर्हितो भवति । मन्त्रं विनियुङ्क्ते "हꣳसः शुचिषदित्यादधाति । ब्रह्मणैवैनमुपावहरति । ब्रह्मणा दधाति" (ब्रा०) इति । पूर्वमिन्द्रस्य वज्रोऽसीति मन्त्रेणैवैनं रथमुपावहृतवान् तस्मादिदा-

नीमपि हꣳस इति मन्त्रेण रथमाधातुं युक्तं। मन्त्रगतच्छन्दो-विशेषं प्रशंसति "अतिच्छन्दसा दधाति। अतिच्छन्दा वै सर्वाणि छन्दाꣳसि। सर्वैभिरेवैनं छन्दोभिरादधाति। वर्ष्म वा एषा छन्दसां। यदतिच्छन्दाः। यदतिच्छन्दसा दधाति। वर्ष्मैवैनꣳ समानानां करोति" (ब्रा०) इति। हंसमन्त्रस्य छन्दोऽति-जगती सा च गायत्र्यादीन्यल्पच्छन्दांस्यतिक्रम्य वर्तत इति तस्या अतिच्छन्दस्त्वं, अत एव छन्दसां तत्रान्तर्भावात् सर्व-च्छन्दोरूपत्वं, तया सत्यनया रथ आहिते सति सर्वैश्छन्दोभि-राहितो भवति। किञ्च एषातिजगती सर्वेषां छन्दसां शरीरं अन्यैरक्षरैः कैश्चित् क्वचित् कस्यचिच्छन्दसः सम्पादयितुं शक्यत्वात्, तया सत्यनया रथाधाने यजमानः सर्वेषां समा-नानां शरीरस्थानीयो भवति।

अत्र विनियोगसङ्ग्रहः।

"इन्द्रेति रथमाहृत्य मित्रेत्येतं युनक्ति हि।
विष्णोस्त्रिभी रथं गत्वा सर्वारुह्य प्रयाति सः॥
आप्तं चत्र इषुं मुक्त्वा सं प्रदक्षिणमाव्रजेत्
पश्चित्युपानहौ धृत्वा नमो भूम्यभिमन्त्रणं॥
इयन्मणिं राजतं चोर्ध्वंभ्रात्यौदुम्बरं मणिं।
युङ् सौवर्णश्चाग्र ऊत्वा चतस्रो रथमोचनीः॥
हंसो रथं स्थापयीत मन्त्रा अष्टादशेरिताः"। इति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः॥ * ॥

मित्रोऽसि वरुणोऽसि समहं विश्वैर्देवैः क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि स्योनामासीद सुषदामासीद मा त्वा हिꣳसीन्मा मा हिꣳसीन्निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुर्ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि सवितासि सत्यसवो ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासीन्द्रोऽसि सत्यौजाः ॥ १ ॥

ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि मित्रोऽसि सुशेवो ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि वरुणोऽसि सत्यधर्मेन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य दिशोऽभ्ययꣳ राजाभूत् सुश्लोकां३ सुमङ्गलां३ सत्यराजा३न्। अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहा ॥ २॥

सत्यौजाश्चत्वारिꣳशच्च ॥ १६ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः ॥ * ॥

पञ्चदशे दिग्विजयोऽभिहितः। षोडशे विजयादूर्द्धमासन उपविश्य सर्वैः सेव्यत्वं वर्ण्यते। कल्पः "मित्रोऽसि" इति दक्षिणं बाहुं यजमान उपावहरते "वरुणोऽसि" इति सव्यमिति। पूर्वं हिरण्यवर्णावुषसामिति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ

तयोरिदानीमधस्तादुपावहरणमुच्यते। हे दक्षिणबाहो त्वं मित्रोऽसि मित्रवद्भोजनादाविष्टार्थप्रापकत्वात्। हे वामबाहो त्वं वरुणोऽसि शौचादावनिष्टनिवारकत्वात्। कल्पः "समहं विश्वैर्देवैः" इति वैश्वदेव्यामिक्षायां हस्तावुपावहरत इति। अहं सर्वैर्देवैः सङ्गच्छेयं। (मित्रशब्दस्य सूर्यवाचित्वात् तन्नाम्ना व्यवहृतस्य दक्षिणबाहोरहोरूपत्वं। वरुणशब्दस्यान्धकारवदावरकवाचित्वात् तन्नाम्ना व्यवहृतस्य रात्रिरूपत्वमिति व्याचष्टे "मित्रोऽसि वरुणोऽसीत्याह। मैत्रं वा अहः। वारुणी रात्रिः। अहोरात्राभ्यामेवैनमुपावहरति" (ब्रा०१का०७प्र०१०अ०) इति। मित्रावरुणयोरनेकदेवरूपत्वात् सर्वदेवसम्बन्धिन्यामामिक्षायां मित्रावरुणात्मत्वेन निरूपितयोर्हस्तयोरुपावहरणं युक्तमित्येतद्दर्शयति "मित्रोऽसि वरुणोऽसीत्याह। मैत्रो वै दक्षिणः। वारुणः सव्यः। वैश्वदेव्यामिक्षा। स्वमेवैनौ भागधेयमुपावहरति" (ब्रा०) इति। विश्वैर्देवैरितिपदोच्चारणेन तत्सम्बन्धिनीनां प्रजानां यजमानभोग्यत्वं सम्पद्यत इत्यभिप्रेत्य व्याचष्टे "समहं विश्वैर्देवैरित्याह। वैश्वदेव्यो वै प्रजाः। ता एवाद्याः कुरुते" (ब्रा०) इति। कल्पः। खादिरीमासन्दीं प्रतिष्ठाप्य क्षत्रस्य नाभिरसीति तस्यां क्षत्त्यधीवासमास्तीर्येति। क्षत्त्यधीवासं चर्मपटः। पाठस्तु "क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि" इति। हे क्षत्त्यधीवास क्षत्रस्योपवेशनाय त्वं नाभिवन्मध्यस्थानमसि, मातृवद्धारकत्वेन क्षत्रस्य योनिः कारणमसि। विधत्ते "क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीत्यधीवासमा-

स्तृणाति सयोनिलाय" (ब्रा०) इति। योनिरसीति चर्मपटस्य कारणत्वेन भावनया सकारणत्वं चत्रस्य सम्पद्यते। कल्पः "स्योनामासीद सुषदामासीद" इति तामासाद्य यजमानो "मा त्वा हिंसीन्मा मा हिंसीत्" इत्युपविशतीति। हे मदीयशरीर स्योनां सुखकरीमेनामासन्दीं प्रत्यासीद समीपस्थं भव, सुषदां सुखेनोपवेष्टुं योग्यामासीद। इयमासन्दी त्वां शरीरं मा हिंसीत् मामपि शरीरस्वामिनं मा हिंसीत्। मन्त्रद्वयार्थस्य विस्पष्टतां दर्शयति "स्योनामासीद सुषदामासीदेत्याह। यथायजुरेवैतत्। मा त्वा हिंसीन्मा मा हिंसीदित्याहाहिंसायै" (ब्रा०) इति। कल्पः। निषसाद धृतव्रत इत्यासीनमनुमन्त्रयत इति। पाठस्तु "निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः" इति। अयं यजमानो धृतव्रतः स्वीकृतयज्ञः वरुणोऽनिष्टनिवारको भूत्वा निषसाद अस्यामासन्द्यामुपविवेश पस्त्यासु बह्वषु वैरिगृहेषु आगत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसङ्कल्पो भवतु। साम्राज्यमुद्दिश्य सम्यक् सङ्कल्पसिद्धिमेव दर्शयति "निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरित्याह। साम्राज्यमेवैनं सुक्रतुं करोति" (ब्रा०) इति। कल्पः। तमृत्विजो रत्निनश्च सर्वतः पर्युपविशन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता, उपविष्टेषु ब्रह्माऽ३न् ॐमित्यध्वर्युं राजा मन्त्रयते त्वं राजन् ब्रह्मासीतीतरः प्रत्याहैवं ब्रह्माणं होतारमुद्गातारं चोत्तरोत्तरेणेतरे प्रत्याहुरिति। एतेषाम-

ष्टानां मन्त्राणां पाठस्तु "ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि सवितासि सत्यसवो ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासीन्द्रोऽसि सत्यौजाः ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि मित्रोऽसि सुशेवो ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि वरुणोऽसि सत्यधर्मा" इति। दूरादाह्वातुं प्लुतिः, हे राजन् त्वमेव ब्रह्मासि ब्राह्मणोऽसि न त्वहं, कुतः, यतः त्वमेव सवितासि ब्राह्मणधर्मान् पालयन्नस्माकमनुष्ठानायानुज्ञातासि, सत्यसवस्त्वममोघानुज्ञः अतो ब्राह्मणवर्णाश्रमधर्माणां त्वदधीनत्वात् त्वमेव ब्रह्मा। तथा इन्द्रोऽसि परमैश्वर्यवानसि, सत्यौजा अमोघवीर्योऽसि। तथा मित्रोऽसि शिष्टपरिपालनाय देवनामासि, सुशेवः सुष्ठु सेवितुं योग्योऽसि। तथा वरुणोऽसि अनिष्टनिवारकोऽसि, सत्यधर्मा शास्त्रीयधर्मयुक्तोऽसि। यथा लोके परराष्ट्रं जित्वा समागत्य सिंहासने समासीनं राजानमध उपविष्टाः पुरोहितादयो बहुभिराशीर्भिः स्तुतिभिश्च स्तुवन्ति तद्वदत्रापि सेवोपचारः क्रियते। एतयाशीर्वादरूपया सेवया ब्राह्मणेषु यत् सामर्थ्यं शापानुग्रहरूपं तद्राजनि प्रतिष्ठापितं भवति। तदेतदभिप्रेत्य वाजसनेयिनो बृहदारण्यके क्षत्रियसृष्टिप्रस्तावे समामनन्ति 'क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति' इति। यथोक्तार्थपरत्वेन मन्त्रान् व्याचष्टे "ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि सवितासि सत्यसव इत्याह। सवितारमेवैनꣳ सत्यसवं करोति। ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासीन्द्रोऽसि सत्यौजा इत्याह। इन्द्रमेवैनꣳ सत्यौ-

जसं करोति। ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि मित्रोऽसि सुशेव इत्याह। मित्रमेवैनꣳ सुशेवं करोति। ब्रह्मा३न् त्वꣳ राजन् ब्रह्मासि वरुणोऽसि सत्यधर्मेत्याह। वरुणमेवैनꣳ सत्यधर्माणं करोति'' (ब्रा०) इति। सवितेन्द्रो मित्र इति देवतापदाना-मुच्चारणेन तद्देवताप्रियाणां छन्दसामुच्चारणं सम्पद्यत इति दर्शयति "सवितासि सत्यसव इत्याह। गायत्रीमेवैतेनाभि-व्याहरति। इन्द्रोऽसि सत्यौजा इत्याह। त्रिष्टुभमेवैतेनाभिव्या-हरति। मित्रोऽसि सुशेव इत्याह। जगतीमेवैतेनाभिव्याहर-ति। सत्यमेता देवताः। सत्यमेतानि छन्दाꣳसि। सत्यमेवाव-रुन्धे'' (ब्रा०) इति। एता इन्द्रादयो देवताः सत्यं पालयन्ति एतानि गायत्र्यादिछन्दांसि च सत्यममोघं फलं प्रयच्छन्ति, अत उभयोः सत्यरूपत्वात् इन्द्रादिपदोच्चारणेन गायत्र्याद्यु-च्चारणसिद्धिः, तेन यजमानः सत्यवादित्वमेव सर्वतः सम्पा-दयति। वरुणपदोच्चारणेनानुष्टुबुच्चारणसिद्धिं दर्शयति "वरु-णोऽसि सत्यधर्मेत्याह। अनुष्टुभमेवैतेनाभिव्याहरति। सत्यानृते वा अनुष्टुप्। सत्यानृते वरुणः। सत्यानृते एवावरुन्धे'' (ब्रा०) इति। विश्वो देवस्य नेतुरित्यस्यामनुष्टुभि प्रथमपादः सप्ताक्षर इत्यनृतत्वं, उत्तरे त्रयः पादा अष्टाक्षरा इति सत्यत्वं। एतच्च एकस्मादक्षरादनाप्तं प्रथमं पदमित्यादिब्राह्मणेनैव दर्शितं। वरुणोऽपि क्वचिदनिष्टकारित्वादनृतरूपः क्वचित्तन्निवर्तकत्वात् सत्यरूपः, एतच्च वरुणो वा एतं गृह्णाति। योऽश्वं प्रतिगृह्णाति। यावतोऽश्वान् प्रतिगृह्णीयात्। तावतो वारुणाश्चतुष्कपालान्

निर्वपेत्। वरुणमेव स्वेन भागधेयेनोपधावति। स एवैनं वरुणपाशान्मुञ्चतीत्यादिषु ब्राह्मणेषु स्पष्टं द्रष्टव्यं। अत उभयरूपत्वसाम्याद्वरुणपदोच्चारणेनानुष्टुबुच्चारिता भवति। तेन च यजमानोऽनृतं त्यक्तुं सत्यं वक्तुञ्च समर्थत्वात् सत्यानृते स्वाधीने करोति। वेदनं प्रशंसति "नैनꣳ सत्यानृते उदिते हिꣳस्तः। य एवं वेद" (ब्रा०) इति। कल्पः। इन्द्रस्य वज्रोऽसीति स्फ्यं ब्रह्मा राज्ञे प्रयच्छतीति। पाठस्तु "इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य" इति। हे स्फ्य वज्रतृतीयांशत्वात् त्वं वज्रोऽसि। स्फ्यस्तृतीयमिति श्रुतेः। यतो विरोधिघाती त्वं तेन कारणेन मे मदर्थं रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधय। विधत्ते "इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं प्रयच्छति। वज्रो वै स्फ्यः। वज्रेणैवास्मा अवरपरꣳ रन्धयति। एवꣳ हि तच्छ्रेयः। यदस्मा एते रध्येयुः" (ब्रा०) इति। रध्येत्युच्चारणेनास्मै यजमानायावरं परं चापेक्षितं सर्वकार्यं रन्धयति साधयति। यद् यदि यजमानायैते कार्यविशेषा रध्येयुः सिध्येयुः एवं सति श्रेयो हि तत् प्रशस्ततरं खलु। कल्पः। "दिशोऽभ्ययꣳ राजाभूत्" इति पञ्चाक्षान् राज्ञे प्रयच्छतीति। अयं यजमान ऊर्द्ध्वदिक्सहिताः पञ्चदिशो ऽभिलक्ष्य राजाभूत्। विधत्ते "दिशोऽभ्ययꣳ राजाभूदिति पञ्चाक्षान् प्रयच्छति। एते वै सर्वेऽयाः। अपराजायिनमेवैनं करोति" इति। अक्षाः कपर्दकाः सुवर्णनिर्मिताः, विभीतकफलानि सौवर्णानीत्येके, ते चाक्षा द्यूतस्थाने निवपनीयाः।

तथा चापस्तम्बेन दर्शितं 'अन्वावापोऽधिदेवनमुद्धृत्यावोक्ष्या-क्षान्निवपेत् सौवर्णान् परःशतान् परःसहस्रान् वा' इति। तेभ्यः पञ्चाक्षानुद्धृत्य जितवानयं राजेत्यभिप्रायेण तस्मै राज्ञे दद्यात् एत एव पञ्चाक्षा अयाः सर्वे सम्पद्यन्ते। अयशब्दोऽक्ष-वाची, पञ्चदिग्वर्त्त्यक्षाभिप्रायेण पञ्चाक्षाणां दत्तत्वात् राशि-स्थाः सर्वेऽप्यक्षा दत्ता भवन्ति, तथा सत्येनं यजमानमपरा-जायिनं कदाचिदपि पराजयरहितमेव करोति। विधत्ते "ओदनमुद्ब्रुवते। परमेष्ठी वा एषः। यदोदनः। परमामे-वैनꣳ श्रियं गमयति" (ब्रा०) इति। अधिदेवनकाले ओदनं पणत्वेन सर्वे परस्परं ब्रूयुः, अन्नाद्वै प्रजाः प्रजायन्त इति श्रुतेरोदनः परमेष्ठिरूपः, तया सत्योदनपणप्रतिज्ञया परमां श्रियं यजमानः प्राप्नोति। कल्पः। सङ्ग्रहनाम्ना राजाह्वयति "सुश्लोकां३" इति सङ्ग्रहीतारं "सुमङ्गलां३" इति भागदुघं "सत्यराजा३न्" इति क्षत्तारमिति। शोभनः श्लोकः स्तुति-र्यस्यासौ सुश्लोकः, कोशाध्यक्षोऽश्वप्रग्रहधारी वा तावुभावपि स्वस्वकार्यं सम्यगनुतिष्ठन्तौ शोभनस्तुतियुक्तौ भवतः। शोभनं मङ्गलं मर्यादानुल्लङ्घनेन प्रजाभ्यः करादानरूपं यस्य भाग-दुघस्य सोऽयं सुमङ्गलः। सत्यस्यावश्यंभाविनोऽन्तःपुररक्षणस्य स्वामी क्षत्ता सत्यराजा। एतेषां सम्बोधनानि प्लुतयश्च दूरा-दाह्वानार्थाः। द्वयोः सानुनासिकत्वं साम्प्रदायिकं। स्वकीयाः सङ्ग्रहीत्रादयः सुश्लोकादयो भूयासुरित्येवमाशीःपरतया व्या-चष्टे "सुश्लोकां३ सुमङ्गलां३ सत्यराजा३नित्याह। आशिष-

मेवैतामाशास्ते" (ब्रा०) इति। विधत्ते "शौनःशेपमाख्यापयते। वरुणपाशादेवैनं मुञ्चति" (ब्रा०) इति। शुनःशेपेन दृष्टं शस्त्रं शौनःशेपं, तदध्वर्युर्होतारं वाचयेत् तेन यजमानं वरुणपाशान्मोचयतीति। तत्र ऋक्संख्यां विधत्ते "परःशतं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। परःशतं शतादधिकं। ऋक्संख्या चापस्तम्बेन स्पष्टीकृता 'शौनःशेपमाख्यापयते ऋचो गाथामिश्राः परःशता परःसहस्रा वा' इति। विधत्ते "मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति" (ब्रा०) इति। समवद्यति समस्यैकीकृत्यावद्येत्। तेनोभयतः कर्मद्वयेऽवस्थिताभिर्देवताभिरेवैनं यजमानमुभयोः पार्श्वयोः पालितवान् भवति। कल्पः। अवभृथेन प्रचर्य "अपां नप्त्रे स्वाहा" इत्यप्सु जुहोति "ऊर्जो नप्त्रे स्वाहा" इत्यन्तरा दर्भस्तम्बे स्थाणौ वल्मीकवपायां वा हुत्वा "अग्नये गृहपतये स्वाहा" इति प्रत्येत्य गार्हपत्ये हुत्वेति। अपां नप्त्रे न पातयित्रे विनाशमकुर्वते वह्नये, न खल्वग्निरपो नाशयति किन्तूत्पादयति, अग्नेराप इति सृष्टिप्रकरणे श्रवणात्। ऊर्जो बलस्य न पातयित्रे वह्नये ऊर्जो नप्त्रे, उदराग्निना भुक्तेऽन्ने जीर्णे सति बलं वर्धते न तद्विनाश्यते। विधत्ते "अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति" (ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः।

"बाहू अधो हरेद्वाभ्यां मित्रेति वरुणेति च।

स्वाम्युपाहृत्य बाहू सं वैश्वदेव्यां प्रसादयेत्॥

चत्रासन्द्यां तु स्वादिर्यां क्लृप्यधीवाससंस्तृतिः।

स्योना स्वामी समागत्य मा त्वा तत्रोपसीदति॥

निषोपविष्टं सम्बन्ध्य ब्रह्मा३नध्वर्युमीरयेत्।

प्रत्याह सोऽपि त्वमिति ब्रह्मा होता च सामगः॥

राज्ञोक्ता उत्तरं प्राहुरिन्द्र स्फ्यं स्वामिनेऽर्पयेत्।

दिशोऽत्रास् दापयेत् पञ्च सुश्लोका इति च क्रमात् *॥

सङ्ग्रहीता भागदुघः चत्ता चाहूयते त्रिभिः।

अपां जुहोत्यप्सु दर्भे गार्हपत्ये त्रिभिः क्रमात्॥

अनुवाके षोडशेऽस्मिन् त्रयोविंशतिरीरिताः" इति।

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

"राजसूयेऽभिषेचाख्ये यागे ये देवनादयः।

तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य सन्निधेः॥

राजसूयकथाभावानुवृत्तेः सर्वशेषता।

कल्प्याकाङ्क्षाभिषेचस्य प्रक्रिया प्रबला ततः"॥

राजसूये पश्विष्टिसोमयागा बहवः प्रधानभूताः तत्राभिषेचनीयाख्यः कश्चित्सोमयागः तत्सन्निधौ देवनादयः श्रूयन्ते 'अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यापयते' इति। जिनाति जयति। बह्वृचब्राह्मणे समाम्नातं शुनःशेप-

* दिशोऽस्वान्पञ्च राजभ्यो दद्यात् सुश्लोक ईरित इति का०।

विषयमुपाख्यानं शौनःशेपं। तत्र सन्निधिबलाद्देवनादयो-ऽभिषेचनीयाङ्गमिति चेन्नैवं। राजसूयस्य कथम्भावाकाङ्क्षा-यामनुवृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः राजसूयस्य बहुयागात्मक इत्यत्र सर्वशेषत्वं। न चाभिषेच-नीयस्य काचिदाकाङ्क्षा देवनादिष्वस्ति ज्योतिष्टोमविकृतित्वे-नातिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेः। सन्निहितविधि-बलादाकाङ्क्षोत्थाप्यत इति चेत्। अत एवाकाङ्क्षारूपमवान्तर-प्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया सन्निधिर्विप्रकृष्यते राजसूयाकाङ्क्षारूपन्तु महाप्रकरणं क्लृप्त-त्वादेकया कक्ष्यया सन्निकृष्यते। तस्मात्प्रकरणेन सन्निधिबाधात् सर्वशेषा देवनादयः।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितं।

"अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकं।
मध्ये वा पूर्ववत्सर्वसमाप्तौ देवनादयः॥
अभिषेकोऽपकृष्टोऽस्मात् पूर्वं प्रत्यक्षपाठतः।
देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा"॥

राजसूये सोमयागस्याभिषेचनीयस्य सन्निधौ देवनशौनः-शेपोपाख्यानाभिषेकाः क्रमेणाम्नाताः, तत्राभिषेचनीये चोदक-प्राप्तमङ्गजातं सारिष्टन्यायेन प्रथमं सम्पाद्य पश्चाद्देवनादयः कार्याः इति प्राप्ते ब्रूमहे। माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वाक्येन तस्य सोमयागस्य मध्येऽभिषेकोऽपकृष्टः। अभिषेकात् पूर्व-भावित्वं विदेवनादीनां प्रत्यक्षपाठप्राप्तं, ततो माहेन्द्रस्तोत्रादपि

पूर्वस्मिन् काले प्रयाजाघारवत् विदेवनादीनामपकर्षः कर्तव्यः।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितं।

"एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा।
राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः"॥

यदेतद्देवनादिकमङ्गमित्युक्तं तदेतदभिषेचनीयस्य सोमयागस्यैकस्यैवाङ्गं। कुतः, अपकर्षात्। यद्यप्यभिषेचनीयविधेरूर्द्धं तत्सन्निधौ देवनादय आम्नातास्तथाप्यभिषेचनीयमध्ये तेऽपकृष्यन्ते। माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वाक्येन राज्ञो यजमानस्याभिषेको माध्यन्दिनसवने स्तोत्रकालेऽपकृष्यते तस्मिन्नपकृष्टे सति ततः पूर्वमाम्नातानां विदेवनादीनामर्थसिद्धोऽपकर्षः। ततो माहेन्द्रस्तोत्रादिवत् अभिषेचनीयप्रयोगान्तःपातित्वाद्देवनादिकमभिषेचनीयस्यैवाङ्गमिति प्राप्ते ब्रूमः। किं तदङ्गत्वे सन्निधिः प्रमाणं, किं वा प्रयोगपरिकल्पितमवान्तरप्रकरणमुभयथापि प्रत्यक्षस्य महाप्रकरणस्य प्रबलत्वाद्देवनादिकं राजसूयस्याङ्गं। राजसूयशब्दस्यानुमत्यादीन् सर्वान् यागानभिधत्ते तस्मात् सर्वेषामेतदङ्गं, अनुष्ठानन्तु राजसूयमध्ये क्वचिदपेक्षितमिति वचनबलादभिषेचनीयगतमाहेन्द्रस्तोत्रकाले तदनुष्ठीयते॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः॥ *॥

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा ॥ १ ॥

आग्नेयꣳ हिरण्यꣳ सारस्वतं द्विचत्वारिꣳशत्॥१७॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः ॥ * ॥

षोडशे जितवतो राज्ञ इतरमैव्यलक्षण उपचारो वर्णितः। सप्तदशे संसृष्टहवींषि दशसङ्ख्याकानि विधीयन्ते "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा" इति। उपरतस्तनपाना वत्सतरी। शुष्ककायः शुण्ठः। तान्येतानि हवींषि प्रशंसति "वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्।

तत्सꣳसृद्भिरनुसमसर्पत्। तत्सꣳसृपाꣳ सꣳसृप्त्वं। अग्निना देवेन प्रथमेऽहन्ननुप्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये। पूष्णा पशुभिश्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे। सोमेन राज्ञाष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाप्नोत्। यत्सꣳसृपो भवन्ति। इन्द्रियमेव तद्वीर्यं यजमान आप्नोति" (ब्रा०१का०।८प्र०।१अ०) इति। सुषुवाणस्य सुष्ठु सोममभिषेचनीयकर्मणि अभिषुतवतो वरुणस्येन्द्रियं सामर्थ्यं दशधा भूत्वा परापतत् विनष्टं, स च वरुणः तदिन्द्रियं संसृप्शब्दाभिहितैः यथोक्तहविर्भिरनुक्रमेण सम्यक् प्राप्तवान्। सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवतास्तासां हवींष्यपि तन्नामकानि। स वरुणः प्रथमेऽहनि देवेन द्योतनात्मकेनाग्निना सहाष्टाकपालं प्रायुङ्क्त आग्नेयमष्टाकपालं निरवपदित्यर्थः। द्वितीयेऽहनि वाग्रूपया सरस्वत्या चरुं निरवपत्। तृतीये प्रसवकारणेन सवित्रा सह द्वादशकपालं निरवपत्। चतुर्थे पशुभिरुपलक्षितेन पूष्णा सह चरुं निरवपत्। पञ्चमे ब्राह्मणाभिमानिना बृहस्पतिना सह चरुं निरवपत्। षष्ठे द्योतनात्मकेनेन्द्रेण सह एकादशकपालं निरवपत्। सप्तमे स्वकीयदेवतारूपेणातीतकल्पगतवरुणेन सह दशकपालं निरवपत्। अष्टमे राज्ञा यजमानेन सोमेन सह चरुं निरवपत्। नवमे रूपवता त्वष्ट्रा सहाष्टाकपालं निरवपत्। दशमे यज्ञरूपेण विष्णुना सह त्रिकपालं

निरूप्य तदिन्द्रियमाप्नोत्। यदि यजमानस्यापि संसृपो यागा भवेयुस्तदासौ यजमान इन्द्रियसामर्थ्यं प्राप्नोतीति। उत्पत्ति-विधिभिर्विहितानां संसृपामनेनार्थवादेन भिन्नदिनानुष्ठान-विधिरुन्नेयः। अन्यं प्रकारविशेषं विधत्ते "पूर्वा पूर्वा वेदि-र्भवति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै" (ब्रा०) इति। पूर्वा पूर्वदिग्ग-ता दिनभेदेन बहुवेदित्वद्योतनार्था वीप्सा। तत्प्रकारस्यापस्त-म्बेन स्पष्टीकृतः 'श्वो भूते परेण सौमिकदेवयजनं दशभिः सप्तभिर्वा सꣳसृपां हविर्भिर्यजत आग्नेयमष्टाकपालमिति पूर्वं पूर्वदेवयजनमध्यवस्यति, *यत्र पूर्वस्याहवनीयस्तत्रोत्तरस्य गा-र्हपत्य उत्तमायाः प्राग्वंश आहवनीयो बहिर्गार्हपत्य' इति। अष्टमनवमदशमानां हविषां स्वस्वदिनेषु कञ्चित्कालविशेषं विधत्ते "पुरस्तादुपसदाꣳ सौम्येन प्रचरति। सोमो वै रेतो-धाः। रेत एव तद्दधाति। अन्तरा त्वाष्ट्रेण। रेत एव हितं त्वष्टा रूपाणि विकरोति। उपरिष्टाद्वैष्णवेन। यज्ञो वै विष्णुः। यज्ञ एवान्ततः प्रतितिष्ठति" (ब्रा०) इति। अभिषेचनीयात् सोमयागादूर्ध्वं दशपेयः सोमयागः कर्तव्यः। तस्य च संसृ-यागसम्बन्धिनि सप्तमेऽहनि एका दीक्षा कर्तव्या, तत ऊर्द्ध्वं त्रिषु दिनेषु उपसदः कर्तव्याः, तत्र प्रथमोपसद्दिने उपस-द्यागात् पूर्वं सौम्याख्येन संसृपाष्टमहविषा प्रचरेत्, मध्यमोप-सद्दिने पौर्वाह्णिकापराह्णिकोपसदोर्मध्ये त्वाष्ट्रेण नवमहविषा प्रचरेत्, तृतीयोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदावनुष्ठायो-

* यत्र पूर्व आहवनीयस्तत्रोत्तरो गार्हपत्य इति तै०।

परिष्टाद्वैष्णवेन दशमहविषा प्रचरेत्। सोमस्य रेतोधारण-हेतुत्वात् प्रथमतस्तत्प्रयोगे यजमानो रेतो दधाति, ततः त्वष्टुः प्रयोगे सति धृतं रेतोऽवष्टभ्य त्वष्टा रूपाणि विविधानि करोति, विष्णोर्यज्ञरूपत्वादन्ते तद्धविःप्रयोगे सति यजमानो राजसूयादूर्द्ध्वमपि यज्ञानुष्ठान एव प्रतिष्ठितो भवति। दश-पेयतन्त्रमध्ये त्रयाणां हविषामनुष्ठानमापस्तम्बेन स्पष्टीकृतं ‘अपराह्णे दशपेयस्य तन्त्रं प्रक्रमयति’ इत्युपक्रम्यैवं पठ्यते ‘एका दीक्षा तिस्र उपसदः पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति अन्तरा त्वाष्ट्रमष्टाकपालमुपरिष्टाद्वैष्णवं त्रिकपालं’ इति।

अथ मीमांसा। चतुर्थाध्यायस्य चतुर्थपादे चिन्तितं।

“किं पुरस्तादुपसदां सौम्येन प्रचरेदिति।
अङ्गाङ्गिभावः कालो वा, वाक्यादाद्यः प्रतीयते॥
पुरस्तादिति कालोऽत्र भावी कालविधिस्ततः।
नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत्”॥

राजसूये संसृप्शब्दवाच्यान्याग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि, तेष्वष्टमनवमदशमानि सौम्यत्वाष्ट्रवैष्णवानि तद्विषयमिदं वाक्यमाम्नायते ‘पुरस्तादुपसदाꣳ सौम्येन प्रचरति अन्तरा त्वाष्ट्रेण उपरिष्टाद्वैष्णवेन’ इति। योऽयं राजसूये सोम-यागः तस्मिन्नुपदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते, ततो वाक्यात् सौम्या-दीनि उपसदामङ्गानीति प्राप्ते ब्रूमः। उपसदामिति षष्ठ्याः कालवाचिना पुरस्तादितिशब्देनान्वयात् सौम्यादीनां काल-

विशेषसम्बन्धपरमिदं वाक्यं न त्वङ्गाङ्गिभावपरं, ततो न कस्याप्यङ्गं सौम्यादिकं किन्त्वानुमत्यादिवत्प्रधानं ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः ॥ * ॥

---

सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्रयच्छति दशभिर्वत्सतरैः सोमं क्रीणाति दशपेयो भवति शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणाय ऋषभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीधे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति ॥ १ ॥

वारवन्तीयं चत्वारि च ॥ १८ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ * ॥

सप्तदशे संसृपां हवींष्युक्तानि। अष्टादशे दशपेय उच्यते। तत्र दीक्षासोमक्रययोश्चोदकप्राप्तं दिनभेदमपवदितुं विधत्ते "सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति" इति। प्रकृतौ 'अप्सु स्नात्यपोऽश्नाति' इति यद्विहितं तदपवदितुं विधत्ते "पुण्डरिस्रजां प्रयच्छति" इति। तदेतत्सूत्रकारः स्पष्टीचकार 'अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते' इति। प्रतिमोचयेदित्यर्थः। तदेतत्प्रशंसति "जामि वा एतत् कुर्वन्ति। यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति। पुण्डरिस्रजां प्रयच्छत्यजामित्वाय। अङ्गिरसः सुवर्गं लोकं यन्तः। अप्सु दीक्षातपसी प्रावेशयन्। तत्पुण्डरीकमभवत्। यत्पुण्डरिस्रजां प्रयच्छति। साक्षादेव दीक्षातपसी अवरुन्धे" (ब्रा०१का०। ८प्र०।२अ०) इति। चोदकप्राप्तानि हिरण्यवासःप्रभृतीनि दशविधक्रयद्रव्याण्यपवदितुं विधत्ते "दशभिर्वत्सतरैः सोमं क्रीणाति" इति। वत्सतरा उपरतस्तनपानाः। अत एव सूत्रकारो विशिनष्टि 'दशभिर्वत्सतरैः सोमं क्रीणाति' इति। अत्र सङ्ख्यां प्रशंसति "दशभिर्वत्सतरैः सोमं क्रीणाति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" (ब्रा०) इति। षाण्डत्वं विधाय प्रशंसति "मुष्करा भवन्ति सेन्द्रत्वाय" (ब्रा०) इति। सेन्द्रत्वमिन्द्रियसामर्थ्यसहितत्वं। प्रधानकर्म विधत्ते "दशपेयो भवति" इति। दशसु वैकङ्कतचमसेषु पातव्यः सोमरसो यस्मिन् क्रतौ स क्रतुर्दशपेयः। यद्वा एकैकस्मिन् पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमो यस्मिन् स दशपेयः। एतदेवा-

भिप्रेत्य सूत्रकार आह 'श्वो भूते पात्रसंसादनकाले दश चम-
सानधिकान् प्रयुनक्ति तानुन्नयनकाल उन्नयति भक्षणकाले
दश दशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्ति'
इति। तं विधिं प्रशंसति "दशपेयो भवति। अन्नाद्यस्यावरु-
द्ध्यै" (ब्रा०) इति। विधत्ते "शतं ब्राह्मणाः पिबन्ति" इति।
एकैकस्मिन् पात्रे दश दश ब्राह्मणा इति मिलित्वा शतं ब्रा-
ह्मणाः पिबन्ति। प्रशंसति "शतं ब्राह्मणाः पिबन्ति। शतायुः
पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति।
विधत्ते "सप्तदशꣳ स्तोत्रं भवति" इति। अस्मिन् क्रतौ यद्यत्
स्तोत्रं तस्य सर्वस्य सप्तदशस्तोत्रत्वमेव कुर्यात्। प्रशंसति "सप्त-
दशꣳ स्तोत्रं भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै"
(ब्रा०) इति। विधत्ते "प्राकाशावध्वर्यवे ददाति" इति।
प्राकाशौ सुवर्णदर्पणौ। प्रशंसति "प्राकाशावध्वर्यवे ददाति।
प्राकाशमेवैनं गमयति" (ब्रा०) इति। हिरण्यस्रजो दानं वि-
धत्ते "स्रजमुद्गात्रे" इति। तथा च सूत्रकारः 'दक्षिणाकाले
हिरण्यप्राकाशावध्वर्यवे ददाति हिरण्यस्रजमुद्गात्रे' इति। प्रशं-
सति "स्रजमुद्गात्रे। व्येवास्मै वासयति" (ब्रा०) इति। अस्य
यजमानस्य केवल विशिष्टमेव दुकूलादिकं वासयति उत्तरीय-
त्वेनाच्छादयति। वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते "रुक्मꣳ
होत्रे" इति। प्रशंसति "रुक्मꣳ होत्रे। आदित्यमेवास्मा
उन्नयति" (ब्रा०) इति। उदयं प्रापयतीत्यर्थः। विधत्ते "अश्वं
प्रस्तोतृप्रतिहर्तृभ्यां" इति। ददातीत्यनुषज्यते, द्वाभ्यामेक-

द्रव्यदानं वाचनिकं। प्रशंसति "अश्वं प्रस्तोतृप्रतिहर्तृभ्यां। प्राजापत्यो वा अश्वः। प्रजापतेराप्त्यै"(ब्रा०)इति। अश्वमेधप्रकरणे प्रजापतेरक्ष्यश्वयत्तत्परापतदिति श्रुतेरश्वस्य प्राजापत्यत्वं। बालगर्भिणीनां गवां दानं विधत्ते "द्वादश पष्ठौहीर्ब्रह्मणे" इति। वत्सद्वारा अभिवृद्धिसूचनादायुष्याभिवृद्ध्या प्रशंसति "द्वादश पष्ठौहीर्ब्रह्मणे। आयुरेवावरुन्धे" (ब्रा०) इति। बन्ध्याया गोर्दानं विधत्ते "वशां मैत्रावरुणाय" इति। वशाशब्देन बुद्धिस्थं वशित्वमभिप्रेत्य प्रशंसति "वशां मैत्रावरुणाय। राष्ट्रमेव वश्यकः"(ब्रा०) इति। रेतःसेचनसमर्थस्य गोर्दानं विधत्ते "ऋषभं ब्राह्मणाच्छꣳसिने" इति। ऋषभशब्देन बुद्धिस्थमिन्द्रियमित्यभिप्रेत्य प्रशंसति "ऋषभं ब्राह्मणाच्छꣳसिने। राष्ट्रमेवेन्द्रियाव्यकः" (ब्रा०) इति। द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते "वाससी नेष्टापोतृभ्यां" इति। धौतवस्त्रयोः शुद्धिहेतुत्वमभिप्रेत्य प्रशंसति "वाससी नेष्टापोतृभ्यां। पवित्रे एवास्यैते" (ब्रा०) इति। स्थूलस्य यवपूर्णशकटस्य दानं विधत्ते "स्थूरि यवाचितमच्छावाकाय" इति। वारुणं यवमयं चरुमिति श्रुतत्वात् यवप्रियं वरुणं स्वकीयभागप्रदानेन स्वकीयदेशान्ताद्बहिर्निःसारितवान् भवतीत्यभिप्रेत्य प्रशंसति "स्थूरि यवाचितमच्छावाकाय। अन्तत एव वरुणमवयजते" (ब्रा०) इति। विधत्ते "अनड्वाहमग्नीधे" इति। वह्निद्वारकेणोभयोः सम्बन्धेन प्रशंसति "अनड्वाहमग्नीधे। वह्निर्वा अनड्वान्। वह्निरग्नीत्। वह्निनैव वह्नियज्ञस्यावरुन्धे" (ब्रा०) इति। दर्शपूर्णमासयोराग्नेयहविर्युक्तस्य

शकटस्य वहनादनड्वान् वह्निः,अग्नेरिन्धनादाग्नीध्रोऽपि वह्निः*। उभयोः सम्बन्धे सति वह्निरूपेणानडुहा यज्ञस्य वह्निवाहकं आग्नीध्राद्यृत्विग्जातं स्वाधीनं करोति। चोदकप्राप्तं होतृमामान्यादिकं बाधितुं विशेषान् विधत्ते "भार्गवो होता भवति आयन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति" इति। प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते। प्रकृतौ ब्राह्मणाच्छंसिनं प्रत्याज्यस्तोत्रे गायत्रसाम्नो विहितत्वात् तदपवादाय आयन्तीयं सामात्र विधीयते, आयन्त इव सूर्य इत्यस्यामृच्युत्पन्नं साम आयन्तीयं। प्रकृतौ यज्ञायज्ञियस्याग्निष्टोमसामत्वात् तदपोद्य वारवन्तीयं साम विधीयते, अश्वं न त्वा वारवन्तमित्यस्यामृच्युत्पन्नं वारवन्तीयं साम। प्रकृतौ वहन्तीनां गृह्णातीति प्रवाहमात्रगतानामपां वसतीवरित्वात्,† अत्रापि तत्प्राप्तौ सरस्वतीगता एवापो विधीयन्ते। इन्द्रियवीर्यत्वेन त्रयं प्रशंसति "इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत्। भृगुस्तृतीयमभवत्। आयन्तीयं तृतीयं। सरस्वती तृतीयं। भार्गवो होता भवति। आयन्तीयं ब्रह्मसामं भवति। वारवन्तीयमग्निष्टोमसामं। सारस्वतीरपो गृह्णाति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै" (ब्रा०) इति। वारवन्तीयस्येन्द्रवीर्यत्वाभा-

* अत्र वह्निशब्दो यौगिको न तु रूढः। तेन शकटादिवहनकर्तृत्वाद्बलीवर्दे यज्ञभारवाहकत्वात्ताग्नीध्रे लक्षणां विनैवोपपद्यते इत्येकस्मिन् काशीस्थपुस्तके पाठान्तर्गतं।

† (सं० का० १। प्र० ३। अ० १२।)

वेनात्र स्तुतेरप्रतीतत्वात् तेन सह स्तोतुं आयन्तीयमपि पुनरुपादत्ते "आयन्तीयं ब्रह्मसामं भवति। इन्द्रियमेवास्मिन् वीर्यꣳ श्रयति। वारवन्तीयमग्निष्टोमसामं। इन्द्रियमेवास्मिन् वीर्यं वारयति" (ब्रा०) इति। सामनाम्नि श्रयतिधातोः प्रतीतत्वाद्यजमानेन वीर्यमाश्रीयते, द्वितीयनाम्नि वारयितृत्वप्रतीतेरस्मिन् यजमाने प्रयुक्तं वैरिवीर्यं निवारितं भवति।

अत्र मीमांसा। एकादशाध्यायस्य द्वितीयपादे चिन्तितं।

"दशपेये चाभिषेचनीये तन्त्रं भिदाथवा।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता"॥

राजसूये दशपेयाभिषेचनीयसञ्ज्ञकौ द्वौ सोमयागौ तयोरङ्गानुष्ठानं तन्त्रेण कार्यं। कुतः, क्रयस्याभिन्नत्वात्, 'सह सोमौ क्रीणाति' अभिषेचनीयस्य यदा सोमक्रयः तदैव दशपेयस्यापि सोमे क्रेतव्ये सति क्रयात् पूर्वभाविनां दशपेयाङ्गानामपकर्षात् तन्त्रं स्यादिति प्राप्ते ब्रूमः। भिन्नकालीनयोरभिषेचनीयदशपेययोरङ्गानां भेदो युक्तः। संसृपशब्दवाच्याभ्यो दशभ्य इष्टिभ्यः ऊर्द्ध्वं अपराह्णे दशपेयस्योपक्रमः, ताभ्यः प्राचीनेऽत्यन्तव्यवहिते काले अभिषेचनीयः। न च क्रयसाहित्यमस्ति 'सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति' इति दशपेये क्रयस्य सद्यःकालत्वाभिधानात्। सहसोमाविति वचनेन क्रयार्थसंवादे साहित्यं विवक्षितं। तस्मादुभयोरङ्गानां भेदः।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

"राजसूये क्वचित्कर्तुस्समसो दशभिर्जनैः।

भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥
आद्यो भागात्सङ्ख्यैकजातेर्विप्राः शतं दश ।
चमसानद्युरित्युक्त्या राजपात्रस्य विप्रगं" ॥

राजसूये दशपेयनामके यागे श्रूयते 'दश दशैकैकं चमसमनुसर्पन्ति' इति। तत्र यजमानस्य राजन्यस्य यश्चमसः सोऽयं राजन्यैरेव दशभिर्भक्षणीयः दशेति सङ्ख्यायाः जात्येकत्वप्रतिभानात्। तथा हि दशपेयस्य ज्योतिष्टोमविकृतित्वात् प्रकृतं धर्मजातं चोदकेन प्राप्तं प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्तीत्यत्रापि तथैव प्राप्तं। यद्यत्र दशेति विशेषो विधीयते तर्हि प्राकृतं भक्षकसङ्ख्यामात्रं निवर्त्यतां न त्वेकजातीयत्वं, तस्माद्राजन्यो यजमानो राजन्यैर्नवभिः सह भक्षयेदिति प्राप्ते ब्रूमः। प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुसर्पतां पुरुषाणां दश दशेति वीप्सया प्रति चमसं दशसङ्ख्यां विधायार्थसिद्धां शतसङ्ख्यामनूद्य सङ्ख्यानां सर्वेषां ब्राह्मण्यं विधीयते, शतं ब्राह्मणाः पिबन्तीति, तथा सति यजमानस्यापि राजन्यस्य यत्र भक्षो नास्ति तत्र कुतोऽन्ये राजन्या भक्षयेयुः तस्माद्ब्राह्मणा एव भक्षकाः।

दशमाध्यायस्य तृतीयपादे चिन्तितं।

"किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्यवस्य वा।
ददातियोगात्कृत्स्नस्य न विशिष्टेन योगतः" ॥

राजसूये श्रूयते 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति। प्राकाशौ दीपस्तम्बावित्येके दर्पणावित्यपरे। तौ किं प्राकृतस्य

दक्षिणाद्रव्यस्य बाधकौ, उताध्वर्युभागस्यैव । तत्र प्राकाशौ ददातीति कर्मकारकवाचिद्वितीयाश्रुतिसिद्धेन दानसम्बन्धेन प्राकाशावध्वर्यव इति वाक्यकृते पुरुषसम्बन्धे चोदिते सति देयद्रव्यप्रतीतेः देयान्तरस्य कृत्स्नबाध इति पूर्वः पक्षः । अध्वर्यवे ददातीति सम्प्रदानकारकवाचिचतुर्थीश्रुतिसिद्धस्य दानक्रियासम्बन्धस्यापवृदितुमशक्यत्वात् सम्प्रदानविशिष्टदानक्रियासम्बन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ * ॥

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणादित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीमश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ॥ १ ॥

**आग्नेयꣳ हिरण्यमैन्द्रं वैश्वदेवं पिशङ्गी सप्तचत्वारिꣳशत्॥ १९॥**

**इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके एकोनविंशोऽनुवाकः॥ *॥**

अष्टादशे दशपेयोऽभिहितः। एकोनविंशे दिशामवेष्टयः पञ्चदयं सात्यदूतानां हवींषि च विधीयन्ते। तत्रादौ पञ्च हवींषि विधत्ते "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा" इति। पिशङ्गी पिङ्गलवर्णा। दिग्व्यास्थापनप्रयुक्तोन्मादपरिहारेणावेष्टिविधिं प्रशंसति "ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनुव्यास्थापयन्ति। दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय" (ब्रा० १का०।८प्र०।३अ०) इति। यं यजमानं अध्वर्युः प्रस्थापयति एष यजमानः दिशोऽनुप्राप्य दिग्भ्रमेण उन्मदितोः उन्मत्तो भवितुं ईश्वरः प्रभुर्भवति। विधिवाक्यावगतं देवतापञ्चकं प्रशंसति "पञ्च देवता यजति। पञ्च दिशः। दिक्ष्वेव प्रतितिष्ठति" (ब्रा०) इति। आग्नेयादीनां चतुर्णां मध्ये एकैकयागादूर्द्ध्वं पञ्चमहविषि अभिघारणं विधत्ते "हविषो हविष इष्ट्वा बार्हस्पत्यमभिघारयति। यजमानदेवत्यो वै बृहस्पतिः। यजमानमेव तेजसा समर्धयति" (ब्रा०) इति। यजमानस्य देवता

उक्ता अग्न्यादयः षतस्रः ताभ्यो हिता यजमानदेवत्याः। अवेष्टीर्विधाय द्विपशुयुक्तं पशुबन्धकर्म विधत्ते "आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीं" इति। अदितिर्देवता यस्याः सेत्यादित्या मल्हा मणिला गलस्तनयुक्तेत्यर्थः। पृश्निरल्पतनुः श्वेतवर्णा वा। अदितेर्भूमित्वेन राष्ट्रत्वं मरुतास्च वैश्यत्वमसकृदुक्तं तदेतदभिप्रेत्य प्रशंसति "आदित्यां मल्हां गर्भिणीमालभते। मारुतीं पृश्निं पष्ठौहीं। विशञ्चैवास्मै राष्ट्रञ्च समीची दधाति" (ब्रा०) इति। करप्रदानेन विशः सम्यक्त्वं सस्यनिष्पादकत्वेन राष्ट्रस्य सम्यक्त्वं। पाठप्राप्तं क्रमं प्रशंसति "आदित्यया पूर्वया प्रचरति। मारुत्योत्तरया। राष्ट्र एव विशमनुबध्नाति" (ब्रा०) इति। आश्रावणस्य चोदकप्राप्तमुच्चध्वनित्वं आदित्ययागेऽनूद्यापवदितुं विधत्ते "उच्चैरादित्याया आश्रावयति। उपांशु मारुत्यै। तस्माद्राष्ट्रं विशमतिवदति" (ब्रा०) इति। यस्माद्राष्ट्ररूपायामादित्येष्टौ उच्चध्वनिः विड्रूपायां मारुतीष्टावुपांशुध्वनिः तस्माल्लोकेऽपि राष्ट्रमुज्जित्य तत्पालको राजादिः सहस्रकरदानाय विशमतिवदति निर्भर्त्सयतीत्यर्थः। पूर्वोक्तं पशुविशेषणं प्रशंसति "गर्भिण्यादित्या भवति। इन्द्रियं वै गर्भः। राष्ट्रमेवेन्द्रियाव्यकः। अगर्भा मारुती। विड्वै मरुतः। विशमेव निरिन्द्रियामकः" (ब्रा०) इति। गर्भस्येन्द्रियकार्यत्वादिन्द्रियत्वं तेन गर्भेण राष्ट्रगता ब्राह्मणक्षत्रियप्रजाः इन्द्रिययुक्ता भवन्ति। मारुत्या गर्भराहित्येन वैश्या निरिन्द्रियाः इतरापेक्षया क्षीणसामर्थ्या भवन्ति।

ननु पष्ठौही बालगर्भिणीत्यसकृदुक्तं कथमगर्भा मारुतीति इहोच्यते, नायं दोषः पञ्चवर्षाया अपि पष्ठौहीशब्दवाच्यत्वात्। पशुबन्धं विधाय सात्यदूतानां हवींषि विधत्ते "अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा" इति। पूष्णे चेति देवतासमुच्चयो द्रष्टव्यः, सत्यं वक्तीति सत्यवाक् तस्मै सरस्वन्नामकाय देवाय। सत्यप्रसवायामोघानुज्ञाय, तिसृभिरिषुभिर्युक्तं धनुस्तिसृधन्वं तत्प्रक्षेपाय निर्मिता शुष्कदृतिः, तदुभयमत्र देयं। तेषु हविःषु प्रथमं प्रशंसति "देवासुराः संयत्ता आसन्। ते देवा अश्विनोः पूषन्वाचः सत्यꣳ सन्निधाय। अनृतेनासुरानभ्यभवन्। तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन्। ततो वै ते वाचः सत्यमवारुन्धत। यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति। अनृतेनैव भ्रातृव्यानभिभूय। वाचः सत्यमवरुन्धे" (ब्रा०) इति। वाचःसम्बन्धि यत्सत्यमनृतपरित्यागेन भाषणं तत्सर्वं स्वकीयं अश्विनोः पूष्णि च निक्षेपरूपेणावस्थाप्य युष्मान् न हनिष्याम इत्यनृतेन .वचनेनासुराणामग्रे भाषां कृत्वा तद्विश्वासेन युद्धमन्नाहं परित्यज्य कदाचिन्निद्राणानसुरान्निहतवन्तः, ततोऽनृतदोषपरिहारक्षमं पूर्वनिक्षिप्तं वाचः सत्यं ग्रहीतुं अश्विनोः पूष्णः स्तोत्कोचरूपं पुरोडाशं निरुप्य तत्सत्यं स्वाधीनं कृतवन्तः। तद्वद्यजमानस्यापि द्रष्टव्यं। द्वितीयं हविः प्रशंसति "सरस्वते सत्यवाचे चरुं। पूर्वमेवोदितं।

उत्तरेणाभिगृणाति" (ब्रा०) इति। पूर्वं प्रथमहविःप्रशंसार्थं वाचः सत्यमवरुन्ध इति यदुक्तं तदेवोत्तरेण सत्यवाच इत्यनेन देवताविशेषणेन विधिवाक्यविशेषो गृणाति उच्चारयति, अतोऽनेनापि यागेन सत्यस्वीकार एव दृढो भवतीत्यभिप्रायः। सत्यप्रसवायेत्येतद्विशेषणं प्रशंसति "सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै" (ब्रा०) इति। विधत्ते "दूतान् प्रहिणोति। आविद एता भवन्ति। आविदमेवैनं गमयन्ति। अथो दूतेभ्य एव न छिद्यते" (ब्रा०) इति। प्रतिराजभ्यो दूतान् प्रेषयति, एते दूता आविदो भवन्ति, एतदीयं शासनं आसमन्ताद्वेदयन्ति ख्यापयन्तीत्याविदः। तेन दूतप्रेषणेन एनं यजमानं आविदं गमयन्ति आसमन्ताद्वेद्यते ख्याप्यत इत्याचित् कीर्तिः, तां प्रापयन्ति। किञ्चायं दूतेभ्यो न विच्छिद्यते, सर्वतः प्रेषयितुं कदाचित् दूता न लभ्यन्त इत्येवं विच्छेदो न भवति किन्तु सर्वदा बहवो दूताः सन्निहिता वर्तन्ते। दूतप्रेषणप्रकारः सूत्रकारेण स्पष्टीकृतः 'तान्यभ्यवस्नाय प्रतिराजभ्यः प्रहिणोत्यभिषिक्ति राजाभूवमित्यावेदयते' इति। तानि तिसृधन्वादीनि दक्षिणाद्रव्याणि अभ्यवस्नायाभित आक्रम्य स्नात्वा तानि प्रतिराजभ्यो दर्शयितुं दूतहस्ते दत्त्वा प्रेषयति, स च दूतो राज्ञ एतद्वचनं तेषामग्रे कथयति, अभिषिक्तोऽस्मि युष्माकं सर्वेषां राजाऽभूवमिति। दक्षिणां प्रशंसति "तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा समृद्ध्यै" (ब्रा०) इति।

अथ मीमांसा। द्वितीयाध्यायस्य तृतीयपादे चिन्तितं।

"राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुतात्र तु।
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे॥
विप्रादेरनुवादः स्यात् प्रापणं वाऽनुवादगीः।
व्यत्ययाय त्रयाणाञ्च राजत्वप्राप्तिरस्ति हि॥
न राज्ययोगाद्राजत्वं क्षत्रियत्वकृतं ततः।
अप्राप्तप्रापणात्तस्मान्न रथन्तरतुल्यता"॥

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा' इति। तस्यामेवेष्टौ हविषां क्रमव्यत्ययः श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्यतो निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवं' इति। तत्र यथा पूर्वाधिकरण ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन रथन्तरं निमित्तत्वेनानूदितं, एवमत्रापि, पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं यदि ब्राह्मण इत्येतन्निमित्ततयानूद्यते, द्वितीयस्थाने श्रुतस्य ऐन्द्रस्य तृतीयत्वेन स्थापयितुं यदि राजन्य इत्यनुवादः, वैश्वदेवस्य तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः। ननु राजकर्तृकराजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्त इति चेत्, न, तयोरपि राज्ययोगेन राजशब्दार्थत्वादिति प्राप्ते ब्रूमः। राजशब्दः क्षत्रियजातौ रूढः न तु राज्ययोग-

स्तस्य प्रवृत्तिनिमित्तं, प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तं राज्ञः कर्मेति विगृह्य राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानात्। ब्राह्मणवैश्ययोः प्रजापालने राज्यशब्द औपचारिकः तस्मादवेष्टौ ब्राह्मणवैश्यौ पूर्वमप्राप्तौ अनेन प्राप्येते। ननु राजसूयस्य राजकर्मत्वात् तदन्तर्गताया अवेष्टेरपि तथात्वात् तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्, मैवं, अन्तरवेष्टौ तदसम्भवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्सम्भवात्। तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथन्तरादितुल्यत्वं। यदिशब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युन्नेयं।

एकादशाध्यायस्य चतुर्थपादे चिन्तितं।

"अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः।
नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगं" ॥

राजसूयप्रकरणे श्रूयते 'दिशामवेष्टयो भवन्ति' इति। तास्वावेष्टय उत्पत्तिवाक्यैरेवमाम्नायन्ते 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति। तास्ववेष्टिषु तन्त्रेणाङ्गानुष्ठानं, कुतः तल्लिङ्गात्। यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति तत्र मध्ये निधानं प्रयोगैक्यनिमित्तमिति लिङ्गं तदैक्याच्च तन्त्रमिति प्राप्ते ब्रूमः।

उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः लिङ्गन्तु बहिःप्रयोगविषयं। अस्ति च प्रयोगद्वयं। राजसूय-प्रकरणपाठादन्तःप्रयोग एकः न च प्रकरणादुत्कर्षः कर्तुं शक्यः राजसूयाङ्गभूतदिग्व्यास्थापननिमित्तोन्मादपरिहार-रूपेणार्थवादेन तत्सम्बन्धावगमात्। तथा च श्रूयते 'ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनुव्यास्थापयन्ति। दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय' इति। राजसूयाद्बहिःप्रयोगस्तु 'एतयान्नाद्यकामं याजयेत्' इति विहितः, न चासौ राजसूयान्तःपाती, यदि ब्राह्मण इत्यादिना वर्णत्रय-संयोगावगमात्, राजसूये च ब्राह्मणवैश्ययोरनधिकारात्। तस्माद्बहिःप्रयोगे तन्त्रं, अन्तःप्रयोगे भेद इति निर्णयः ॥०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके एकोनविंशोऽनुवाकः ॥ * ॥

आ॒ग्ने॒यम॒ष्टाक॑पालं॒ निर्व॑पति सौ॒म्यं च॒रुꣳ सा॑वि॒त्रं द्वाद॑शकपालं बार्हस्प॒त्यं च॒रुं त्वा॒ष्ट्रम॒ष्टाक॑पालं वैश्वान॒रं द्वाद॑शकपालं॒ दक्षि॒णो र॑थवाहनवा॒हो दक्षि॑णा सारस्व॒तं च॒रुं निर्व॑पति पौ॒ष्णं च॒रुं मै॒त्रं च॒रुं वा॑रु॒णं च॒रुं क्षै॑त्रप॒त्यं च॒रुमा॑दि॒त्यं च॒रुमुत्त॑रो रथवाहनवा॒हो दक्षि॑णा ॥ १ ॥

आग्नेयꣳ सौम्यं बार्हस्पत्यं चतुस्त्रिꣳशत् ॥ २० ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः ॥ * ॥

एकोनविंशे दिशामवेष्टयः पशुबन्धः सात्यदूतानां हवींषि चोक्तानि। अथ विंशे प्रयुजां हवींष्युच्यन्ते। तत्प्रकारः सूत्रकारेण दर्शितः 'अपराह्णे षड्भिः प्रयुजां हविर्भिर्यजत आग्नेयमष्टाकपालमिति दक्षिणो रथवाहनवाहो दक्षिणा श्वो भूते षड्भिरुत्तरो रथवाहनवाह' इति। तान्येतानि हवींषि विधत्ते "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्तरो रथवाहनवाहो दक्षिणा" इति। रथस्य वाहनं रथवाहनं अन्यत् शकटं। यस्मिन् शकटे रथस्यैषयोरग्रमवस्थाप्यते तस्य रथवाहनस्य शकटस्य वाहको दक्षिणो यो बलीवर्दः असौ पूर्वषट्के दातव्यः। एवमुत्तरषट्केऽपि योज्यं। अत्र पूर्वषट्कगतं प्रथमं हविः प्रशंसति "आग्नेयमष्टाकपालं निर्वपति। तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति" (ब्रा०१का०।८प्र०।४अ०) इति। उपरिष्टात् परकीयपक्षा उपन्यस्यन्ते। मासि मास्येतानि हवींषि निरुप्याणीत्याहुरिति तत्पक्षानुसारेण फाल्गुनमासमारभ्य क्रमेणैकैकस्मिन् मासे एकैकं हविर्निर्वपणीयं। तथा हि फाल्गुन्याः

पौर्णमास्याः प्रागेव राजसूयमुपक्रम्य पवित्रनामकमग्निष्टोममानुमतादीनि च अनुष्ठाय फाल्गुन्यां पौर्णमास्यामारभ्य वैश्वदेववरुणप्रघाससाकमेधांश्चतुर्षु चतुर्षु मासेषु निष्पाद्य द्वितीयस्यां फाल्गुन्यां पौर्णमास्यां शुनासीरीयैन्द्रतुरीयादिकमनुष्ठाय उत्तरदिनेषु देविकादीनि यथोक्तक्रमेण रत्निनां हवींषि च अनुष्ठाय फाल्गुनामावास्यायामभिषेचनीयार्थं दीक्षयित्वा तस्य दीक्षा वर्धनीयाः। तथा चापस्तम्ब आह 'तथाभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रवर्धयति यथा संवत्सरस्य दशरात्रेऽवशिष्टे दशपेयो भविष्यति' इति। स च दशपेयः संवत्सरं दशरात्रैरवशेष्य पञ्चम्यामुपक्रम्यते पञ्चभिर्दिनैर्निष्पाद्यत्वेन नवम्यां समाप्यते, दशम्यां प्रातः सात्यदूतानि निरुप्यापराह्णे प्रयुजां हवींष्युपक्रमितव्यानि। तथा सत्याग्नेयस्य फाल्गुनरूपो द्वितीयः शिशिरमासः प्राप्यते तस्मिन् शिशिरे तन्निर्वापाच्छिशिरद्वारा तद्धविः स्तूयते। कुरुपञ्चालदेशवर्तिनो राजानः प्राच्येषु देशेषु सस्याभिवृद्धिमवगत्य दिग्विजयाय प्राञ्चः प्रयान्ति यस्मादाग्नेययागकालः शिशिरः सस्याभिवृद्धिहेतुः तस्मात् प्राञ्चो यान्ति इत्येवं स्तुतिः। द्वितीयं हविः प्रशंसति "सौम्यं चरुम्। तस्माद्वसन्तं व्यवसायादयन्ति" (ब्रा०) इति। उक्तक्रमेण वासन्तिकयोः प्रथममासि सौम्यं चरुं निर्वपति। यस्मादस्य देवता सोमोऽत्र चरुणेज्यते तस्मात् प्रथमो वसन्तमास आगतोऽयमिति निश्चित्य प्राग्देशं जेतुं गता राजानस्तत्रत्यं धान्यं सर्वमुपहृत्य स्वसेनामादयन्ति, वसन्तः समुपस्थितः सम्यक् पक्वं

समृद्धमन्नं कामं भुञ्जतामिति वदन्तो हस्तेन सर्वां सेनां प्रेरयन्ति। तृतीयं हविः प्रशंसति “सावित्रं द्वादशकपालं। तस्मात् पुरस्ताद्यवानाꣳ सविता विरुन्धते” (ब्रा०) इति। यस्माद्द्वितीये वसन्तमासे सावित्रयागः कृतः तस्मात् पुरस्तात् पूर्वस्यां दिशि गता राजानः सवित्रानुज्ञाताः सन्तो यवानां विरुन्धते यवादीनि धान्यानि परकीयाणि विशेषेणावरुन्धते यथा कृषीबलान् गृह्णन्ति तद्वदवरोधं कुर्वते। चतुर्थं प्रशंसति “बार्हस्पत्यं चरुं। सवित्रैव विरुध्य। ब्रह्मणा यवानादधते” (ब्रा०) इति। यस्मात् प्रथमे ग्रीष्मे मासि बार्हस्पत्ययागः कृतः तस्माद् ब्रह्मणा बृहस्पतिनानुज्ञाताः सन्तो यवानादधते। पूर्वं सवितृप्रसादाद्ये यवाः परदेशवर्तिभ्यः कृषीबलेभ्योऽवरुद्धाः तान् सर्वानानीय स्वगृहेषु स्थापयन्ति। पञ्चमं प्रशंसति “त्वाष्ट्रमष्टाकपालं। रूपाण्येव तेन कुर्वते” (ब्रा०) इति। यस्माद्द्वितीये ग्रीष्मे मासि त्वाष्ट्रयागः कृतः तेन कारणेन रूपनिर्मात्रा त्वष्ट्रानुज्ञाताः सन्तो रूपाण्येव परकीयधान्यानां यथेष्टभोजनेन पुष्टमन्त्येव शरीराणि कुर्वते। षष्ठं प्रशंसति “वैश्वानरं द्वादशकपालं। तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति” (ब्रा०) इति। यस्माद्वार्षिके प्रथमे मासि वैश्वानरयागः कृतः तस्माद्वैश्वानरेणानुज्ञाताः जघन्ये नैदाघे द्वितीयस्मिन् ग्रीष्ममासेऽपगते सति वर्षर्तुप्रथममासे परकीयराष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखाः कुरुपञ्चालाः राजानो यान्ति। तदेतदुपलक्षणं सर्वेऽपि राजानः

उक्तरीत्या कुर्वन्तीति द्रष्टव्यं। उत्तरषट्कस्य प्रथमं हविः प्रशंसति "सारस्वतं चरुं निर्वपति। तस्मात् प्रावृषि सर्वा वाचो वदन्ति" (ब्रा०) इति। यस्माद्द्वितीये वार्षिकमासि सारस्वतयागः कृतः तस्मात् प्रावृषि वृष्ट्या सन्तुष्टाः कृषीवलाः *त्वया कृषिकार्यं मया कृषिकार्यं क्रियते बीजानि सन्ति के वानड्वाह इत्यादिकाः सर्वा वाचः परस्परं वदन्ति। उत्तरहविःपञ्चकं प्रशंसति "पौष्णेन व्यवस्यन्ति। मैत्रेण कृषन्ते। वारुणेन विधृता आसते। चैत्रपत्येन पाचयन्ते। आदित्येनादधते" (ब्रा०) इति। शारदे प्रथमे मासि पौष्णयागस्य कृतत्वात् तेन पौष्णेन व्यवस्यन्ति पूषदेवताया अनुग्रहेण पुष्टिमानेतावतीं भूमिं कृषामीत्यादिनिश्चयं कुर्वन्ति। शारदे द्वितीये मासि मैत्रयागस्य कृतत्वान्मित्रदेवताया अनुग्रहेण निर्विघ्नाः कृषन्ति। हैमन्ते प्रथमे मासि वारुणयागस्य कृतत्वाद्वरुणदेवताया अनुग्रहेण गोमयादिकं प्रक्षिप्य नीरपूर्णं क्षेत्रं विशेषेण धृतवन्तः पोषयन्त आसते। हैमन्ते द्वितीये मासि क्षैत्रपत्ययागस्य कृतत्वात्क्षेत्रपतिदेवताया अनुग्रहेण सस्यमध्ये यथेष्टमुत्पन्नं निरर्थकं तृणादिकमुन्मूल्य फलपाकं सम्पादयन्ति। शैशिरे प्रथमे मासि आदित्ययागस्य कृतत्वाददितिदेवताया अनुग्रहेण पक्वानि धान्यानि स्वगृहेष्वादधते। यथोक्तं प्रतिमासनिर्वापं परपक्षेणोपन्यस्यति "मासि मास्येतानि हवीꣳषि निरुप्याणीत्या-

* त्वया कृषिः कार्या मया कार्या क्षिपन्ति बीजानि सन्ति वानड्वाह इति तै०

ङ्क्तः। तेनैवर्तून् प्रयुङ्क्त इति" (ब्रा०) इति। तेनैव प्रतिमासं पृथक् निर्वापेणैव सर्वानृतून् प्रयुक्तवान् भवति ऋतुधर्मान् यथायथं प्रयुक्तवान् भवति। यस्मादृतुप्रयोगस्तेषु सम्पद्यते तस्मादेतानि प्रयुजां हवींषीत्यभिप्रायः। तं पक्षं निराकृत्य पक्षान्तरं विधत्ते "अथो खल्वाहुः। कः संवत्सरं जीविष्यतीति। षडेव पूर्वेद्युर्निरुप्याणि। षडुत्तरेद्युः। तेनैवर्तून् प्रयुङ्क्ते" (ब्रा०) इति। आयुःपरिमाणस्यावगन्तुमशक्यत्वात् धर्मस्य त्वरिता गतिरिति न्यायेन दिनद्वये निरुप्याणि, तथा सति षट्सङ्ख्यायाः षड्वा ऋतव इति श्रुत्यनुसारेण ऋतुप्रयोगसिद्धिः प्रयुजां हविष्ट्वमप्युपपन्नमित्यभिप्रायः। दक्षिणाद्वयं प्रशंसति "दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा। उत्तर उत्तरेषां। संवत्सरस्यैवान्तौ युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०) इति। शकटयुगस्योभयोरन्तयोर्बद्धावेतावनड्वाहौ तयोर्दानेन संवत्सरस्योभयोर्मासषट्कयोरन्तौ सम्पादितवान् भवति तेन स्वर्गः प्राप्यते॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः॥ * ॥

---

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व पुनातु ते परि-

सुतꣳ सोमꣳ सूर्यस्य दुहिता। वारेण शश्वता तना। वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा। कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः। आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभमैन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालꣳ सोमप्रतीकाः पितरस्तृप्णुत वडबा दक्षिणा ॥ १ ॥

भोजनानि षड्विꣳशतिश्च ॥ २१ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके एकविंशोऽनुवाकः ॥ ० ॥

विंशेऽनुवाके प्रयुजां हवींष्युक्तानि। एकविंशे सौत्रामण्या मन्त्राः पशवो हवींषि चोच्यन्ते। कल्पः। अग्रेण गार्हपत्यमवटं खात्वा तस्मिन् सुरायाः कल्पेन सुरां सन्दधाति परिस्रुत् भवति स्वाद्वीं त्वा स्वादुनेति शष्पैः सुरां सꣳसृजतीति। पाठस्तु "स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृतामममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व" इति। हे सुरे स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि, अत्र सोमशब्देन व्रीहियवाद्यङ्कुरं शष्प-

शब्दाभिधेयं बालहरणमुपलक्ष्यते। सोमस्यौषधिराजत्वेनोपल-
क्षयितुं शक्यते। कीदृशीं त्वां तीव्रां उग्रगन्धां, अमृतां अमृ-
तवदाप्यायनकारिणीं। अत एव बलीवर्दाश्वादीनाप्याययितुं
पाययन्ति। कीदृशेन सोमेन तीव्रेण वमनाद्युपयुक्तौषधित्वेन
तीव्रत्वं। अमृतेन अपाम सोममसृता अभूमेत्यादिश्रुतेनामृ-
तत्वप्रापकेन, एवंविधसोमात्मकेन शष्पेण संसृष्टत्वात् त्वं सो-
मोऽसीति। तस्माद्देवतात्रयार्थं त्वं पच्यस्व। सूत्रारम्भे सुष्ठु रच-
काय। सक्तुप्रभृतिकद्रव्यविधानाय प्रस्तौति "इन्द्रस्य सुषुवा-
णस्य दशधेन्द्रियं वीर्यं परापतत्। स यत्प्रथमं निरष्ठीवत्।
तत्कलमभवत्। यद्द्वितीयं। तद्बदरं। यत्तृतीयं। तत्कर्कन्धु।
यन्नस्तः। स सिꣳहः। यदक्ष्योः। स शार्दूलः। यत्कर्णयोः।
स वृकः। य ऊर्द्धः। स सोमः। यावाची। सा सुरा" (ब्रा०
१का०।८प्र०।५अ०) इति। सोममभिषुतवतः इन्द्रस्य सामर्थ्यं
दशधा भिन्नं सत् पतितमभूत्। युक्तञ्चैतत्। अभिषवस्य बध-
रूपत्वात्। घ्नन्ति वा एतत्सोमं यदभिषुण्वन्तीति श्रुतेः। स
चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान् तेन द्रव्यत्रयमभूत्।
प्रथमनिष्ठीवनेन कलं बालखर्जूरफलमभूत्। बदरं क्रमुक-
परिमितं सूक्ष्मं बदरीफलं। कर्कन्धु हरीतकीपरिमितं स्थूलं
बदरीफलं। तदेतत्त्रयं मुखच्छिद्रान्निःसृतं। यत्तु वीर्यं ना-
शिकाच्छिद्रान्निःसृतं स सिंहमृगोऽभूत्, यच्चाक्षिच्छिद्राभ्यां निः-
सृतं स शार्दूलोऽभवत्। यदपि कर्णच्छिद्राभ्यां निर्गतं स वृकः
आरण्यश्वाभूत्। यो वीर्यभागो मूर्द्धच्छिद्रादूर्द्ध्वो निर्गतः स सोमो

ऽभवत्। या च वीर्यकला पायुगुह्याभ्यामवाची निर्गता सा सुराभवत्। यद्यपि शष्पादीन्यष्टैव द्रव्याणि तथापि छिद्र-दशकान्निर्गतत्वेन दशधा वीर्यपातोऽभिहितः। द्रव्याणि वि-धत्ते "त्रयाः सक्तवो भवन्ति। इन्द्रियस्यावरुद्धै। त्रयाणि लोमानि। त्विषिमेवावरुन्धे। त्रयो ग्रहाः। वीर्यमेवावरुन्धे" (ब्रा०) इति। त्रयास्त्रिविधाः सक्तवो भवेयुः कर्तव्या इत्यर्थः। शष्पैर्बदरैः कर्कन्धुभिश्च निष्पाद्यत्वात्त्रिविधाः, सक्तूनामिन्द्रिया-भिवृद्धिहेतुत्वात् इन्द्रियसम्पत्तिः। त्रयाणि सिंहशार्दूलवृकाणां सम्बन्धीनि त्रीणि त्रिविधानि लोमानि सम्पाद्यानि। त्रयः त्रिसङ्ख्याकाः अश्विसरस्वतीसुत्रामदेवताका ग्रहा ग्रहीतव्याः। लोमभिस्त्विषिर्दीप्तिः सम्पद्यते ग्रहैश्च वीर्यं। सौत्रामण्या द्र-व्यान्तरत्वशङ्कां वारयन् सक्तुत्रयादीनि द्रव्याणि प्रशंसति "नाम्ना दशमी। नव वै पुरुषे प्राणाः। नाभिर्दशमी। प्राणा इन्द्रियं वीर्यं। प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते" (ब्रा०) इति। सक्तुत्रयलोमत्रयग्रहत्रयैर्निष्पन्ना नवसङ्ख्या, तत्र सौत्रामणीदशमीत्वं नामरूपेणैव न तु द्रव्यरूपेण यथोक्त-द्रव्यनिष्पाद्यकर्मसङ्घनामत्वात्, पुरुषेऽपि मुख्यछिद्राणि शिर-सि सप्ताधो द्वे इति नवसङ्ख्याकानि प्राणाधारत्वात् प्राणा इत्युच्यन्ते, नाभिस्तु दशमी सा च छिद्राभासरूपत्वान्न मुख्य-छिद्रं, यथा सौत्रामणी न द्रव्यं तद्वत्। न च छिद्रगताश्च प्राणा इन्द्रियशब्देन वीर्यशब्देन चोच्यन्ते। अतोऽत्र द्रव्यगतया नवसङ्ख्यया प्राणानिन्द्रियं वीर्यञ्च यजमाने सम्पादयति।

विधत्ते "सीसेन क्लीबाच्छष्पाणि क्रीणाति। न वा एतदयो न हिरण्यं। यत्सीसं। न स्त्री न पुमान्। यत् क्लीबः। न सोमो न सुरा। यत्सौत्रामणी समृद्ध्यै" (ब्रा०) इति। सीसक्लीबशष्पाणामन्तरालवर्तित्वं साम्यं। सीसमयसोऽधिकं हिरण्यात्तु न्यूनं। क्लीबोऽपि स्त्रिया अधिकः पुरुषात्तु न्यूनः। शष्पाण्यपि सुराजनकत्वात् सुराया अधिकानि सोमवत् पूतत्वाभावात् ततो न्यूनानि, तान्येतानि सौत्रामणीहेतुतया तच्छब्देन निर्दिश्यन्ते। सोमेन संसृजामीत्यस्याभिप्रायं दर्शयति "स्वाद्वीं त्वा स्वादुनेत्याह। सोममेवैनां करोति" (ब्रा०) इति। देवतार्थपाकस्य प्रसिद्धतां दर्शयति "सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पच्यते" (ब्रा०) इति। शष्पैः संसृष्टायास्त्रिषु दिनेषु तथैव निवासं विधत्ते "तिस्रः सꣳसृष्टा वसति। तिस्रो हि रात्रीः क्रीतः सोमो वसति" (ब्रा०) इति। क्रीतसोमस्य चिरात्रवासोऽन्यत्र प्रसिद्धः। तथा च श्रूयते 'तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्य्यमुष्णात् स तिस्रो रात्रीः परिमुषितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतः सोमो वसति' (सं० ६ का०) इति। कल्पः। पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयतीति। यथा शुद्ध्यर्थं जलं वस्त्रेण गालितं भवति तद्वदियं वालपवित्रेण गालिता कार्या। पाठस्तु "पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता। वारेण शश्वता तना। वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा" इति। हे इन्द्र ते त्वदर्थं

सूर्यस्य दुहिता सुरां पावयतु, सूर्यसम्बन्धिनो दुहितृस्थानीया दीप्तिः परिस्रुतं द्रवीभूतं सोमं पूर्वमन्त्रेण सोमीकृतं सुराद्रव्यं वारेण बालजन्येन पवित्रेण पुनातु शोधयतु। कीदृशेन वारेण शश्वता शाश्वतेन दृढेन, तना विस्तीर्णेन। पवित्रेणानेन पूतः सोमो वायुवच्छीघ्रगामी भूत्वा प्रत्यङ् अधोवर्ती पात्राभिमुखः सन् अभितः शीघ्रं द्रुतोऽभवत्। कीदृशः सोमः इन्द्रस्य युज्यः योग्यः सखा। विधत्ते "पुनातु ते परिस्रुतमिति। यजुषा पुनाति व्यावृत्त्यै" (ब्रा०) इति। लौकिकजलादिकं न मन्त्रेणाविलं पुनन्तीति ततो व्यावृत्तिर्भवति। साधनं विधत्ते "पवित्रेण पुनाति। पवित्रेण हि सोमं पुनन्ति" (ब्रा०) इति। दशापवित्रेण सोमस्य शोधनं प्रसिद्धं। सोमसाम्याय वालस्वीकार इति दर्शयति "वारेण शश्वता तनेत्याह। वारेण हि सोमं पुनन्ति"(ब्रा०)इति। वालेन सोमशोधनं सोमप्रकरणे सूत्रकारेण दर्शितं 'शुक्लामूर्णास्तुकां यजमानः प्रयच्छति तां स काले दशापवित्रस्य नाभिं कुरुते' इति। वायुः पूत इत्यस्या ऋचः प्रयोगं पुरुषभेदेन व्यवस्थापयति "वायुः पूतः पवित्रेणेति। नैतया पुनीयात्। व्यृद्धा ह्येषा। अतिपवितस्यैतया पुनीयात्"(ब्रा०) इति। द्विविधा हि सोमपाः सोमवामी जीर्णसोमश्चेति, तत्र सोमवामिनः सोमो बहिर्निर्गत इति प्राङ् सोमो अतिद्रुत इत्येतादृशः पाठस्तस्मिन् युक्तः, प्रत्यङ्ङित्यस्यार्थस्य तस्मिन्नभावात् तं प्रत्येषा व्यृद्धा समृद्धिहीना, यस्त्वतिपवितो जीर्णसोमस्तं प्रत्यर्थसद्भावात् समृद्धैव। तदेतत्

सूत्रकारेण विशदीकृतं 'प्राङ् सोमो अतिद्रुत इति सोमवामिनः प्रत्यङ् सोमो अतिद्रुत इति सोमातिपवितस्य' इति। कल्पः। अपरस्मिन् खरे सुराग्रहान् गृह्णाति कुविदङ्गेति। पाठस्तु "कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः" इति। अङ्गशब्दः प्रियसम्बोधनवाची। हे प्रियाः अश्विसरस्वतीसुत्रामेन्द्राः ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशं न जग्मुर्न प्रापुः किन्त्वत्यन्तश्रद्धालवोऽनुतिष्ठन्ति, तेषामेषां यज्वनां हविर्विषयाणि भोजनानि इहेह कृणुत ग्रहणपात्राणामनेकत्वाद्वीप्सा। तत्रोपमानमुच्यते। कुविच्छब्दो बह्वर्थवाची, चिच्छब्दः समुच्चये। यथा लोके यवमन्तो यवादिधान्योपेताः कृषिकाः कुविद्यवं चित् बहुलं यवं अन्यानि च गोधूमप्रियङ्ग्वादिधान्यान्यनुपूर्वं तत्परीक्षाक्रमेण वियूय इदं पक्वमिदमपक्वमिति पृथक्कृत्य दान्ति लुनन्ति, तथा यूयमपि नमस्कारादिरहिता नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुंग्ध्वं। विधत्ते "कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति। अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै" (ब्रा०) इति। अस्यामृचि प्रस्तुतान्यश्विसरस्वत्यादिनामानि न श्रुतानि। किन्त्वङ्गेति साधारणशब्दः श्रुतः, तस्मादियं देवतेति विशेषनिरुक्तवर्जितेयमृक्, प्रजापतिर्जगदीश्वरोऽपि मूर्तिरहितत्वादनिरुक्तः। अत एव जगत्कारणप्रतिपादनपरे नासदासीयसूक्ते सूयते 'को अद्धा

वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः' इति 'यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदिवा न वेद' इति च, अतो निरुक्तराहित्यसाम्यादस्याः प्राजापत्यत्वं। अत्र ग्रहाणां भिन्नत्वेन मन्त्रान्तरप्रसक्तिं वारयितुं विधत्ते "एकयर्चा गृह्णाति। एकधैव यजमाने वीर्यं दधाति"(ब्रा०) इति। मन्त्रानुक्त्वा पशून् विधत्ते "आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभं" इति। मलिनश्वैत्यवर्णोपेतो धूम्रः। अत्रत्या देवताः प्रशंसति "आश्विनं धूम्रमालभते। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति। सारस्वतं मेषं। वाग्वै सरस्वती। वाचैवैनं भिषज्यति। ऐन्द्रमृषभꣳ सेन्द्रत्वाय" (ब्रा०) इति। पशून् विधाय पुरोडाशान् विधत्ते "ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालं" इति। कल्पः। दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयति तस्या बिल उदीचीनदशं पवित्रं वितत्य यस्मै मनः परागतमिति तस्मिन् शतमानं हिरण्यं निधाय "सोमप्रतीकाः पितरस्तृप्णुत" इति तस्मिन् सुराशेषमानयतीति। सोमप्रतीकाः सोमप्रमुखाः। दक्षिणां विधत्ते "वडबा दक्षिणा" इति। अश्वस्य योषिद्वडबेति। पशुभेदेन प्रसक्तं यूपभेदमपोद्य यूपैक्यं विधत्ते "यत्त्रिषु यूपेष्वालभेत। बहिर्धास्मादिन्द्रियं वीर्यं दध्यात्। भ्रातृव्यमस्मै जनयेत्। एकयूप आलभते। एकधैवास्मिन्निन्द्रियं वीर्यं दधाति। नास्मै भ्रातृव्यं जनयति" (ब्रा०२का०८प्र०६अ०) इति। अस्माद्बहिर्धा यजमानशरीराद्बहिर्देशे। प्रकृतौ यद्देवत्यः

पशुसदेवत्यः पुरोडाश इत्यभिधानादत्रापि तत्प्राप्तौ निषेधति "नैतेषां पशूनां पुरोडाशा भवन्ति। ग्रहपुरोडाशा ह्येते" (ब्रा०) इति। ग्रहा एवात्र पुरोडाशस्थानीया इत्यर्थः। यदुक्तं सूत्रकारेण 'सर्वेषामेका पुरोरुक् एका पुरोऽनुवाक्यैकः प्रैष एका याज्या' इति। तत्र त्रयाणां ग्रहाणां याज्यानुवाक्ये विधत्ते "युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः। सर्वा एव देवताः प्रीणाति" (ब्रा०) इति। युवꣳ सुराममित्यादृग्द्वयं ब्राह्मणग्रन्थे प्रथमकाण्डस्य चतुर्थप्रपाठके द्वितीयानुवाके समाम्नातं। अतस्तत्रैव व्याख्यास्यते। तत्र चाश्विशब्दो यथा श्रुतस्तथैवेन्द्रावतमितीन्द्रशब्दोऽपि श्रुतः, सरस्वती त्वेति सरस्वतीशब्दोऽपि श्रुतः, ततोऽनयोः सर्वदेवत्यत्वं प्रकृतानां सर्वेषां देवानां प्रतीयमानत्वात्। विधत्ते "ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं। ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता" (ब्रा०) इति। हुतायाः सुरायाः शेष उच्छेषणं। तत्रैवानुकल्पं विधत्ते "यदि ब्राह्मणं न विन्देत्। वल्मीकवपायामवनयेत्। सैव ततः प्रायश्चित्तिः"(ब्रा०) इति। येयमवनयनक्रिया सैव ततस्तत्र ब्राह्मणपानाभाववैकल्ये प्रायश्चित्तिः। पशूनां पुरोडाशानाञ्च विलक्षणदेवत्यत्वं प्रशंसति "यद्वै सौत्रामण्यै व्यृद्धं। तदस्यै समृद्धं। नानादेवत्याः पशवश्च पुरोडाशाश्च भवन्ति समृद्ध्यै" (ब्रा०) इति। कर्मान्तरे पशोः पुरोडाशस्य चैकदेवत्यत्वविधानात् भिन्नदेवत्यत्वं समृद्धिहीनं भवति। यदेवान्यत्र समृद्धिहीनं भिन्नदेवत्यत्वं सौत्रामण्यां

क्रियते तद्भिन्नदेवत्यत्वं सौत्रामण्यामस्यां वाचनिकत्वात् समृद्धं सम्पद्यते, तस्मादत्र समृद्धौ पशवश्च पुरोडाशाश्च भिन्नदेवत्या भवन्ति। ऐन्द्रस्य पशोः पुरोडाशस्य च नैरन्तर्यं प्रशंसति "ऐन्द्रः पशूनामुत्तमो भवति। ऐन्द्रः पुरोडाशानां प्रथमः। इन्द्रिये एवास्मै समीचो दधाति" (ब्रा०) इति। ऐन्द्रमृषभमिति पशुविधीनामन्ते पठितं, तदनन्तरमेव ऐन्द्रमेकादशकपालं निर्वपतीति पुरोडाशविधीनामादौ पठितं, तस्मादैन्द्रयोर्नैरन्तर्यात् अस्य यजमानस्य दक्षिणवामभागस्थे द्वे अपीन्द्रिये सम्यक् स्थापिते भवतः। प्रकृतौ पशूनामङ्गयागात् पूर्वं पुरोडाशप्रचारो विहितः, अत्र त्वङ्गयागादूर्ध्वं तदीयेभ्योऽनूयाजेभ्यः पुरा तं प्रचारं विधत्ते "पुरस्तादनूयाजानां पुरोडाशैः प्रचरति। पशवो वै पुरोडाशाः। पशूनेवावरुन्धे" (ब्रा०) इति। पशुप्रयोगमध्ये प्रचारात् पुरोडाशानां पशुत्वं। पुरोडाशदेवताः प्रशंसति "ऐन्द्रमेकादशकपालं निर्वपति। इन्द्रियमेवावरुन्धे। सावित्रं द्वादशकपालं प्रसूत्यै। वारुणं दशकपालं। अन्तत एव वरुणमवयजते" (ब्रा०) इति। वडवायाः सौत्रामण्याश्च साम्येन दक्षिणां प्रशंसति "वडवा दक्षिणा। उत वा एषाश्वꣳ सूते। उताश्वतरं। उत सोम उत सुरा। यत् सौत्रामणी समृद्धौ" (ब्रा०) इति। एषा वडवा यदश्वमश्वतरं वोभयं प्रसूते, अश्वगर्दभजातिद्वयसङ्गमादुत्पन्नोऽश्वतरः। या सौत्रामणी सापि तद्वत् सोमः सुरा वेत्युभयरूपा भवति। अतः सदृशदक्षिणा समृद्धिकरी। सोमवामिन उक्तास्त्वय

एव पशवः । सोमातिपवितस्य तु विशेषं विधत्ते "बार्हस्पत्यं पशुं चतुर्थमतिपवितस्यालभते । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति" (ब्रा०) इति । व्यृद्धं विकलाङ्गं अपिवपति समृद्धं करोति । पूर्वपशुवत् समानदेवत्यपुरोडाशाभावप्रसक्तौ प्रकृतिवत्त्वादृशस्य पुरोडाशस्य प्रतिप्रसवं विधत्ते "पुरोडाशवानेष पशुर्भवति । न ह्येतस्य ग्रहं गृह्णन्ति" (ब्रा०) इति । पूर्वेषां पशूनां समानदेवत्या ग्रहा एव पुरोडाशस्थानीया इत्युक्तं, अत्र तु ग्रहाभावात् पुरोडाशः कार्यः । विधत्ते "सोमप्रतीकाः पितरस्तृप्णुतेति शतातृण्णायाः समवनयति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति । शतातृण्णा शतच्छिद्रा स्थाली । दक्षिणाग्नेरुपरि शतातृण्णायां बन्धनं यत्सूत्रकारेणोक्तं तदिदं विधत्ते "दक्षिणेऽग्नौ जुहोति । पापवस्यसस्य व्यावृत्त्यै" (ब्रा०) इति । पापवस्यसं पापेन धनवत्तरत्वं । निषिद्धां हि सुरां स्वकीयद्रव्यत्वेन सम्पादयन् पुरुषः पापाचरणेन धनवत्तरो भवति । तस्य व्यावृत्तिः कर्तव्या सोमाज्यादिवदाहवनीय एव तद्धोमे व्यावृत्तिर्न भवेत् तस्माद्दक्षिणेऽग्नौ जुहुयात् । शतातृण्णायां हिरण्यस्थापनं विधत्ते "हिरण्यमन्तरा धारयति । पूतामेवैनां जुहोति" (ब्रा०) इति । अन्तरा दक्षिणाग्निसुरयोर्मध्ये सा च सुरा हिरण्यस्पर्शेन पूता भवति । परिमाणं विधत्ते "शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति । दक्षिणाग्नौ शतातृण्णायाः

स्थापनं विधत्ते "यत्रैव शृतात्तृण्णा धारयति। तन्निदधाति प्रतिष्ठित्यै" (ब्रा०) इति। त्वं सोम प्रचिकित इत्यादिभिरुपस्थानं विधत्ते "पितृन् वा एतस्येन्द्रियं वीर्यं गच्छति। यᳲ सोमोऽतिपवते। पितृणां याज्यानुवाक्याभिरुपतिष्ठते। यदेवास्य पितृनिन्द्रियं वीर्यं गच्छति। तदेवावरुन्धे" (ब्रा०) इति। यं यजमानं पीतः सोमोऽतिशयेन शोधयति स्वयं तदुदरे जीर्णत्वादेतस्येन्द्रियमिति पूर्वत्रान्वयः। सङ्ख्यां विधत्ते "तिसृभिरुपतिष्ठते। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति" (ब्रा०) इति। तदेतदापस्तम्बेन स्पष्टीकृतं 'स्रवन्ति सौमीभिः पितृमतीभिस्तिसृभिस्तिसृभिरुत्तरोत्तराभिरुपतिष्ठन्ते त्वᳲ सोम प्रचिकित इत्येताः समाम्नाता भवन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतेति। त्वᳲ सोम प्रचिकितः, त्वया हि नः पितरः, त्वᳲ सोम पितृभिरित्यध्वर्योरेतास्तिस्रः। बर्हिषदः पितरः, आहं पितृन्, उपहूताः पितर इति ब्रह्मण एतास्तिस्रः। अग्निष्वात्ताः पितरः, ये अग्निष्वात्ताः, वान्यायै दुग्धे इति होतुरेतास्तिस्रः। तानेतानुपस्थातॄन् विधत्ते "अथो त्रीणि वै यज्ञस्येन्द्रियाणि। अध्वर्युर्होता ब्रह्मा। त उपतिष्ठन्ते। यान्येव यज्ञस्येन्द्रियाणि। तैरेवास्मै भेषजं करोति" (ब्रा०) इति। इन्द्रियवद्व्यवहारनिर्वाहकत्वादृत्विजां यज्ञेन्द्रियत्वं। तदेवमेतदन्तेनानुब्राह्मणेन मन्त्रकाण्डोक्ताः प्रधानकर्मविधयः तन्मन्त्राश्च व्याख्याताः। अथानुब्राह्मणशेषेण व्याख्येयमन्त्रकाण्डनिरपेक्षो राजसूयप्रयोगोऽभिधीयते। तत्रारम्भकाले कर्तव्यं

पवित्राख्यं सोमयागं विधत्ते "अग्निष्टोममग्र आहरति। यज्ञमुखं वा अग्निष्टोमः। यज्ञमुखमेवारभ्य सवमाक्रमते" (ब्रा०१का०।८प्र०।७अ०) इति। सोमयागानां सर्वेषां प्रकृतित्वेनाग्निष्टोमस्य यज्ञमुखत्वं, सवमभिषेकयुक्तं राजसूयमाक्रमते प्राप्नोति। विधत्ते "अथैषोऽभिषेचनीयश्चतुस्त्रिꣳश-पवमानो भवति। त्रयस्त्रिꣳशद्वै देवताः। ता एवाप्नोति। प्रजापतिश्चतुस्त्रिꣳशः। तमेवाप्नोति" (ब्रा०) इति। अथाग्निष्टोमादूर्द्ध्वं न तु तदनन्तरं आनुमतादिभीरत्निहविःपर्यन्तैर्यागैरग्निष्टोमाभिषेचनीययोर्व्यवहितत्वात्। प्रकृतौ बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानानां क्रमेण त्रिवृत्पञ्चदशसप्तदशस्तोमा विहिताः। अत्र तु तान् परित्यज्य चतुस्त्रिंशस्तोमः प्रयोक्तव्यः। समिधमातिष्ठेत्यनुवाके त्रयस्त्रिंशस्तोमविधायकब्राह्मणमुदाहृतं तत्रैवावस्थितिविशेषेणैकां स्तोत्रीयामधिकां सम्पाद्य चतुस्त्रिंशस्तोमं कुर्यात्, स चावृत्तिविशेषः सामसूत्रे द्रष्टव्यः। ये देवा दिव्येकादशेति मन्त्रे त्रयस्त्रिंशद्देवा उक्ताः। यद्वा वाजसनेयिनः शाकल्यब्राह्मणेऽधीयन्ते, अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति, पूर्वोक्ताः कर्मभुज एताः सूपास्या इति तत्तत्प्रकरणादवगम्यते। एतासां त्रयस्त्रिंशद्देवतानां प्रजारूपाणां पालकोऽन्यः प्रजापतिश्चतुस्त्रिंशः, यथोक्तस्तोमे तु यथोक्तसर्वदेवताप्राप्तिर्भवति। पवमानशब्देन प्रथमस्य बहिष्पवमानस्यैव सङ्ख्या बुद्धिस्थत्वात्तत्रैवायं चतुस्त्रिंशस्तोम

इति भ्रमं व्युदसितुं त्रिष्वपि पवमानेष्वेतं स्तोमं विधत्ते "सञ्चर एष स्तोमानामयथापूर्वं। यद्विषमाः स्तोमाः। एतावान् वै यज्ञः। यावान् पवमानाः। अन्तःश्लेषणं त्वा अन्यत्। यत्समाः पवमानाः। तेनासञ्चरः। तेन यथापूर्वं" (ब्रा०) एतस्मिन् पवमाने चतुस्त्रिंशस्तोमं कृत्वेतयोस्तदकरणे सति यद्वैषम्यं भवति स एष स्तोमानां संचरः सम्यक् हिंसनं भवति। द्वितीयतृतीयपवमानयोश्चोदकप्राप्तौ यौ पञ्चदशसप्तदशस्तोमौ तयोः प्रथमपवमानप्रयुक्ताच्चतुस्त्रिंशस्तोमान्न्यूनत्वेन हिंसैव भवति। किञ्चायथापूर्वत्वं परो दोषः। स्तोमेषु दुष्टेषु यज्ञस्य किमायातमिति न शङ्कनीयं, पवमानस्तोमदोषस्य यज्ञभ्रंशे पर्यवसानात्। एते त्रयः प्रवमाना इति यावानेतावानेव मुख्यो यज्ञः, अन्यत् सर्वं यज्ञस्यान्तःश्लेषणं। यथा भित्तेर्दार्ढ्यायान्तर्दृढकाष्ठं पाषाणो वा प्रक्षिप्यते तद्वद्यज्ञस्यान्यदङ्गजातं सम्पूर्त्यर्थमेव क्रियते, न तु मुख्यस्वरूपं। त्रयाणामपि पवमानानां चतुस्त्रिंशस्तोमे सति पूर्वोक्तदोषद्वयं न भवति। अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते "आत्मनैवाग्निष्टोमेनर्ध्नोति। आत्मना पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि। यदुक्थ्यो भवत्यनुसन्तत्यै" (ब्रा०) इति। अग्निष्टोमे द्वादशैव शस्त्राणि उक्थ्ये तु तेभ्य ऊर्द्धं त्रीणि शस्त्राणि, तथा सति द्वादशशस्त्रयुक्तेनाग्निष्टोमभागेनायं यजमान आत्मनैव स्वयमेव धनादिभिः समृद्धो भवति स्वर्गहेतुपुण्या युक्तश्च भवति। तत उत्तरभाविनां त्रयाणां प्रजा-

पशुरूपत्वात् पञ्चदशस्तोत्रयुक्तोक्थ्यरूपत्वे सति प्रजासु पशुषु च समृद्धिरनुसन्तता भवति। बहिष्पवमानस्तोत्रस्य प्रारम्भे चोदकप्राप्तामुपास्मै गायता नर इत्येतामृचं बाधितुमृगन्तरं विधत्ते "उप त्वा जामयो गिर इति प्रतिपद्भवति। वाग्वै वायुः। वाच एवैषोऽभिषेकः। सर्वासामेव प्रजानाꣳ सूयते। सर्वा एनं प्रजा राजेति वदन्ति" (ब्रा०१का०।८प्र०।८अ०) इति। प्रतिपद्यत उपक्रम्यते अनयेति प्रतिपत् आदौ पठनीयेत्यर्थः। अस्यामृचि वायोरनीके अस्थिरन्निति गिरां वायुसमीपे स्थितिः पद्यते, स च वायुः वाक्स्वरूपः, कोष्ठाग्निप्रेरितस्य वायोः कण्ठताल्वाद्यभिघातेनाक्षरविशेषोत्पत्तेः। अभिषेचनीये योऽभिषेकः क्रियते सोऽयं वाच एवाभिषेकः। तत्कथमित्युच्यते सर्वासामेव प्रजानां मध्ये सूयतेऽभिषिच्यते सर्वास्य प्रजा एनं राजेति वदन्त्यः सेवन्ते, तस्मात् तादृशवाक्प्रेरकवायुप्रतिपादिका सेयमृगादौ पठ्या। ऋगन्तरपाठं विधत्ते "एतमुत्यं दश क्षिप इत्याह। आदित्या वै प्रजाः। प्रजानामेवैतेन सूयते" (ब्रा०) इति। इत्याह इत्येतामृचं पठेत्, अस्यामृचि समादित्येभिरख्यातेत्यादित्याः श्रूयन्ते ते चादित्या एव प्रजा अदितेरुत्पन्नत्वात्तेन मन्त्रपाठेन प्रजानामेव मध्येऽभिसूयतेऽभिषिच्यते। ऋगन्तरपाठं विधत्ते "यन्ति वा एते यज्ञमुखात्। ये सम्भार्या अक्रन्। यदाह पवस्व वाचो अग्रिय इति। तमेव यज्ञमुखान्न यन्ति" (ब्रा०) इति। सम्यक् भ्रियन्ते धीयन्ते पोष्यन्ते वा हचा याभिराधा-

भिर्ऋग्भिः तास्तृचानामाद्या ऋचः सम्भार्याः, तादृश ऋचः ये उद्गातारः अन्तन् कुर्वन्ति पठन्ति त एत उद्गातारो यज्ञमुखाद्यन्ति वै अपगच्छन्त्येव। पवस्वेत्यृचः पाठे तु तत्र हे सोम त्वमग्रियः अग्रेभवः आदिभूतः सन् वाचः शोधयेत्यभिधानात् यज्ञमुखादपगमनं न भवति। उष्णिक्छन्दयुक्ताः काश्चिदृचो विधत्ते "अनुष्टुक् प्रथमा भवति। अनुष्टुगुत्तमा। वाग्वा अनुष्टुक्। वाचैव प्रयन्ति। वाचोद्यन्ति। उद्वतीर्भवन्ति। उद्वद्वा अनुष्टुभो रूपं। आनुष्टुभो राजन्यः। तस्मादुद्वतीर्भवन्ति" (ब्रा०) इति। स्तोत्रस्यादावन्ते चानुष्टुभावृचौ भवतः तथा सत्यनुष्टुप्छन्दसः वागिन्द्रियत्वेन वाग्रूपत्वाद्वाचैव प्रारम्भसमाप्ती कृते भवतः। यद्वदुप त्वा जामयो गिर इत्यादयो गायत्र्यः तथाप्युष्णिक्छन्दयुक्ताभिर्ऋग्भिरनुष्टुप्त्वं सम्पद्यते, अनुष्टुभो हि स्वरूपं उष्णिक्छन्दयुक्तं तस्योत्कृष्टत्वात्। यद्वा सौरीष्वनुष्टुप्छन्दस्कासु उद्यन्नद्य मित्र इत्यादिषूक्छब्ददर्शनादनुष्टुग्रूपं उष्णिक्छन्देरुपेतं। अनुष्टुभः सम्बन्धी राजन्यः अनुष्टुप्छन्दसां प्रतिष्ठति श्रुतेः। यथा छन्दसां मध्येऽनुष्टुभ उत्तमत्वं तद्वद्राज्ञः सर्वपालकत्वेनोत्तमत्वात्। तस्मात् प्रशस्तत्वादुष्णिक्छन्दयुक्ता ऋचः कार्याः। स्तोत्रसमापिकामृचं विधत्ते "सौर्यनुष्टुगुत्तमा भवति। सुवर्गस्य लोकस्य समष्ट्यै" (ब्रा०) इति। पूर्वोक्ता उद्वतीरिमाश्च सौरीं सामसूक्तं आमीयात्। सूर्यस्य स्वर्गवाचित्वात् सौर्या समापने स्वर्गः सक्तो भवति। प्राकृतानि पृष्ठस्तोत्राण्यपवदितुमन्यानि पृष्ठस्तोत्राणि विधत्ते "यो वै सवादेति। नैनꣳ सव

उपनमति। यः साम्नोऽभ्य एति। पापीयान्त्सुषुवाणो भवति। एतानि खलु वै सामानि। यत्पृष्ठानि। यत्पृष्ठानि भवन्ति। तैरेव सवाप्नोति" (ब्रा०) इति। यो यजमानः सवादेति प्रस्तुतात् सोमाभिषवात् अपगच्छति एनं सवो नोपनमति भावी सोमाभिषवो न प्राप्नोति। तर्हि वर्तमानं सोमाभिषवं करोत्विति चेत्, नैवं, यः साम्भ्योऽपगच्छति असौ सुषुवाणः पापीयान् भवति। वर्तमानं सोमाभिषवं कुर्वतोऽपि सामराहित्यात् पापिष्ठत्वं। तर्हि सामान्यपि कानिचित् गायत्विति चेत्, नैवं, न हि यानि कानिचित् सामान्यत्र मुख्यानि किन्तु पृष्ठस्तोत्रगतान्येव, तस्मात् प्रयुज्यमानैः तैरेव पृष्ठस्तोत्रैः सवाप्नोति सोमाभिषवान्नापगच्छति। पृष्ठविशेषस्वरूपं चान्यतोऽवगन्तव्यं। पृष्ठस्तोत्रगतान्युभयविधसामानि प्रशंसति "यानि देवराजानाꣳ सामानि। तैरमुष्मिँल्लोक ऋध्नोति। यानि मनुष्यराजानाꣳ सामानि। तैरस्मिँल्लोक ऋध्नोति। उभयोरेव लोकयोर्ऋध्नोति। देवलोके च मनुष्यलोके च" (ब्रा०) इति। एतच्च सामद्वैविध्यमन्यतो द्रष्टव्यं। प्राप्तानेव स्तोमान् प्रशंसति "एकविꣳशोऽभिषेचनीयस्योत्तमो भवति। एकविꣳशः केशवपनीयस्य प्रथमः। सप्तदशो दशपेयः। विड् वा एकविꣳशः। राष्ट्रꣳ सप्तदशः। विश एवैतन्मध्यतोऽभिषिच्यते। तस्माद्वा एष विशां प्रियः। विशो हि मध्यतोऽभिषिच्यते" (ब्रा०) इति। अभिषेचनीयो दशपेयः केशवपनीय एवमुक्तानां त्रयाणां सोमयागानामनुक्रमः, तत्राभिषेचनीयस्तोकृथ्यविशति-

त्वात् उक्थ्ये षोडशमस्तोत्रस्यैकविंशस्तोमयुक्तत्वात् अभिषेचनीय-स्याप्युत्तम एकविंशो भवति। दशपेये सर्वेषु स्तोत्रेषु सप्तदश-स्तोमो वाचनिकः। केशवपनीयेऽप्यग्निष्टोमगताः स्तोमा विप-र्ययेण प्रयुज्यन्ते। अग्निष्टोमे च त्रिवृत्पञ्चदशः सप्तदश एक-विंश इत्येष क्रमः। केशवपनीये त्वेकविंशः सप्तदशः पञ्चदश-स्त्रिवृदित्येतादृशः क्रमो भवति। तत्राभिषेचनीये योऽन्त्य एकविंशः यश्च केशवपनीये प्रथम एकविंशः तयोरुभयोः प्रजारूपयोर्मध्ये दशपेयगतस्य सप्तदशस्तोत्ररूपस्यावस्थितत्वादे-तद्राष्ट्रं विश एवैतन्मध्यतः तत् द्वयोर्विशोर्मध्येऽभिषिक्तं भव-ति। यस्मात् सप्तदशस्तोमरूपस्य राष्ट्रस्य पालक एष राजा यथोक्तरीत्या विशां मध्ये प्रजानां मध्येऽभिषिच्यते, तस्मादेव कारणादिशां प्रजानां प्रियो भवति। अवरोहक्रमानुष्ठित-स्तोमयुक्तं केशवपनीयं विधत्ते "यदा एनमदोदिशोऽनुव्यास्था-पयन्ति। तत्सुवर्गं लोकमभ्यारोहति। यदिमं लोकं न प्रत्यव-रोहेत्। अति जनं वेयात्। उद्वा माद्येत्। यदेष प्रतीचीनस्तो-मो भवति। इममेव तेन लोकं प्रत्यवरोहति। अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय"(ब्रा०) इति। अद इत्यनेन प्रत्य-च्चत्वं हस्तेनाभिनीय प्रदर्श्यते। यदा समिधमातिष्ठेत्यादिभि-र्मन्त्रैरस्माकं दृष्टिपथ एवैनं राजानं दिशो व्यास्थापयन्ति तदा-नीमेवायं स्वर्गलोकमभ्यारोहति, अभ्यारुह्य च पुनरिमं लोकं प्रति नावरोहेत् चेत् तदानीमयत्यं बन्धुजनमतिक्रम्य यत्र क्वापि गच्छेत् उन्मत्तो भवेत्। प्रतीचीनस्तोमः अग्निष्टोमाद्

विपर्ययेण प्रत्यावृत्ताः सोमा यस्य केशवपनीयस्य स एष यद्यत्र भवेत् तर्हि केशवपनीयेनेममेव लोकं प्रत्यवरोहति। किञ्चोन्मादाभावायास्मिन्नेव लोके प्रतितिष्ठति। यो रुक्मोऽ-भिषेककाले पुरुषस्याधस्तादवस्थापितः यश्चान्यः शिरसि स्नातुं धृतः तावुभौ प्रशंसति "इयं वै रजता। असौ हरिणी। य-द्रुक्मौ भवतः। आभ्यामेवैनमुभयतः परिगृह्णाति" (ब्रा०१का०। ८प्र०।८अ०) इति। अधस्तनो रुक्मो राजतो भूमिस्वरूपः, उपरितनस्तु हिरण्मयो द्युलोकः, तत आभ्यां द्यावापृथिवी-रूपाभ्यां अधस्तादुपरिष्टाच्च परिगृहीतो भवति। ननु 'अमृ-तमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति' इति श्रवणात् अध-स्तनोऽपि रुक्मो राजतो न भवति। नायं दोषः। रजतस्यापि हिरण्यावान्तरभेदत्वात् 'तस्माद्रजतꣳ हिरण्यमदक्षिण्यं' इति पुनराधाने श्रवणात्। शेषब्राह्मणेऽपि द्वैविध्यमाम्नातं 'तद्दु-र्वर्णꣳ हिरण्यमभवत्। तत्सुवर्णꣳ हिरण्यमभवत्' इति च। उपरितनं रुक्मं पुनः प्रशंसति "वरुणस्य वा अभिषिच्यमान-स्यापः। इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णꣳ हिरण्यमभवत्। यद्रुक्ममन्तर्दधाति। इन्द्रियस्य वीर्यस्यानिर्घाताय" (ब्रा०) इति। आपो वीर्यं निरघ्नन् निर्गमितवत्यः। तच्च निर्गतं वीर्यं सुवर्णमभवत्। तस्य च रुक्मस्य परिमाणं छिद्राणि च विधत्ते "शतमानो भवति शतचरः। शतायुः पुरुषः शते-न्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति। हिरण्य-द्वयं प्रशंसति "आयुर्वै हिरण्यं। आयुष्या एवैनमभ्यतिक्षरन्ति।

मात् उकृथ्ये षोडशस्तोत्रस्यैकविंशस्तोमयुक्तत्वात् अभिषेचनीय-स्याप्युत्तम एकविंशो भवति। दशपेये सर्वेषु स्तोत्रेषु सप्तदश-स्तोमो वाचनिकः। केशवपनीयेऽप्यग्निष्टोमगताः स्तोमा विप-र्ययेण प्रयुज्यन्ते। अग्निष्टोमे च त्रिवृत्पञ्चदशः सप्तदश एक-विंश इत्येष क्रमः। केशवपनीये त्वेकविंशः सप्तदशः पञ्चदश-स्त्रिवृदित्येतादृशः क्रमो भवति। तत्राभिषेचनीये योऽन्त्य एकविंशः यश्च केशवपनीये प्रथम एकविंशः तयोरुभयोः प्रजारूपयोर्मध्ये दशपेयगतस्य सप्तदशस्तोत्ररूपस्यावस्थितत्वादे-तद्राष्ट्रं विश एवैतन्मध्यतः तत् द्वयोर्विशोर्मध्येऽभिषिक्तं भव-ति। यस्मात् सप्तदशस्तोमरूपस्य राष्ट्रस्य पालक एष राजा यथोक्तरीत्या विशां मध्ये प्रजानां मध्येऽभिषिच्यते, तस्मादेव कारणाद्विशां प्रजानां प्रियो भवति। अवरोहक्रमानुष्ठित-स्तोमयुक्तं केशवपनीयं विधत्ते "यदा एनमदोदिशोऽनुव्याप्या-पयन्ति। तत्सुवर्गं लोकमभ्यारोहति। यदिमं लोकं न प्रत्यव-रोहेत्। अति जनं वेयात्। उद्वा माद्येत्। यदेष प्रतीचीनस्तो-मो भवति। इममेव तेन लोकं प्रत्यवरोहति। अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय"(ब्रा०) इति। अद इत्यनेन प्रत्य-चत्वं हस्तेनाभिनीय प्रदर्श्यते। यदा समिधमातिष्ठेत्यादिभि-र्मन्त्रैरस्माकं दृष्टिपथ एवैनं राजानं दिशो व्याप्यापयन्ति तदा-नीमेवायं स्वर्गलोकमभ्यारोहति, अभ्यारुह्य च पुनरिमं लोकं प्रति नावरोहेत् चेत् तदानीमयं बन्धुजनमतिक्रम्य यत्र क्वापि गच्छेत् उन्मत्तो भवेत्। प्रतीचीनस्तोमः अग्निष्टोमाद्

विपर्ययेण प्रत्यावृत्ताः लोमा यस्य केशवपनीयस्य स एष यद्यत्र भवेत् तर्हि केशवपनीयेनेममेव लोकं प्रत्यवरोहति। किञ्चोन्मादाभावायास्मिन्नेव लोके प्रतितिष्ठति। यो रुक्मोऽभिषेककाले पुरुषस्याधस्तादवस्थापितः यश्चान्यः शिरसि स्नातुं धृतः तावुभौ प्रशंसति "इयं वै रजता। असौ हरिणी। यद्रुक्मौ भवतः। आभ्यामेवैनमुभयतः परिगृह्णाति" (ब्रा०१का०। ८प्र०।८अ०) इति। अधस्तनो रुक्मो राजतो भूमिस्वरूपः, उपरितनस्तु हिरण्मयो द्युलोकः, तत आभ्यां द्यावापृथिवीरूपाभ्यां अधस्तादुपरिष्टाच्च परिगृहीतो भवति। ननु 'अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति' इति श्रवणात् अधस्तनोऽपि रुक्मो राजतो न भवति। नायं दोषः। रजतस्यापि हिरण्यावान्तरभेदत्वात् 'तस्माद्रजतꣳ हिरण्यमदक्षिण्यं' इति पुनराधाने श्रवणात्। छान्दोग्यब्राह्मणेऽपि द्वैविध्यमाम्नातं 'तद्दुर्वर्णꣳ हिरण्यमभवत्। तत्सुवर्णꣳ हिरण्यमभवत्' इति च। उपरितनं रुक्मं पुनः प्रशंसति "वरुणस्य वा अभिषिच्यमानस्यापः। इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णꣳ हिरण्यमभवत्। यद्रुक्ममन्तर्दधाति। इन्द्रियस्य वीर्यस्यानिर्घाताय" (ब्रा०) इति। आपो वीर्यं निरघ्नन् निर्गमितवत्यः। तच्च निर्गतं वीर्यं सुवर्णमभवत्। तस्य च रुक्मस्य परिमाणं छिद्राणि च विधत्ते "शतमानो भवति शतच्छरः। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" (ब्रा०) इति। हिरण्यद्रव्यं प्रशंसति "आयुर्वै हिरण्यं। आयुष एवैनमभ्यतिक्षरन्ति।

तेजो वै हिरण्यं। तेजस्वा एवैनमभ्यतिचरन्ति। वर्चो वै हिरण्यं। वर्चस्वा एवैनमभ्यतिचरन्ति" (ब्रा०) इति। हिरण्यदानेनापमृत्योः परिहर्तुं शक्यत्वात्तस्यायुष्ट्वं तत्सम्बन्धादायुष्मिता एवाप एनं यजमानमभितः चरन्ति। सुवर्णस्य दीप्तिमत्त्वात्तेजस्त्वं तत्सम्बन्धादापस्तेजस्याः। शरीरशोभा वर्चः तच्चाभरणसम्बन्धाज्जायते इति हिरण्यस्य वर्चस्त्वं तद्योगादापो वर्चस्याः। अथ व्युष्टिद्विरात्रं विधत्ते "अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूयेन यजत इति। यदा वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा। अथ संवत्सरमाप्नोति। यावन्ति संवत्सरस्याहोरात्राणि। तावतीरेतस्य स्तोत्रीयाः। अहोरात्रेष्वेव प्रतितिष्ठति" (ब्रा०१का०।८प्र०।१०अ०) इति। राजसूयेनेष्ट्वापि द्विरात्राननुष्ठानेन सम्पूर्त्यभावात् अप्रतिष्ठितत्वं। अत्रत्येषु स्तोमेषु आवर्त्यमानाः स्तोत्रीया ऋचो विंशत्यधिकसप्तशतसङ्ख्याकाः सम्पद्यन्ते, तथा च संवत्सरगताहोरात्रसङ्ख्यासामान्यादहोरात्रेषु प्रतिष्ठितत्वं संवत्सरप्राप्तिर्भवति। द्विरात्रावयवावहर्विशेषौ विधत्ते "अग्निष्टोमः पूर्वमहर्भवति। अतिरात्र उत्तरं। नानैवाहोरात्रयोः प्रतितिष्ठति" (ब्रा०) इति। विलक्षणयोरह्नोरनुष्ठितत्वादहोरात्रयोरस्य विविधप्रतिष्ठोपपद्यते। तयोरनुष्ठानाय शुक्लकृष्णपक्षौ विधत्ते "पौर्णमास्यां पूर्वमहर्भवति। व्यष्टकायामुत्तरं। नानैवार्धमासयोः प्रतितिष्ठति" (ब्रा०) इति। तयोरुभयोर्विलक्षणपक्षत्वादुभयोरर्धमासयोरस्य विविधा प्रतिष्ठोपपद्यते। पक्षान्तरत्वेन विलक्षणयोर्मासयोर-

नुष्ठानं विधत्ते “अमावास्यायां पूर्वमहर्भवति। उद्दृष्ट उत्तरं। नानैव मासयोः प्रतितिष्ठति” (ब्रा०) इति। एकेनाह्ना निष्पाद्यः सोमयागोऽहःशब्देनोपलक्ष्यते, तादृशस्याग्निष्टोमः पूर्वमहः तच्चामावास्यायां कर्तव्यं। उद्दृष्टं शुक्लप्रतिपत् उत्कर्षेण दर्शनस्य तत्रोपक्रमात्, तस्मिन्नुद्दृष्टे उत्तरं द्वितीयमहरतिरात्राख्यं कर्तव्यं। तथा सति विलक्षणयोर्मासयोः कृतत्वात् विविधप्रतिष्ठा भवति। प्रकारान्तरं विधत्ते “अथो खलु। ये एव समानपक्षे पुण्याहे स्यातां। तयोः कार्यं प्रतिष्ठित्यै” (ब्रा०) इति। अथो खलु अथवेत्यर्थः। समानस्यासौ पक्षस्य, तत्र ये पुण्यदिने ज्योतिःशास्त्रप्रसिद्धे शुभावहे दिने तयोरिदं कर्म कार्यं न त्वत्र पक्षभेदो विवक्षितः, मासभेदस्तु दूरापेतः। अस्मिन् द्विरात्रे दोषमुद्भाव्य परिहरन् प्रशंसति “अपशव्यो द्विरात्र इत्याहुः। द्वे ह्येते छन्दसी। गायत्रञ्च त्रैष्टुभञ्च। जगतीमन्तर्यन्ति। न तेन जगती कृतेत्याहुः। यदेनां तृतीयसवने कुर्वन्तीति। यदा वा एषाहीनस्याहर्भजते। साह्नस्य वा सवनं। अथैव जगती कृता। अथ पशव्यः” (ब्रा०) इति। जागताः पशव इति श्रुत्यन्तरे पशूनां जगतीसम्बन्धश्रवणात् द्विरात्रे च जगत्या अन्तरितत्वात् अपशव्यो द्विरात्र इत्याक्षेपवादिन आहुः। अथैवं मन्यसे, विद्यत एव जगती जागतं तृतीयसवनमिति श्रुतेस्तृतीयसवने जगत्याः कृतत्वादिति। तदयुक्तं खलु। अहीने तावन्मात्रेण जगत्यनुष्ठानं न सम्पूर्णं। किन्तर्हि यदा द्विरात्रस्यैतस्याहीनस्यैकमहः कृत्स्नं जगती व्या-

प्नोति तदा जगत्यनुष्ठानं सम्पूर्णं भवति। साक्ष एकेनाह्ना निष्पन्नत्वादेकाहः, तस्य तु तृतीयसवनसम्बन्धमात्रेणापि जगत्यनुष्ठानं सम्पूर्णं भवति। तस्मादत्र कृत्स्नस्याह्नो जगतीव्याप्त्यभावादपशव्यत्वं तदवस्थमित्याक्षेपवादिनामभिप्रायः, तस्मिन्नाक्षेपे भङ्ग्यन्तरेण परिहारोऽप्यन्तर्भूतः। तत्कथमित्युच्यते, वाक्ये यदेतिशब्दं परित्यज्य परिहारो योजनीयः, एषा जगती प्रकृतस्य द्विरात्रस्याहीनस्य कृत्स्नस्याहर्भजते, तस्मादत्र जगती कृता तस्मादयं द्विरात्रः पशव्य इति परिहारः। यद्यपि तस्मिन्नहनि छन्दोऽन्तराणि सन्ति तथापि जगतीव्याप्तावुपायः सप्तमकाण्डेऽङ्गिरसा द्विरात्रे समाम्नातः 'वैखानसं पूर्वेऽहन् साम भवति तेन जगत्यै नैति' इति। वैखानसनामकं साम पूर्वस्मिन् दिने गायेत् तत्र जगतीसम्बद्धमिति तदहः कृत्स्नं जगत्या नापगच्छति, अतो वैखानससामसहिम्नैव कृत्स्नेऽप्यह्नि जगत्याः पूरितत्वाद्द्विरात्रः पशव्य एव। अस्य द्विरात्रस्य व्युष्टिनाम प्रशंसति "व्युष्टिर्वा एष द्विरात्रः। य एवं विद्वान् द्विरात्रेण यजते। व्येवास्मा उच्छति। अथो तम एवापहते" (ब्रा०) इति। विशिष्ट उषःकालो यस्मिन् द्विरात्रे सोऽयं व्युष्टिः, यो यजमान एवं व्युष्टिनामविद्वान् यजते अस्मै यजमानार्थं विशेषेणोच्छत्येव सर्वं कर्तव्यजातं बुद्धौ प्रकाशत एव किञ्च तमो बुद्धिमान्द्यं अयं यजमानो विनाशयत्येव। यदुक्तं सूत्रकारेण 'सत्राणां धृतिस्त्विष्टोमोऽग्निष्टोमः पञ्चापवर्गः तेनाक्तो यजते यक्ष्यते राजसूय' इति

चत्राणां धृतिरिति कर्मनामधेयं, स च कर्मविशेषः प्रकृतिवत्त्रिवृदादिस्तोमचतुष्टयो न भवति। किन्तर्हि त्रिभिरेव स्तोमैरुपेतः। तमेतं विधत्ते "अग्निष्टोममन्तत आहरति। अग्निः सर्वा देवताः। देवतास्वेव प्रतितिष्ठति" (ब्रा०) इति। अग्निविषयस्तोमो यस्य क्रतोरन्ते सोऽयमग्निष्टोमः, यज्ञायज्ञा वो अग्नय इत्येतस्यामाग्नेय्यामृचि स्तोत्रकाले आवृत्त्या स्तोमं सम्पादयति तेन च क्रतुः संस्थितो भवति, तस्मादयमग्निष्टोमः, अग्नेश्च सर्वदेवतारूपत्वमसकृदुक्तं, तस्माद्राजसूयसमाप्त्यवसरेऽनुष्ठितेनाग्निष्टोमेन यजमानो देवतासु प्रतितिष्ठत्येव।

अत्र विनियोगसङ्ग्रहः।

"स्वाद्वीं शष्पैः सुरा योज्या पुना द्वाभ्यां तु पावयेत्।
कुवित् खरे सुरा ग्राह्या सोमावनयते सुरां॥
शतच्छिद्र युतस्थाल्यां मन्त्राः पञ्चेह वर्णिताः"।

अथ मीमांसा। तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

"सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वास्ति तत।
शेषणाच्च सुराचीरयोरन्यत्रापि योगतः"॥

सौत्रामणीनामके याग श्रूयते 'पयोग्रहाः सुराग्रहाश्च गृह्यन्ते' इति। तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्यं स्विष्टकृदिडादिकमस्ति। न चात्र पूर्ववत् शेषाभावः, उच्छिनष्टि न सर्वं जुहोतीत्यवशेषयितव्यत्वश्रवणादिति चेत्, मैवं, शिष्टस्यान्यत्रापि योगश्रवणात् 'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं' इति श्रूयते 'यदि ब्राह्मणं न विन्देत्। वल्मीकवपा-

यामवनयेत्' इति च ग्रताहत्यायां समवनयेदिति च। ग्रत-च्छिद्रा कुम्भी ग्रताहत्या तस्मान्नास्ति स्विष्टकृदादिकं ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथम-काण्डेऽष्टमप्रपाठके एकविंशोऽनुवाकः ॥ * ॥

---

अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्या-नि नाम। दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमाचरण्येत्। अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्। प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु। आ नो दिवो बृहतः ॥ १ ॥

पर्वतादा सरस्वती यजता गन्तु यज्ञं। हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु। बृ-हस्पते जुषस्व नो हव्यानि विश्वदेव्य। रास्व रत्नानि दाशुषे। एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नम-सा हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणां। बृहस्पते अति यदर्यो अर्हाद्द्युम-द्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसा ॥ २ ॥

ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रं। आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं। मध्वा रजांसि सुक्रतू। प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा। अग्निं वः पूर्व्यं गिरा देवमीडे वसूनां। सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसं। मक्षू देववतो रथः॥ ३॥

शूरो वा पृत्सु कासु चित्। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्। न यजमान रिष्यसि न सुन्वान न देवयो। असदत्र सुवीर्यमुत त्यदाश्वश्व्यं। नकिष्टं कर्मणा नशन्न प्र योषन्न योषति। उप क्षरन्ति सिन्धवो मयोभुव ईजानञ्च यक्ष्यमाणञ्च धेनवः। पृणन्तञ्च पपुरिञ्च॥ ४॥

अवस्यवो घृतस्य धारा उप यन्ति विश्वतः। सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश। आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्। सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं। अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्। सोमापूषणा जनना रयीणां

जन॑ना दि॒वो जन॑ना पृथि॒व्याः । जा॒तौ विश्व॑स्य भुव॑-
नस्य गो॒पौ दे॒वा अ॑कृण्वन्न॒मृत॑स्य नाभिं॑ । इ॒मौ दे॒वौ
जाय॑मानौ जुषन्ते॒मौ तमा॑ꣳसि गूहता॒मजु॑ष्टा । आ॒-
भ्यामिन्द्रः॑ प॒क्वमा॒मास्व॒न्तः सो॑मापू॒षभ्यां॑ जनदु॒-
स्रिया॑सु ॥ ५ ॥

वृ॒ह॒तः शव॑सा र॒थः पपु॑रिश्च दि॒वो जन॑ना पञ्च॑-
विꣳशतिश्च ॥ २२ ॥

अनु॑मत्या आ॒ग्ने॒यमै॑न्द्राग्नम॒ग्नये॒ सोमा॑य प्रतिपू॒रु॒-
षमैं॑न्द्रा॒ग्नं धा॒त्रे बा॒र्ह॑स्पत्यमग्न॒ये गृ॒हप॑तयेऽथैते॒ता दे॒वीः
स॒मिधः॑ सोम॑स्येन्द्र॑स्य मि॒त्र आ॑ग्नेयꣳ स॒द्य आ॑ग्ने॒यꣳ
हिर॑ण्यमाग्ने॒यꣳ स्वा॒द्वीं त्वाग्ना॑विष्णू॒ द्वावि॑ꣳशतिः ॥
॥ २२ ॥

अनु॑मत्यै॒ यथा स॑ति॒ दे॒वीरा॒पो॑ मि॒त्रो॑ऽसि शू॒रो॑
वा॒ द्विच॑त्वारिꣳशत् ॥ ४२ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डेऽष्टमप्रपाठके
द्वाविंशोऽनुवाकः ॥ * ॥

प्रथमकाण्डः सम्पूर्णः ॥

एकविंशे सौत्रामणीमुक्त्वा राजसूयः समापितः। द्वाविंशे काम्ययाज्या उच्यन्ते। तत्र काम्येष्टिकाण्डे त्रिहविष्का काचिदिष्टिराम्नायते "आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभिचरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभिचरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभिचरति" (सं०।का०२।प्र०२।अ०९) इति। आज्यं भागो यस्याः साज्यभागा आज्यमेव हविरित्यर्थः। स्पष्टमन्यत्। तत्र प्रथमहविषः पुरोऽनुवाक्यामाह "अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम। दमे दमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमाचरण्येत्" इति। हे अग्नाविष्णू वां युवयोस्तद्वक्ष्यमाणं महित्वं महिमोपेतत्वं महि पूजनीयं। कथमिति तदुच्यते। घृतस्य यानि गुह्यानि नामानि मन्त्रेषु गोप्यान्याज्यं पृषदाज्यं सर्पिरित्यादीनि तानि युवां वीतं प्राप्नुतं। पशूनां तेजसाग्नये जुष्टमभिघारयामीति आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधीति आजुह्वानस्य सर्पिष इत्यादिमन्त्रान् सर्वदा शृणुतमित्यर्थः। कुत्रैतन्नामश्रवणं दमेदमे सर्वेषां यजमानानां गृहे गृहे किञ्च वां युवयोर्जिह्वा प्रति प्रत्येकं घृतं आगत्य प्राप्य चरण्येत् भक्षयतु पिबत्वित्यर्थः। कीदृशी जिह्वा सप्त रत्ना दधाना सप्तसङ्ख्याकान् रत्नसदृशान् ज्वालाविशेषान् धारय-

न्तौ। छत्रिन्यायेनाग्निमाहित्यादिष्णोरपि तथात्वं। अत्रैव याज्यामाह "अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्" इति। हे अग्नाविष्णू वां युवयोः प्रियं धाम यज्ञशालारूपं स्थानं महि पूजनीयं युवां घृतस्य गुह्यं योग्यं सारमभिघारणरूपं जुषाणा सेवमानौ वीथः पुरोडाशं भक्षयथः। कीदृशौ युवां दमेदमे सर्वेषु यजमानगृहेषु सुष्टुतीर्वावृधाना पूर्वोदाहृता आयुर्दा अग्न इत्यादिकाः शोभनाः स्तुतीर्वर्धयन्तौ। प्रति वां जिह्वेत्यादि पूर्ववत्। उच्चरण्येत् उत्कर्षेण भक्षयतु। द्वितीयहविषः पुरोऽनुवाक्यामाह "प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु" इति। सरस्वती देवी वाजेभिः अन्नैः सोऽस्मान् प्रकर्षेणावतु रक्षतु। कीदृशी वाजिनीवती वाजोऽस्यां क्रियायामस्तीत्यन्नप्रदा यागक्रिया वाजिनी सा यस्यामस्ति सा वाजिनीवती, धीनामवित्री यज्ञविषयाणामस्मद्बुद्धीनां पालयित्री। तत्रैव याज्यामाह "आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञं। हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु" इति। यजता यष्टव्या सरस्वती सोऽस्माकं यज्ञं प्रति दिवः सकाशादागन्तु आगच्छतु बृहतः पर्वतादागच्छतु, यद्यप्येषा द्युलोके मेरौ वा तिष्ठति तथाप्यवश्यमागच्छत्वित्यर्थः। सेयमागता देवी शग्मां सुखप्रापिकां सोऽस्मदीयां स्तुतिरूपां वाचं उशती कामयमाना शृणोतु। कीदृशी देवी

हवमस्मदीयमाह्वानं जुजुषाणा सेवमाना, घृतमञ्चति प्राप्नोतीति घृताची। तृतीयहविषः पुरोऽनुवाक्यामाह "बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य। रास्व रत्नानि दाशुषे" इति। विश्वदेव्य विश्वेभ्यो देवेभ्यो हित हे बृहस्पते नोऽस्माकं हव्यानि जुषस्व। दाशुषे हविर्दत्तवते यजमानाय रत्नानि रास्व देहि। तत्रैव याज्यामाह "एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणां" इति। एवा एवं किमेत्यर्थः। हे बृहस्पते पित्रे पितृवत्पालकाय। विश्वे देवा यस्यासौ विश्वदेवः, अस्मै सर्वदेवगुरवे, वृष्णे अभिमतफलवर्षिणे तुभ्यं, यज्ञैर्बहुविधयागैः, नमसा भक्तिपूर्वकनमस्कारैः, हविर्भिराज्यपुरोडाशादिभिश्च परिचर्यां विधेम सर्वथा परिचरेम, त्वत्प्रसादात् शोभनापत्ययुक्ताः शूरभटोपेताः धनानां पतयो वयं भवेम। तत्रैव विकल्पितां याज्यामाह "बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रं" इति। हे बृहस्पते अर्यो राजा यद्द्रविणं रत्नादिरूपं, अति इतरानतिक्रम्य, अर्हात् स्वयमेवानुभवितुमर्हति, यच्चास्मज्जनेष्वमात्यादिषु द्युमदाभूषणादिमत् विभाति, यजमानरूपेषु जनेषु क्रतुमद्यागसाधनवद्विभाति, पुनरपि यद्द्रविणं शवसा बलेन जीवितप्रदाने सम्पादितसैन्यरूपेण दीदयत् दीप्यते, तद्यथोक्तगुणोपेतं द्रविणं चित्रं मणिमुक्तादिरूपं हे ऋतप्रजात तदस्मासु धेहि स्थापय। ऋतात्

सत्यात् परमात्मनः प्रकर्षेण देवगुरुत्वेन उत्पन्न ऋतप्रजातः। प्रथममभिचरतः यद्योक्तिहविष्केष्टिर्विहिता, इदानीं तदीयादभिचारादूर्द्ध्वं प्रत्यभिचरतस्तामेवेष्टिं विहितामभिप्रेत्य तत्र विशेषं विधत्ते "प्रति वै परस्तादभिचरन्तमभिचरन्ति द्वे द्वे पुरोऽनुवाक्ये कुर्यादतिप्रयुक्त्यै" (सं०।का०२) इति। प्रथमतोऽभिचरन्तं शत्रुं ज्ञात्वा तद्विरोधिनः पुरुषाः पश्चात् प्रत्यभिचरन्ति, तदानीं पूर्वोक्तायाः पुरोऽनुवाक्याया आवृत्त्या वा मन्त्रान्तरागमनेन वा एकैकस्य हविषो द्वे द्वे पुरोऽनुवाक्ये कुर्यात्। मन्त्रान्तरपक्षे तु प्रथमस्य हविषोऽग्नाविष्णू सजोषसेत्येषा समानेतव्या। द्वितीयस्य हविषः पावीरवी कन्येति। तृतीयस्य तु समाम्नाता एव तिस्र ऋचो वर्तन्ते। किमर्थं पुरोऽनुवाक्याद्वित्वं तदुच्यते। अतिप्रयुक्त्यै तस्मादप्यतिशयितप्रयोगार्थं। यस्तु पापभीरुः सन् प्रतिचारं न करोति किन्तु केवलं स्वविषयमभिचारं परिहर्तुमिच्छति तस्य पूर्वोक्तामेव त्रिहविष्कामिष्टिं विधत्ते "एतयैव यजेताभिचर्यमाणो देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञञ्च मध्यतो व्यवसर्पति तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन् स्तृणुते" (सं०।का०२) इति। देवताः प्रतिचरति निवारयति, स्वकीययज्ञेन तदीययज्ञं निवारयति, स्वकीयवाचा तदीयवाचं निवारयति, स्वकीयब्रह्मणा तदीयं ब्रह्म निवारयति। लौकिकाधिक्षेपपरिहारो वाङ्निवारणं, ब्राह्मणपरिहारो मन्त्रनिवारणं, स

तादृशपुरुषः शत्रोरात्मनश्च मध्ये स्वकीयदेवताः स्वकीय-यज्ञस्य मध्यतो व्यवसर्पति व्यवधानरूपेण स्थापयति, तस्य तादृशस्य कुतोऽपि व्याध्यादेर्बाधो न भवति। प्रथममभि-चरन् पुरुषः एनं न स्तृणुते न हिनस्ति। यज्ञप्राप्तिकामिनः एकहविष्कामिष्टिं विधत्ते "आग्नावैष्णवमेकादशकपालं निर्व-पेद्यं यज्ञो नोपनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निश्चैव वि-ष्णुश्च स्वेन भागधेयेनोपधावति तावेवास्मै यज्ञं प्रयच्छत उपैनं यज्ञो नमति" (सं०।का०२) इति। यं यज्ञानुष्ठानार्थं पुरुषं केनापि द्रव्याभावादिविघ्नेन स यज्ञो न प्राप्नुयात् तस्येयमिष्टिः। दृष्टिपाटवार्थिन एकहविष्कामिष्टिं विधत्ते "आग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या विपश्यन्ति यज्ञस्य देवा अग्निश्चैव विष्णुश्च स्वेन भागधेयेनोपधावति तावेवास्मिन् चक्षुर्धत्तश्चक्षुष्मानेव भवति" (सं०।का०२) इति। अग्नेश्चक्षुषा दीपेनान्धकारादियुक्तप्रदेशे मनुष्याः पश्यन्ति, यज्ञस्य तु चक्षुषा सामर्थ्यरूपेण देवाः पश्यन्ति, अतो यागदेवस्य विष्णोरग्नेश्च ह-विषा तादृभौ कामलादिरोगपरिहारेणास्मिन् यजमाने चक्षु-र्दृष्टिपाटवं धत्तः प्रयच्छतः, तेनासौ चक्षुष्मान् सूक्ष्मदर्शनेऽपि समर्थो भवति। घृतं चरुप्रकृतिद्रव्यञ्च प्रशंसति "धेन्वै वा एत-द्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्रजनयति" (सं०।का०२) इति। भक्षितहृणसारत्वादाज्यस्य धेनुरेतस्त्वं बलीवर्द-कृष्टोत्पन्नत्वात्तण्डुलानामनडुद्रेतस्त्वं, धेन्वनडुद्रूपमिथुनादेवास्य दृष्टिलाभः। प्रकारान्तरेण घृतं प्रशंसति "घृते भवति तेजो

वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरवरुन्धे" (सं०।का०१) इति। दीप्यमानत्वाद्रूपभासकत्वाच्च घृतचक्षुषोस्तेजस्त्वं। फलान्तराय त्रिहविष्कामिष्टिं विधत्ते "इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रतिनिर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रियं वीर्यं वृङ्क्ते"(सं० का०१) इति। परस्परविरोधिनोरुभयोर्मध्ये कश्चिदग्निष्टोमादियज्ञं न करोति, तदीयस्तु भ्रातृव्यः करोति, तदानीमयजमानस्येन्द्रियसामर्थ्यमितरो विनाशयति। प्रत्यक्षं ह्येतत्, दीक्षित सोमयाजिन्नित्यामन्त्रणादिभिरयजमानस्यानादृतत्वात् तस्येयमध्वरकल्पा ईषदसमाप्तोऽध्वरः सवनत्रयसद्भावात् अध्वरत्वं सोमाभावादीषदसमाप्तिः, अतस्तामध्वरकल्पां तदीयस्य सोमयागस्य प्रतिपक्षत्वेन निर्वपेत्, कदा भ्रातृव्ये यजमाने सति, तेन प्रतिनिर्वापेणेन्द्रियसामर्थ्यं न नश्यति दीक्षादीनामभावेऽपि प्रभुत्वधनादेरुत्कर्षो भवतीत्यर्थः। निर्वापकालं विधत्ते "पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक् तामप्रोदितां भ्रातृव्यस्य वृङ्क्ते तामस्य वाचं प्रवदन्तीमन्या वाचोऽनु प्रवदन्ति ता इन्द्रियं वीर्यं यजमाने दधति"(सं०।का०१) इति। उषःकाले मनुष्याः शयनादुत्थाय परस्परं वाचः प्रवदन्ति प्रवदितोः प्राक् प्रवदनात् पुरा निर्वपेत्, तथा सति भ्रातृव्यस्य यावती वाग्विद्यते तामप्रोदितामनुच्चारितां वृङ्क्ते यथा नोच्चारिता भवति तथा नाशयति, अस्य तु यजमानस्य सम्बन्धिनीं तां वाचं प्रवदन्तीमन्या वाच इतरजनसम्बन्धिन्यो वाचः प्रवदन्ति, यजमानेन यद्यथोच्यते तत्तथैव सर्व-

जना वदन्त्यस्य वचनमनुमन्यन्त इत्यर्थः। ता अन्यदीया वाच उपलालनेनेन्द्रियसामर्थ्यं यजमाने स्थापयन्ति। अध्वरसाम्यं सम्पादयितुं त्रिषु कालेष्वनुष्ठानं विधत्ते "आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातःसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाप्नोति आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिनस्य सवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेव सवनं तेनाप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाप्नोति देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दाꣳस्याप्नोति पुरोडाशैः सवनानि" (सं०।का०२) इति। प्रातःसवनस्याऽऽकाले आह्वयनयज्ञसम्बन्धिनः प्रातःसवनस्य यावत्कालस्तावति काले कपालैरष्टैकादशद्वादशसङ्ख्याकैरेव छन्दांसि प्रतिवादिप्रयुक्तानि गायत्रीत्रिष्टुब्जगतीरूपाणि व्याप्नोति, यथोक्तैस्त्रिभिः पुरोडाशैः प्रतिवाद्यनुष्ठितानि सवनानि त्रीणि सवनानि व्याप्नोति, तस्मादस्त्यध्वरसाम्यं। उक्तासु प्रत्यभिचारादीष्टिषु पूर्वोक्ता एव याज्यानुवाक्याः। एतस्यैवाध्वरकल्पानुष्ठायिनः प्रतिवाद्यनुष्ठितानुबन्ध्यास्थानीयामिष्टिं विधत्ते "मैत्रावरुणमेककपालं निर्वपेद्वशायै काले येयासौ आ-

हव्यस्य वशानूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुं" (सं०।का०२) इति। भ्रातृव्योऽवभृथं कृत्वा गृहे समागत्योदवसानीयामनुष्ठायानुबन्ध्यां वशामुपाकरोति, तस्मिन् काले मित्रावरुणदेवताकमेककपालं पुरोडाशं निर्वपेत्* भ्रातृव्यस्य सानुबन्ध्या वशा यैवास्ति एतस्याध्वरकल्पस्याधिकारिणोऽयमेककपालः सैवैषा वशा भवति। ननु पूर्वोक्तैः कपालैर्यथा छन्दांसि प्राप्तानि तथानुबन्ध्याख्यपशुरपि प्राप्यतामिति चेत्, न। सङ्ख्यासाम्येन छन्दसां प्राप्तुं शक्यत्वात्, नहि पशावष्टत्वादिः सङ्ख्यास्ति, अतः पूर्वोक्तैः कपालैरिमं पशुं प्राप्तुं न शक्नोति नार्हति, मैत्रावरुणस्य तु कपालैक्यात् सङ्ख्यासाम्येन पशुमेकं प्राप्तुमर्हति। अस्मिन् मैत्रावरुणे पुरोऽनुवाक्यामाह "आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं। मध्वा रजांꣳसि सुक्रतू" इति। हे मित्रावरुणौ गव्यूतिमस्मदीयगोयूथं घृतैः प्रभृतैरा समन्तादुक्षतं सिञ्चतं, नः सुक्रतू शोभनक्रतुयुक्तौ रजांसि अस्मदीयक्षेत्रपांसून् मध्वा मधुना जलेनोक्षतं। तत्रैव याज्यामाह "प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा" इति। हे मित्रावरुणौ नोऽस्माकं जीवसे जीवितुं बाहवा धनपूर्णेन बाहुना सह प्रकर्षेण सिसृतं प्राप्नुतं, आगत्य च नोऽस्माकं गो-

---

* निर्वपेदिति युक्तः पाठः पुस्तकत्रये नास्ति। तैलिङ्गपुस्तके तु प्रायश एतत् प्रकरणं भ्रमेण पतितं।

यूयं घृतेन सिञ्चतं। हे युवानौ परस्परमिश्रितौ युवां जने ब्राह्मणादियजमानसभायां नोऽस्मान् श्रवयतं प्रख्यापयतं, मित्रावरुणौ मे मदीयं इमा हवा इदमाह्वानं श्रुतं शृणुतं। इष्ट्यन्तरं विधत्ते "असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सोमारौद्रं चरुं निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सोमारौद्रं चरुं निर्वपेत् सोमञ्चैव रुद्रञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति" (सं०का०२।प्र०२। अ०१०) इति। न व्यरोचत विशेषेण दीप्तिं न प्राप्तवान्, प्रायश्चित्तिं प्रतीकारं, ब्रह्मवर्चसं श्रुताध्ययनसम्पत्तिः। कालं विधत्ते "तिष्यापूर्णमासे निर्वपेद्रुद्रो वै तिष्यः सोमः पूर्णमासः साक्षादेव ब्रह्मवर्चसमवरुन्धे" (सं०।का०२) इति। यथा रुद्रो दुःखं द्रावयति तथा पौषमासः शैत्यदानेन तापं वारयति, तस्मात्तस्य रुद्रत्वं, सोमो हि पौर्णमास्यां सम्पूर्णमण्डल इति तयोरैक्यं। साक्षादेव मुख्यमेव, न त्वनूचानस्य पुत्रत्वमात्रेणापादितं अमुख्यं ब्रह्मवर्चसं। वेदेः परित आवरणं विधत्ते "परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै" (सं०।का०२) इति। परिश्रयणेन वेद्यामावृतायां वेदिरेव ब्रह्मवर्चसं परिगृहीतं भवति। चोदकप्राप्तमपवदितुं कांश्चिद्विशेषान् विधत्ते "श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत्सर्वं करोति" (सं०।का०२) इति। श्वेतवत्सयुक्तायाः श्वेताया गोर्दुग्धं तदेवातञ्चनेन दधिभावमापाद्य मथितं

सत् पश्चादाज्यं भवति, न तु मैत्राबार्हस्पत्य इव स्वयमूर्तस्वय-म्मथितत्वादिकमत्रास्ति। प्रकृतौ श्वेतवत्सा श्वेता गौरिति नास्ति नियमः, अत्र त्वस्ति। प्रकृतावद्भिः प्रोक्षणं मार्जनञ्च, अत्र तु सर्वमाज्येनेति विशेषः। तथा सति तु ब्रह्मवर्चसं सम्पूर्णं भवति। सामिधेनीषु समिध्यमानेद्धवत्योर्मध्ये प्रक्षेपणीये द्वे ऋचौ वि-धत्ते "अति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवि-तोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किञ्च मनुरवदत्त-द्भेषजं भेषजमेवास्मै करोति" (सं०।का०२) इति। आज्यमा-त्रेण यद्ब्रह्मवर्चसं तदुक्तमेव, श्वेतवत्साश्वेतगोभ्यां यत्तदत्यधिकं तेन दुश्चर्मा श्वेतकुष्ठयुक्तो भवितुं प्रभुर्भवति, तत्परिहाराय मनुना दृष्टे द्वे ऋचौ सामिधेनीषु धाय्ये प्रक्षेपणीये भवतः मनोर्धर्मवृद्धत्वात् तेन यन्मन्त्रजातमुक्तं तदौषधं। तदेव सर्वमापस्तम्ब आह 'सर्वप्रोक्षा मार्जनानीत्याज्येन मानवी ऋचौ धाय्ये कुर्यादग्निं व इत्येतासां द्वे' इति। एतस्मिन् सोमारुद्रचरौ धाय्यात्वेनाग्निं वः पूर्व्यमित्यादिका विकल्पि-ताः ऋचः आम्नाताः। तत्र प्रथमायाः पाठस्तु "अग्निं वः पूर्व्यं गिरा देवमीडे वसूनां। सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसं" इति। वसूनां वो युष्माकं मध्ये पूर्व्यं प्रथम-भाविनमग्निं देवं गिरा वैदिक्या ईडे स्तौमि स्तावकोऽहं, कीदृशः सपर्यन्तः पर्यन्तेन यागसमाप्त्या सह वर्तत इति सपर्यन्तः। सकृत् स्तुत्वा नोपरमं कुर्वे किन्त्वासमाप्तेः स्तौमी-त्यर्थः। कीदृशमग्निं मित्रं न क्षेत्रसाधसमिति पितृभ्रात्राद्या-

त्मकमित्रमिवास्मदीयस्य चेत्रस्य साधकं। अथ द्वितीया "मक्षू देववतो रथः शूरो वा पृत्सु कासु चित्। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्" इति। कासुचित् पृत्सु केषुचित् सङ्ग्रामेष्वत्यन्तमभिनिवेशेन प्रवर्तमानेषु शूरो वा शूरो भट इव देववतो यक्ष्यमाणदेवोपेतस्य यजमानस्य रथो मक्षू गच्छतीति शेषः। रामरावणयुद्धवदत्यभिनिवेशेन प्रवृत्ते युद्धे शूरो भटः स्वदेहं विस्मृत्य परसेनां हन्तुं यथा त्वरया गच्छति तथा देवान् यष्टुमस्य यजमानस्य मनोवृत्तिस्त्वरया रथवद्गच्छतीत्यर्थः। य इत् य एव यजमानो देवतानां मन इयक्षति पूजयितुमिच्छति तदीयं चित्तप्रसादं वाञ्छतीत्यर्थः, स एवायज्वनो यागरहितान् पुरुषानभिभुवत् इत् अभिभवत्येव। इदमुत्तरार्धमुत्तरेषु त्रिषु मन्त्रेष्वनुवर्तते। अथ तृतीया "न यजमान रिष्यसि न सुन्वान न देवयो" इति। हे यजमान त्वं यागं कृत्वा न रिष्यसि न विनश्यसि, अत्र यजमानत्वमिष्टिकर्तृत्वं। हे सुन्वान सोमयाजिन्न रिष्यसि, हे देवयो पाकयज्ञादिभिर्देवानिच्छन् त्वं न रिष्यसि, अनुवर्णितं देवानामित्युत्तरार्धं पूर्ववद्योज्यं। अथ चतुर्थी "असदत्र सुवीर्यमुत त्यदाश्वश्व्यं" इति। अत्रास्मिन् यजमाने सुवीर्यं शोभनं सामर्थ्यं असत् भवेदित्यर्थः। उतापि च त्यत् तदस्तु किन्तत् आश्वश्व्यं आशवः शीघ्रगामिनश्च ते अश्वाश्च आश्वश्वास्तेषां सम्बन्धि शोभनवीर्यमस्तु। अथ पञ्चमी "नकिष्टं कर्मणा नशन्न प्रयोषन्न योषति" इति। नकिरिति-

शब्दो निषेधवाची, कर्मसहितं तं यजमानं नकिर्नशत् राक्षसादिर्मा विनाशयतु। यज्ञविरोधी पाप्मा यजमानेन सह प्रकर्षेण न योषत् मैव मिश्रीभवतु यजमानोऽपि न योषति न पाप्मना सह मिश्रीभवति। अथ षष्ठी "उपचरन्ति सिन्धवो मयोभुव ईजानञ्च यक्ष्यमाणञ्च धेनवः। पृणतञ्च पपुरिञ्च। अवस्यवो घृतस्य धारा उपयन्ति विश्वतः" इति। सिन्धवो नदीसदृशाः मयोभुवः सुखं भावयित्र्यः धेनवः पूर्वमिष्टवन्तमितःपरं यक्ष्यमाणञ्च पुरुषमेनमुपेत्य चरन्ति स्रवन्ति बहुतरं क्षीरं प्रयच्छन्तीत्यर्थः। पृणन्तमस्मिन् कर्मणि जुहू पूरयन्तं पपुरिं हविभिस्तु कर्मसु पूरयिष्यन्तं च यजमानं अवस्यवः श्रोतुमिच्छन्त्य इव घृतस्य धारा विश्वतः सर्वत उपयन्ति समीपे प्राप्नुवन्ति। विकल्पितानि त्रीणि धाय्यायुग्मान्युक्ता पुरोऽनुवाक्यामाह "सोमारुद्रा विवृहतं विषूचीममीवा या नो गयमाविवेश। आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुक्तमस्मत्" इति। या अमीवा रोगरूपा निर्ऋतिः नोऽस्माकं गयं गृहमाविवेश सोमारुद्रा हे सोमारुद्रौ तां निर्ऋतिं विषूचीं विष्वग्गतिं नानादिक्षु यथा पलायति विवृहतं विशेषेणोन्मूलयतं, पराचैः पराङ्मुखीं निर्ऋतिं तां आरे दूरे युवां बाधेथां, तथा निर्ऋत्यास्मासु कृतं एनस्तत्पापं रोगरूपमप्यस्मत् प्रमुमुक्तं प्रकर्षेणास्मत्तो मोचयतं। याज्यामाह "सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं। अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्" इति।

हे सोमारुद्रौ युवमुभौ युवां अस्मे तनूषु अस्माकं शरीरेषु विश्वा सर्वाण्येतानि भेषजानि औषधानि धत्तं स्थापयतं, अव-स्यतं तैर्भेषजैरनिष्टं विनाशयतं, निर्ऋत्या कृतं नोऽस्माकं तनूषु यद्दुष्कृतमेनोऽस्ति तदस्मत्तो मुञ्चतं। इष्ट्यन्तरं विधत्ते "यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत् सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशु-भिस्त्वचं करोति न दुश्चर्मा भवति" (सं०) इति। सोम-सम्बन्ध्योषधिरसेन जातत्वात् पुरुषः सोमदेवताकः। इयं वै पूषेति श्रुतेः, पूषरूपया भूम्या तृणादिप्रदानेन पोषितत्वात् पशवः पौष्णाः, अतो हविषा तुष्टा स्वदेवता पशुभिः सहिता समीचीनां त्वचं करोति ततो दुश्चर्मत्वमपगच्छति। तत्र पुरोऽनुवाक्यामाह "सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः। जातौ विश्वस्य भुवनस्य गोपौ देवा अकृ-ण्वन्नमृतस्य नाभिं" इति। हे सोमापूषणौ युवां देवा अमृतस्य कर्मफलस्य नाभिमकृण्वन्, नह बन्धन इत्यस्माद्धातोरुत्पन्नो नाभिशब्दः, बन्धनरज्जुं कृतवन्त इत्यर्थः, सोमापूषभ्यां हि कर्मफलं यजमाने बध्यते। कीदृशौ युवां धनानां द्यावापृथि-व्योश्च जनयितारौ, ऐहिकामुष्मिकफलदातृत्वमेवात्र द्यावा-पृथिव्योर्जनकत्वं, किञ्च जातौ सन्तौ जातमात्रेणैव विश्वस्य सर्वस्य भुवनस्य लोकस्य गोपयितारौ। तत्रैव याज्यामाह "इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा। आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु"

इति। सर्वे देवा जायमानाविमौ देवौ जुषन्त सेवन्ते, इमा-वुभावजुष्टान्यप्रियाणि तमांसि बुद्धिमान्द्यानि गूहतां समवृ-णुतां विनाशयतां। इन्द्रः आभ्यां सोमापूषभ्यां आमासू-स्त्रियासु तरुणीषु गोष्वन्तः रसपोषकाभ्यां पक्वं चीरं जनत् जनयति, गावो हि सारयुक्तायां भूमौ सोमेन वर्धिता ओ-षधीर्भक्षयित्वा बहुनवनीतगर्भं चीरं धारयन्ति। अस्मात् सोमापौष्णात् पूर्वं विहितमेव पुनः फलान्तराय विधत्ते "सो-मारौद्रं चरुं निर्वपेत् प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्रज-यति विन्दते प्रजां" (सं०) इति। गर्भाशये धृतस्य रेतसोऽ-ग्निना पच्यमानत्वादग्नेः प्रजनयितृत्वं। पुनरपि फलान्तराय विधत्ते "सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय रुद्रायापि दधाति ताजगार्तिमार्च्छति" (सं०) इति। पुरुषस्य सोमदेवताकत्वं पूर्वमभिहितं। यदरोदीत्तद्रुद्रस्य रुद्रत्व-मिति श्रुत्या रुद्ररूपत्वमग्नेराम्नातं। पुरुषस्य स्वामिभूता या सोमदेवता तस्या देवतायाः सकाशात् चरुणा मुख्येन मूल्येन तं पुरुषं वैरिणं निष्क्रीय क्रूराय रुद्राय चरुरूपमु-त्कोचं दत्वा तं बध्यं वैरिणं तस्मै प्रयच्छति, स च वैरी तदानीमेव मरणं प्राप्नोति। पुनरपि फलान्तराय विधत्ते "सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निꣳ शरीरं यस्य ज्योगामयति सोमादेवास्य रसं

निष्क्रीणात्यग्नेः शरीरमुत यदीतासुर्भवति जीवत्येव" (सं०) इति। ज्योगामयावी दीर्घरोगयुक्तः। यस्य पुरुषस्य ज्योगामयति यं पुरुषं व्याधिश्चिरं पीडयति, एतस्य पुरुषस्य शरीरप्राणयो-र्बन्धको योऽन्नरसः स व्याधिकाले सोमं प्राप्नोति। भुक्तस्या-न्नस्य सम्बन्धी योऽयं सूक्ष्मो रसो मनःप्रभृतेर्लिङ्गशरीरस्या-प्यायनकरस्तेन रसेन प्राणो देहे बध्यत इति। इममर्थं वा-जसनेयिनः शिशुर्ब्राह्मणेऽन्नं ददामेति वाक्येन समामनन्ति। तस्मिन् सोमेऽन्नोपभृते सति अयं देहोऽग्निं गच्छति जाठरा-ग्नेर्गर्भस्थान्नरसस्याभावान्मांसादिधातूनग्निर्भक्षयति, अत एवा-मयाविनः शरीरं कृशं दृश्यते। एवं सति यजमानस्तृणा मूल्येन सोमाग्निभ्यां रसं शरीरं निष्क्रीणाति ततोऽयमरोगो भवति। किञ्च यद्यप्ययं मूहूर्तमात्रं गतप्राणस्तथापि भूमौ शयानस्तदानीं जीवत्येव। एतस्य चरोरङ्गत्वेन होतुर्बलीवर्द-दानं विधत्ते "सोमारुद्रयोर्वा एतं ग्रसितꣳ होता निःखि-दति स ईश्वर आर्तिमार्तोरनड्वान् होत्रा देयो वह्निर्वा अन-ड्वान् वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति" (सं०) इति। रोगसम्बन्धिशरीरयोः सोमारुद्राभ्यां स्वीकृतत्वात्तयो-र्मुखे रोगी ग्रसितो वर्तते, तं ग्रसितं होता याज्यानुवाक्याबला-न्निःखिदति तयोर्मुखान्निःसारयति, स च होता तयोः कोपात् आर्तिं प्राप्तुं ईश्वरो योग्यो भवति। अनडुहो वह्नित्वं 'अनड्वा-हमग्नीधे' (अ०१८) इत्यत्रोपपादितं, अग्निविषयावाहनमन्त्र-पाठाद्धोतुर्वह्नित्वं। तथा सत्यनडुहो दाता होता तेनानडुद्रूपेण

वह्निनैव वह्निरूपं स्वात्मानं स्पृणोति आर्तिशान्त्या प्रीणयति। पुनरपि फलान्तराय विधत्ते "सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषस्तृणीयादर्धं नार्धमिध्मस्याभ्यादध्यादर्धं न स्व एवास्मा आयतने भ्रातृव्यं जनयति" (सं०) इति। अस्मै स्व आयतने अस्य वैरिणः स्वकीयगृहविषये क्षेत्रविषये वा भ्रातृव्यं विवादकारिणमन्यं विरोधिनं जनयेयमिति यः कामयेत स एतं चरुं निर्वपेत्। तस्य वेदिपरिग्रहस्थानं सूत्रकारेण दर्शितं 'भ्रातृव्यक्षेत्रं गत्वैतामिष्टिं निर्वपेत्तत्र दक्षिणमर्धं वेद्या उद्धृत्य तदेवार्धेन बर्हिषस्तृणीयादर्धमभ्यादध्यात्' इति। एवं कृते सति अयं यजमानोऽस्य भ्रातृव्यस्य तदीयस्थान एव विवादकारिणं जनयति।

अत्र विनियोगसङ्ग्रहः।

"आग्नावैष्णवमित्यादावभिचारहविस्त्रये।
अग्ना प्र णो हृहेत्याद्या अधिका तु विकल्प्यते॥
आ न एककपाले तु मैत्रावरुणनामके।
अग्निमित्यादिका धाय्याः स्युः सोमारौद्रके चरौ॥
देवानामिति चार्धर्चस्तिसृष्वृक्ष्वनुषज्यते।
षड् धाय्या द्वे तु याज्यानुवाक्ये सोमेत्युदीरिते॥
सोमापौष्णे तु सोमेति मन्त्रा एकोनविंशतिः"।

अथ मीमांसा। अष्टमाध्याये तृतीयपादे चिन्तितं।

"आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः।
अग्नीषोमीयविकृतिरथ वा व्यत्ययो द्वयोः॥
प्रथमत्वद्वितीयत्वसाम्यादाद्योऽन्तिमो भवेत्।
द्विदेवत्यैकदेवत्यसाम्यस्य श्रुतिमत्त्वतः"॥

हविर्गणः कश्चिच्छ्रूयते, आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्यै चरुं बार्हस्पत्यं चरुमिति। गणान्तरमेवं श्रूयते, अग्नये पावकायाग्नये शुचयेऽष्टाकपालमिति। अत्राग्नावैष्णवस्य प्रथमस्थानत्वादाग्नेयविकृतित्वं युक्तं, शुचिदेवकस्य द्वितीयस्थानत्वादग्नीषोमीयविकृतित्वमिति चेन्न। द्विदेवत्यादिसाम्यस्य श्रूयमाणत्वेनार्थसिद्धस्थानतो बलीयस्त्वात्। तस्मादाग्नावैष्णवोऽग्नीषोमीयविकृतिः, शुचिदेवक आग्नेयविकृतिः।

*विस्पष्टमनुवाकार्था वर्ण्यन्ते बुद्धिशुद्धये।
अनुमत्यादयो वैश्वदेवो वरुणघासकाः॥
साकमेधाः पितृयज्ञस्त्र्यम्बकाश्च शुनादिकाः।
शुनासीरीयमिन्द्रादितुरीयञ्च द्वयं तथा॥
पैञ्चेध्मीयमपामार्गहोम एते शुनादिकाः।
देविकाद्यं कर्मषट्कं स्याद्रत्निहविरादिकं॥
हवींषि रत्निनां तद्वद्दीचणीयाभिषेच्यगा।
हवींषि स्वर्देवसुवां जलग्रहणसंस्कृती॥
दिशां व्यास्थापनं तद्वदभिषेकोऽथ दिग्जयः।

* तैलिङ्गपुस्तके प्रकरणपातात् काशीस्थपुस्तकत्रयावलम्बनेनैवैतेषां श्लोकानां पाठः, अत एव कुत्रचित् भ्रमेण लिख्यते।

सेवा संस्तूप् हविस्तदद्द्भपेयो ह्यवेष्टयः ॥
हवींषि प्रयुजां सौत्रामणी याज्या इतीरिताः।
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः ॥ * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण *सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये प्रथमकाण्डे ऽष्टमः प्रपाठकः सम्पूर्णः ॥ * ॥

प्रथमकाण्डः सम्पूर्णः ॥ ० ॥

ॐ तत्सत् ॥

---

* माधवाचार्येणेति तै०।

श्रीवेदव्यासाय नमः ॥

# अथ तैत्तिरीयसंहिताभाष्ये

## द्वितीयकाण्डे प्रथमप्रपाठके

### प्रथमोऽनुवाकः ।

वायव्यꣳ श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येवातिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आलभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव ॥ १ ॥

वायवे नियुत्वत आलभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्रजा नस्योता

नियच्छति ग्राम्येव भवति नियुत्वते भवति ध्रुवा एवास्मा अनपगाः करोति वायवे नियुत्वत आलभेत प्रजाकामः प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजायाः ॥ २ ॥

अपक्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्राणापानाभ्यां प्रजां प्रजनयति विन्दते प्रजां वायवे नियुत्वत आलभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादपक्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप ॥ ३ ॥

धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो *वपामुदक्खिदत्तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत् तꣳ स्वायै देवताया आलभत ततो वै स प्रजाः पशूनसृजत यः प्रजाकामः ॥ ४ ॥

पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमाल-

* वपामुदखिदददिति पाठः।

भेत प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मै प्रजां पशून् प्रजनयति यत् श्मश्रुणस्तत् पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन् तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानामेतावन्तो वै ग्राम्याः पशवस्तान् ॥ ५ ॥

रूपेणैवावरुन्धे सोमापौष्णं त्रैतमालभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभिजायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोपधावति तावेवास्मै पशून् प्रजनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्रजनयत्यौदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे ॥ ॥ ६ ॥

अप्रदाहाय भवत्येव प्रजाया आमयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप प्रजाकामस्तान् यूपस्यैकादश च ॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥
व्याख्यातं प्रथमं काण्डं मूलप्रकृतिबोधकं।
विकृतेर्बोधकं काण्डं द्वितीयं व्याकरोम्यथ॥
वेदैकमेयता धर्मब्रह्मणोर्वेदमानता।
अपौरुषेयता वेदे मन्त्रब्राह्मणरूपिणि॥
समाख्यया याज्ञिकानां मन्त्रत्वमवसीयते।
ऋचः पादयुता मन्त्रा यजुः प्रश्लिष्टपादकं॥
साम गीत्यात्मका मन्त्राः प्रयोगे स्वार्थबोधकाः।
लोके पदपदार्थौ यौ वेदे तावेव गोचरौ॥
मानं व्याकरणं तत्तदर्थादेर्लोकवद्भवेत्।
अनध्यायेऽपि मन्त्रोक्तिः प्रयोगे कर्मणां भवेत्॥
*नात्रापि ब्राह्मणस्यास्य मन्त्रास्ते कर्मणः कृतिः।
अर्थैकत्वेन वाक्यैक्यं तेन स्याद्यजुरन्तधीः॥
सन्निधावनुषङ्गः स्यादर्थाद्धृतिरसन्निधौ।
मन्त्रादन्यद् ब्राह्मणं स्याद्विधिवादद्वयात्मकं॥
समभिव्याहृते धर्मे प्रक्रिको बोधको विधिः।
उपवीतादिवल्लोके ह्यपूर्वार्थो विधीयते॥
हिमब्दादित्यागतो वै विधिस्तु परिधारणे।
न विधिर्मन्त्रगाख्यातो याभिर्यजत इत्यतः॥

---

* भाषिको ब्राह्मणस्तस्येति तै०।

वायुर्वा इति वादोऽयं मानं धर्मे विधीयते।
ऊर्जोऽवरुध्या इत्येषा स्तुतिः स्यान्न फले विधिः॥
तेन ह्यन्नमिति प्रोक्ता स्तुतिर्न त्वत्र हेतुगीः।
सर्वसाधारणा ह्यर्थाः पूर्वकाण्डे विचारिताः॥
इष्टिसोमपशुष्वेव विकृतिष्वपि कासुचित्।
तत्तद्वाक्यान्युदाहृत्य बहवोऽर्था विचारिताः॥
आद्यकाण्डस्य भाष्येण व्युत्पन्नः पुरुषोऽखिले।
अनायासेन वेदेऽस्मिन्नर्थं बोद्धुमतिप्रभुः॥

तत्र वेदस्य पूर्वकाण्डे प्रतिपाद्यं कर्म द्विविधं प्रकृतिर्विकृतिश्चेति। प्रकृष्टसर्वाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। विशेषमात्रोपदेशो यत्र क्रियते अवशिष्टं तु प्रकृतेरतिदिश्यते सा विकृतिः। यथा शाब्दिकाः *वृक्षशब्द एव सर्वां प्रक्रियामुपदिश्य घटपटादिशब्देषु तामतिदिशन्ति विशेषमेव सर्वादिषूपदिशन्ति, तद्वत्। तत्र प्रकृतिर्द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति। अग्निहोत्रमिष्टिः सोमश्चेति तिस्रो मूलप्रकृतयः, तासु कस्याप्यङ्गस्यान्यतोऽतिदिष्टस्याभावात्। अग्न्याधानेष्टकोपधानयोरन्यतोऽतिदेशो नास्ति इति चेत्। तर्हि तादृशं सर्वमग्निहोत्रादिभिरुपलक्षणीयं, अथवा वह्निसंस्कारमात्रतया कर्मत्वानादरेण मूलप्रकृतिष्वनुपन्यासः। अग्निहोत्रं नाम प्रतिदिनं सायं प्रातश्च क्षीराज्यादिद्रव्येण होतव्यं कर्म, तद्विकृतिः कौण्डपायिनामयनगतं मासाग्निहोत्रं। इष्टिर्नाम पुरोडाशादिद्रव्येण पक्षे पक्षे निष्पाद्यं दर्शपूर्णमासाख्य

* पा०।७।३।१०२। प्राकृतप्रकाशे ५।१—१३।

कर्म, तद्विकृतिरैन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादिकाम्येष्टयः। सोमो नाम प्रतिवसन्तमनुष्ठेयं सोमलतारूपद्रव्येण निष्पाद्यमग्निष्टोमाख्यं कर्म, तस्य साचाद्विकृतिर्विश्वजिदाद्येकाहः परम्परया सहस्रसंवत्सरसत्रपर्यन्तः कर्मसङ्घः। यद्यप्यग्नीषोमीयपशुरुक्तेभ्य इष्ट्यग्निहोत्रसोमेभ्यो विलक्षणः तथापि नासौ काचिन्मूलप्रकृतिः, तस्मिन् पशाविष्टिधर्माणां प्रयाजादीनामतिदेशेन तस्येष्टिविकृतित्वात्, तस्य विकृतिरूपत्वेऽपि तदीयधर्माणामुपाकरणनियोजनादीनां सवनीयादिपशुष्वतिदेशात् प्रकृतित्वमप्यस्ति, ततो ह्यात्मकत्वादवान्तरप्रकृतिरित्युच्यते। सहस्रसंवत्सरसत्रगतधर्माणामन्यत्रातिदेशाभावेन तस्मिन् सत्रे द्विविधस्यापि प्रकृतित्वस्याभावात् केवलविकृतित्वं। गृहमेधीयेष्टिरुपसद्धोम इत्यादेरप्रकृतिविकृतित्वादपूर्वकर्मत्वं। न ह्यन्यदीयस्य धर्मस्य तस्मिन् वा तदीयस्य अन्यस्मिन् वा कश्चिदतिदेशोऽस्ति। तस्मात् प्रकृतिर्विकृतिरुभयात्मकमनुभयात्मकञ्चेति चतुर्विधं कर्म सम्पन्नं, तेषु चतुर्विधेषु कर्मसु संहिताग्रन्थस्य प्रथमकाण्डे प्रपाठकचतुष्टयेन मूलप्रकृतिरूपाविष्टिसोमौ वर्णितौ, सोमस्याङ्गत्वेनावान्तरप्रकृतिरूपोऽग्नीषोमीयोऽपि वर्णितः। प्रकृतिं प्राधान्येन प्रतिपाद्य विकृतिव्युत्पत्तये पुनराधेयवाजपेयादयः काश्चिद्विकृतयो वर्णिताः, अथ द्वितीयकाण्डे प्राधान्येन विकृतयो वर्ण्यन्ते। यद्यप्यत्र पञ्चमषष्ठप्रपाठकयोर्दर्शपूर्णमासब्राह्मणमाम्नातं तथापि प्रपाठकचतुष्टये विकृतीनामेव ह्यभिधानात् काण्डस्य विकृतिप्राधान्यमविरुद्धं। तास्वपि विकृतिषु यद्यपि उक्तरीत्या

काम्येष्टीनां मूलप्रकृतिप्रत्यासत्त्या ता एव प्रथमं वर्णनीयाः तथापि तासु बहुवक्तव्यसद्भावात् सूचिकटाहन्यायेन प्रथमं ता उपेक्ष्य अवान्तरप्रकृतेरग्नीषोमीयपशोर्विकृतयो वायव्यादिकाम्यपशवोऽल्पवक्तव्यतया प्रथमप्रपाठके वर्ण्यन्ते। तेषाञ्च प्रत्येकं स्वतन्त्रत्वेन दर्शपूर्णमासाङ्गसमूहवदेककर्तृत्वाभावान्नास्ति क्रमनियमः, अतोऽनुवाकार्थानामनुष्ठानप्रयुक्तस्यानुपूर्विकनियमस्य कस्यचिदभावादध्ययनसम्प्रदायेनैव तन्नियम इति नात्रानुवाकार्थः पृथगुपन्यस्यते। तत्र च प्रथमानुवाकस्यादावैश्वर्यकामिनः पशुं विधत्ते "वायव्यꣳ श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येव" इति। वायुर्देवता यस्य पशोः सोऽयं वायव्यः, स च श्वेतवर्णः, तमालभेत संस्पृशेत् बर्हिःप्लक्षशाखाभ्यां यागार्थमुपाकुर्यादित्यर्थः। यद्यप्यत्र यागविधिर्न श्रूयते तथापि द्रव्यदेवतात्मकस्य यागरूपस्य श्रूयमाणत्वादन्यथानुपपत्त्या वायव्येन यजेतेत्येवं यागः कल्पनीयः। न च सत्सु सहस्रसङ्ख्याकेषु देवेषु कुतो वायुरेवापेक्ष्यत इति शङ्कनीयं। वायोरतिशयेन क्षिप्रगामिदेवत्वात्। श्वेतपशुश्चातिप्रियत्वाद्वायोः स्वकीयो भागः, स्वार्थे धेयप्रत्ययः, यद्वा वर्णव्यत्ययेन दातव्यत्वमुच्यते, तेन च भागधेयेनासाधारणेन वायुमेवोपधावति समीपं प्राप्नोति सेवत इत्यर्थः। इतरदेवानामस्मिन् पशावत्यन्तप्रियत्वाभावाद्वायुमेवेत्यवधार्यते, यद्वा यजमानस्थानादरव्यावृत्त्यर्थं उपधावत्येवेति योज्यं। तेन तुष्टः

स वायुरेवैनं यजमानमैश्वर्यं गमयति पूर्ववद्गमयत्येवेति योज्यं। तदनुग्रहादयं भवत्येव ऐश्वर्यं प्राप्नोत्येव। विशेषं विधत्ते "अति-क्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नि-युत्वत आलभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव" इति। अत्राभिज्ञाः *पूर्वोक्तविशेषेण वायुदेवता-त्यन्तं क्षिप्रकारिणीत्येतद्गुणदोषाभिज्ञाः सन्तः प्रथममाहुः, सा चोग्रा देवता एनं यजमानं प्रदहः प्रदग्धुमीश्वरा समर्थेति स्वाभिप्रायं प्रकटयन्ति, वायौ क्षिप्रं वाति सति जाज्वल्यमानो ऽग्निर्महान् दहन् लोके दृश्यते, अतोऽग्निद्वारा वायोर्दाहकत्वं, तत्परिहर्तुं नियुद्विशेषणयुक्ताय वायवे पशुमालभेत, नि-तरां युता रथे मिश्रिता इति नियुतो वायोरश्वाः, तेऽस्य सन्तीति नियुत्वान्, अत एव तदीययाज्यानुवाक्याप्रतिपादके 'पीवोऽन्नाꣳ रयिं वृधः' इत्यस्मिन् सूक्ते शतसहस्रसङ्ख्याका-भिरश्वजातिभिर्वायोर्गमनमाम्नायते 'आ नो नियुद्भिः शति-नीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञं वायो अस्मिन् हविषि मादयस्व' इति। येयं नियुत्सङ्ख्याकाश्वजातिः सै-वास्य वायोर्धृतिर्धारयित्री, न हि वाहनेषु अश्वेषु शनैर्गच्छत्सु वायुः क्षिप्रं गन्तुं शक्नोति, तेन नियुदेवास्य धृतिर्धारणमतो नियुत्वतो वायोर्हविःप्रदानेन यजमानोऽपि धृत एवाविनष्ट एव सन्नैश्वर्यं प्राप्नोति, तच्चैश्वर्यमप्रदाहाय भवत्येव, नियुत्वतो

---

* पूर्वोक्तनिर्विशेषणवायुर्देवतात्यन्तं क्षिप्रकारिणीत्येवं देवतादोषं गूढाभिप्रायाः सन्तः प्रथममाहुरिति तै०।

वायोरनुग्रहेण धैर्ययुक्तस्य यजमानस्य स्वकीयान् पुरुषान्नियन्तुं स्वकीयद्रव्यमविनाशेन पालयितुञ्च समर्थत्वात् मनःसन्तापरूपः प्रदाहः सर्वथा न भवत्येव। तमेव पशुं फलान्तराय विधत्ते "वायवे नियुत्वत आलभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्रजा नस्योता नियच्छति ग्राम्येव भवति" इति। नासिकायामोता नस्योताः, यथा लोके बलीवर्दा नासिकाच्छिद्रे रज्जुबन्धने सति सुखेन नीयन्ते तद्वत् सर्वाः प्रजा ग्रामवासिनीरधीनाः कृत्वा वायुस्तत्र तत्र भृशं नयति स च वायुः पशुना तुष्टः सर्वाः प्रजा यजमानाधीनाः करोति, स्वाधीनप्रजो यजमानो ग्रामस्वामी भवत्येव। देवतागुणं प्रशंसति "नियुत्वते भवति ध्रुवा एवास्मा अनपगाः करोति" इति। नियुत्वद्गुणयुक्ताय पशुर्भवतीति यत् तेन ग्रामस्थाः सर्वाः प्रजा अस्मिन् यजमाने ध्रुवा अनुरक्ताः करोति, न तु ताः कदाचिदप्यपरक्ता भवन्ति। पुनरपि फलान्तराय विधत्ते "वायवे नियुत्वत आलभेत प्रजाकामः प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजायाः अपक्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्राणापानाभ्यां प्रजां प्रजनयति विन्दते प्रजां" इति। प्रकर्षेणानिति मुखविलाद्बहिश्चेष्टत इति प्राणः, वायुश्च तथाविधः, अपकर्षेण मुखादधस्तादुदरस्यान्तरनिति चेष्टत इत्यपानः, नियुच्छब्दो नितरां

यौति मिश्रीभवतीति व्युत्पत्त्या तथाविधमर्थमाचष्टे। यः पुरुषः प्रजार्थमलं सन्ननुकूलस्त्रीयुक्तः सन् युवा च सन्नपत्यं न लभते एतस्य पुरुषस्य प्रजायाः सकाशात् प्राणापानावपक्रान्तौ भवतः, अपत्यलाभाभावेन पुरुषेण गर्भाशये निषिक्ते रेतसि नियुत्वतो वायोरनुग्रहाभावात् प्राणापानयुक्तं जीवान्तरं न प्रविशति। एतदेवाभिप्रेत्यैतरेयोपनिषदि श्रूयते 'न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्यते पूययेन्न सम्भवेत्' इति। नियुत्वान् वायुर्भागधेयेन तुष्टः यजमानार्थं तदीयरेतसि प्राणापानाभ्यां युक्तं जीवं प्रवेश्य प्रजाः प्रजनयति ततो यजमानः पुत्रं लभते। पुनरपि फलान्तराय विधत्ते "वायवे नियुत्वत आलभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्रानापानौ खलु वा एतस्मादपक्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् प्रानापानौ दधात्युत यदीतासुर्भवति जीवत्येव" इति। ज्योगामयावी दीर्घरोगयुक्तः, यस्य ज्योगामयति यं पुरुषं चिरमामयो बाधते एतस्मात् प्राणापानावतिक्रान्तुमुद्यतौ, अस्मिन् प्राणापानौ दधाति चिरं स्थापयति, अपि च यदि कथञ्चिद् भूमौ शयानो रुग्णो मुहूर्तमात्रं याममात्रं वा परेतो भवेत् तथापि वायोरनुग्रहादागतप्राणो जीवत्येव। कर्मान्तरं विधातुं प्रस्तौति "प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात ततोऽजस्तूपरः समभवत् तꣳ स्वायै

देवताया आलभत ततो वै स प्रजाः पशूनसृजत" इति। यदिदं प्रजापशुरूपं जगदिदानीं दृश्यते तदिदं सृष्टेः पूर्वं प्रजापतिरेक आसीत्, प्रजापतिरेव स्थितो नान्यत्किञ्चिदित्यर्थः। स च प्रजापशुसृष्टिकामस्तत्साधनत्वेन स्वशरीरादुदरमध्यवर्तिनीं पटसदृशीं वपामुदक्खिददुत्खिद्योद्धृतवान् ताञ्च वपामग्नौ प्रक्षिप्तवान्, ततो दग्धाया वपाया अजस्तूपरः शृङ्गरहितः समुत्पन्नः, तञ्चाजं स्वात्मरूपां देवतामुद्दिश्यालभत, तत्कर्मसामर्थ्यात् प्रजाः पशूनसृजत। ननु स्वयमेव स्ववपामुत्खिद्याजं तत उत्पाद्य तञ्च स्वार्थमालभ्य जगत् सर्वमप्यसृजतेति महदेवैतदिन्द्रजालं। बाढमिन्द्रजालमेवैतत्, अत एवान्यत्राम्नातं 'इन्द्रो मायाभिः पुरुरूप ईयते' इति, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' इति। न खल्विन्द्रजालविषये विस्मेतुञ्च भवानपीच्छति,यदा तु लौकिकेऽपीन्द्रजाले न काप्यनुपपत्तिस्तदानीमचिन्त्यमहिम्नि सर्ववेदसिद्धे परमेश्वरे का नाम तवानुपपत्तिः। अन्यथा क्व वीर्यं क्व वा पुरुषः क्व वीजं क्व वा वृत्त इत्यादिकं भवानुपपादकमन्यः कथं युक्तिभिरुपपादयति। सङ्कल्पसिद्धे जगदीश्वरे को नाम विस्मय इति चेत्, तर्ह्येतत् प्रकृतेऽपि मा विस्मरेत्। सङ्कल्पसिद्धस्य किमेतावता प्रयासेनेति चेत्, नानाविधभोगैस्तृप्तस्य राजादेः किं द्यूतमृगयादिप्रयासेनेति त्वया वक्तव्यं। लीलेति चेत् तदत्राप्यनुसन्धेहि। तथा च श्रुतिः,

भोगार्था सृष्टिरित्यन्ये क्रीडार्थमिति चापरे। इति।

विष्णुपुराणेऽपि,

क्रीडतो बालकस्येव चेष्टां तस्य निशामय। इति।

व्याससूत्रमपि 'लोकवत्तु लीला कैवल्यं' इति। अलमति-प्रसङ्गेन। विधत्ते "यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत प्रजापतिमेव स्वेन भागधेयेनोप-धावति स एवास्मै प्रजां पशून् प्रजनयति" इति। पशुं प्रशंसति "यत् श्मश्रुणस्तत् पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन् तद्गवां यदव्या इव शफास्तदवीनां यदजस्तद-जानामेतावन्तो वै ग्राम्याः पशवस्तान् रूपेणैवावरुन्धे" इति। पुंपशावजे श्मश्रूणि विद्यन्ते, तूपरत्वं सर्वेष्वजेष्वभावेऽपि प्र-कृते विद्यते, अन्यतोऽधस्त एव दन्ता इत्यन्यतोदत्त्वं, अविखुर-सदृशाः शफा दृश्यन्त एव अजत्वजातिश्चास्ति, तत् पुरुषा-दिरूपत्वं। यद्यपि ग्राम्येषु पशुषु गर्दभोष्ट्रावपि सप्तसङ्ख्या-सिद्धये तत्र तत्र गृह्येते तथापि पुरुषादयः पञ्चैव प्रशस्ताः विप्रराजादिभिरत्यन्तमादृतत्वात्, अत एव तदीयेन स्वरू-पेण सर्वरूपसदृशेन तान् पुरुषादीन् सर्वानधीनान् करोति। पश्वन्तरं विधत्ते "सोमापौष्णं त्रैतमालभेत पशुकामो द्वौ वा अजायै स्तनौ नानेव द्वावभिजायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोपधावति तावेवास्मै पशून् प्रजनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्रजनयति" इति। त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितं, तत्र भवस्त्रैतः, तेषामन्य-तम इत्यर्थः। त्रयाणामुत्पत्तौ प्रयोजनमेवमुन्नेयं, अजायास्ता-

वद्धौ स्तनौ प्रसिद्धौ तौ नानैव पृथगेव पातुं द्वौ वत्सौ जायेते, मातृरूपायामजायां येयमूर्क् पय: सारं या च शरीरगता पुष्टिस्तदुभयं तां ख्यापयितुं तृतीयो वत्स उत्पन्नः, द्वावेव हि सर्वत्र जायेते, तृतीयस्तु क्वचिदेव, तथा सति यस्यां तृतीयो जातस्तस्याः शरीरे वीर्याधिक्यं पुष्ट्याधिक्यञ्चास्तीति लक्षयितुं शक्यते। किं बहुना नैतः प्रशस्त इति द्रष्टव्यं। गर्भाशये रेतो यथा न स्रवति तथा सोमो धारयति, पूषा भूमिरूपत्वात् स्वकीयौषधिरसेन पोषयित्वा प्रजनयति। चोदकप्राप्तं खादिरं बाधितुं विधत्ते "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे" इति। फलानां यथा बहुत्वादुदुम्बरस्योर्ग्रूपत्वं चीरद्वारेण पशुरपि तथाविधः, अत ऊर्जैवोदुम्बररूपया यजमानार्थं उर्ग्रूपान् पशून् सम्पादयति।

अत्र मीमांसा। यत् पूर्वमग्निहोत्रादीनां मूलप्रकृतित्वं तदष्टमाध्यायस्य प्रथमपादे चिन्तितं।

"इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि।
अस्ति वा नालौकिकत्वादियत्तानवधारणात्॥
लोकवत्सन्निपत्याराादुपकारिद्वयं, श्रुतेः।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु"॥

अलौकिकत्वेनैतावद्भिरङ्गैः सम्पूर्ण उपकार इति निश्चेतुमशक्यत्वादिष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत्। मैवं, लौकिकसदृशत्वात्, यथा लोके भुजिक्रियायामोदनः करणं तस्य सन्निपत्योपकारिणः शाकसूपादयः आरादुपकारिणः पीठप्रदी-

पादयः तथा भावनायां यागः करणं अवघातादयः सन्निपातिनः प्रयाजादयः आरादुपकारिणः,अतो नात्यन्तमलौकिकत्वं, इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयतां, तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति।

मासाग्निहोत्रस्य नित्याग्निहोत्राद्भेदो द्वितीयाध्यायस्य तृतीयपादे चिन्तितः।

"मासं जुहोत्यग्निहोत्रं गुणोऽन्यत् कर्म वा गुणः।
अनूद्य प्राप्तं कर्मात्र मासोऽप्राप्तो विधीयते॥
उपसद्भिश्चरित्वेति नित्ये तासामसम्भवात्।
अनेकस्या विधेश्चान्यत्कर्म प्रकरणान्तरात्"॥

कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेत' इति। अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेत्। मैवं, किं मास एव विधीयते, उत वोपसद्भिश्चरित्वेत्युक्तत्वादुपसदोऽपि। नाद्यः, उपसदामपि नित्याग्निहोत्रे प्राप्तिरहितानां त्वन्मते विधातव्यत्वात्। न द्वितीयः, प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदापत्तेः। ननु मा भूत्तर्हि गुणविधिः कर्मान्तरत्वे किं प्रमाणमिति चेत्, प्रकरणान्तरमिति वदामः। न ह्येतन्नित्याग्निहोत्रस्य प्रकरणमसन्निहितत्वात्। अयनस्य त्वेतत् प्रकरणं अयनमारभ्याधीतत्वात्। का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत्, प्रकरणस्यासमर्थत्वेऽप्यग्निहोत्रशब्देन तत्समर्पणादेषा शङ्का भवति सा च वाक्यभेदापत्त्या निराकृता। तथा सति स्वतःसिद्धं प्रक-

रणभेदं निराकृत्य प्रकरणैक्यापादनेन गुणं विधापयितुं प्रवृ-त्तस्याग्निहोत्रशब्दस्य शक्तौ निरुद्धायां तदवस्थः प्रकरणभेदो नित्याग्निहोत्रादिदं कर्म भिनत्ति। अग्निहोत्रशब्दो धर्माति-देशार्थ इति सप्तमे वक्ष्यते। ननूपसन्मासाभ्यां गुणाभ्यां विशिष्टं कर्म विधीयते ततो वाजिनन्यायेन (पृ०३२) गुणभेदात् कर्मभेदो, न प्रकरणभेदादिति चेत्, न, वैषम्यात्। उपादेयतया विधेयो गुणो वाजिनं मासस्त्वनुपपादेय इत्येकं वैषम्यं, द्रव्यत्वेन गुणान्त-र्गतं वाजिनं मासो न तथेत्यपरं वैषम्यं। परमार्थतस्त्वत्र प्रथम-तरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति ततः प्रकरणान्तरमेवात्र भेदहेतुरिति।

ईदृशस्य कर्मणो धर्मापेक्षत्वं सप्तमाध्यायस्य चतुर्थपादे चिन्तितं।

"सौर्ये चरौ न धर्माः स्युः स्युर्वा, मानविवर्जनात्।
न स्युः, स्युः करणं यागोऽपेक्षते ह्युपकारिणः"॥

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्रावघातादयो धर्मा न प्राप्यन्ते प्रापकप्रमाणानां श्रुतिलिङ्गादीनामभावा-दिति चेत्, मैवं। याग उपकरणापेक्षः करणत्वात् लौकि-कवैदिकभोजनदर्शपूर्णमासादिवदित्यनुमानेन तत्प्रापणात्।

तत्रैवान्यच्चिन्तितं।

"विध्यन्तोऽपेक्षितस्तत्र लौकिको वाथ वैदिकः।
आद्यो निबन्धराहित्यादन्त्यो धीसन्निकर्षतः"॥

तत्र सौर्यचरावपेक्षितः प्रधानविधिशेषाङ्गकलापः स्थालीपा-

कादिगतो लौकिको ग्रहीतव्यः। कुतः, अनिबद्धत्वात्। वैदिकस्तु प्रकरणेन कर्मविशेषे निबद्धः सन् ततो वियोजयितुं शक्यत इति चेत्। मैवं, वैदिके करणे वैदिकविध्यन्तस्य बुद्धिसन्निकर्षात्। यथा प्रकरणेन क्वचिन्निबद्धः तथा चोदकेनान्यत्रापि निबध्यतां। किञ्च 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति सौर्ययागविधिविशेषे कृष्णलहोमविधानाय सिद्धवत् प्रयाजोऽनूद्यते तच्च वैदिकेतिकर्तव्यताया लिङ्गं। तस्माद्वैदिको ग्राह्यः।

स च विध्यन्त ईदृशेषु कर्मस्वुपदेशतो न प्राप्नोतीति सप्तमाध्यायस्य प्रथमपादे चिन्तितं।

"सर्वार्थं प्रकृतार्थं वा प्रयाजाद्युपदेशनं।
यज्ञान्वयेन सर्वार्थं नातिदेशो विचार्यतां॥
*अङ्गप्रधानयोर्मुख्यापूर्वभेदे समन्वयात्।
प्रकृतार्थमतः कार्यमतिदेशविचारणं॥ इति।

दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः, ज्योतिष्टोमप्रकरणे दीक्षणीयादयः, तत्र ते सर्वे धर्माः सर्वयागार्थत्वेनोपदिश्यन्ते, कुतः, यज्ञान्वयात्। यागः करणं प्रयाजादय इतिकर्तव्यतेत्येतावदविवादं। तत्र यदि प्रयाजादयो यागवदपूर्वेणान्विताः स्युः तदानीमपूर्वनिष्पादकत्वमुभयत्र समानमिति कृत्वा करणोपकरणत्वलक्षणं सर्वसम्मतमवान्तरवैषम्यं बाध्येत। किञ्चावघातपेषणादीनां यागनिष्पादकत्वेन यज्ञान्वयो दृष्टः, तद्वदङ्गत्वसामान्यात् प्रयाजादीनामपि यज्ञान्वयो युक्तः, यजि-

* न प्रधानद्वयोर् (प्रधानाङ्गयोर्) मुख्यापूर्वभेदसमन्वयादिति तै०।

धातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते। तथा सति सौर्यश्येनादिष्वप्युपदेशेनैव कृत्स्नधर्मप्राप्तेरतिदेशविचारो न कर्तव्य इति प्राप्ते ब्रूमः। अपूर्वं मुख्यं फलवत्त्वात्, यजिर्न मुख्यः फलरहितत्वात्। फलवति मुख्ये प्रयाजादिविधानं युक्तं, अतः करणेतिकर्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः पश्चात् परस्परं गुणप्रधानभावेनान्वयः, तथा सत्यपूर्वभेदस्य द्वितीयाध्याये निरूपितत्वादपूर्वविशेषेण तत्करणभूतयजिविशेषेण वान्विताः प्रयाजादिधर्मा ये यस्मिन् प्रकरण आम्नातास्ते तत्रैव व्यवतिष्ठन्ते। सत्येवं प्रकरणमर्थवद्भवति, सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात्। तस्मात् सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षां पूरयितुमतिदेशविचारः कर्तव्यः।

प्रत्यक्षवचनेन धर्मातिदेशः तत्रैव चिन्तितः।

"इषौ समानमितरत् श्येनेनेत्यनुवादकं।
श्येनवैषयिकाणां वातिदेशोऽत्रानुवादकं॥
ज्योतिष्टोमविकारत्वात् तद्धर्माश्चोदकात् समाः।
श्येनेष्वोरितरत्वोक्तिरिषुवैशेषिकं प्रति॥
इषुवैशेषिकादुक्तादितरत् श्येनगं स्फुरेत्।
वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते"॥ इति।

इषुनामकः श्येननामकश्च द्वावप्येकाहौ ज्योतिष्टोमविकारौ, तयोरुभयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः ते चोभयत्र समानाः, तच्च समानत्वमिषुप्रकरणवाक्येनानूद्यते समानमितरत्

श्येनेनेति। नन्वत्रेतरशब्दोक्तिरनुपपन्ना तत्प्रतियोगिनः कस्य-चिदनिर्दिष्टत्वादिति चेत्, न, पूर्ववाक्यविहितस्य विशेषधर्मस्य प्रतियोगित्वात्। इषौ यो वैशेषिकधर्मो विहितस्तं परित्यज्येतरच्चोदकप्राप्तं सर्वं श्येनेन समानमित्यर्थः। तस्मादनुवादक-मिदं वाक्यमिति प्राप्ते ब्रूमः। इतरशब्दः प्रतियोगिसजातीयं ब्रूते, तद्यथा देवदत्त एक एवाधीते नेतरः कश्चिदित्युक्तेऽध्य-यनप्रसक्तिमान् यज्ञदत्तादिमाणवकः प्रतीयते, न तु गवाश्व-घटपटादिः। एवमत्रापि इषुवैशेषिकस्य पूर्ववाक्योक्तस्य प्रति-योगित्वात् तत्सजातीयं श्येनगतं लोहितोष्णीषादिरूपं वैशेषिक-धर्मजातमितरशब्देन प्रतिभाति तच्च प्रकृतावभावान्न चोद-केन प्राप्तं। तस्मादिषावनुष्ठेयत्वेनातिदिश्यते।

नाम्ना धर्मातिदेशस्तत्रैव तृतीयपादे चिन्तितः।

"मासं जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः।
नित्यान्मासाग्निहोत्रेऽस्मिन् धर्माणां नातिदेशकं॥
उतातिदेशकं नैवं द्वयोर्नाम्नः समत्वतः।
अग्नये होत्रमित्यस्य नित्ये सम्पादितत्वतः॥
तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये।
नित्याग्निहोत्रगान् धर्मांस्तन्नाम्नातिदिशेदिह"॥ इति।

कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति' इति। तत्राग्निहोत्रमित्येतन्नाम नित्याग्निहोत्रादन्यस्मिन् मासाग्निहोत्रे धर्मानतिदेष्टुं नार्हति। कुतः, तस्य नाम्न उभयोरग्निहोत्रयो-र्मुख्यवृत्त्या समानत्वादिति प्राप्ते ब्रूमः। अग्नये होत्रं यस्मिन्

कर्मणि तदग्निहोत्रमित्येतमवयवार्थं नित्याग्निहोत्रे सम्यक्
तन्नामधेयत्वं प्रथमाध्याये निर्णीतं, अतस्तत्रैवायं शब्दो मुख्यः।
न चोभयत्र मुख्यत्वं सम्भवति अनेकार्थत्वस्यान्याय्यत्वात्, मुख्य-
त्वासम्भवेन मासाग्निहोत्रे गुणयोगाद्वर्तितुं नित्याग्निहोत्रगुणा-
नतिदिशति।

प्रत्यक्षवचननाम्नोरभावेऽपि नियतादेव कर्मणोऽतिदेशो
ऽष्टमाध्यायस्य प्रथमपादे चिन्तितः।

"कस्माच्चिदतिदिश्यन्ते नियतात् कर्मणोऽथवा।
अविशेषादादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः"॥ इति।

विहितेतिकर्तव्यतारहिते सौर्यादौ कर्मणि तद्युक्तात् यतः
कुतश्चित्कर्मणो धर्मा अतिदिश्यन्ते। कुतः, नियामकस्य विशेष-
स्याभावात्। अतो विशेषचिन्ता न कार्येति चेत्, मैवं। शास्त्रा-
र्थस्य व्यवस्थाया नियामकत्वात् आग्नेयलिङ्गान्नियतादेकस्मात्
कर्मणो धर्मातिदेशः, तेन विशेषचिन्ता कर्तव्या।

तत्रैव विशेषनियामकं चिन्तितं।

"तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकं।
भवेद्वा न ह्यशब्दत्वाङ्गवेच्छब्दे प्रवेशतः"॥ इति।

दर्शपूर्णमासयोराग्नेयमष्टाकपालं निर्वपतीत्यत्र तद्धितोक्त्या
देवतानिर्देश एकदेवतायोगित्वमोषधिद्रव्यकत्व निर्वाप इत्येता-
न्याग्नेययागसम्बन्धितया श्रूयमाणत्वादाग्नेयलिङ्गानि, सौर्यं चरुं
निर्वपेदित्यत्रापि तान्युपलभ्यन्ते, न तेषामाग्नेयधर्मातिदेशं नि-
यन्तुं सामर्थ्यमस्ति। कुतः, तेषामशब्दरूपत्वेन शब्दैकसमधि-

गम्येऽर्थे प्रामाण्यायोगादिति प्राप्ते ब्रूमः। लिङ्गस्मारितोपकारसहितमेव सौर्ययागं तच्छब्दो विदधाति, तथा सति प्रनाड्या लिङ्गस्य शब्दे प्रवेशादाग्नेयवत् सौर्योऽनुष्ठेय इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते।

इष्टिषु सौमिकधर्मनिवारणं तत्रैव चिन्तितं।

"ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा द्वयोरिह।
सम्भवादैष्टिकोऽन्योऽत्र स्यात्कपालादिलिङ्गतः" ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया ग्राह्यः। कुतः, उभयत्र विध्यन्तसम्भवेनातिदेष्टुमर्हत्वादिति चेत्। न, कपालनिर्वापादिभिर्लिङ्गविशेषैरैष्टिकस्यैवात्रोचितत्वात्।

अग्नीषोमीयपशोरिष्टिविकृतित्वं तत्रैव चिन्तितं।

"न पशावैष्टिकः स्याद्वा न कपालाद्यभावतः।
स्याद्व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यनामतः" ॥

अग्नीषोमीये पशावैष्टिकविध्यन्तो नास्ति। कुतः, पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेत्, मैवं। आग्नेयमष्टाकपालमित्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथाग्नीषोमीयं पशुमित्यत्रापि, न तु सोमेन यजेतेत्यत्रेव देवताया अव्यक्तत्वं, तदेतत् व्यक्तद्रव्यदेवत्वमेकं लिङ्गं। एकादश प्रयाजान् यजतीत्यत्र प्रयाजबहुत्वं द्वितीयं। स्रुच्यमाघार्य जुह्वा पशुमनक्तीत्याघाराञ्जने लिङ्गान्तरं। आलम्भो लिङ्गान्तरं इष्टावपि ईषामालभेत इति दर्शनात्। तस्मादस्ति पशावैष्टिकः।

तस्यैव पशोः पश्वन्तरप्रकृतित्वेनावान्तरप्रकृतित्वं तत्रैव चिन्तितं।

"सवनीयादिके दार्शो दैक्षो वा प्रकृतित्वतः।
आद्योऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत्" ॥

सवनीयानूबन्ध्यनिरूढादिपशुषु दर्शपूर्णमाससम्बन्धिविध्यन्तः कार्यः, कुतः, दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमीयपशुविध्यन्तः दीक्षितेनानुष्ठेयेषु पशुविध्यन्तेषु प्रथमभावित्वात्, तस्य चाग्नीषोमीयेष्टिविकृतित्वान्न प्रकृतित्वमस्ति, अतो न तस्य विध्यन्तोऽतिदेशार्थ इति प्राप्ते ब्रूमः। आलम्भोऽग्नीषोमीयपशौ लिङ्गं सवनीयादिष्वप्यस्ति*। तथा प्रातःसवनादिषु वपाप्रचारो ऽपरं लिङ्गं। इष्टिं प्रति विकृतेरप्यन्यत्र सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादग्नीषोमीयपशोर्विध्यन्तं सवनीयादिपशुष्वतिदिशेत्, तथैवमेतैर्विचारैर्वायव्यादिपशुष्वग्नीषोमीयविध्यन्तातिदेश इति संस्थितं।

वायव्यꣳ श्वेतमालभेतेत्यत्र यागविधित्वं द्वितीयाध्यायस्य तृतीयपादे चिन्तितं।

"वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा।
निर्वपेद्ब्रह्मतेजोऽर्थमीषामुष्टिनिरूपयोः ॥
गुणौ श्वेतचरू किं वा यावत्कथितकर्मणी।
फलार्थमथवा यागौ विशिष्टौ विहिताविह ॥
श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे।
चरुर्गुणः चरुः स्थाली निर्वापस्तु तदाश्रितः ॥

* लिङ्गं तच्च प्रयाजादिष्वस्तीति तै०।

फलहानेर्न तत् किन्तु यावच्चोदितकर्म तत्।
द्रव्यादिरूपसम्पत्तेरवार्या यागतार्थिकी" ॥

अनारभ्येदमाम्नायते 'वायव्यꣳ श्वेतमालभेत भूतिकामः' इति 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति च। तथा च दर्शपूर्णमासयोरिदमाम्नातं 'ईषामालभेत' इति 'चतुरो मुष्टीन्निर्वपति' इति च। ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः, तस्या आलम्भः स्पर्शः, तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य तस्यामालभ्यायामीषायां श्वेतगुणो विधीयते, तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद्वायव्यत्वं सम्भवति। तथा चतुर्मुष्टिनिर्वापमनूद्य चरुर्गुणत्वेन विधीयते। चरुः स्थाली, सा च निर्वापस्याश्रयः, निरुप्तस्य हविषो आग्नेयतया सूर्यवत्प्रभासम्बन्धात्सौर्यत्वं। भूतिब्रह्मवर्चसफले सार्वकालिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते, तस्माद्गुणविधिरित्येकः पूर्वपक्षः। न हि फलप्रदयोर्नित्यवच्छ्रुतयोः सम्भवत्प्रयोजनयोश्च पाक्षिकानुवादत्वमानर्थक्यं वा युक्तं, तस्माद्गुणफलविशिष्टकर्मान्तरे विधीयेते, तदापि यागस्याश्रवणादालम्भनिर्वापयोरेव श्रवणाद्यावदुक्तकर्मविधिरिति द्वितीयः पूर्वपक्षः। श्वेतपशुचरुद्रव्ययोर्वायुसूर्यदेवतयोश्च स्पष्टं प्रतीयमानतया रूपवतोर्यागयोरार्थिकयोर्वारयितुमशक्यत्वाद्द्रव्यदेवताविशिष्टयोर्यागयोर्विधिरभ्युपगन्तव्यः, भूतिकामो वायव्येन श्वेतेन पशुना यजेत, ब्रह्मवर्चसकामः सौर्येण चरुणा यजेतेत्येवंविधोऽर्थसिद्धो विधिर्द्रव्यदेवतासम्बन्धकल्पितस्य यागस्य लिङ्प्रत्ययेन कर्त-

व्रताविधानात्। आलम्भनिर्वापयोर्धात्वर्थयोः का गतिरिति चेत्, अनुवाद इति ब्रूमः। तत्प्राप्तिस्तार्थिकी निर्वापालम्भा-वन्तरेण तत्तद्यागासिद्धेः। तस्माद्यागविधिरिति राद्धान्तः।

दशमाध्यायस्य तृतीयपादे चिन्तितं।

"वायव्यं श्वेतमित्यत्र यः कोऽपि छाग एव वा।
विशेषानुक्तितः कोऽपि छाग एवास्त्वबाधनात्"॥

वायव्यꣳ श्वेतमालभेत भूतिकाम इत्यत्र श्वेतशब्दस्य धेन्वा-दिशब्दवज्जातिविशेषगतगुणवाचित्वाभावात् यं कञ्चिदपि पशुं श्वेतगुणकं समर्पयतीति पूर्वः पक्षः। चोदकप्राप्तस्याजस्य बाध-कारणाभावात् तमेव समर्पयतीति राद्धान्तः।

तत्रैव सप्तमपादे चिन्तितं।

"औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः।
द्वयोर्नियोजनादाद्यो निरपेक्षत्वतोऽन्तिमः"॥ इति।

पशुकामेनानुष्ठेये सोमापौष्णे पशौ श्रूयते 'औदुम्बरो यूपो भवति' इति। तत्र चोदकप्राप्तेन खादिरेण सह श्रूयमाणस्यौ-दुम्बरस्य समुच्चयः कार्यः। कुतः। द्वयोर्यूपयोः पशुनियोजनसम्भ-वेन चोदकपरित्यागायोगादिति प्राप्ते ब्रूमः। खादिरौदुम्बरौ परस्परनिरपेक्षतया पशुनियोजनक्षमौ प्रमाणद्वयेन प्राप्तौ, तयोः समुच्चयाङ्गीकारे नैरपेक्ष्यं परित्यज्येत, तस्मादुपदिष्ट औदुम्बरोऽतिदिष्टस्य खादिरस्य बाधक इति॥ ०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥ * ॥

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत्ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमालभत स कृष्ण एकशितिपादभवद्यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमालभेत वरुणं ॥ १ ॥

एव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृध्यै सुवर्भानुरासुरः सूर्यं तमसाविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत्प्रथमं तमोऽपाघ्नन्त्सा कृष्णाविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत्तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साविर्वशा ॥ ॥ २ ॥

समभवत्ते देवा अब्रुवन् देवपशुर्वा अयꣳ समभूत् कस्मा इममालप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायालभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयो यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामाय ॥ ३ ॥

आलभेतादित्यानेव कामꣳ स्वेन भागधेयेनोपधावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्त्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आलभन्ताग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आलभेत ॥ ४ ॥

आग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोपधावति ता एवास्मिन् ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमालभेत ग्रीष्मे मध्यन्दिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येव ॥ ॥ ५ ॥

अवरुन्धे संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्रयच्छति ब्रह्मवर्चस्येव भवति गर्भिणयो भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवास्मिन् दधति सारस्वतीं मेषीमालभेत

य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोपधावति सैवास्मिन् ॥ ६ ॥

वाचं दधाति प्रवदिता वाचो भवत्यपन्नदती भवति तस्मान्मनुष्याः सर्वां वाचं वदन्त्याग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव सौम्यं बभ्रुमालभेताग्नेयं कृष्णग्रीवं प्रजाकामः सोमः ॥ ७ ॥

वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्रजनयति विन्दते प्रजामाग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादपहन्ति श्वेतो भवति ॥ ८ ॥

रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधात्याग्नेयं कृष्णग्रीवमाल-

भेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परिगृह्णात्येकधा समावृङ्क्ते पुर एनं दधते ॥ ६ ॥

लभेत वरुणं वशैतामविं वशामादित्येभ्यः कामाय मल्हा आलभेत तान्येव सैवास्मिन् सोमः श्वेतो भवति त्रिचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

भूतिकामो ग्रामकामः प्रजार्थी दीर्घरोगवान् ।
प्रजापश्वर्थिनो चैषां श्वेताद्याः पशवः *श्रुताः ॥

तानेतान् पशून् प्रथमानुवाके विधाय द्वितीये वरुणगृहीतादीनां पशव उच्यन्ते। तत्र वरुणगृहीतस्य पशुं विधातुं प्रस्तौति "प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत्ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमालभत स कृष्ण एकशितिपादभवत्" इति। प्रजापतिना सृष्टाः प्रजाः पराचीः पराङ्मुख्यः अपरक्ताः सत्योऽस्मात् प्रजा-

* स्मृता इति का० ।

पतेरायन्नगच्छन् गत्वा च वरुणं प्राप्ताः, स च प्रजापतिस्ताः प्रजा अनुगम्य मदीयाः प्रजाः पुनरपि मह्यमेव देहीति वरुणमयाचत, वरुणस्तु न ददौ। ततः स प्रजापतिर्वरुणमिदमब्रवीत् एतासां प्रजानां मध्ये वरं श्रेष्ठं गृहीत्वावशिष्टास्ता मह्यं देहीति, स च वरुणस्तासां प्रजानां मध्ये वरं श्रेष्ठं कञ्चित्पशुं मदीयोऽयमिति हस्तेनास्पृशत् स च परीक्ष्यमाणः कृष्णवर्णः सन्नेकेन श्वेतेन पादेन युक्तोऽभूत्। विधत्ते "यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमालभेत वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति" इति। वरुणगृहीतो जलजन्येन महोदरव्याधिना गृहीतः। पशुविशेषणं प्रशंसति "कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै" इति। ईदृशं पशुं वरुणः प्रत्याहृतवानिति तस्य वरुणदेवताकत्वं स च यजमानस्यारोग्यसमृद्ध्यै सम्पद्यते। *पशुप्रतिपादिकामाख्यायिकां वशां विधातुं प्रस्तौति "सुवर्भानुरासुरः सूर्यं तमसाविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत्प्रथमं तमोऽपाघ्नन्त्सा कृष्णाविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत्तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साविर्वशा समभवत्ते देवा अब्रुवन् देवपशुर्वा अयꣳ समभूत् कस्मा इममालप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायालभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयः" इति। सुवर्भानुरि-

---

* पशुप्रजाकामिनः पशुं विधातुं प्रस्तौतीति तै०।

त्यासुरस्य कस्यचिन्नामधेयं, स्वर्गलोकगतां प्रभां नुदतीति सुवर्भानुः, स च पृथिव्या रूपं धृत्वा कृष्णवर्णः, *तमःपुञ्जरूपत्वं 'यत् त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः' इत्येतस्यामृचि स्पष्टमाम्नातं, पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते छन्दोगाश्च यत्कृष्णं तदन्नस्येत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्वमामनन्ति, अतस्तमःपुञ्जरूपः स आसुरः स्वकीयेन तमसा सूर्यमाच्छाद्य जगदान्ध्यं कृतवान्। तस्मै तस्य सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तिं परिहारं विचार्य नानाविधैः प्रकाशरूपैर्मण्यादिद्रव्यैस्तमोऽपाघ्नन् चतुर्भिः पर्यायैरपसारितवन्तः। प्रथमपर्याये प्रसृतं तमः कृष्णवर्णा काचिदविरभूत्, द्वितीयपर्याये फल्गुनी लोहितवर्णा काचिदविरभूत्, तृतीयपर्याये बलक्षी श्वेता काचिदविरभूत्, अस्थ्नोऽधि उपरि वर्तमानः प्रकाशोऽध्यस्थः,कस्यचिन्मृतदेहस्य दीप्यमानमस्थि समादाय तदीयात् प्रकाशाच्चतुर्थपर्याये तमोऽपाकृन्तन्नपनीतवन्तः, तच्च तमो वशा बन्ध्या काचिदविरभूत्। ततो देवा विचार्य परस्परमिदमब्रुवन्, †दैव्यादस्थ्नो जातत्वादयमुत्तमो देवपशुः तमेतं कस्मै कामायेप्सितप्रयोजनायालभ्य करिष्याम इति। अथ विचारादूर्द्धं तर्हि तदानीमेव पृथिव्या अल्पत्वं ओषधीनामनुत्पत्तिश्च दोषद्वयमवेच्य तत्परिहाररूपाय कामाय समर्थेभ्यः आदित्येभ्यस्तां वशामालभ्य पृथिवीविस्तारमोषध्युत्पत्तिञ्च उत्पादितवन्तः। विधत्ते "यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति

---

* तमःपुरुषरूपत्वमिति तै०। † दीप्यादिति तै०।

स एतामविं वशामादित्येभ्यः कामायालभेतादित्यानेव काम१ँ स्वेन भागधेयेनोपधावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्ति" इति। पशुभिः प्रथेय पशुबाहुल्यलक्षणं विस्तारं प्राप्नुयां, प्रजया पुत्रपौत्रादिरूपया प्रकृष्टो जायेय भवेयं, कामाय कामप्रापकेभ्य इत्यर्थः। ब्रह्मवर्चसकामस्य पशुविधानाय प्रस्तौति "असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आलभन्ताग्नेयीं कृष्णग्रीवी१ँ संहितामैन्द्री१ँ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन् रुचमदधुः" इति। पूर्ववत्तमोवेधरहितोऽप्यादित्यः कदाचित् प्रकाशमान्द्यादिशेषेण न दीप्तवान्, तस्मै तदर्थमेता वक्ष्यमाणा मल्हा मणिला गललम्बितस्तनान्विता अजाः श्वेतास्तिस्र आलभन्त। कृष्णा ग्रीवा यस्याः सा कृष्णग्रीवी ग्रीवाव्यतिरिक्तप्रदेशेषु वर्णान्तरोपेतेत्यर्थः। कृत्स्नेऽपि शरीरप्रदेशे भेदस्थितैर्लोहितशुक्लकृष्णवर्णैर्युक्ता संहिता। विधत्ते "यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आलभेताग्नेयीं कृष्णग्रीवी१ँ संहितामैन्द्री१ँ श्वेतां बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोपधावति ता एवास्मिन् ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति" इति। श्रुताध्ययनसम्पत्तिरूपं तेजो ब्रह्मवर्चसं। उक्तस्य पशुत्रयस्य प्रयोगार्थं पशुविशेषं कालविशेषञ्च विधत्ते "वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमालभेत ग्रीष्मे मध्यन्दिने स१ँहितामैन्द्री१ँ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजा१ँसि वसन्ता प्रात-

ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव-रुन्धे" इति। प्रातरादिकालेषूपाकरणं वपायागो वा यथा भवति तथा प्रारभेत, वसन्तर्तौ प्रातःकाले वर्षास्विव तीव्र-मेघावरणाभावात् हेमन्तशिशिरयोरिव नीहारावरणाभावा-च्चादित्यः स्पष्टं प्रकाशते। ग्रीष्मर्तौ मध्याह्ने प्रकाशाधिक्य-मतिस्पष्टं। शरदृतावपराह्णे सूर्यतेजः सेव्यं भवति, प्रात-र्मध्यन्दिनयोर्बालातपस्य तीव्रातपस्य च जरादिहेतुत्वादसेव्य-त्वं। तान्येतानि यथोक्तान्यादित्यस्य त्रीणि तेजांसि प्रशस्तानि। अतस्तत्कालानुष्ठानेन प्रशस्ततेजःसम्पत्तिर्भवति। अतोपक्रममा-रभ्य संवत्सरपर्यन्तं ब्रह्मचर्यादिनियमं विधत्ते "संवत्सरं पर्या-लभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्म-वर्चसं प्रयच्छति ब्रह्मवर्चस्येव भवति" इति। एकस्मिन् संवत्सरे निरन्तरं नियमं परिगृह्य तादृशेन पुरुषेण ताः स्वस्वकाल आलभ्यन्ते। उपनीतस्य माणवकस्य सन्ध्यावन्दनाद्याचारशिक्षा संवत्सरेण सम्यक् सम्पद्यत इति संवत्सरस्य ब्रह्मवर्चसप्रदा-तृत्वं। उक्तपशुषु कञ्चिद्गुणं विधत्ते "गर्भिणयो भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवास्मिन् दधति" इति। गर्भिण्यस्तिस्रोऽपि गर्भयुक्ताः। विद्वत्सभावाग्मित्वकामिनः पशुं विधत्ते "सार-स्वतीं मेषीमालभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोपधावति सैवास्मिन् वाचं दधाति प्रवदिता वाचो भवति" इति। वेद-शास्त्रादभ्यासपाटवेन वाचो वदितुं समर्थोऽपि सभाकम्पादि-

ना यो न वदेत् तस्यायं पशुः। तस्मिन् पशौ कञ्चिद्गुणं विधत्ते "अपन्नदती भवति तस्मान्मनुष्याः सर्वां वाचं वदन्ति" इति। अपन्नदती दन्तपातरहिता लोकेऽपि सदन्ताः पुरुषाः वर्णलोपमन्तरेण सम्पूर्णां वाचं वदन्ति। तीव्ररोगसहितस्य पशुद्वयोपेतं कर्म विधत्ते "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव" इति। बभ्रुः पिङ्गलः, शरीरे प्राणस्य बन्धकः सूक्ष्मो योऽन्नस्य रसः स सोमं प्राप्नोति भोजनरुचौ व्याधिनाभिभूतायां भुक्तान्नरसः शरीरे न प्रविशति किन्तु सोमाधिष्ठितौषधिकार्य एवान्ने तिष्ठते सेयं रसस्य सोमप्राप्तिः, ततोऽग्निर्मांसादिकं शोषयति सेयं शरीरस्याग्निप्राप्तिः। प्रजाकामस्य द्विपशुकं कर्म विधत्ते "सौम्यं बभ्रुमालभेताग्नेयं कृष्णग्रीवं प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्रजनयति विन्दते प्रजां" इति। विदुषो जनानुरागाय द्विपशुकं कर्म विधत्ते "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादपहन्ति श्वेतो भवति रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधाति" इति। पूर्वं सभायां मूकीभूतस्य

कर्मोक्तं, इदानीं प्रवदतोऽपि पारुष्यवचनेनाप्रस्तुतप्रसङ्गेन वा सभास्थितेभ्यो रुच्यभावे सति रुचिं कामयमानस्येदं कर्मेति विशेषः। तेनाग्नेयत्वेन तेजः प्रतिवादिभिरप्रधृष्यत्वमस्मिन् यजमाने स्थापयति, तेन सौम्यत्वेन ब्रह्मवर्चसं प्रसङ्गोचितवेद-शास्त्रवचनस्फूर्तिरूपमस्मिन् दधाति, कृष्णग्रीवगुणकस्याग्नेयत्वेन बुद्धिमान्द्यरूपं तमोऽस्मादपहन्ति ग्रीवातिरिक्तप्रदेशे श्वैत्येन रुचमेव सभोचितानुरञ्जनरूपां प्रभामेवास्मिन् दधाति, बभ्रुत्वे सति सौम्यत्वेन पूर्वोक्तं ब्रह्मवर्चसं प्राप्तस्य त्विषिर्दीप्तिर्जनानुरा-गातिशयो भवति। पौरोहित्यस्पर्धावतस्त्रिपशुकं कर्म विधत्ते "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरो-धायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परिगृह्णात्ये-कधा समावृङ्क्ते पुर एनं दधते" इति। ब्राह्मणस्याग्निना सह मुखजन्यत्वसाम्येनाग्नेयत्वं, सोम राजन्नित्यादिमन्त्रेण सो-मस्य राजत्वेन व्यवहारात् राजन्यः सौम्यः। सौम्यस्याभितः पुरस्ताच्चोपरिष्टाच्चाग्नेयानुष्ठाने सति राष्ट्रमुभयतो ब्रह्मणा तेजसैव परिगृह्णाति वेदशास्त्रप्रयुक्तेन पौरोहित्यलक्षणेन ब्रा-ह्मणोचितेन तेजसैव सर्वतो राष्ट्रं वशीकरोतीत्यर्थः। तदानीं प्रतिस्पर्धिनमेकधा क्षणमात्रेण समावृङ्क्ते सम्यग् जयति, ततो राजामात्यादय एनं पुरो दधते पौरोहित्यपदे स्थापयन्ति।

अत्र मीमांसा। एकादशाध्यायस्य प्रथमपादे चिन्तितं।

"कृष्णग्रीवद्वये तन्त्रं पृथग्वा देवतैक्यतः।

तन्त्रं, सौम्यव्यवायेन कालभेदात् पृथग्भवेत्"॥ इति।

काम्यपशुकाण्डे श्रूयते 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमानः" इति। अयमर्थः। ममैव पौरोहित्यमस्तु नान्यस्येत्येवं स्पर्धापेतो यथोक्तवर्णोपेतं पशुत्रयमालभेतेति। तत्राद्यन्तयोः कृष्णग्रीवयोः पश्वोर्देवतैक्यात् तन्त्रेणानुष्ठानमिति चेत्। मैवं, सौम्यपशुना व्यवधाने सति कालैक्याभावेन तन्त्रासम्भवात्, तस्मादावापः।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

"आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत्सर्वनिर्णयः।

द्वारन्तु मुखजन्यत्वमाग्नेयत्वेन संस्तवः" ॥ इति ॥

इदमाम्नायते 'आग्नेयो वै ब्राह्मणः' इति। अत्रात्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयं, नाप्यग्निदेवतारूपो गुणो विधीयते, आग्नेयं सूक्तमाग्नेयं हविरित्येवं देवतातद्धितस्य सूक्तहविर्विषयत्वात्। न हि ब्राह्मणः सूक्तं नापि हविः, अतः सम्बन्धवाचितद्धितान्तेनाग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि ब्राह्मणे नाग्निसम्बन्धस्तथाप्यग्निसम्बन्धो मुखजन्यत्वगुणो ब्राह्मणे विद्यते, तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं कस्मिंश्चिदर्थवादे समाम्नायते 'प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्रीच्छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त' इति। तस्मादाग्नेयशब्दः स्तावकः। एवं 'ऐन्द्रो राजन्यो वैश्यो वैश्वदेवः' इत्यादिषु द्रष्टव्यं॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवताया आलभत ततो वै स इमान् लोकानभ्यजयद्वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति विषम आलभेत विषमा इव हीमे लोकाः समृद्ध्या इन्द्राय मन्युमते मनस्वते-ललामं प्राशृङ्गमालभेत सङ्ग्रामे ॥ १ ॥

संयत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ सङ्ग्राममिन्द्राय मरुत्वते पृश्निसक्थमालभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै सजातान् प्रयच्छति ग्राम्येव भवति यदृषभस्तेन ॥ २ ॥

ऐन्द्रो यत् पृश्निस्तेन मारुतः समृद्ध्यै पश्चात् पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विशं करो-

ति सौम्यं बभ्रुमालभेतान्नकामः सौम्यं वा अन्नꣳ सोममेव स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवति बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै सौम्यं बभ्रुमालभेत यमलं ॥ ३ ॥

राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोपधावति स एवास्मै राज्यं प्रयच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमालभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छतीन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा ॥ ॥ ४ ॥

लभेत यः पाप्मना गृहीतः स्यात्पाप्मा वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोपधावति स एवास्मात् पाप्मानमभिमातिं प्रणुदत इन्द्राय वज्रिणे ललामं प्राशृङ्गमालभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोपधावति स एवास्मै वज्रं प्रयच्छति स एनं वज्रो भूत्या इन्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥ ५ ॥

सङ्ग्रामे तेनालमभिमातिघ्ने ललामं प्राशृङ्गमैनं पञ्चदश च ॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

जलोदरगृहीतो यो ये वाञ्छन्ति *पशुप्रथां।
ब्रह्मवर्चसकामो यो यो विद्वान् वक्तुमक्षमः॥
दीर्घरोगी प्रजाकामः सभारञ्जनवर्जितः।
पौरोहित्ये स्पर्धमानस्तेषां पशवः श्रुताः† ॥

तानेतान् पशून् द्वितीयानुवाके विधाय तृतीयानुवाके जयादिहेतून् पशून् विधित्सन्नादौ लोकत्रयजयहेतुं पशुं विधातुं प्रस्तौति "देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवताया आलभत ततो वै स इमान् लोकानभ्यजयत्" इति। लोकेषु विषयभूतेषु वामनं ‡ह्रस्वं पशुं स्वायै विष्णुरूपायै देवतायै। अथ विधत्ते "वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति" इति। स्पर्धमानो गृहक्षेत्रादिविषये विवादवान्, विष्णुप्रियत्वविर्दानादस्योपचरितं विष्णुत्वं। चोदकपरम्पराप्राप्तं समदेशमपवदितुं विधत्ते "विषम आलभेत विषमा इव हीमे लोकाः समृद्ध्यै" इति। पृथिव्यादिलोकानामुत्तरोत्तरं विस्तृतत्वा-

* तै० पुस्तके पतितं। पशुप्रजाः ? † स्मृता इति का०।
‡ ह्रस्वमित्यादि तत्कार्यमित्यन्तं तै० पुस्तके पतितं।

द्भोगाधिक्याद्वा विषमत्वं, सोऽयं विषमदेशः समृद्ध्यै कल्पते। सङ्ग्रामार्थिनः पशुं विधत्ते "इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमालभेत सङ्ग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप-धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ सङ्ग्रामं" इति। मनस्वते धैर्यवते, ललामशब्दः श्वेतपुण्ड्रका-लाञ्छितललाटोपेतं ब्रूते, प्राशृङ्गो मुखप्रत्यासन्नशृङ्गः पुङ्गवः, प्राशृङ्गो गौरिति भरद्वाजवचनात्, प्राशृङ्गोऽवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान् पुनरुत्सृष्टो गोमृगक इति गव्या इत्यापस्तम्बवचनात्। संयत्ते प्राप्ते सति। इन्द्रियं शारीरं बलं। मन्युः शत्रुविषयः कोपः। मनो धैर्यं। ग्रामार्थिनः पशुं विधत्ते "इन्द्राय मरुत्वते पृश्निसक्थमालभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मै सजातान् प्रयच्छति ग्राम्येव भवति" इति। मरुद्भिर्युक्तो मरुत्वान्, पृश्नि-सक्थः श्वेतोरुः, सजातान् सहोत्पन्नान् भ्रात्रादीन् सहवासिनो भृत्यादींश्च। पुङ्गवत्वं सक्थिश्वैत्यञ्च प्रशंसति "यदृषभस्तेनैन्द्रो यत् पृश्निस्तेन मारुतः समृद्ध्यै" इति। सेक्तृत्वसामान्येनैन्द्रसम्ब-न्धित्वं, वायव्यं श्वेतमित्युक्तत्वात् पृश्निवर्णस्य मारुतत्वं, तदुभयं समृद्ध्यै भवति। पुरोवर्तिनोरूर्वोः पृश्निसक्थित्वं वारयितुं वि-धत्ते "पश्चात् पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विशं करोति" इति। यजमानो ग्रामस्वामी प्रथमं यत् कार्यं यथाध्यवस्यतीति तद्ग्रामनिवासिनी प्रजा पश्चाद् यज-

मानानुसारेणैव तत्कार्यमध्यवस्यति, न तु प्रातिकूल्यं चिन्तयतीति पश्चादन्ववसायिनो। अन्नार्थिनः पशुं विधत्ते "सौम्यं बभ्रुमालभेतान्नकामः सौम्यं वा अन्नꣳ सोममेव स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवति" इति। सोमो वा ओषधीनां राजेति श्रुतत्वादन्नस्य सौम्यत्वं, अन्नादो व्याधिराहित्येन दीप्ताग्निः। पशुवर्णं प्रशंसति "बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै" इति। विदलितचणकाद्यन्नस्य प्रियङ्ग्वादेर्वा रूपं पिङ्गलं। राज्यप्राप्तिकामिनः पशुं विधत्ते "सौम्यं बभ्रुमालभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोपधावति स एवास्मै राज्यं प्रयच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्यै" इति। राज्ञो ज्येष्ठपुत्रत्वाच्छौर्यादिगुणसम्पन्नत्वात् राज्यायालं सन्तं सम्यग्योग्यं सन्तं यं पुरुषं प्रति राज्यं न प्राप्नुयात् तस्यायं पशुः, सोमोऽस्माकं ब्राह्मणानां राजेति श्रुतत्वाद्राज्यं सौम्यं, चन्द्रमण्डलस्य सुवर्णवर्णत्वाद्बभ्रुत्वं सोमस्य रूपं। शत्रुबाधेन भ्रष्टश्रियः प्रतिष्ठार्थं पशुं विधत्ते "इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमालभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छति" इति। वृत्रतुः वैरिहिंसकः, पाप्मानमेव नरकप्रदपापवद्बाधकमेव वृत्रं वैरिणं। पापक्षयार्थिनः पशुं विधत्ते "इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमालभेत यः पाप्मना गृहीतः स्यात् पाप्मा वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन

भागधेयेनोपधावति स एवास्मात् पाप्मानमभिमातिं प्रणुदते" इति। पाप्मना गोबधाद्युपपातकादिना। राज्यार्थिनः पश्वन्तरं विधत्ते "इन्द्राय वज्रिणे ललामं प्राशृङ्गमालभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोपधावति स एवास्मै वज्रं प्रयच्छति स एनं वज्रो भूत्वा इन्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै" इति। वज्रं वज्रवत्प्रहरणसमर्थमायुधं, स चायुधविशेषो वज्रसमो भूत्वा इन्धे यजमानं वैरिसन्तापाय प्रदीप्तं करोति, नतस्य शृङ्गस्य तीक्ष्णाग्रत्वात् तीक्ष्णधारायुक्तवज्ररूपत्वं ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतां दशर्षभामालभन्त तयैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतां दशर्षभामालभेतामुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति वसन्ता प्रातस्त्रीन् ललामानालभेत ग्रीष्मे मध्यन्दिने ॥ १ ॥

त्रीँश्छितिपृष्ठांश्छरद्यपराह्णे त्रीँश्छितिवारान् त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवावरुन्धे चयस्त्रय आलभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्रयच्छति ब्रह्मवर्चस्येव भवति संवत्सरस्य परस्तात् प्राजापत्यं कद्रुं ॥ ॥ २ ॥

आलभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रतितिष्ठति 'यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णꣳ श्याममालभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति देवाश्च वै यमश्चास्मिंल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं 'वीर्यमयुवत तद्यमस्य ॥ ३ ॥

यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳस्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामालभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत यो

भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं ॥ ४ ॥

वशामालभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन् तं वृत्रो हतः षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्योऽभवन् तासामृषभो जघनेऽनूदैत्तमिन्द्रः ॥ ५ ॥

अचायत्सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेयं कृष्णग्रीवमालभतैन्द्रमृषभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमालभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः ॥ ६ ॥

पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन्धत्ते मुच्यते पाप्मनो भवत्येव द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोपधावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै वायव्यं॥७॥

वत्समालभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोपधावति स एवास्मा इमांल्लोकान् विशं प्रदापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुपतिष्ठते ॥ ८ ॥

मध्यन्दिने कद्रुं यमस्य स्पर्धमानो वैष्णावरुणीं तमिन्द्रोऽस्य स्वेन भागधेयेनोपसृता वायव्यं द्विचत्वारिंशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

स्पर्धमानो युद्धकामो ग्रामकामोऽन्नकामवान् ।
राज्यकामः प्रतिष्ठार्थी यः पापक्षयमिच्छति ॥
राज्यार्थी च पुमांसो ये तेषां पशव ईरिताः ।

तृतीयेऽनुवाके जयकामादीनां पशून् विधाय चतुर्थे ब्रह्मवर्चसकामादीनां पशून् विधित्सुरादौ ब्रह्मवर्चसकामाय विधातुं प्रस्तौति "असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतां दशर्षभामालभन्त तयैवास्मिन् रुचमदधुः" इति। पूर्वमेवोक्तोऽप्यादित्यस्य दीप्त्यभावः कालविशेषेणाप्रतीकारान्तरं दर्शयितुं पुनरुच्यते, दशाना-

म्रषभाणां समाहारोऽस्यामिति दशर्षभा कर्मनामधेयमिति के-
चित्, तत्तु नात्यन्तयुक्तिसहं आलभन्तेत्यस्यानन्वयप्रसङ्गात्। वि-
धत्ते "यो ब्रह्मवर्चसकामः स्यात् तस्मा एतां दशर्षभामालभेता-
मुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं
दधाति ब्रह्मवर्चस्येव भवति" इति। अमुमेवादित्यमित्यर्थवादे
श्रुतत्वादादित्योऽस्मिन् कर्मणि देवता। तत्रैव कालविशेषसहितं
पशुगणविशेषं विधत्ते "वसन्ता प्रातस्त्रीन् ललामानालभेत ग्रीष्मे
मध्यन्दिने त्रीन् शितिपृष्ठान् शरद्यपराह्णे त्रीन् शितिवारान्"
इति। शितिपृष्ठाः श्वेतपृष्ठाः, शितिवाराः श्वेतबालाः। पूर्ववत्
कालविशेषं प्रशंसति "त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता
प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्ये-
वावरुन्धे" इति। विहितानेव त्रित्वोपेतान् सङ्घान् प्रशंसति
"त्रयस्त्रय आलभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति" इति।
पूर्वं वसन्ते यथा त्रित्वोपेतास्तथा ग्रीष्मशरदोरपि त्रित्वोपेतत्वे
सति पूर्वस्मादूर्ध्वं सम्पद्यते, तद्वदस्मिन् यजमानेऽप्यभिपूर्वं पूर्व-
स्मादूर्ध्वेनैवोत्तरोत्तरकालेऽपि तेजो विधत्ते न तु कदाचिदपि
तेजो हीयत इत्यर्थः। आग्नेयकृष्णग्रीवादिष्विव ब्रह्मचर्यादि-
नियमकालं विधत्ते "संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मव-
र्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्रयच्छति ब्रह्मवर्च-
स्येव भवति" इति। दशमस्यर्षभस्य देवताकालवर्णविशेषान्
विधत्ते "संवत्सरस्य परस्तात् प्राजापत्यं कद्रुमालभेत प्रजा-
पतिः सर्वा देवता देवतास्वेव प्रतितिष्ठति" इति। कद्रुः

पिङ्गलः, प्रजापतेरुत्पादकत्वेन सर्वदेवताकत्वं। त्वग्दोषनिवारणाय पशुं विधत्ते "यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णꣳ श्याममालभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति" इति। कण्डूत्यादिविशेषलिङ्गेन भाविकुष्ठरोगमनुमाय भीतस्यायं पशुः। पुरुषस्य सोमदेवताकत्वं पशूनां पौष्णत्वञ्च सोमापूषविषययाज्याव्याख्याप्रसङ्गेन दर्शितं। भ्रातृव्यवतो द्विपशुकं कर्म विधातुं प्रस्तौति "देवास्च वै यमश्चास्मिंल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामालभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत" इति। अयुवत देवेभ्यः पृथक् कृतवान्, अतो यवनामकोऽयं वर्णव्यत्ययनेन यमः सम्पन्नः। इन्द्रियगते वीर्येऽपगते सति देवाः परस्परमिदमब्रुवन् पूर्वं यल्लोकाधिपत्यं प्राप्य वयं स्मस्तदिदं प्राप्य यम एवाभूत्, उक्षा सेचनसमर्थो वत्सोत्पादकः, वशा बन्ध्या लिङ्गव्यत्ययो द्रष्टव्यः, तं यमं वरुणपाशेनैव ग्राहयित्वा यज्ञरूपेण विष्णुना निष्कासितवन्तः इन्द्रप्रसादेनास्य यमस्य वीर्यं नाशितवन्तः। विधत्ते "यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं वशामालभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदत

ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" इति। आत्मना स्वेन रूपेण यजमानो विजयी भवति, अस्य भ्रातृव्यः पराभवति। पापविमुक्तिकामस्य द्विपशुकं कर्म विधातुं प्रस्तौति "इन्द्रो वृत्रमहन् तं वृत्रो हतः षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्यो ऽभवन् तासामृषभो जघनेऽनूदैत्तमिन्द्रोऽचायत्सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेयं कृष्णग्रीवमालभतैन्द्रमृषभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त" इति। तमिन्द्रं भोगैः शरीरैरसिनादबध्नात् हताद्वृत्रादुत्पन्नानि क्रोधाविष्टानि षोडश शरीराणि परितो वेष्टयित्वा स्थितानि, स च वृत्रः सर्पाकारैस्तैः शरीरैस्तमिन्द्रं रज्जुभिरिव बबन्ध ततस्तस्य वृत्रस्य शीर्षतः काश्चिद्गाव उत्पन्नाः ताश्च गावो विशिष्टदेहसम्बन्धिन्योऽभवन् तासां गवां जघने पृष्ठभागे कश्चिदृषभोऽनुगम्योदगच्छत्। तमृषभमुद्दिश्येन्द्रोऽचायत् स्वात्मानं पूजितवान्, अहो मदीयं कार्यं सम्पन्नमिति। ततः स इन्द्रो मनसा व्यचारयत्, किमिति यः कोऽपीममृषभमालभेत देवतोद्देशेन हिंस्यात् स ईदृशाद्बन्धनादिरूपात् पाप्मनो मुच्येतेति। एवं विचार्य द्विपशुकं कर्म कृतवान्, तस्येन्द्रस्य सम्बन्धिना स्वभागेन तुष्टोऽग्निः सर्पाकाराणि षोडश शरीराणि तं वृत्रमप्यदहत्, तत ऐन्द्रयागेन सामर्थ्यमिन्द्रः स्वात्मन्यधत्त। अथ विधत्ते "यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमालभेतैन्द्र-

ऋषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः पाप्मानमपि दह-त्यैन्द्रेणेन्द्रियमात्मन्धत्ते मुच्यते पाप्मनो भवत्येव" इति। चिरं राज्यभ्रष्टस्य पशुं विधत्ते "द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोपधावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति" इति। ज्योगपरुद्धश्चिरं राज्यभ्रष्टः, यस्तु प्रजापालनस्याभावात् अस्मिन् लोके न प्रतितिष्ठति वैदिक-कर्मानुष्ठानाभावात् स्वर्गेऽपि न प्रतितिष्ठति, तदानीं सोऽत्र ज्योगपरुद्ध इत्युच्यते, तस्य द्यावापृथिव्योः परितोषादुभयत्र प्रतिष्ठा सम्पद्यते। धेनोः कञ्चिद्गुणं विधत्ते "पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै" इति। या गौर्गर्भिणी सती प्राप्तप्रसवकालं परित्यज्य चिरं गर्भं धृत्वा पश्चात्प्रसूते सा पर्यारिणी, तथा च सूत्रकारः पर्यारिणी परिहारसूर्भवतीति। यो ज्योगपरुद्ध एतस्य राष्ट्रं पर्यारीव भवति भोगकालं चिरमतीत्य पश्चात्प्राप्यमानत्वात्, अतः म-द्गुप्रयोगः समृद्ध्यै भवति। ज्योगपरुद्धस्यैव धेनुप्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते "वायव्यं वत्समालभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोपधावति स एवास्मा इमांल्लोकान् विशं प्रदापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप-तिष्ठते" इति। यथा वत्सो धेनोः समीप एव सञ्चरति तथा वायुरपि द्यावापृथिव्योः सञ्चरतीति तद्वत्सत्वं, अत एव

द्यावापृथिव्योर्धेनुप्रयोगसमीपे तदीयवत्सप्रयोगो युज्यते। यदा लोकाः प्रजा चैतस्मै राज्ञे अपगुष्का अपरक्ता भवन्ति तदानीमेवैष ज्योगपरुद्धो भवति। लोकशब्देन तत्र तत्र प्रभुत्वेन स्थिता ग्रामण्यादयो मुख्यपुरुषा उच्यन्ते, अवशिष्टा सर्वा प्रजा विट्शब्देन। वत्सेन तुष्टो वायुर्लोकान् प्रजाश्च प्रदापयति अनुरक्तान् करोति, ते च लोका अस्मै स्नुवन्ति मणिमुक्तादिधनं प्रस्रावयन्ति बाहुल्येन प्रयच्छन्तीत्यर्थः, प्रजा चैनं भुञ्जती पालयन्ती सेवते।

अत्र मीमांसा। अष्टमाध्यायस्य प्रथमपादे चिन्तितं*।

"ललामादिगणे दैक्ष्यादैकादशिनतोऽथवा।
आद्यो विशेषराहित्यात्, न गणत्वविशेषतः"॥

काम्यपशुकाण्डे पशुगणः श्रूयते 'वसन्ते ललामांस्त्रीन् वृषभानालभेत' इति। तत्र रसनाद्द्यादिविशेषलिङ्गाभावाद्दैक्ष्यादग्नीषोमीयाद्धर्मातिदेश इति चेत्, न, गणत्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात्। ऐकादशिनानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते, तथा हि सौत्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते 'यत्त्रिषु यूपेष्वालभेत बहिर्धास्मादिन्द्रियं वीर्यं दध्याद्भ्रातृव्यमस्मै जनयेदेकयूप आलभते' इति। यद्यत्राग्नीषोमीयः प्रकृतिः स्यात् तदा चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रयप्रसक्त्यभावात् तदुपन्यासेन दोषाभिधानं पुनरेकयूपविधानञ्च व्यर्थं स्यात्, ऐकादशिनानां प्रकृतित्वे तु प्रतिपशुपृथग्यूपाति-

* एतदधिकरणं तै० पुस्तके नास्ति।

देशेन प्रसक्तिसद्भावात्तदुपपद्यते। तस्मात् पशुगणेष्वैकादशि-नेभ्योऽतिदेशः।

दशमाध्यायस्य द्वितीयपादे चिन्तितं।

"धेनुवत्सर्षभास्त्वागे गवि वा, गुणकीर्तनात्।
अजेऽतिदिष्टे स्युर्भैवं गोजात्येकगुणोक्तितः"॥

पशुविकृतिषु श्रूयते 'द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रमृषभं' इति। तत्र धेनुशब्दो नवसूतिकामाचष्टे, वत्स-शब्दो बालं, ऋषभशब्दः पुमांसं, तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यमबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति। गौस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्यते प्रकृता-वनुपदिष्टत्वात्, अतो न गां विशिंषन्तीति पूर्वपक्षः। न खल्वेते यथोक्तगुणसामान्यवाचिनः किन्तर्हि गोगतानेव तान् गुणाना-ऊः, अतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि गां मुख्यवृत्त्या विशिंषन्तः छागं बाधन्त इति राद्धान्तः॥०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीय-काण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥*॥

इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरा-सीत् तं पृष्ठं प्रति सङ्गृह्योदक्खिदत्* तꣳ सहस्रं पश-

* अखिदददिति लिखितं।

वोऽनूदायन्त्स उन्नतोऽभवद्यः पशुकामः स्यात् स एतमैन्द्रमुन्नतमालभेतेन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् प्रयच्छति पशुमानेव भवत्युन्नतः ॥ १ ॥

भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनवरुन्धे यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमालभेतैतस्मिन् वै तत् सहस्रमध्यतिष्ठत् तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ सम्पाद्यालभेत पशवः ॥ २ ॥

वा अहोरात्राणि पशूनेव प्रजातान् प्रतिष्ठां गमयत्योषधीभ्यो वेहतमालभेत प्रजाकाम ओषधयो वा एतं प्रजायै परिबाधन्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहद्भवत्योषधीरेव स्वेन भागधेयेनोपधावति ता एवास्मै स्वाद्योनेः प्रजां प्रजनयन्ति विन्दते ॥ ३ ॥

प्रजामापो वा ओषधयोऽसत्पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नापस्त्वावासतः सद्ददतीत्यैन्द्रीꣳ सूतवशामालभेत भूतिकामो

ऽजातो वा एष योऽलं भूत्यै सन् भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाभवत् ॥ ४ ॥

इन्द्रमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येव यः सूत्वा वशा स्यात् तमैन्द्रमेवालभेतैतद्वाव तदिन्द्रियꣳ साक्षादेवेन्द्रियमवरुन्ध ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना ॥ ५ ॥

तृतीयात् पुरुषात् सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मै सोमपीथं प्रयच्छत उपैनꣳ सोमपीथो नमति यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमवरुन्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनुसन्तनोति पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य ॥ ६ ॥

सोमपीथः समृद्ध्यै ब्राह्मणस्पत्यं तूपरमालभेताभिचरन् ब्रह्मणस्पतिमेव स्वेन भागधेयेनोपधावति तस्मा एवैनमावृश्चति ताजगार्तिमार्च्छति तूपरो भवति क्षुरपविर्वा एषा लक्ष्मी यत्तूपरः समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति शर-

मयं बर्हिः स्तृणात्येवैनं वै भींदकङ्ध्मो भिनत्त्येवैनं॥
॥ ७ ॥

भवत्युन्नतः पशवों जनयन्ति विन्दतेंऽभवत्सन्नैतस्ये-
ध्मस्त्रीणि च ॥ ५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपा-
ठके पञ्चमोऽनुवाकः ॥ * ॥

ब्रह्मवर्चसकामो यश्चर्मदोषाद्बिभेति यः।
भ्रातृव्यवान् पापभीरुर्भ्रष्टराज्यश्च यो भवेत्।
अनुवाके चतुर्थेऽस्मिन्नेतेषां पशवः श्रुताः॥

अथ पञ्चमे पशुकामादीनां पशवो वक्तव्याः, तत्रैवं विधातुं प्रस्तौति "इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत् तं पृष्ठं प्रति सङ्गृह्योदक्खिदत् तꣳ सहस्रं पशवोऽनूदायन्त्स उन्नतोऽभवत्" इति। वलनामकः कश्चिदसुरः तस्करो भूत्वा यतस्ततो बहून् पशूनपहृत्य कस्मिंश्चिद्बिले स्थापयामास तच्च वृत्तान्तमवगत्येन्द्रो बिलमपौर्णोत् द्वारपिधानाय प्रक्षिप्तं पाषाणमपनीतवान्, तत्र य उत्तमः पशुस्तं पशुं पृष्ठं प्रति पृष्ठदेशे पुच्छमूलमवलम्ब्योदक्खिदत् उत्क्षिप्तवान्, तस्य पशोर्यूथपतित्वात् तमनु सहस्रं पशव उद्गतवन्तः स च मुख्यः पशुर्यूथपतित्वेन पूर्वमेवोन्नतोऽपि पश्चादिन्द्रोत्क्षेपणेना-

त्यन्तमुन्नतोऽभवत्। विधत्ते "यः पशुकामः स्यात् स एतमै-न्द्रमुन्नतमालभेतेन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् प्रयच्छति पशुमानेव भवति" इति। पशोरौन्नत्यं प्र-शंसन्ति "उन्नतो भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनवरुन्धे" इति। उन्नत इति यत् एषा साहस्री लक्ष्मी सहस्रस्य निमित्तभूता तत एव लक्ष्मी सम्पद्रूपा, तया सत्युन्नतालम्भेन पशुसमृद्धिरूपया लक्ष्म्या युक्तस्तान् पशून-वरुन्धे। पूर्वत्र यथा धेनुमालब्धवतः पश्चाद्वत्सालम्भो विहितः एवमत्राप्युन्नतमालब्धवतो वामनालम्भं विधत्ते "यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमालभेतैतस्मिन् वै तत् सह-स्रमध्यतिष्ठत् तस्मादेष वामनः समीषितः पशुभ्य एव प्रजा-तेभ्यः प्रतिष्ठां दधाति" इति। पशुकाम उन्नतमालभ्य तत्फ-लभूतान् पशून् प्राप्नुवान्, सहस्रप्राप्तेरूर्द्ध्वं वामनमालभेत, यस्मादेतस्मिन् वामने तदुन्नतं पशुसहस्रं लीलार्थमारोहति, तस्मात् सहस्रपशुप्रियत्वादेव वामनो विष्णोः सम्यगपेक्षितः, एतस्यालम्भेन पूर्वमुत्पन्नेभ्यः सहस्रपशुभ्यः पश्वर्थं प्रतिष्ठां तृणो-दकसम्पूर्णं निवासस्थानं कृतवान् भवति। एतस्य वामनस्य सहस्रप्राप्तिकालादन्यं कालं विधत्ते "कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ सम्पाद्यालभेत पशवो वा अहोरात्राणि पशूनेव प्रजातान् प्रतिष्ठां गमयति" इति। सहस्रप्राप्तिः प्रायेण दुर्लभा विघ्नानां चोरव्याघ्रादिकृतानां बहुत्वात्, अतः पशुप्राप्तेरूर्द्ध्वं सहस्रदिनान्यतिवाह्यालभेत।

पशवो हि क्षीरादिभोगार्थं सम्पाद्यन्ते, तत्रैकैकस्मिन् दिने तद्भोगप्रदानादेकैकः पशुरिति गणनायां सहस्रसङ्ख्याकान्यहोरात्राण्येव सहस्रं पशवः सम्पद्यन्ते। ततः सहस्रदिनेभ्य ऊर्द्धं वामनालम्भेन यावतां तावतां विद्यमानानां पशूनां प्रतिष्ठा सम्पादिता भवति। प्रजाकामस्य पशुं विधत्ते "ओषधीभ्यो वेहतमालभेत प्रजाकाम ओषधयो वा एतं प्रजायै परिबाधन्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहद्भवत्योषधीरेव स्वेन भागधेयेनोपधावति ता एवास्मै स्वाद्योनेः प्रजां प्रजनयन्ति विन्दते प्रजामापो वा ओषधयोऽसत्पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नापस्त्वावासतः सद्ददतीति" इति। वेहतं गर्भविनाशिनीं। यः प्रजोत्पादने समर्थोऽपि प्रजां न लभते, एतं प्रजार्थमोषधिदेवताः परितो बाधन्ते, अतस्ताभ्य आलम्भो युक्तः। या गौर्गर्भनाशिनी भवति एतस्याः सूतुं गर्भं ओषधयोऽपि घ्नन्ति, अतस्तासां प्रियाया वेहत आलम्भेन तुष्टा ओषधयो यजमानार्थं स्वाद्योनेर्यजमानसम्बन्धिवीर्यात् प्रजामुत्पादयन्ति स्वरेतसैव प्रयच्छन्ति, न तु क्षेत्रजपुत्रिकासुतादिकं, ततोऽसावौरसीमेव प्रजां लभते। ताश्चौषधयो लोकप्रसिद्धा स्तूयन्ते, तत्र तावदाप एवौषधयः अपामोषधिकारणत्वात्। पुरुषो यजमानस्योत्पद्यमानः पुत्रः स चोत्पत्तेः प्रागसदित्युच्यते, स्वकारणभूतरेतोऽवस्थायामनभिव्यक्तत्वात्। तथा सति अनूपेण स्थिता ओषधय एव यजमानार्थं-

मनभिव्यक्तशरीराकाराद्रेतसः सदभिव्यक्तशरीरं प्रयच्छन्ति यस्मादेवं तस्मात्कारणादीदृशवृत्तान्ताभिज्ञास्तदनभिज्ञाश्च लौकिका एवमाहुः, आप एवास्मा असतः सद्ददतीति। तत्राभिज्ञा ओषधिदेवताकृतं यथोक्तं पुत्रदानमभिलक्ष्यैवं वदन्ति, अनभिज्ञास्तु क्षेत्रेषु जलसम्पत्त्या सस्यनिष्पत्तिमभिलक्ष्याप एव असतः सस्यरहितात्क्षेत्रात्संदिह्यमानत्वेन भासमानं सस्यं ददतीत्याहुः। यद्यभिज्ञा ओषधीनां पुत्रप्रदत्वमाहुः, यदि वाऽनभिज्ञा अपां सस्यप्रदत्वमाहुः, सर्वथापि प्रशस्तमेवौषधिविषयं कर्म। भूतिकामस्य पशुं विधत्ते "ऐन्द्रीᳬ सूतवशामालभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन् भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाभवदिन्द्रमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येव" इति। सकृद्वत्समुत्पाद्य पश्चाद्वन्ध्या गौः सूतवशा, यो भूत्यै योग्योऽपि भूतिं न प्राप्नोति सोऽयमुत्पन्नोऽप्यनुत्पन्नसम एव, तस्मादयमालभेत, एषापि सूतवशा प्रथममिन्द्रसमानं वत्समुत्पाद्य बन्ध्याभवत्। इन्द्रस्य प्रियायाः सूतवशायाः प्रयोगादूर्द्ध्वं वत्सप्रयोगं विधत्ते "यᳬ सूत्वा वशा स्यात्तमैन्द्रमेवालभेतैतद्वाव तदिन्द्रियᳬ साक्षादेवेन्द्रियमवरुन्धे" इति। सूतवशाया वत्स इन्द्रसमानः, अत एवेन्द्रमातुः सूतवशारूपेण निष्पत्तिरेवमाम्नायते 'सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत्सा सूतवशाभवत्तत् सूतवशायै जन्म' (सं०। का०६।प्र०१।अ०३) इति। तथा सति स्वसमानत्वेनेन्द्रप्रियमेनं

वत्समैन्द्रमेवालभेत, वत्सस्येन्द्रियकार्यत्वादैन्द्रान्मुख्यमेवेन्द्रियमवरुन्धे। विच्छिन्नसोमपीथस्य पशुं विधत्ते "ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना तृतीयात् पुरुषात् सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मै सोमपीथं प्रयच्छत उपैनꣳ सोमपीथो नमति" इति। गालितवृषणो बलीवर्द उत्सृष्ट इत्युच्यते, स एव जीर्णो लाङ्गलवहनादेर्मुक्तः पुनरुत्सृष्टः, स्वात्मानमारभ्य तृतीयः पुरुषः पितामहः पिता स्वयञ्च यदा सोमं न पिबेयुः तदानीमेतस्य त्रयस्य सोमपानं विच्छिन्नं, स एतं पशुमालभेत। इन्द्रमग्निञ्च क्रमेण प्रशंसति "यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमवरुन्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनुसन्तनोति" इति। सोमपानस्येन्द्रियवृद्धिहेतुत्वादिन्द्रियरूपत्वं। पशुविशेषणं प्रशंसन्ति "पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य सोमपीथः समृद्ध्यै" इति। प्रथमं पितामहेन सोमपीथ उत्सृष्टः पुनः पित्रा पुनरपि स्वेन तत उक्तपशुसादृश्यात् तदालम्भः समृद्ध्यै सम्पद्यते। अभिचरतः पशुं विधत्ते "ब्राह्मणस्पत्यं तूपरमालभेताभिचरन् ब्रह्मणस्पतिमेव स्वेन भागधेयेनोपधावति तस्मा एवैनमावृश्चति ताजगार्तिमार्च्छति" इति। स ब्रह्मणस्पतिस्तस्मा एव यजमानार्थमेवैनं वैरिणमावृश्चति समन्ताच्छिनत्ति, तदानीमेव वैरी मरणं प्राप्नोति। पशुविशेषणं प्रशंसति "तूपरो भवति

क्षुरपविर्वा एषा लक्ष्मी यत्तूपरः समृद्ध्यै” इति। तूपर इति यत् एषा क्षुरपविर्वै क्षुर इव तीक्ष्णा धारा वज्रो यस्याः सा क्षुरपविः, तादृशी लक्ष्मी वैरिमारणार्था सम्पद्यते, शृङ्गाभावेऽपि युद्धे मेष इव सहसाघातं करोतीति वज्रसाम्यं। यूपस्य चोदकप्राप्तं अष्टाश्रित्वादिरूपमपवदितुं स्फ्यसमानमाकारं विधत्ते “स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति” इति। अत्र सूत्रं ‘स्फ्यो यूप इति स्फ्याकृतिर्यूपः’ इति। कुशमयमपवदितुं विधत्ते “शरमयं बर्हिः शृणात्येवैनं” इति। शृणन्ति हिंसन्तीति शरास्तृणविशेषा येषु तृणेषूत्पन्नैः काष्ठैर्ब्राह्मणाः* क्रियन्ते, तेषाञ्च तृणानां शीर्षैः वज्रावयवैरुत्पन्नत्वात् हिंसकत्वं। वज्रावयवैरुत्पत्तिरन्यत्राम्नायते ‘इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्यन्त ते शरा अभवन् तच्छराणाꣳ शरत्वं’ (सं०।६का०।२प्र०।३अ०) इति। तस्माच्छरमयेन बर्हिषा वैरिणं हिनस्त्येव। पालाशमिध्मं बाधितुं विधत्ते “वैभीदक इध्मो भिनत्त्येवैनं” इति। अक्षशब्दवाच्याद्वृक्षादुत्पन्नो वैभीदकः स च विशेषेण भेत्तुं शक्त इति कृत्वा वैरिणं भिनत्त्येव।

अत्र मीमांसा। दशमाध्यायस्य चतुर्थपादे चिन्तितं।

“समुच्चेयं शरमयं कौशेनोतास्य बाधकं।
प्राकृतस्य विधेराद्यो मैवं प्रतिपदोक्तितः” ॥

* शृणाति क्रियन्त इति तै० अशुद्धं। दर्भवटोरेव प्रसिद्धत्वात् ब्राह्मणा इत्यस्य स्थाने वाणा इति समाचीनतरं भवितुमर्हति।

सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्नित्यत्र शरमयं बर्हिर्भवतीति श्रुतं तदिदं प्राकृतेन कुशबर्हिषा सह समुच्चीयते। कुतः, मयट्शब्देन शरप्राचुर्यस्य विधानादबाधेऽपि तदुपपत्तेरिति पूर्वः पक्षः। 'नित्यं वृद्धशरादिभ्यः' (पा०४।३।१४४) इति सूत्रेण शरशब्दाद्विकारार्थो मयट्प्रत्ययः प्रतिपदोक्तः, अतस्तं परित्यज्य प्राचुर्यार्थो न ग्रहीतुं शक्यः, किञ्च प्राचुर्यार्थत्वे कार्यान्तरं कल्पनीयं स्यात्, तस्मात् कुशबर्हिषो बाधकमिति राद्धान्तः॥०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः॥०॥

बार्हस्पत्यꣳ शितिपृष्ठमालभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै पौष्णꣳ श्याममालभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोपधावति स एवास्मै॥१॥

अन्नं प्रयच्छत्यन्नाद एव भवति श्यामो भवत्येतद्वा

अन्नस्य रूपꣳ समृद्ध्यै मारुतं पृश्निमालभेतान्नकामो ऽन्नं वै मरुतो मरुत एव स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्या ऐन्द्रमरुणमालभेतेन्द्रियकाम इन्द्रमेव ॥ २ ॥

स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं दधातीन्द्रियाव्येव भवत्यरुणो भ्रूमान् भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै सावित्रमुपध्वस्तमालभेत सनिकामः सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोपधावति स एवास्मै सनिं प्रसुवति दानकामा अस्मै प्रजा भवन्त्युपध्वस्तो भवति सावित्रो ह्येषः ॥ ३ ॥

देवतया समृद्ध्यै वैश्वदेवं बहुरूपमालभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै वैश्वदेवं बहुरूपमालभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै ॥ ॥ ४ ॥

सजातान् प्रयच्छन्ति ग्राम्येव भवति बहुरूपो भवति बहुदेवत्योऽ३ ह्येष समृद्ध्यै प्राजापत्यं तूपरमालभेत यस्यानाज्ञातमिव ज्योगामयेत् प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवैनं तस्मात्स्रामान्मुञ्चति तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै ॥ ५ ॥

अस्मा इन्द्रमेवैष सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै प्राजापत्यो हि चोणि च ॥ ६ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके षष्ठाऽनुवाकः ॥ * ॥

पशुकामः प्रजाकामो भूत्यर्थी छिन्नसोमकः।
अभिचारी च ये तेषां पञ्चमे पशवः श्रुताः ॥

अथ षष्ठे ग्रामकामादीनां पश्वन्तराणि वक्तव्यानि, तत्रैकं पशुं विधत्ते "बार्हस्पत्यꣳ शितिपृष्ठमालभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति" इति। ग्रामो मे भूयात् अन्येषां ग्रामस्वामिनां मध्ये

पृष्ठवद्दुपरिवर्त्ती स्यामिति यः कामयेत तस्यायं पशुः। पशु-विशेषणं प्रशंसति "शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै" इति। राजसूये (का० १।प्र० ८।अ० ९) बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेत्युक्तत्वात् तद्देवताकत्वं। अन्नकामस्य पशुं विधत्ते "पौष्णꣳ श्याममालभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवति" इति। अन्नस्य पोषकत्वात् पूषत्वं। पशुविशेषणं प्रशंसति "श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै" इति। पक्वशाकाद्यन्नस्य रूपं श्यामं। अन्नकामस्य पश्वन्तरं विधत्ते "मारुतं पृश्निमालभेतान्नकामोऽन्नं वै मरुतो मरुत एव स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति" इति। मरुतां वैश्यत्वेनान्नसम्पादकत्वादन्नत्वं। पशुविशेषणं प्रशंसति "पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै" इति। पृश्निः श्वेतः शाल्यन्नस्य रूपं श्वेतं। इन्द्रियकामस्य पशुं विधत्ते "ऐन्द्रमरुणमालभेतेन्द्रियकाम इन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मिन्निन्द्रियं दधातीन्द्रियाव्येव भवति" इति। अरुणस्य पशोर्गुणान्तरं विधत्ते "अरुणो भूमान् भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै" इति। महती भूरस्यास्तीति भूमान्, इन्द्रस्य सहस्राक्षत्वेन भूवाक्षत्वं स्वरूपं। स्वप्रतिग्रहीतृकदानकामस्य पशुं विधत्ते "सावित्रमुपध्वस्तमालभेत सनिकामः सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोपधावति स एवास्मै सनिं प्रसुवति दानकामा अस्मै प्रजा भवन्ति" इति। उपध्वस्तः सङ्कीर्णवर्णः,

सनिकामः परकर्त्तृकदानकामः, प्रसवानां प्रेरणानां, अस्मै यजमानार्थं, परकर्त्तृकं दानं प्रसुवति प्रेरयति। सङ्कीर्णवर्णं प्रशंसति "उपध्वस्तो भवति सावित्रो ह्येषः देवतया समृद्ध्यै" इति। राजसूये सावित्रं द्वादशकपालं चक्षुर्गृहे उपध्वस्तो दक्षिणेत्युक्तत्वात्सवितृदेवताकत्वं। अन्नकामस्य पश्वन्तरं विधत्ते "वैश्वदेवं बहुरूपमालभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति" इति। साङ्कर्यमन्तरेण विस्पष्टा बहवो वर्णा यस्यासौ बहुरूपः। पशुविशेषणं प्रशंसति "बहुरूपो भवति बहुरूपᳬ ह्यन्नᳬ समृद्ध्यै" इति। भक्ष्यभोज्यलेह्यचोष्यभेदेनान्नस्य बहुरूपत्वं। ग्रामकामस्य पश्वन्तरं विधत्ते "वैश्वदेवं बहुरूपमालभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति" इति। सजाता भ्रातरो भृत्यादयश्च ते च बहुत्वसाम्येन विश्वेषां देवानां सम्बन्धिनः। पशुविशेषणं प्रशंसति "बहुरूपो भवति बहुदेवत्यो३ ह्येष समृद्ध्यै" इति। विश्वेषां देवानां एतत्स्वामित्वात् पशोर्बहुदेवत्यत्वं। अज्ञातचिररोगग्रस्तस्य पशुं विधत्ते "प्राजापत्यं तूपरमालभेत यस्यानाज्ञातमिव ज्योगामयेत् प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवैनं तस्मात् स्रामान्मुञ्चति" इति। विस्पष्टानि रोगविशेषलक्षणानि न दृश्यन्ते,

बलक्षयकार्श्यादिकञ्च दृश्यते, तदिदमज्ञातमिव भवति। प्रजापतिः पुरुषमसृजतेति श्रुतत्वात्पुरुषः प्राजापत्यः, चिकित्सकैरज्ञातोऽपि रोगविशेषः प्रजापतिना ज्ञायते। अतः प्रजापतिरेनं तस्मात् स्रामादज्ञातदीर्घरोगान्मोचयति। प्रजापतिवपाजन्यत्वेन पशुविशेषणं प्रशंसति "तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै" इति ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

---

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः परापतत्तं बृहस्पतिरुपागृह्णात् सा शितिपृष्ठा वशाभवद्यो द्वितीयः परापतत्तं मित्रावरुणावुपागृह्णीताꣳ सा द्विरूपा वशाभवद्यस्तृतीयः परापतत्तं विश्वे देवा उपागृह्णन्त्सा बहुरूपा वशाभवद्यश्चतुर्थः परापतत्स पृथिवीं प्राविशत्तं बृहस्पतिरभि ॥ १ ॥

अगृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत्तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाभवद्बार्हस्पत्याꣳ शितिपृष्ठामालभेत ब्रह्म-

वर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु ॥ २ ॥

वै ब्रह्मवर्चसं छन्दसामेव रसेन रसं ब्रह्मवर्चसमवरुन्धे मैत्रावरुणीं द्विरूपामालभेत वृष्टिकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन ॥ ३ ॥

रसं वृष्टिमवरुन्धे मैत्रावरुणीं द्विरूपामालभेत प्रजाकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै प्रजाः प्रजायन्ते मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहोरात्राभ्यां प्रजां प्रजनयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै प्रजा छन्दसामेव रसेन रसं प्रजामव ॥ ४ ॥

रुन्धे वैश्वदेवीं बहुरूपामालभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति

छन्दसां वा एष रसो यद्वशा रस इव खलु वा अन्नं छन्दसामेव रसेन रसमन्नमवरुन्धे वैश्वदेवीं बहुरूपामालभेत ग्रामकामो वैश्वदेवा वै ॥ ५ ॥

सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वै सजाताश्छन्दसामेव रसेन रसꣳ सजातानवरुन्धे बार्हस्पत्यमुक्षवशमालभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं ॥ ६ ॥

दधाति ब्रह्मवर्चस्येव भवति वशं वा एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्मवर्चसमवरुन्धे रौद्रीꣳ रोहिणीमालभेताभिचरन् रुद्रमेव स्वेन भागधेयेनोपधावति तस्मा एवैनमावृश्चति ताजगार्तिमार्छति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनं ॥ ७ ॥

अभि खलु वृष्टिश्छन्दसामेव रसेन रसं प्रजामव वैश्वदेवा वै ब्रह्मवर्चसं यूप एकान्नविꣳशतिश्च ॥ ७ ॥

## इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

पृष्ठकामोऽन्नकामौ द्वाविंन्द्रियार्थी मनिं तथा।
अन्नं ग्रामञ्च वाञ्छन्तोऽज्ञातरोगाश्च ये स्थिताः॥
षष्ठेऽनुवाके पशवः क्रमेणैषामुदीरिताः।

अथ सप्तमे ब्रह्मवर्चसकामादीनां यथायोगं पश्वन्तराणि विधातुं प्रस्तौति "वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः परापतत्तं बृहस्पतिरुपागृह्णात् सा शितिपृष्ठा वशाभवद्यो द्वितीयः परापतत्तं मित्रावरुणावुपागृह्णीतां सा द्विरूपा वशाभवद्यस्तृतीयः परापतत्तं विश्वे देवा उपागृह्णन्त्सा बहुरूपा वशाभवद्यश्चतुर्थः परापतत्स पृथिवीं प्राविशत्तं बृहस्पतिरभ्यगृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत्तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाभवत्" इति। वौषडित्यस्य मन्त्रस्याभिमानिदेवता वषट्कारः, तस्य च गायत्र्या सह विरोधो ब्राह्मणान्तरे प्रसिद्ध इति वैशब्देन सूच्यते। छिन्नाद्गायत्रीशिरसो जलं रक्तञ्च निर्गतं, ताभ्यामुभाभ्यामनेकविधा वशा उत्पन्नाः तास्तु बृहस्पत्यादीनां परिग्रहेण प्रियाः सम्पन्नाः। द्वाभ्यां वर्णाभ्यामुपेता द्विरूपा, बहुभिर्वर्णैरुपेता बहुरूपा, चतुर्थपर्याये भूमौ पतितं रसं वृथा विनष्टो मा भूदिति बृहस्पतिरभ्यगृह्णात्, तस्यायमभि-

प्रायः, अयं रसो मम भोगाय भवत्विव, उच्चशो व्यर्थवीर्यो वृषभः। तत्राद्यं पशुं विधत्ते "बार्हस्पत्याᳩं शितिपृष्ठामालभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति" इति। ब्रह्मवर्चसस्यैहिकामुष्मिकपूजाहेतुत्वेन सारत्वाद्रससादृश्यमित्यभिप्रेत्य तत्साधनभूतां वशां प्रशंसति "छन्दसां वा एष रसो यद्वशा रस इव खलु वै ब्रह्मवर्चसं छन्दसामेव रसेन रसं ब्रह्मवर्चसमवरुन्धे" इति। वशाया गायत्रीच्छन्दोरसत्वं व्याख्यातं, गायत्री च सोमाहरणेन छन्दोऽन्तरात् प्रशस्ता, तस्माद्वशा सर्वेषां छन्दसां सारः, तेन छन्दोरसेन वशारूपेणैहिकामुष्मिकपूजाहेतुतया रसरूपं ब्रह्मवर्चसमवरुन्धे। द्वितीयं पशुं विधत्ते "मैत्रावरुणीं द्विरूपामालभेत वृष्टिकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन रसं वृष्टिमवरुन्धे" इति। मित्रस्य सूर्यत्वादह्नस्तदीयत्वं, अन्धकारेणावरणहेतुत्वाद्रात्रेर्वारुणत्वं, वृष्टेर्द्रवत्वादोषध्युत्पादकत्वेन सारवत्त्वाच्च रसोपमानं। तमेवं द्वितीयं पशुं फलान्तराय विधत्ते "मैत्रावरुणीं द्विरूपामालभेत प्रजाकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै प्रजाः प्रजायन्ते मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहोरात्राभ्यां प्रजां प्रजनय-

तश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै प्रजा छन्द-
सामेव रसेन रसं प्रजामवरुन्धे" इति। अहोरात्रपरित्यागेन
यथा वृष्टिर्न भवति तथा प्रजोत्पत्तिरपि न सम्भवति, तत-
स्तयोर्वृष्टिसाधनत्ववत्प्रजोत्पत्तिसाधनत्वमपि द्रष्टव्यं। तृतीयं
पशुं विधत्ते "वैश्वदेवीं बहुरूपामालभेतान्नकामो वैश्वदेवं
वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मा
अन्नं प्रयच्छन्त्यन्नाद एव भवति छन्दसां वा एष रसो यद्वशा
रस इव खलु वा अन्नं छन्दसामेव रसेन रसमन्नमवरुन्धे"
इति। अन्नस्य सर्वदेवभोज्यत्वाद्वैश्वदेवत्वं, जीवनहेतुत्वेन सार-
त्वाद्रससाम्यं। तमेव पशुं फलान्तराय विधत्ते "वैश्वदेवीं बहु-
रूपामालभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव दे-
वान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छ-
न्ति ग्राम्येव भवति छन्दसां वा एष रसो यद्वशा रस इव
खलु वै सजाताश्छन्दसामेव रसेन रसꣳ सजातानवरुन्धे" इति।
सजातानां भ्रात्रादीनां भृत्यादीनाञ्च बहुत्वेन देवतासाम्येन
वैश्वदेवत्वं स्वाम्युपकारित्वेन च रससादृश्यं। चतुर्थं पशुं वि-
धत्ते "बार्हस्पत्यमुक्षवशमालभेत ब्रह्मवर्चसकामो बृहस्पति-
मेव स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति
ब्रह्मवर्चस्येव भवति" इति। वशत्वविशेषणं प्रशंसति "वशं वा
एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशेनैव वशं
ब्रह्मवर्चसमवरुन्धे" इति। उक्षेति यत् एष वशं चरति धेनु-
भिः सहैवारण्ये गत्वा पुनस्तासामेव पृष्ठतो गृहेष्वागच्छतीति

तस्य गोवशत्वाचित्वं, ब्रह्मवर्चसमपोन्द्रियनियमनेोपेतत्वादश्व इव स्वाधीनपरार्थ इव भवति। पञ्चमं पशुं विधत्ते "रौद्रीꣳ रोहिणीमालभेताभिचरन् रुद्रमेव स्वेन भागधेयेनोपधावति तस्मा एवैनमावृश्चति ताजगार्तिमार्छति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै" इति। रुद्राध्याये नीलग्रीवो विलोहित इति रुद्रस्य विशेषणं लोहितत्वं श्रूयते, अतो रोहिणी रुद्रदेवताका। पूर्ववच्चोदकप्राप्तमपवदितुं विधत्ते "स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनं" इति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एताꣳ सौरीꣳ श्वेतां वशामालभन्त तयैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एताꣳ सौरीꣳ श्वेतां वशामालभेतामुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति बैल्वो यूपो भवत्यसौ॥ १॥

वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् सयोन्येव ब्रह्मवर्चसमवरुन्धे ब्राह्मणस्पत्यां बभ्रुकर्णीमालभेताभिचरन् वारुणं दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति शरमयं बर्हिः शृणाति ॥ २ ॥

एवैनं वैभीदक इध्मो भिनत्त्येवैनं वैष्णवं वामनमालभेत यं यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोपधावति स एवास्मै यज्ञं प्रयच्छत्युपैनं यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै त्वाष्ट्रं वडबमालभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां ॥ ३ ॥

प्रजनयिता त्वष्टारमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् मिथुनान् प्रजनयति प्रजा हि वा एतस्मिन् पशवः प्रविष्टा अथैष पुमान्त्सन् वडबः साक्षादेव प्रजां पशूनवरुन्धे मैत्रꣳ श्वेतमालभेत सङ्ग्रामे संयत्ते समयकामो मित्रमेव स्वेन भागधेयेनोपधावति स एवैनं मित्रेण सन्नयति ॥ ४ ॥

विशालो भवति व्यवसाययत्येवैनं प्राजापत्यं कृष्णामालभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मै पर्जन्यं वर्षयति कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमवरुन्धे शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षयत्यवाशृङ्गो भवति वृष्टिमेवास्मै नियच्छति ॥ ५ ॥

असौ शृणाति मिथुनानां नयति यच्छति ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

ब्रह्मतेजः प्रजां वृष्टिमन्नं ग्रामं तथा पुनः।
ब्रह्मतेजोऽभिचारश्च वाञ्छतां पशवः श्रुताः ॥

तानेतान् पशून् सप्तमेऽनुवाके विधायाष्टमे पुनर्ब्रह्मवर्चसकामादीनां पश्वन्तराणि विधास्यन्नादौ कस्यचित्पशोर्विधानाय प्रस्तौति "असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एताꣳ सौरीꣳ श्वेतां वशामालभन्त तयैवास्मिन् रुचमदधुः" इति। आदित्यविषये बहवः प्रायश्चित्तयः कल्पयुगादिभेदेन व्यवस्थापनीयाः। विधत्ते "यो ब्रह्मवर्चसकामः स्यात्तस्मा एताꣳ सौरीꣳ श्वेतां वशामालभेतामुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्म-

वर्चसं दधाति ब्रह्मवर्चस्येव भवति" इति। खादिरं बाधितुं विधत्ते "बैल्वो यूपो भवत्यसौ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् सयोन्येव ब्रह्मवर्चसमवरुन्धे" इति। श्रीसूक्तेन बिल्वोत्पत्तिराम्नायते 'आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः' इति। अस्यायमर्थः। हे आदित्यवर्णे लक्ष्मि प्रथममुत्पन्नस्यादित्यस्य तपसः सन्तापरूपात्प्रकाशात् अधि ऊर्द्ध्वं तव प्रियो बिल्ववृक्षो जात इति। ततः सौर्या वशाया बैल्वे यूपे सति सूर्यबिल्वयोः सहोदरत्वात् सयोनित्वं, तेन च ब्रह्मवर्चसमपि सयोन्येव सम्पद्यते। स्वपित्रादीनां तु यस्यां वेदशाखायामध्ययनानुष्ठानादिप्रवृत्तिस्तत्रैव स्वस्यापि प्रवृत्तिर्ब्रह्मवर्चसस्य सयोनित्वं। अभिचरतः कञ्चित्पशुं विधत्ते "ब्राह्मणस्पत्यां बभ्रुकर्णीमालभेताभिचरन्" इति। पिङ्गलवर्णकर्णयुक्ता बभ्रुकर्णी। तस्य पशोः प्राच्याङ्गं पुरोडाशं विधत्ते "वारुणं दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते" इति। एतदनुष्ठानेन भ्रातृव्यस्य प्रथमं रोगमुत्पाद्य पश्चाद्ब्रह्मणा ब्रह्मणस्पतिदेवताकेन कर्मणा हिनस्ति। ब्रह्मणश्चतुर्मुखस्य हेमवर्णत्वाद्बभ्रुकर्ण्या ब्रह्मरूपत्वमित्यभिप्रेत्य पशुविशेषणं प्रशंसति "बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै" इति। पूर्ववच्चोदकप्राप्तं बाधितुं विधत्ते "स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्रहरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनं" इति। अग्निष्टोमादिमहायज्ञप्राप्तिकामिनः पशुं विधत्ते "वैष्णवं वामनमालभेत यं

यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोपधावति स एवास्मै यज्ञं प्रयच्छत्युपैनं यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै" इति। राजसूये वैष्णवं त्रिकपालं वामनो दक्षिणेत्युक्तत्वाद्वामनस्य विष्णुदेवत्यत्वं। विधत्ते "त्वाष्ट्रं वडबमालभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां प्रजनयिता त्वष्टारमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् मिथुनान् प्रजनयति" इति। यथा मनुष्येषु यत्र क्वापि पुंसः स्तनवृद्ध्यां सत्यां श्मश्रुनिर्गमनात् प्राग्योषित्त्वभ्रमो भवति, तद्वदश्वेष्वपि केनाप्यवयवसन्निवेशविशेषेण यस्मिन् पुंस्येवाश्वे योषित्त्वबुद्धिरितरेषामश्वानां भवति, अत एव ते ते ऽश्वास्तदा तदा तमश्वमारोहन्ति, सोऽयमीदृशोऽश्वो वडबः, स च त्वष्टुः प्रियः। रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोतीति श्रुतत्वान्मिथुनप्रजनयितृत्वं। पशुविशेषणं प्रशंसति "प्रजा हि वा एतस्मिन् पशवः प्रविष्टा अथैष पुमान्त्सन् वडबः साक्षादेव प्रजां पशूनवरुन्धे" इति। यदा स्त्रीलक्षणदर्शनेनास्मिन् पशौ स्त्रीत्वबुद्ध्या प्रजाः पशवस्स प्रविशन्ति तत्र प्रजानां प्रवेशो नामापत्योत्पत्तये प्रौढं समीचीनमश्वमानीय तत्रारोहयितृत्वाय प्रवृत्तिः, पशूनां प्रवेशो नाम योषित्त्वभ्रान्त्या तदारोहणं। अथ तदानीं प्रजापशुप्रवृत्तेरेष स्वतः पुमानपि सन् स्त्रीनामधारी वडबो भवति, तदालम्भनेन साक्षादेव शीघ्रमेव प्रजां पशून् प्राप्नोति। परकीयसेनायामीदृशमेव शूरतमं हनिष्यामीति स्वामिनोऽग्रे यः प्रतिज्ञां कर्तु-

मिच्छति तस्य पशुं विधत्ते। यद्वा सन्धिकामिनः पशुं विधत्ते "मैत्रꣳ श्वेतमालभेत सङ्ग्रामे संयत्ते समयकामो मित्रमेव स्वेन भागधेयेनोपधावति स एवैनं मित्रेण सन्नयति" इति। एनं प्रतिज्ञावन्तं मित्रेण कार्यसाधकेन सहकारिणा सन्नयति योजयति, यद्वा वैरिणो मित्रत्वमापाद्य तेन मित्रेण योजयति। यजमानेन यूपः सम्मित इति प्रकृतौ यच्छ्रुतं तदपवदितुं परिमाणाधिक्यं विधत्ते "विशालो भवति व्यवसाययत्येवैनं" इति। एनं प्रतिज्ञाकारिणं व्यवसाययत्येव धैर्यमुत्पाद्य स्वकार्यनिश्चयवन्तमेव करोति। अथवैनं सन्धिकामिनं सन्धिघटकत्वेन परो राजा मित्रमेवेत्येतादृशं निश्चयवन्तं करोति। विधत्ते "प्राजापत्यं कृष्णमालभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मै पर्जन्यं वर्षयति" इति। सर्वस्रष्टृत्वेन वृष्टेरपि स्रष्टृत्वात्तदीशित्वं। घनच्छन्ने सवितरि तीव्रवृष्टिवेलायामन्धकाराभाससादृश्यमस्ति तदभिप्रेत्य पशुविशेषणं प्रशंसति "कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमवरुन्धे" इति। कृत्स्नशरीरे कार्ष्ण्यप्राप्तावुदराद्यधस्तनप्रदेशविशेषेषु श्वैत्यविशेषणं विधत्ते "शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षयति" इति। श्वैत्यस्य मालिन्यविरोधित्वाद्विद्युत्साम्यं। कर्णसमीप एवावनतशृङ्गत्वं विधत्ते "अवाशृङ्गो भवति वृष्टिमेवास्मै नियच्छति" इति। अधोमुखत्वेन वृष्टिधारासमत्वं द्रष्टव्यं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

वरुणꣳ सुषुवाणमन्नाद्यं नोपानमत्स एतां वारुणीं कृष्णां वशामपश्यत्ताꣳ स्वायै देवताया आलभत ततो वै तमन्नाद्यमुपानमद्यमलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत्स एतां वारुणीं कृष्णां वशामालभेत वरुणमेव स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नादः ॥ १ ॥

एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपाञ्च खलु वा ओषधीनाञ्च रसमुपजीवामो मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अन्नं प्रयच्छतोऽन्नाद एव भवति ॥ २ ॥

अपाञ्चौषधीनाञ्च सन्धावालभत उभयस्यावरुद्ध्यै विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै मैत्रꣳ श्वेतमालभेत वारुणं कृष्णं ज्योगामयावी यन्मैत्रो भ-

वति मित्रेणैवास्मै वरुणꣳ शमयति यद्वारुणः साक्षा-
देवैनं वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव
देवा वै पुष्टिं नाविन्दन् ॥ ३ ॥

तां मिथुनेऽपश्यन् तस्यां न समराधयन्तावश्विनाव-
ब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साश्विनोरे-
वाभवद्यः पुष्टिकामः स्यात्स एतामाश्विनीं यमीं वशा-
मालभेताश्विनावेव स्वेन भागधेयेनोपधावति तावेवा-
स्मिन् पुष्टिं धत्तः पुष्यति प्रजया पशुभिः ॥ ४ ॥

अन्नादोऽन्नाद एव भवत्यविन्दन् पञ्च चत्वारिꣳ-
शच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपा-
ठके नवमोऽनुवाकः ॥ * ॥

ब्रह्मतेजोऽभिचारश्च यज्ञप्राप्तिं तथा पशून्।
समयश्च तथा वृष्टिं वाञ्छतां पशवः श्रुताः ॥

तान् पशूनष्टमेऽनुवाके विधायाथ नवमेऽन्नाद्यकामादी-
नां पशून् विधित्सुरादौ कञ्चित्पशुं विधातुं प्रस्तौति "वरुणꣳ
सुषुवाणमन्नाद्यं नोपानमत्स एतां वारुणीं कृष्णां वशामपश्यत्
ताꣳ स्वायै देवताया आलभत ततो वै तमन्नाद्यमुपानमत्"
इति। सुषुवाणं सोमाभिषवं कृतवन्तं। विधत्ते "यमलमन्ना-

द्याय सन्तमन्नाद्यं नोपनमेत्स एतां वारुणीं कृष्णां वशामालभेत वरुणमेव स्वेन भागधेयेनोपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै” इति। धनिकः पुमानत्तुं योग्याय शाल्यन्नपायसादिभोज्याय समर्थोऽपि संविधातृमनुष्याभावादिना तं न प्राप्नुयात् तस्यायं पशुः। वरुणः पर्जन्यमुखेन प्रकाशमावृत्य कार्ष्ण्यं सम्पादयति। ततोऽस्य पशुवर्णस्य वरुणदेवत्यत्वं। द्विपशुकं कर्म विधत्ते “मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपाञ्च खलु वा ओषधीनाञ्च रसमुपजीवामो मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अन्नं प्रयच्छतोऽन्नाद एव भवति” इति। सन्धिशब्दं कालपरत्वेन देशपरत्वेन च द्वेधा सूत्रकारो व्याख्यातवान्। अपाञ्चौषधीनाञ्च सन्धाविति प्रावृषि शरत्प्रतिपत्तौ, अपि वापाञ्चौषधीनाञ्च सन्धाविति स्थलोर्मध्ये नदीक्षेत्रयोर्मध्य इति तस्यार्थः। ओषधीनामुपकारकत्वेन मित्रसम्बन्धित्वं। सन्धौ प्रयोग उभयरसोपजीवनेन प्रशस्तः। एतदेवाभिप्रेत्य सन्धिं प्रशंसति “अपाञ्चौषधीनाञ्च सन्धावालभत उभयस्यावरुद्ध्यै” इति। यूपस्य शाखाद्वयं विधत्ते “विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै” इति। विविधे शाखे यस्यासौ विशाखः। तदिदं सूत्रकारो दर्शयति ‘विशाखो यूप इति यदूर्द्धं रशनायास्तद्विशाखं, यद्वोपर्युभे शाखे अष्टाश्री सचषाले स्यातां’ इति। दीर्घरोगिणो द्विपशुकं कर्म

विधत्ते "मैत्रꣳ श्वेतमालभेत वारुणं कृष्णं ज्योगामयावी यन्मैत्रो भवति मित्रेणैवास्मै वरुणꣳ शमयति यद्वारुणः साक्षादेवैनं वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव" इति। मित्रो हि क्रूरं वरुणं शान्तं करोति स च वरुणपाशान्मोचयति, तयोः पृथगुपक्रमः। पुष्टिकामस्य पशुं विधातुं प्रस्तौति "देवा वै पुष्टिं नाविन्दन् तां मिथुनेऽपश्यन् तस्यां न समराधयन् तावश्विनावब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साश्विनोरेवाभवत्" इति। प्रजापशुसमृद्धिः पुष्टिः, सा च मनुष्यमिथुने पशुमिथुने च सम्भवतीत्येवं देवा उपायमपश्यन् दृष्ट्वा च तस्यां पुष्टौ सम्यक् साधयितुं शक्ता नाभूवन्, तदानीमश्विनावूचतुः आवयोरेवैषा पुष्टिः सम्बन्धिनी, तस्मादेतस्यां पुष्टावावाभ्यां विना मा वदध्वं सम्भाषणमेव मा कुरुतेति, तस्मात् सा पुष्टिरश्विनोरधीनाभवत्। विधत्ते "यः पुष्टिकामः स्यात्स एतामाश्विनीं यमीं वशामालभेताश्विनावेव स्वेन भागधेयेनोपधावति तावेवास्मिन् पुष्टिं धत्तः पुष्यति प्रजया पशुभिः" इति। एकस्मिन् गर्भे सहजातौ यमौ तयोर्मध्ये या स्त्री सा यमी ॥०॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥९॥

आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्यश्विनावेव स्वेन भागधेयेनोपधावति तावेवास्मै सोमपीथं प्रयच्छत उपैनꣳ सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादपहन्ति ललामः ॥ १ ॥

भवति मुखत एवास्मिन् तेजो दधाति वायव्यं गोमृगमालभेत यमजघ्निवाꣳसमभिशꣳसेयुरपूता वा एतं वागृच्छति यमजघ्निवाꣳसमभिशꣳसन्ति नैष ग्राम्यः पशुर्नारण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजघ्निवाꣳसमभिशꣳसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेन भागधेयेनोपधावति स एव ॥ २ ॥

एनं पवयति पराची वा एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं प्रविशति यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतामुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मात्तमः पाप्मानमपहन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते ॥ ३ ॥

ल॒लामः॒ स ए॒व षट् चत्वारि॑ꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ * ॥

अन्नाद्यमन्नमात्रस्य वाञ्छन्तो दीर्घरोगवान्।
पुष्टिकामस्य नवमे एतेषां पशवः श्रुताः।

अथ दशमेऽनुवाके नैमित्तिकाः पशवो विधातव्याः। तत्र दुर्ब्राह्मणस्य सोमपानेच्छां निमित्तीकृत्य पशुं विधत्ते "आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्यश्विनावेव स्वेन भागधेयेनोपधावति तावेवास्मै सोमपीथं प्रयच्छत उपैनꣳ सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादपहन्ति ललामो भवति मुखत एवास्मिन् तेजो दधाति" इति। मलिनश्वेतत्वं धूम्रत्वं, ललाटे शौक्ल्येन लाञ्छितोऽवशिष्टे शरीरे धूम्रवर्णः पशुरश्विनोः प्रियः। दुर्ब्राह्मणलक्षणं बोधायन आह 'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषं। स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः' इति। पूर्वोक्तपुनरुत्सृष्टे पशौ 'यो ब्राह्मणः सन्नातीयात्' (सं०का०२।प्र०१।अ०५।) इत्युक्तत्वादीदृशो दुर्ब्राह्मणो नाधिकारी। अत्र तु सोमपाने श्रद्धालुत्वेनेच्छावत्त्वे सति दुर्ब्राह्मणोऽधिक्रियते। आश्विनग्रहब्राह्मणे (सं०का०६।प्र०४।अ०८।)

'तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजौ' इत्युक्त-त्वादपूतयोरितरदेववत् सोमपात्वं नास्ति पश्चाद्यज्ञस्य छिन्न शिरः प्रतिसन्धाय तेन तुष्टेभ्यो देवेभ्यः सोमग्रहं लब्धवन्तौ तदपि तत्रैवाम्नातं 'तौ बहिष्पवमानेन पवयित्वा ताभ्यामेत-माश्विनमगृह्णन्' इति। अतः समानशीलत्वाद्ब्राह्मणस्य सोम-पिपासोरश्विनौ देवता। पशोर्धूम्रत्ववर्णेन दौर्ब्राह्मण्यलक्षण धूम्रिमाणं मालिन्यमस्मादपहन्ति। ललाटे शौक्ल्येन अग्निमुखत्व एव मुख्यमेव ब्रह्मवर्चसलक्षणं तेजो विधत्ते। मिथ्यापवाद निमित्तीकृत्य कञ्चित्पशुं विधत्ते "वायव्यं गोमृगमालभेत यमजघ्निवाꣳसमभिशꣳसेयुरपूता वा एतं वागृच्छति यम-जघ्निवाꣳसमभिशꣳसन्ति नैष ग्राम्यः पशुर्नारण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजघ्निवाꣳसमभिशꣳसन्ति वायुर्वै दे-वानां पवित्रं वायुमेव स्वेन भागधेयेनोपधावति स एवैनं पवयति" इति। गोभिः सहारण्ये चरितुं गताहृषभात् कस्याश्चिन्मृग्यामुत्पन्नो गोमृगः, उभयलक्षणदर्शनात्तथात्वं निश्चेयं। कश्चित्पुरुषो ब्राह्मणं न हतवान् तथापि शङ्कया तादृशं यं पुरुषं जना ब्रह्महेत्यपवदेयुः तस्यायं पशुः, यद्यप्यस्य पुरुषस्य ब्रह्महत्याप्रयुक्तो नरको नास्ति तथाप्यपूता वागृ-च्छत्येतं निन्दारूपा वाक् शङ्कितैर्जनैः क्रियमाणा प्राप्नोत्येव। तामेव निन्दां निमित्तीकृत्यैव विहितो मृगः। मुख्यो ग्राम्यो न भवति मृग्यामुत्पन्नत्वात्, नापि मुख्य आरण्यः वृषभादु-त्पन्नत्वात्। अभिशस्तस्य ग्रामे नास्ति वासो, बन्धुभिः सह

व्यवहाराभावात्, नापि वानप्रस्थादिवदरण्ये ग्रामवासित्वात्। देवानां मध्ये वायोः पवित्रत्वं द्रव्यशुद्धिहेतुत्वादवगम्यते। तच्च याज्ञवल्क्येन स्मर्यते,

"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च"॥ इति।

अनुष्ठितेऽप्यस्मिन् पशौ निन्दां केचिल्लौकिका न परित्यजन्तीति चेत्तर्हि निन्दन्तु नाम ते तथाप्ययमवभिज्ञैः शिष्टैर्व्यवहार्य एव। सोमयागमध्ये आश्विनशस्त्रकाले सूर्यानाविर्भावं निमित्तीकृत्य कश्चित्पशुं विधत्ते "पराची वा एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं प्रविशति यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतामुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मात्तमः पाप्मानमपहन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते" इति। अग्निर्होता गृहपतिः स राजेत्यादिकं सहस्रसङ्ख्याकाभिर्ऋग्भिरुपेतं शस्त्रमाश्विनं, तच्चातिरात्रयागे रात्रिपर्यायनामकेषु शस्त्रेषु पठितेषु *पश्चादुषःकालात् प्राग्वेलायामारभ्यं। तस्मिन् शस्त्रे शस्यमाने सति सूर्य उदित्वा मेघाद्यावरणमन्तरेण यदाविर्भवेत् तदा नायं पशुरपेक्षितः। यस्य यजमानस्य तदानीं नाविर्भवेत् एतस्मै यजमानायेयं रात्रिः व्युच्छन्ती प्रभातं प्राप्नुवन्ती सती न सम्यक् प्राप्नोति, किन्तु पराची व्युच्छन्ती पराङ्मुखी तस्मिन्नपरक्ता सती प्रभातं प्राप्नोति,

---

* पश्चादुषःकालवेलायामिति तै०।

तदानीमयं यजमानः प्रकाशविरुद्धं तमः स्वर्गविरोधिनं पाप्मानञ्च प्रविशति, तादृशस्यायं पशुः, स च बहुरूपः चित्रवर्णः, प्रतीची सम्मुखी तस्मिन्ननुरक्तेत्यर्थः, तेन पशुना तमः पाप्मानञ्चापहन्ति ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ * ॥

इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्म भरेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमुचꣳ सुकृतं दैव्यं जनं। अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये। ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान्। शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः। प्रिया वो नाम ॥ १ ॥

हुवे तुराणां। आ यत्तृपन्मरुतो वावशानाः। श्रियसे कं भानुभिः सम्मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः। अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रेभिरभिरक्षतु त्मना। इन्द्रो मरु-

ङ्गिर्ऋतुधा कृणोत्वादित्यैर्नो वरुणः सꣳशिशातु। सं नो देवो वसुभिरग्निः सं ॥ २ ॥

सोमस्तनूभी रुद्रियाभिः। समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यैर्नो वरुणो अजिज्ञिपत्। यथादित्या वसुभिः सम्बभूवुर्मरुद्भी रुद्राः समजानताभि। एवा त्रिणामन्नहृणीयमाना विश्वे देवाः समनसो भवन्तु। कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने। अर्हन्तश्चिद्यमिन्धते सञ्जनयन्ति जन्तवः। सं यदिषो वनामहे सꣳ हव्या मानुषाणां। उत द्युम्नस्य शवसः ॥ ॥ ३ ॥

ऋतस्य रश्मिमाददे। यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत्। शुचिरपः सूयवसा अदब्ध उपक्षेति वृद्धवयाः सुवीरः। नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ। धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः। दीर्घाधियो रक्षमाणाः ॥ ४ ॥

असुर्यमृतावानश्चयमाना ऋणानि। तिस्रो भूमीर्धारयन् त्रीꣳ रुत द्यून् त्रीणि व्रता विदथे अन्तरेषां।

ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु। त्यान्नु क्षत्रियाꣳ अव आदित्यान्याचिषामहे। सुमृडीकाꣳ अभिष्टये। न दक्षिणा विचिकिते न सव्या न प्राचीनमादित्या नोत पश्चा पाक्या चिद्वसवो धीर्या चित् ॥ ५ ॥

युष्मानीतो अभयं ज्योतिरश्यां। आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन। अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः। इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके। तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ ६ ॥

नामाग्निः सꣳशवसा रक्षमाणा धीर्या चिदेकान्नपञ्चाशच्च ॥ ११ ॥

वायव्यं प्रजापतिस्ता वरुणं देवासुरा एष्वसावादित्यो दशर्षभामिन्द्रो वलस्य बार्हस्पत्यं वषट्कारोऽसौ सौरीं वरुणमाश्विनमिन्द्रं वो नर एकादश ॥

॥ ११ ॥

वायव्यमाग्नेयीं कृष्णग्रीवीमसावादित्यो वा ऋद्धो-

राचार्णि वषट्कारः प्रजनयिता हुवे तुराणां पञ्च-
षष्टिः ॥ ६५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपा-
ठक एकादशोऽनुवाकः ॥ * ॥

॥ * ॥ प्रथमप्रपाठकः सम्पूर्णः ॥ * ॥

दौर्ब्राह्मण्याभिशापौ च सूर्याविर्भाववर्जनं।
निमित्तीकृत्य दशमे पशवः समुदीरिताः ॥

तैरेतैर्दशभिरनुवाकैः काम्यपशवः समापिताः। अथैका-
दशेऽनुवाके काम्येष्टियाज्या उच्यन्ते। तस्मिंश्च काम्येष्टिकाण्डे
पूर्वोदाहृतात्सोमारौद्रचरोरूर्द्धं द्विहविष्का काचिदिष्टिरेव-
माम्नायते "ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं
ग्रामकाम इन्द्रञ्चैव मरुतश्च स्वेन भागधेयेनोपधावति त एवास्मै
सजातान् प्रयच्छन्ति ग्राम्येव भवति" (सं०का०२।प्र०२।अ०११)
इति। प्रकृतौ सहप्रयुज्यमानयोरपि द्वयोः पुरोडाशयोरेकस्मि-
न्नेवाधिश्रयणं। इह तु तद्बाधितुं विधत्ते "आहवनीय ऐन्द्र-
मधिश्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै" (सं०का०२।
प्र०२) इति। पापेन वस्यसं वसुमत्तरं पापवस्यसं पापाधिक्यो-
पेतमित्यर्थः। मरुतामुग्रदेवत्वात्तदीयं हविः पापवस्यसं, ऐ-
न्द्रस्य तद्धविषो विभागेनावधारणार्थं भिन्नाग्नावधिश्रयणं।
तत्रत्यकपालसङ्ख्यां प्रशंसति "सप्तकपालो मारुतो भवति सप्त-
गणा वै मरुतो गणश एवास्मै सजातानवरुन्धे" (प्र०२) इति।

ईदृङ् चेत्यादिनोक्ताः सप्तसङ्ख्याकाः मरुत एको गणः, तथा-विधाश्च गणाः सप्तसङ्ख्याकाः, तेषां हविःप्रदानेन गणशः बहुविधगणरूपान् *भ्रातृमित्रभृत्यादीनवरुन्धे। प्रकृतौ सामिधेनीमन्त्रानुवचनात् प्रागेव हविरासादनं, तदपवदितुं विधत्ते "अनूच्यमान आसादयति विशमेवास्मा अनुवर्त्मानं करोति" (प्र०२) इति। अत्र सूत्रकारः 'ऐन्द्रमासादयति सामिधेनीष्वनूच्यमानासु मारुतं' इति। यजमानस्यानुकूलं वर्त्म वर्तनं यस्या विशः सेयमनुवर्त्मा। अनयोरुभयोर्हविषोर्याज्यानुवाक्यानां पूर्वकाण्ड एव समाम्नातानां प्रतीकान्युदाहरति "इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्म". इति। प्रथमयुग्मं षष्ठप्रपाठकस्यान्त्यानुवके पठितं, द्वितीययुग्मं तु पञ्चमप्रपाठकस्यान्त्यानुवाके, तदर्थस्तु तत्रैव द्रष्टव्यः। उक्तामेवेष्टिं फलान्तराय विधत्ते "एतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन् ब्रूयान्मरुद्भ्योऽनुब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति स्व एवैभ्यो भागधेये समदं दधाति वितृꣳहाणास्तिष्ठन्ति" (प्र०२) इति। मदेन सह वर्तत इति समदः कलहः, राज्ञः प्रजायाश्च परस्परं कलहं कुर्यामिति कामयितुरियमिष्टिः। अस्यामिष्टावयं प्रकृतेर्विशेषः। प्रकृतावाग्नेयस्यावदानकाले पुरोऽनुवाक्याप्रैषमुक्त्वा तदाश्रावणादूर्द्ध्वमाग्नेययाज्याया एव प्रैषं

---

*भ्रातृव्यादीनिति तै०।

वदेत्, न तु देवतान्तरयाज्यायाः। इह त्वन्यविषयोऽनुवाक्याप्रैषः, अन्यविषयश्च याज्याप्रैष इति विशेषः। एवञ्च सत्येभ्यः इन्द्रमरुद्भ्यः स्वस्वभागे कलहं कृतवान् भवति, तदीयकलहानुसारेण राजा विशश्च विट्‌छायाः विशेषेण परस्परं हिंसां कुर्वाणास्तिष्ठन्ति। कलहसमाधानकामस्य तामेवेष्टिं विधत्ते "एतामेव निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एव" (ब्रा०२) इति। कल्पेरन् परस्परकलहरहिता भवेयुः। एतानिन्द्रमरुतः स्वस्वभागभाजिनः कल्पयति, तथा सति राजा विशश्च कल्पन्त एव कलहरहिताः स्निग्धा भवन्त्येव। एतयोः कलहतत्समाधानार्थयोः पूर्वोदाहृता एव याज्यानुवाक्याः। इष्ट्यन्तरं विधत्ते "ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रञ्चैव विश्वांश्च देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति" (ब्रा०२) इति। प्रकृतौ हविर्द्वयस्य सहावदानं नास्ति। अत्र तु तद्विधत्ते "ऐन्द्रस्यावदाय वैश्वदेवस्यावद्यैन्द्रस्योपरिष्टादिन्द्रियेणैवास्मा उभयतः सजातान् परिगृह्णाति" (ब्रा०२) इति। द्विर्हविषोऽवद्यतीति श्रुतत्वादेकैकस्य हविषो द्विर्द्विरवदानं सहकर्तव्यं, तथा सत्यत्र सकृदैन्द्रमवदाय ततो वैश्वदेवं द्विरवद्येत् पुनरप्युपरिष्टादैन्द्रमवद्येत्। एवं सति यजमानार्थं सजातान् ग्रामनिवासिनः सर्वानुभयोः पार्श्वयोरिन्द्रियसामर्थ्ययुक्तान् करोति।. अथ दक्षिणाविशेषं

विधत्ते "उपाधाय्यपूर्वयं वासो दक्षिणा सजातानामुपहित्यै" (प्र०९) इति। वस्त्रस्योभयपार्श्वान्तयोरुपानीयं स्थापनीयं सूत्रमुपाधाय्यं तच्च पूर्वमेवोपानयनकाले* वस्त्रं याति प्राप्नोतीति पूर्वयं, उपाधाय्यं पूर्वयं यस्मिन् वाससि तदुपाधाय्यपूर्वयं अत एव सूत्रकारः 'उपाधाय्यपूर्वयं वासो दक्षिणा चित्रान्तमित्यर्थः'। तादृशस्य वाससो दानं सजातानामुपहित्यै यजमानसेवायै सम्पद्यते। अस्यामिष्टौ पुरोऽनुवाक्यामाह "भरेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमुचꣳ सुकृतं दैव्यं जनं। अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये" इति। इन्द्रमग्न्यादिदेवांश्च भरेषु भ्रियमाणेषु सम्पाद्यमानेषु हविःषु हवामहे आह्वयामः, किमर्थं सातये देवेभ्यो हविर्दानाय, स्वस्तये यजमानस्य श्रेयसे च। कीदृशमिन्द्रं सुहवं सुखेनाह्वातुं शक्यं, अंहोमुचं पापान्मोचयितारं, सुकृतं शोभनं हितं करोतीति सुकृत् तं सुकृतं, दैव्यं दिवि भवं, जनं जनयितारं वृष्टिद्वारेण सस्याद्युत्पादकं। अत्र पूर्वार्धस्येन्द्रविषयत्वादुत्तरार्धस्येतरबहुदेवविषयत्वाच्च हविर्द्वयस्यैकैव पुरोऽनुवाक्या। तत्रैव याज्यामाह "ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान्। शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः" इति। परितः सर्वतो ज्मनं भक्षणं यस्याग्नेः सोऽयं परिज्मा, स च नोऽस्मान् ममत्तु हर्षयतु वासरस्य हन्ता गमयिता सूर्यः स च नो ममत्तु, वातो मे

* पूर्वमेव दानकाल इति ते०।

समस्तु, अपां वृषण्वान् वर्षकः पर्जन्यदेवो नो समस्तु। पर्वतशब्देन कैलासादिपर्वतवासिदेवविशेषो हिमवान् वाभिधीयते, आश्वमेधिकेषु पशुविधिषु हिमवतो हस्तीति देवत्वश्रवणात्। हे इन्द्रापर्वतौ युवां नोऽस्मान् शिशीतं तनूकुरुतं, पापबहुलानामस्माकं पापचयस्तनूकरणं, तत् तेन हविःप्रदानेन विश्वे देवा नोऽस्मान् वरिवस्यन्तु परिचर्यासमये कृपयावलोकयन्तु।

इष्ट्यन्तरं विधत्ते "पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति" (प्र०१) इति। पृश्निः श्वेता गौः, तादृश्या गोर्मरुतां प्रियङ्गूनां चोत्पत्तिप्रसिद्धिः शाखान्तरीयार्थवादे द्रष्टव्या। पृश्नियै प्रियङ्गव इत्यत्र पयसो जाता इत्यनुवर्तते। एकोदरत्वात् प्रियङ्गूनां मरुद्देवत्यत्वं। विधत्ते "प्रियवती याज्यानुवाक्ये भवतः प्रियमेवैनꣳ समानानां करोति द्विपदा पुरोऽनुवाक्या भवति द्विपद एवावरुन्धे चतुष्पदा याज्या चतुष्पद एव पशूनवरुन्धे" (प्र०१) इति। प्रियशब्दोऽस्ति ययोस्ते ऋचौ प्रियवत्यौ ते चोदाहरिष्येते। तत्प्रयोगाद्यजमानस्य समानानां मध्ये प्रियत्वं। तयोर्ऋचोर्विद्यमानं पाठप्राप्तं द्विपदत्वं चतुष्पदत्वञ्च मनुष्यप्राप्त्या पशुप्राप्त्या च प्रशस्यते। तत्र पुरोऽनुवाक्यां द्विपदामाह "प्रिया वो नाम हुवे तुराणां। आ यत् तृपन्मरुतो वावशानाः" इति। हे मरुतः तुराणां हविः-

स्वीकारं प्रति त्वरमाणानां वो युष्माकं प्रिया नाम प्रियाणि नामानि आहुवे आह्वयामि, यत् यस्माद्यूयं हपत् हर्षिं वावशानाः कामयमानाः स्थ तस्मादाह्वयामि। तत्रैव चतुष्पदां याज्यामाह "श्रियसे कं भानुभिः सम्मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः" इति। ते मरुतः पुरो वातरूपाः सन्तः कं सुखं श्रियसे प्राणिभिराश्रयितुं भानुभिर्भासकैः रश्मिभिः सूर्यरश्मिभिः सहिताः सम्मिमिक्षिरे मेढुं वृष्ट्या भूमिं सम्यक् सेक्तुमिच्छन्ति, ते मरुत ऋक्वभिः याज्यापुरोऽनुवाक्यारूपाभिर्ऋग्भिः स्तुताः सन्तः सुखादयः शोभनं हविः खादितवन्तः भक्षितवन्तः, ततस्ते मरुतो वाशीमन्तः उत्साहजनितघोषरूपबहुविधशब्दवन्तः, इष्मिणः स्वगृहान् प्रति गतिमन्तः, अभीरवः स्वकार्यस्य निष्पन्नत्वेन विघ्नकारिभ्योऽसुरेभ्यो भयरहिताः, प्रियस्य मारुतस्य धाम्नः मरुतां सम्बन्धि यत् प्रियं स्थानं तत् विद्रे लब्धवन्तः। इष्ट्यन्तरं विधातुं प्रस्तौति "देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽन्योन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः, स इन्द्रः प्रजापतिमुपाधावत्तमेतया सञ्ज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुं ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभिसमजानत" (प्र०२) इति। देवा असुराश्च

यदा युद्धार्थमुद्यताः तदानीमहमेव ज्येष्ठो भविष्यामि नेतर इत्येवं परस्परं ज्यैष्ठ्यमनङ्गीकुर्वाणा देवाः परस्परं प्रियरहिताः सन्तः सेनां चतुर्धा विभज्य विविधं यथा भवति तथा प्रक्रान्तवन्तः, तत्र वसुभिः सहितोऽग्निरेकः सङ्घः। रुद्रैः सहितः सोमो द्वितीयः सङ्घः। मरुद्भिः सहित इन्द्रस्तृतीयः सङ्घः। आदित्यैः सहितो वरुणस्तुर्यः सङ्घः। तदानीमिन्द्रः प्रजापतिमुपसेव्य तदुपदेशेन सञ्ज्ञानीनामिकामिष्टिं कृतवान्, तत ऊर्द्धमिष्टिसामर्थ्यादपगतमत्सरा देवा ज्यैष्ठ्यार्थमिन्द्रं सम्यगभ्यनुज्ञातवन्तः। सम्यक् ज्ञायतेऽभ्यनुज्ञायते ययेष्ट्या असौ सञ्ज्ञानी। तामूनन्नार्थवादत्वेन सञ्ज्ञान्या अननुष्ठितत्वान्नास्ति कस्यचित्प्राधान्यं किन्तु स्वकार्यसिद्धिमभिप्रेत्य सर्वे मात्सर्यं जहुः, इह त्विष्टिप्रसादादिन्द्रस्य प्राधान्यं, एतच्चोभयं कल्पभेदाद्युगभेदाद्वा द्रष्टव्यं। विधत्ते "यः समानैर्मिथो विप्रियः स्यात्तमेतया सञ्ज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभिसञ्जानते वसिष्ठः समानानां भवति" (प्र०२) इति। इन्द्रमेव भूतं स्वामिनमेव सन्तमेनं यजमानं ज्यैष्ठ्याय सम्यगभ्यनुजानन्ति। ततोऽयं समानानां वसिष्ठो वासयितृतमः पालको भवति। तत्र पुरोऽनुवाक्यामाह "अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रेभिरभिरक्षतु त्मना। इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैर्नो वरुणः

सꣳशिशातु" इति। वसुभिः सहितोऽग्निः प्रथमसङ्घाधिपति-र्नोऽस्मानवतु। रुद्रैः सहितः सोमः त्मना स्वयमेव प्रीति-पुरःसरमभिरक्षतु। मरुद्भिः सहित इन्द्रः ऋतुधा तत्तदृतू-चितभोगधारिणोऽस्मान् करोतु। आदित्यैः सहितो वरुणो नोऽस्मान् संशिशातु संशितव्रतान् सम्यगनुष्ठितव्रतान् करोतु। तत्रैव याज्यामाह "सं नो देवो वसुभिरग्निः सं सोमस्तनूभी रुद्रियाभिः। समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यैर्नो वरुणो अजिज्ञिपत्" इति। वसुभिः सहितोऽग्निर्देवो नोऽस्मान् सम-जिज्ञिपत् सम्यगनुष्ठानं ज्ञापयतु। रुद्रसम्बन्धिनीभिस्तनूभिः सहितः सोमः समजिज्ञिपत्। यज्ञयोग्यैर्मरुद्भिः सहित इन्द्रः समजिज्ञिपत्। आदित्यैः सहितो वरुणः समजिज्ञिपत्। तत्रैव विकल्पितामन्यां याज्यामाह "यथादित्या वसुभिः सम्बभूवु-र्मरुद्भी रुद्राः समजानताभि। एवा त्रिणामन्नहृणीयमाना विश्वे देवाः सममनसो भवन्तु" इति। पूर्वोक्तेषु सङ्घचतुष्टय-मध्यवर्तिषु देवेषु यथा वरुणसमीपवर्तिन आदित्या अग्निस-मीपवर्तिभिर्वसुभिः सम्बभूवुः सङ्गताः प्रीतियुक्ता बभूवुः, यथा चेन्द्रसमीपवर्तिभिर्मरुद्भिः सह सोमसमीपवर्तिनो रुद्रा अभिसमजानत ज्यैष्ठ्यं सम्यगभ्यनुज्ञातवन्तः, त्रीणि नामान्या-हवनीयगार्हपत्यदक्षिणाग्निरूपाणि हव्यवाहनकव्यवाहनसह-रक्षोरूपाणि वा यस्याग्नेः सोऽग्निः त्रिणामा, हे त्रिणामन् एवा एवमेव यथा रुद्रादयस्तथा विश्वे देवा अन्येऽपि रुद्रा-दिसमीपवर्तिनो देवाः सर्वे अहृणीयमानाः वैरिभिरनप-

क्रियमाणविभूतयः समनसः परस्परं समानमनस्का भवन्तु। यद्यप्यत्र चत्वारि हवींषि तथापि सहप्रदानेन पुरोऽनुवाक्याया भेदो नास्ति, तथा याज्याया अपि, यथा पूर्वत्र ग्रामकामं प्रति विहितयोरैन्द्रवैश्वदेवहविषोः सहप्रदानात्पुरोऽनुवाक्यादिभेदो नास्ति। अत्रैव स्विष्टकृतः पुरोऽनुवाक्यामाह "कुवाचिदस्य सम्मृतौ रण्वा नरो नृषदने। अर्हन्तश्चिद्यमिन्धते सञ्जनयन्ति जन्तवः" इति। यस्य स्विष्टकृद्देवस्य सम्मृतौ सङ्गतौ सत्यां नृषदने मनुष्यस्थाने ग्रामगृहादौ कुत्राचिदत्र कुत्रापि नरो मनुष्या रण्वा रममाणास्तिष्ठन्ति, किञ्च यं स्विष्टकृद्देवमर्हन्तश्चित् मन्त्रविशेषैः पूजयन्त एव तदीयाहुत्यर्थमिन्धते वह्निं प्रज्वलयन्ति प्रज्वाल्य च जन्तवो यजमानाः सञ्जनयन्ति समीचीनं फलमुत्पादयन्ति, तादृशः स्विष्टकृद्देवः प्रसीदत्विति शेषः। तत्रैव याज्यामाह "सं यदिषो वनामहे सं हव्या मानुषाणां। उत द्युम्नस्य शवस ऋतस्य रश्मिमाददे" इति। यद्यस्मात् कारणादिष इष्यमाणान्यन्नानि संवनामहे स्विष्टकृद्देवप्रसादेन सम्यग्भजामः, मानुषाणां यजमानानां हव्या होमयोग्यानि द्रव्याणि संवनामहे। उतापि च द्युम्नस्य धनस्य शवसो बलस्य ऋतस्य यज्ञस्य च रश्मिं रश्मिवत्प्रकाशमुत्कर्षं आददे स्वीकुर्मः। तस्मात्कारणादेवमनुग्रहीतारं स्विष्टकृद्देवं भजामह इति शेषः। इष्ट्यन्तरं विधत्ते "आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रतिनुदन्ते योऽलं भूत्यै सन् भूतिं न प्राप्नो-

त्यादित्यानेव भुवद्वतः स्वेन भागधेयेनोपधावति त एवैनं भूतिं गमयन्ति भवत्येव" (सं०का०२।प्र०३।अ०१) इति। यदीययोर्याज्यापुरोऽनुवाक्ययोर्भुवच्छब्दः श्रूयते ते एत आदित्या भुवद्वन्तः। यद्यपि पुरोऽनुवाक्यायां भवता मृडयन्त इति भवतेत्ययं शब्दः पठितः, यद्यपि च याज्यायां भवति प्रणीताविति भवतीत्येष शब्दः पठितः न तु भुवच्छब्दः क्वाप्यस्ति तथापि वर्णविकारमभिप्रेत्य भुवद्वन्त इत्युच्यते। एवमन्यत्रापि वायवे नियुत्वत आलभेत अग्नये पथिकृत इत्यादौ विशेषणैर्याज्यानुवाक्यागताः शब्दाः स्मर्यन्त इति द्रष्टव्यं। ते च याज्यादिगताः शब्दाः तत्तत्प्रकृतोचितफलस्य सूचकाः, अतोऽत्रापि भूतिसूचकभुवच्छब्दवन्तः इत्युक्तं भवति, तथा सति भुवद्वन्तः फलत्वेन दातव्यभूतिमन्त इत्यर्थोऽपि लभ्यते। तत्र पुरोऽनुवाक्यामाह "यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत्" इति। अयं यज्ञो देवानां सुम्नं सुखं प्रति एति गच्छतिं प्रवर्तते। हे आदित्यासो यूयमस्मान् मृडयन्तः सुखयन्तो भवत तिष्ठत। युष्माकं सुमतिरनुग्रहबुद्धिरर्वाचीनेष्वस्मासु प्रवृत्ता सती आववृत्यात् आवर्ततां, या सुमतिरꣳहोश्चित् अस्मदीयपापादप्यावर्तते पापं विनाशयतीत्यर्थः। सा सुमतिर्वरिवोवित्तराऽसत् अतिशयेन परिचर्याभिज्ञा भवतु। तत्रैव याज्यामाह "शुचिरपः सूयवसा अदब्ध उपक्षेति वृद्धवयाः सुवीरः। नकिष्टं घ्नन्त्यन्तितो न दूराद्य

आदित्यानां भवति प्रणीतौ” इति। अयं यजमानः शुचिः सन् अपोऽनुष्ठीयमानं कर्म उपक्षेति समीपे प्राप्नोति, कीदृशो ऽयं सूयवसः शोभनं यवसं तृणं तेनोपलक्षितमन्नादिभोग्यं यस्य सोऽयं सूयवसाः, अदब्धः कैरपि शत्रुभिरतिरस्कृतः। वृद्धं दीर्घं वय आयुर्यस्यासौ वृद्धवयाः चिरजीवीत्यर्थः। शोभना वीराः पुत्रा भृत्याश्च यस्यासौ सुवीरः, य ईदृशो यजमानः आदित्यानां प्रणीतौ प्रणयने कर्मणि भवति प्रवर्तते तं यजमानं शत्रवः अन्तितः समीपे नकिः घ्नन्ति न विनाशयन्ति दूरादपि न घ्नन्ति, नकिःशब्दो निषेधवाची। इष्ट्यन्तरं विधत्ते “आदित्येभ्यो धारयद्भ्यश्चरुं निर्वपेदपरुद्धो वापरुध्यमानो वादित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्भतः स्वेन भागधेयेनोपधावति त एवैनं विशि दाध्रत्यनपरुध्यो भवति” (प्र०३) इति। धारयच्छब्दो यदीययोर्याज्यानुवाक्ययोर्वर्तते त इमे धारयन्तः स्थानभ्रष्टं स्वस्थाने धारयितुं क्षमा इति तस्य पदस्य पर्यवसितार्थः, यो राजा पूर्वं स्वराष्ट्राद्वैरिणा निःसारितः सोऽपरुद्धः, यस्त्विदानीं निःसार्यते सोऽपरुध्यमानः, तयोरन्यतरस्येयमिष्टिः। अपरोद्धारः पूर्वं निःसारयितारः, अवगमयितारः इदानीं निःसारयितुमुद्यताः, अथवा पुनः स्वराष्ट्रं प्रापयितारः, विशि स्वराष्ट्रगतप्रजायां दाध्रति धारयन्ति स्थापयन्तीत्यर्थः। ततोऽयं वैरिभिरपरोद्धुमशक्यो भवति। तत्र पुरोऽनुवाक्यामाह “धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः। दीर्घा-

धियो रक्षमाणा असुर्य्यमृतावानश्चयमाना ऋणानि" इति। एत आदित्या अस्मदभिमतं कुर्वन्त्विति वाक्यशेषः। कीदृशाः धारयन्तः अपहन्तुं यजमानं स्वराष्ट्रे स्थापयन्तः, जगत्स्थाः कृत्स्नं जगदनुग्रहीतुं तत्र तत्र तिष्ठन्ति, यद्वा जगद्धारयन्त इत्यत्रान्वयः, स्थाः स्थिताः, देवाः दीव्यन्तः, विश्वस्य भुवनस्य गोपाः पालयितारः, जगद्धारयितुं दीर्घभूता धीर्येषां ते दीर्घाधियः। असवः प्राणाः ते यस्य सन्ति सोऽयं यजमानोऽसुरः तस्मै हितमिदं कर्मासुर्य्यं, यद्वा राक्षसवद्बाधको राजाऽसुरः तं निवारणायोपयुक्तमिदं कर्मासुरवदिति असुर्य्यं, तद्रक्षमाणाः, ऋतं सत्यं स्वराष्ट्रे यजमानं स्थापयाम इत्येतादृशवचनं तद्युक्ता ऋतावानः, ऋणानि चयमानाः अपरोद्धुर्वैरिणो दारिद्र्यसम्पादनेन बहून्यृणानि सम्पादयन्तः। तत्रैव याज्यामाह "तिस्रो भूमीर्धारयन् त्रीꣳ रुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम्। ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु" इति। हे अर्यमन् वरुण मित्र एतैः त्रिभिर्नामभिरुपलक्षिताः सर्वेऽपि द्वादशादित्या वो युष्माकं तन्महित्वं माहात्म्यं चारु रमणीयं महि महदधिकञ्च। कथं माहात्म्यमधिकं तदुच्यते, तिस्रो भूमीः स्वर्गमर्त्यपातालरूपाः धारयन् धारितवन्तः, अपि च त्रीन् द्यून् सूर्यचन्द्रवह्निगतान् प्रकाशान् धारितवन्तः। तत्र सूर्यरश्मिरूपस्य प्रकाशस्य धारयितृत्वं स्पष्टं। सूर्यरश्मय एव जलमयेन चन्द्रमण्डलेन व्यवहिताः

शीतस्पर्शा अभिभूतोष्णस्पर्शा ज्योत्स्नारूपेणावभासन्त इति केषाञ्चिन्मतं, एतदेवाभिप्रेत्य श्रूयते 'सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' इति। अग्निदीप्तेरादित्यसम्बन्धस्य स्पष्टमेव श्रूयते 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' इति। तस्मात् प्रकाश-त्रयधारयितृत्वं युक्तं। किञ्चैषां यजमानानां विदथे यज्ञे यानि त्रीणि व्रतान्यन्तःस्थितानि मनोवाक्कायकर्मनिष्पाद्यानि वा नित्यनैमित्तिककाम्यरूपाणि वा तानि सर्वाणि ऋतेन पालयिष्याम इत्येतादृशेन सत्यवचनेन धारितवन्तः। अत्र पूर्वमप-रुद्धस्य नास्ति विशेषाङ्गोपदेशः। अपरुध्यमानस्य तु प्रयोगे सोऽस्ति। तत्र कञ्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते "अदितेऽनुमन्यस्वेत्यपरुध्यमानोऽस्य पदमाददीतेयं वा अदितिरियमेवास्मै राज्यमनुमन्यते" (ब्रा० ३) इति। हे अदिते भूमे त्वं अनुमन्यस्व राष्ट्रप्रवेशार्थं मामनुमन्यस्वेत्येतं मन्त्रमुच्चारयन् तस्य शत्रोः पदाङ्कितभूरज आददीत। इयं पृथिव्येवादितिशब्द-वाच्या, सैवास्मा अपरुध्यमानार्थं राज्यमङ्गीकरोति। मन्त्रान्तरमुत्पाद्य व्याचष्टे "सत्याशीरित्याह सत्यामेवाशिषं कुरुते" (ब्रा० ३) इति। आशीरस्मदपेक्षितं फलं सत्यमस्त्विति शेषः। अन्यं मन्त्रमुत्पाद्य व्याचष्टे "इह मन इत्याह प्रजा एवास्मै समनसः करोति" (ब्रा० ३) इति। इह मदीये राष्ट्रप्रवेशे प्रजानां मनोऽनुकूलं भवत्विति शेषः। पुनरपि मन्त्रान्तर-मुत्पाद्य व्याचष्टे "उपप्रेत मरुतः सुदानव एना विश्पति-नाभ्यमुं राजानमित्याह मारुती वै विड् ज्येष्ठा विश्पति-

विश्वैवैनꣳ राष्ट्रेण समर्धयति" (प्र०३) इति। हे सुदानवः सुष्ठु राष्ट्रप्रवेशदातारो मरुतो यूयं एना विश्पतिना एतेन विरोधिना राष्ट्रपतिना सह योद्धुमनं वीरसिंहवर्माणं सच्चिकीर्षमाणमपरुध्यमानं राजानं अभिमुखीकृत्योपप्रेत समीपे गच्छत। अस्मिन्मन्त्रे विश्पतिनेति यदुक्तं तत्र या विट् प्रजा सा मरुतामधीनत्वान्मारुती, तस्या विशः पतिः ज्येष्ठोऽपरोद्धा, तेन ज्येष्ठेन विश्पतिना सह योद्धुमित्येवं ब्राह्मणेनोक्तस्य व्याख्यातस्य शेषः पूरणीयः। एतस्य ब्राह्मणव्याख्यातमन्त्रस्य पाठे सति प्रजया देशेन चैनं यजमानं समृद्धं करोति। एतेषां मन्त्राणां विनियोगमापस्तम्बो दर्शयति 'हविष्कृता वाचं विसृज्योपप्रेत मरुतः सुदानव इति यजमानमभ्येति सत्याशीरिति यजमानस्योत्तरे वाससि पदैकदेशं *निवपतीह मन इत्युरसि शेषं निवपति' इति। अत्र कञ्चित्प्रयोगविशेषं क्रमेण विधत्ते "यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेच्छुक्लाꣳश्च कृष्णाꣳश्च विचिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवावगच्छति" (प्र०३) इति। ग्रामेभ्यो हितं ग्राम्यं तद्राज्ञोऽग्रे वदतीति ग्राम्यवादी। स द्विविधः अन्तरङ्गो बहिरङ्गश्च, तत्र बहिरङ्गः सभायामेव वदति, अन्तरङ्गस्तु सभायां विसर्जितायां परस्तादन्तःपुरे गत्वा गूढं हितं रहसि वदति, तस्य गृहाद्व्रीहीनाहरेत्। विट्शब्दवाच्याया: प्रजाया आदित्यदेवताकत्वात् आदित्यचरुणा विश-

* निनयतीति तै०।

मेव प्राप्नोति। विभक्तानां द्विविधतण्डुलानां मध्ये शुक्लैरादि-
त्यचरुं विधाय कृष्णैर्वारुणचरुं विधत्ते "अवगतास्य विडनव-
गतꣳ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं
वै राष्ट्रमुभे एव विशश्च राष्ट्रं चावगच्छति" (ब्रा०३) इति।
अस्य यजमानस्यादित्यचरुणा यद्यपि प्रजा प्राप्ता भवति त-
थापि राष्ट्रं भूमिविशेषस्तावता न प्राप्यत इत्यभिज्ञा आहुः,
अतस्तत्प्राप्तये वारुणं निर्वपेत्, यथा प्रजाया आदित्या
देवताः तद्वद्राष्ट्रस्य वरुणो देवता ततस्तयोस्तुष्ट्या तदुभयं
प्राप्यते। योऽयमपरुध्यमानस्तस्य अपरुद्धवद्यत्कर्म विहितं त-
स्मिन् कर्मणि पूर्वोक्ते एव याज्यानुवाक्ये। यत्तु यः परस्ता-
दित्यादिना हविर्द्वयप्रयोगरूपं कर्मान्तरं विहितं तत्र शुक्ल-
हविषः पुरोऽनुवाक्यामाह "त्यान्नु क्षत्रियाꣳ अव आदित्यान्
याचिषामहे। सुमृडीकाꣳ अभिष्टये" इति। वयं यजमाना
अभिष्टये देवताभिमुख्येन कर्तव्येष्टिसिद्ध्यर्थं आदित्यान् प्रति
अवो याचिषामहे रक्षणं प्रार्थयामहे। कीदृशानादित्यान् येषां
पूर्वमन्त्रे माहात्म्यं प्रपञ्चितं त्यान्नु तानेव क्षत्रियान् क्षत्रियव-
त्प्रबलान् सुमृडीकान् सुष्ठु सुखयितॄन्। तत्रैव याज्यामाह
"न दक्षिणा विचिकिते न सव्या न प्राचीनमादित्या नोत पश्चा।
पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम्"
इति। हे वसवो वासयितार आदित्या वैरिणापरुध्यमानोऽहं
तेनापरोधेन व्यामूढचित्तः सन् किमपि न विचिकिते विशे-
षेण न जानामि, इदं दक्षिणमिदं सव्यमिदं प्राचीनमिदं

प्रतीचीनमिति कमपि विवेकं नानुभवामि। क इव पाक्या चित् पाक्य इव धीर्या चित् धीर्य इव, पूर्वं पक्वो न भवति इतः परं पाकं नेतव्यः पाक्यः, अपरिपक्वधीर्बाल इत्यर्थः, पूर्वं धीरो न भवति इतः परं धीरत्वं नेतव्यः धीर्यः, कातरो बाल इत्यर्थः, युष्मानीतः युष्माभिः स्वकीयां विशं प्रापितः सन्नभयं ज्योतिः भयरहितं विवेकज्ञानं अश्यां प्राप्नुयां। तत्रैव विकल्पितामन्यां याज्यामाह "आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन। अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः" इति। यजमाना वयं आदित्यानां सम्बन्धिना नूतनेन इदानीं सम्पादितेनावसा रक्षणेन युक्ताः शर्मणा शन्तमेन सर्वोपद्रवरहितत्वादतिशान्तेन सुखेन सक्षी-महि सक्ता भवेमहि, आदित्या भवन्तः अनागास्त्वे अस्म-दीये निरपराधित्वे अदितित्वे सर्वदेवाखण्डितत्वे निमित्त-भूते सति श्रोषमाणा अस्मदीयां स्तुतिं शृण्वन्तः, तुरास-स्त्वरमाणा इमं यज्ञं दधतु धारयन्तु। कृष्णव्रीहिचरौ पुरोऽनुवाक्यामाह "इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके" इति। हे वरुण मे मदीयं हवमाह्वानं श्रुधि शृणु, श्रुत्वा च अद्यास्मान्मृडय सुखय। अहं चावस्युः पाल-नेच्छुः त्वां आचके आ समन्ताच्छब्दयामि प्रार्थयामि। तत्रैव याज्यामाह "तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यज-मानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः" इति। तत् तस्मै रक्षणाय ब्रह्मणा मन्त्रेण वन्दमानः

त्वा यामि त्वां प्राप्नोमि। अयं यजमानो हविर्भिराराध्य तद्र-
क्षणमाशास्ते, हे वरुण अहेडमानः क्रोधरहितः इह कर्मणि
बोधि अस्मद्विज्ञापनां बुध्यस्व, हे उरुशंस प्रभूतस्तुते नोऽस्माक-
मायुर्मा प्रमोषीः मा विनाशय। अपरुध्यमानस्य विशो राष्ट्रस्य
च प्राप्तये द्विहविष्का काचिदिष्टिरुक्ता, केनचित्प्रतिबन्धविशे-
षेण यदि कृतायामपीष्टौ तत्प्राप्तिः प्रतिबध्येत तदानीं विशेषं
विधत्ते "यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्वपा-
म्यामुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या एवैनं भाग-
धेयं प्रेप्सन्तो विशमवगमयन्ति" (प्र०३) इति। इममित्यादि-
र्निर्वापमन्त्रोऽत्रैवोत्पाद्यते। अहं यजमानः अमुष्माद्वैरिणः अ-
मुष्यास्मदीयप्रजायास्थानीय इमं *व्रीहिरूपं हविर्भागं आदि-
त्येभ्यो निर्वपामि। किमर्थं अवगन्तोः अस्मदीयां प्रजां राष्ट्रं
चावगन्तुं, अनेन मन्त्रेण निर्वापे सति आदित्याः स्वयमेव तं
भागमपेक्षमाणा एनं यजमानं स्वकीयां विशं प्रापयन्ति।
प्रतिबन्धाधिक्ये सति तावताप्यप्राप्तौ पुनरन्यं विशेषं विधत्ते
"यदि नावगच्छेदाश्वत्थान्मयूखान् सप्त मध्यमेषायामुपहन्या-
दिदमहमादित्यान् बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्या-
दित्या एवैनं बद्धवीरा विशमवगमयन्ति" इति। इदमि-
त्यादि बन्धनमन्त्रः, अमुष्माद्वैरिणः सकाशादमुष्या मदीयाया
विशः अवगन्तोः प्राप्तये यजमानोऽहमादित्यानिदं बध्नामि।
इदमिति हस्तेन प्रदर्शनं। अनेन मन्त्रेणाश्वत्थजन्यान् सप्त

* प्रजारूपमिति सि०।

शङ्कून् हविर्धानिनः शकटस्य मध्यमायामीषायां कीलप्रक्षेपेण बध्नीयात्। तथा सति आदित्याः स्वयमेव बद्धवीराः सन्तः स्वकीयान् भृत्यान्मोचयितुमेनं यजमानं विशं प्रापयन्ति। ततोऽपि प्रबलतरप्रतिबन्धके सति पुनरप्यन्यं विशेषं विधत्ते "यदि नावगच्छेदेतमेवादित्यं चरुं निर्वपेदिध्मेऽपि मयूखान् सन्नह्येदनपरुध्यमेवावगच्छति" इति। पूर्वत्र मध्यमायामीषायां शङ्कवः कीलिताः इदानीमिध्मेऽपि शङ्कुबन्धनं विशेषः। तेषां शङ्कूनां पूर्ववद्वृक्षविशेषं विधत्ते "आश्वत्था भवन्ति मरुतां वा एतदोजो यदश्वत्थ ओजसैव विशमवगच्छति" इति। अश्वत्थस्य मरुदोजस्त्वमर्थवादान्तरे द्रष्टव्यं। शङ्कूनां सङ्ख्यां विधत्ते "सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमवगच्छति" इति। एतेषु सर्वेष्वपि प्रयोगेषु पूर्वोक्ते एव याज्यानुवाक्ये द्रष्टव्ये॥

अत्र विनियोगसङ्ग्रहः।

ऐन्द्रयागे लिन्द्रमिन्द्रं मरुत्वा वेति मारुते॥
भरेषु वैश्वदेवैन्द्रे प्रिया प्रैयङ्गवे चरौ।
अग्निर्वसुमदादीनाश्चतुर्णां हि समूहके॥
यथा विकल्पिता याज्या कुत्र स्विष्टकृतो द्वयं।
यशा भुवद्दति चरौ धारयन् धारयद्दति॥
त्वान्नु चयं शुक्लचरौ इमं कृष्णचरौ तथा।
एकादशेऽनुवाकेऽस्मिन्मन्त्रा द्वाविंशतिर्मताः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः॥ ० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण *सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमः प्रपाठकः सम्पूर्णः॥ * ॥

ॐ तत्सत्॥

---

* माधवाचार्येणेति तै०।

अथ तैत्तिरीयसंहिताभाष्ये

द्वितीयकाण्डे द्वितीयप्रपाठकः ।



हरिः ॐ ।

प्रजापतिः प्रजा असृजत ताः सृष्टा इन्द्राग्नी अपागूहताꣳ सोऽचायत् प्रजापतिरिन्द्राग्नी वै मे प्रजा *अपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत् तं निरवपत् तावस्मै प्रजाः प्रासाधयतामिन्द्राग्नी वा एतस्य प्रजामपगूहतो योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इन्द्राग्नी ॥ १ ॥

एव स्वेन भागधेयेनोपधावति तावेवास्मै प्रजां प्रसाधयतो विन्दते प्रजामैन्द्राग्नमेकादशकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते वि पाप्मना भ्रातृव्येण जयतेऽप वा एतस्मादिन्द्रियं

* प्रजापाघुक्षतामिति पाठान्तरं ।

वीर्यं क्रामति यः सङ्ग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालं निः ॥ २ ॥

वपेत्सङ्ग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येणोपप्रयाति जयति तꣳ सङ्ग्रामं वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सङ्ग्रामं जयत्यैन्द्राग्नमेकादशकपालं निर्वपेत्सङ्ग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं ॥ ३ ॥

धत्तो नेन्द्रियेण वीर्येण व्यृध्यतेऽप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येण जनतामेति पौष्णं चरुमनु निर्वपेत्पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव ॥ ४ ॥

स्वेन भागधेयेनोपधावति स एवास्मा इन्द्रियं वीर्यमनु प्रयच्छति क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतितिष्ठत्यैन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्यमुपरिष्टादात्मन्धत्ते ॥ ५ ॥

प्रजाकाम इन्द्राग्नी उपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वीर्यं पूषणमेवैकान्नचत्वारिꣳशच्च ॥ १ ॥

*इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोपधावति स एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वह्नी ह्येष समृद्ध्या अग्नये व्रतपतये ॥ १ ॥

पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति स एवैनं व्रतमालम्भयति व्रत्यो भवत्यग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि स-

* एतद्द्वितीयकाण्डगतानामाद्यैकादशानुवाकानां पूर्वपूर्वप्रपाठकावसानेषु समीचीनतया व्याख्यातत्वादत्र पुनरुक्ते पृथङ्न व्याख्याताः।

चैरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोपधावति स एवास्माद्रक्षाꣳस्यपहन्ति निशितायां निर्वपेत् ॥ २ ॥

निशितायाꣳ हि रक्षाꣳसि प्रेरते सम्प्रेर्णान्येवैनानि हन्ति परिश्रिते याजयेद्रक्षसामनन्ववचाराय रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳ स्तृत्या अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमावृश्चति ताजगार्तिमार्च्छेत्यग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषाः ॥ ३ ॥

वा प्रमीयेरन् यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत्सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्या अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते भागधेयेनैवैनꣳ शमयित्वा परानभि निर्दिशति यमवरेषां विध्यन्ति जीवति स यं परेषां प्र स मीयते जयति तꣳ सङ्ग्रामं ॥ ४ ॥

अभि वा एष एताનुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां

पुरायुषोऽपरः प्रमीयतेऽभि वा एष एतस्य गृहानु-च्यति यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशम-ष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नास्यापरं गृहान् दहति ॥ ५ ॥

व्रतपतये निशितायां निर्वपेत् पुरुषाः सङ्ग्रामं न चत्वारि च ॥ २ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीय-प्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदग्निमेव कामꣳ स्वेन भागधेयेनोप-धावति स एवैनं कामेन समर्धयत्युपैनं कामो नम-त्यग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्ध-मानः क्षेत्रे वा सजातेषु वाग्निमेव यविष्ठꣳ स्वेन भा-गधेयेनोपधावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य ॥ १ ॥

युवते वि पाप्मना भ्रातृव्येण जयतेऽग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणोऽग्निमेव य-विष्ठꣳ स्वेन भागधेयेनोपधावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन्त्स्तृणुतेऽग्नय आयुष्मते पुरो-

डाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामित्यग्निमेवायुष्मन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ॥ २ ॥

आयुर्दधाति सर्वमायुरेत्यग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येवाग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् रुचं दधाति रोचत एवाग्नये तेजस्वते पुरोडाशं ॥ ३ ॥

अष्टाकपालं निर्वपेत्तेजस्कामोऽग्निमेव तेजस्वन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् तेजो दधाति तेजस्व्येव भवत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोपधावति तेनैव सहते यꣳ सीक्षते ॥ ४ ॥

भ्रातृव्यस्यास्मिन् तेजस्वते पुरोडाशमष्टा चिꣳशच्च॥

॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके तृतियोऽनुवाकः ॥ ० ॥

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्त्स्यामित्यग्निमेवान्नवन्तꣳ स्वेन भागधेयेनोपधावति स एवैनमन्नवन्तं करोत्यन्नवानेव भवत्यग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामित्यग्निमेवान्नादꣳ स्वेन भागधेयेनोपधावति स एवैनमन्नादं करोत्यन्नादः ॥ १ ॥

एव भवत्यग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामित्यग्निमेवान्नपतिꣳ स्वेन भागधेयेनोपधावति स एवैनमन्नपतिं करोत्यन्नपतिरेव भवत्यग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये ॥ २ ॥

पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचय आयुरेवास्मिन् तेन दधात्युत यदीतासुर्भवति जीवत्येवैतामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधाति ॥ ३ ॥

उत यद्यन्धो भवति प्रैव पश्यत्यग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छत्यग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामित्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोपधावति स एवैनꣳ रसवन्तं करोति ॥ ४ ॥

रसवानेव भवत्यजक्षीरे भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमवरुन्धेऽग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोपधावति स एवैनं वसुमन्तं करोति वसुमानेव भवत्यग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते वाजं ॥ ५ ॥

वा एष सिसीर्षति यः सङ्ग्रामं जिगीषत्यग्निः खलु वै देवानां वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोपधावति धावति वाजꣳ हन्ति वृत्रं जयति तꣳ सङ्ग्राममथो अग्निरिव न प्रतिधृषे भवत्यग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यस्तौ सम्भवन्तौ यजमानं ॥ ६ ॥

अभि सम्भवतः स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नार्तिमार्च्छति यजमानोऽग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्यानूद्धृत्य इत्याहुस्तत्तथा न कार्यं यद्भागधेयमभि पूर्वं उद्धृयते किमपरोऽभ्युत् ॥ ७ ॥

ह्रियेतेति तान्येवावक्षाणानि सन्निधाय मन्थेदितः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति छन्दोभिरेवैनं स्वाद्योनेः प्रजनयत्येष वाव सोऽग्निरित्याहुर्ज्योतिस्त्वा अस्य परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य ज्योतिः परापतितं तदेवावरुन्धे ॥ ८ ॥

करोत्यन्नादो दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधाति करोति वाजं यजमानमुदेवास्य षट् च ॥

॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे* चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनं स्वदयत्यप पापं वर्णं हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवत्येतामेव निर्वपेत्प्रजाकामः संवत्सरः ॥ १ ॥

वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन् प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्रजनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं ॥ २ ॥

विन्दते प्रजां वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादश-

* दधिक्रावुम्णे इत्येकस्मिन् पुस्तके पाठः। दधिक्राव्णे इति क्वचित् पदपाठः।

कपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूतः ॥ ३ ॥

एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवत्यव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वातिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्यै ॥ ॥ ४ ॥

अथो देवता एवान्वारभ्य सुवर्गं लोकमेति वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुरान्नमक्षन्नाग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन् यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो यथा जनं यतेऽवसं करोति तादृक् ॥ ५ ॥

एव तद्द्वादशकपालो वैश्वानरो भवति द्वादश

मासाः संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम आहवनीये वैश्वानरमधिश्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै सजाताꣳश्च्यावयति मारुतो भवति ॥ ६ ॥

मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमवरुन्धे सप्तकपालो भवति सप्त गणा वै मरुतो गणश एवास्मै सजातानवरुन्धेऽनूच्यमान आसादयति विशमेवास्मा अनुवर्त्मानं करोति ॥ ७ ॥

प्रजाकामः संवत्सरः पुनात्येवैनं पूतः समर्ध्यै ताहङ्मारुतो भवत्येकान्नचिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

आदित्यं चरुं निर्वपेत् सङ्ग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रतितिष्ठन्ति वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वा-

नरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आ-यतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवायतने यतते जयति तꣳ संग्रा-ममेतस्मिन् वा एतौ मृजाते ॥ १ ॥

यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्नि-र्वैश्वानरः संवत्सरस्वदितमेवात्ति नास्मिन्मृजाते सं-वत्सराय वा एतौ समभाते यो समभाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादश-कपालं निर्वपेत्समभानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाप्त्वा निर्वरुणं ॥ २ ॥

परस्तादभिद्रुह्यति नैनं वरुणो गृह्णात्याव्यं वा एष प्रतिगृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादश-कपालं निर्वपेदविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वा-नरः संवत्सरस्वदितामेव प्रतिगृह्णाति नाव्यं प्रति-गृह्णात्यात्मनो वा एष मात्रामाप्नोति य उभयादत् प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेदुभयादत् ॥ ३ ॥

प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदि-

तमेव प्रतिगृह्णाति नात्मनो मात्रामाप्नोति वैश्वानरं द्वादशकपालं निर्वपेत् सनिमेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं निर्वपति संवत्सरसातामेव सनिमभि प्रच्यवते दानकामा अस्मै प्रजा भवन्ति यो वै संवत्सरं ॥ ४ ॥

प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्यै यया रज्ज्वोत्तमां गामाजेत्तां भ्रातृव्याय प्रहिणुयान्निरृतिमेवास्मै प्रहिणोति ॥ ५ ॥

मृजाते निर्वरुणं वपेदुभयाद्यो वै संवत्सरः षट्त्रिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

---

ऐन्द्रं चरुं निर्वपेत्पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोपधावति स एवास्मै पशून् प्रयच्छति पशुमानेव भवति चरुर्भवति स्वादेवास्मै योनेः

पशून् प्रजनयतीन्द्रायेन्द्रियावते पुरोडाशमेकादश-कपालं निर्वपेत्पशुकाम इन्द्रियं वै पशव इन्द्रमेवे-न्द्रियावन्तꣳ स्वेन भागधेयेनोपधावति सः ॥ १ ॥

एवास्मा इन्द्रियं पशून् प्रयच्छति पशुमानेव भव-तीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्र-ह्मवर्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवतीन्द्रायार्कवते पुरोडाश-मेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्न-मिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेन ॥ २ ॥

उपधावति स एवास्मा अन्नं प्रयच्छत्यन्नाद एव भवतीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपे-दिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदि-न्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदि-न्द्रायार्कवते भूत एवान्नाद्ये प्रतितिष्ठति भवत्येवेन्द्रा-य ॥ ३ ॥

अꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पा-प्मना गृहीतः स्यात् पाप्मा वा अꣳह इन्द्रमेवाꣳहो-

मुचᳪं स्वेन भागधेयेनोपधावति स एवैनं पाप्मनोऽᳪं-
हसो मुञ्चतीन्द्राय वैमृधाय पुरोडाशमेकादशकपालं
निर्वपेद्यं मृधोऽभि प्रवेपेरन् राष्ट्राणि वाभि समियु-
रिन्द्रमेव वैमृधᳪं स्वेन भागधेयेनोपधावति स एवा-
स्मान्मृधः ॥ ४ ॥

अपहन्तीन्द्राय त्रात्रे पुरोडाशमेकादशकपालं नि-
र्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारᳪं स्वेन भा-
गधेयेनोपधावति स एवैनं त्रायत इन्द्रायार्काश्वमेध-
वते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नो-
पनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधावि-
न्द्रमेवार्काश्वमेधवन्तᳪं स्वेन भागधेयेनोपधावति स
एवास्मा अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो
नमति ॥ ५ ॥

इन्द्रियावन्तᳪं स्वेन भागधेयेनोपधावति सोऽर्क-
वन्तᳪं स्वेन भागधेयेनैवेन्द्रायास्मान्मृधोऽस्मै सप्त च ॥
॥ ७ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीय-
प्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपे-द्ग्रामकाम इन्द्रमेवान्वृजुंँ स्वेन भागधेयेनोपधा-वति स एवास्मै सजातानन्नुकान् करोति ग्राम्येव भवतीन्द्राण्यै चरुं निर्वपेद्यस्य सेनासंँशितेव स्यादि-न्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेये-नोपधावति सैवास्य सेनाँँ संँश्यति बल्बजानपि ॥ ॥ १ ॥

इध्मे सन्नह्येद्गौर्यत्राधिष्कन्ना न्यमेहत्ततो बल्बजा उदतिष्ठन् गवामेवैनं न्यायमपिनीय गा वेदयती-न्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं नि-र्वपेत्सङ्ग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा स-ङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तंँ स्वेन भाग-धेयेनोपधावति स एवास्मिन्निन्द्रियं मन्युं मनो द-धाति जयति तं ॥ २ ॥

सङ्ग्राममेतामेव निर्वपेद्यो हतमनाः स्वयम्पाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनाः स्वयम्पाप इन्द्रमेव मन्युमन्तं मनस्वन्तंँ स्वेन भाग-धेयेनोपधावति स एवास्मिन्निन्द्रियं मन्युं मनो दधा-ति न हतमनाः स्वयम्पापो भवतीन्द्राय दात्रे पुरो-

डाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युः ॥ ३ ॥

इतीन्द्रमेव दातारꣳ स्वेन भागधेयेनोपधावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्तीन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोपधावति स एवास्मै प्रदापयतीन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वा ॥ ॥ ४ ॥

अपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोपधावति स एवैनं त्रायतेऽनपरुध्यो भवतीन्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमेकादशकपालं निरवपत्तेनैवास्मिन्निन्द्रियमदधाच्छक्वरी याज्यानुवाक्ये अकरोद्वज्रो वै शक्वरी स एनं वज्रो भूत्वा ऐन्ध ॥ ५ ॥

सोऽभवत्सोऽबिभेदुतः प्र मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत् स प्रजापतिः शक्वर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय योऽलꣳ श्रियै सन्त्सदृङ् समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं

निर्वपेदिन्द्रमेव स्वेन भागधेयेनोपधावति स एवा-स्मिन्निन्द्रियं दधाति रेवती पुरोऽनुवाक्या भवति शान्त्या अप्रदाहाय शक्करी याज्या वज्रो वै शक्करी स एनं वज्रो भूत्वा इन्धे भवत्येव ॥ ६ ॥

अपि तं स्थुर्वन्ध भवति चतुर्दश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीय-प्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्स-रस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एका-दशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देव-ताभिश्चैवैनं यज्ञेन चाभिचरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभिचरति बार्हस्प-त्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनम-भिचरति ॥ १ ॥

प्रति वै परस्तादभिचरन्तमभिचरन्ति द्वेद्वे पुरो-ऽनुवाक्ये कुर्यादतिप्रयुक्त्या एतयैव यजेताभिचर्यमाणो

देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवतास्वैव यज्ञे च मध्यतो व्यवसर्पति तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्स्तृणुत आग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो न ॥ २ ॥

उपनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निं चैव विष्णुं च स्वेन भागधेयेनोपधावति तावेवास्मै यज्ञं प्रयच्छत उपैनं यज्ञो नमत्याग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या विपश्यन्ति यज्ञस्य देवा अग्निं चैव विष्णुं च स्वेन भागधेयेनोपधावति तावेव ॥ ३ ॥

अस्मिन् चक्षुर्धत्तश्चक्षुष्मानेव भवति धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्रजनयति घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरवरुन्ध इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रियं ॥ ४ ॥

वीर्यं वृङ्क्ते पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक् तामप्रोदितां भ्रातृव्यस्य वृङ्क्ते तामस्य वाचं प्रवद-

न्तीमन्या वाचोऽनु प्रवदन्ति ता इन्द्रियं वीर्यं यजमाने दधत्याग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातःसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाप्नोति ॥ ५ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिनस्य सवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेव सवनं तेनाप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाप्नोति देवताभिरेव देवताः ॥ ६ ॥

प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दाꣳस्याप्नोति पुरोडाशैः सवनानि मैत्रावरुणमेककपालं निर्वपेद्दशायै काले यैवासौ भ्रातृव्यस्य वशानूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुं ॥ ७ ॥

ब्रह्मणैवैनमभिचरति यज्ञो न तावेवास्येन्द्रियमाप्नोति देवताः सप्तचिंशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतं सौमारौद्रं चरुं निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सौमारौद्रं चरुं निर्वपेत् सोमञ्चैव रुद्रञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति तिष्यापूर्णमासे निर्वपेद्रुद्रः ॥ १ ॥ वै तिष्यः सोमः पूर्णमासः साक्षादेव ब्रह्मवर्चसमवरुन्धे परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत्सर्वं करोत्यति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किञ्च मनुरवदत् तद्भेषजं ॥ २ ॥

भेषजमेवास्मै करोति यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत्सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति सोमारौद्रं चरुं निर्वपेत् प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्रजनयति विन्दते ॥ ३ ॥

प्रजाꣳ सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय रुद्रायापि दधाति ताजगार्तिमार्च्छति सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निꣳ शरीरं यस्य ज्योगामयति सोमादेवास्य रसं निष्क्रीणात्यग्नेः शरीरमुत यदि ॥ ४ ॥

इतासुर्भवति जीवत्येव सोमारुद्रयोर्वा एतं ग्रसितꣳ होता निष्खिदति स ईश्वर आर्तिमार्तोरनड्वान् होत्रा देयो वह्निर्वा अनड्वान् वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषः स्तृणीयादर्धं

नार्धमिध्मस्याभ्यादध्यादर्धं न स्व एवास्मा आयतने भ्रातृव्यं जनयति ॥ ५ ॥

रुद्रो भेषजं विन्दते यदि स्तृणीयादर्धं द्वादश च ॥ ॥ १० ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥ * ॥

---

ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम इन्द्रञ्चैव मरुतश्च स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवत्याहवनीय ऐन्द्रमधिश्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानवरुन्धेऽनूच्यमान आसादयति विशमेव ॥ १ ॥

अस्मा अनुवर्त्मानं करोत्येतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मा-

हतस्यावद्यन् ब्रूयान्मरुद्भ्योऽनुब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति स्व एवैभ्यो भागधेयं समदं दधाति विदृंहाणास्तिष्ठन्त्येतामेव ॥ २ ॥

निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एवैन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रश्चैव विश्वांश्च देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवत्यैन्द्रस्यावदाय वैश्वदेवस्यावद्येदथैन्द्रस्य ॥ ३ ॥

उपरिष्टादिन्द्रियेणैवास्मा उभयतः सजातान् परिगृह्णात्युपाधाय्यपूर्वयं वासो दक्षिणा सजातानामुपहित्यै पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति प्रियवती याज्यानुवाक्ये ॥ ४ ॥

भवतः प्रियमेवैनꣳ समानानां करोति द्विपदा पुरोऽनुवाक्या भवति द्विपद एवावरुन्धे चतुष्पदा

याज्या चतुष्पद एव पशूनवरुन्धे देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् *तेऽन्योन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत्तं ॥ ५ ॥

एतया सञ्ज्ञान्यायाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुं ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि समजानत यः समानैर्मिथो विप्रियः स्यात्तमेतया सञ्ज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभि सञ्जानते वसिष्ठः समानानां भवति ॥ ६ ॥

विशमेव तिष्ठन्त्येतामेवाथैन्द्रस्य याज्यानुवाक्ये तं वरुणाय चतुर्दश च ॥ ११ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥ * ॥

* ते ह एन्योन्यस्मा इति पाठान्तरं।

अथ द्वादशानुवाकः।

हिरण्यगर्भ आपो ह यत्प्रजापते। स वेद पुत्रः पितरꣳ स मातरꣳ स सूनुर्भुवत् स भुवत्पुनर्मघः। स द्यामौर्णोदन्तरिक्षꣳ स सुवः स विश्वा भुवो अभवत्स आभवत्। उदु त्यं चित्रं। स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना। नि काव्या वेधसः शश्वतस्कर्हस्ते दधानः॥ १॥

नर्या पुरूणि। अग्निर्भुवद्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा। हिरण्यपाणिमूतये सवितारमुपह्वये। स चेत्ता देवता पदं। वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम। बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमि प्रवत्वति मह्ना जिनोषि॥ २॥

महिनि। स्तोमासस्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः। प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि। ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः। अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यच्छ। आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाꣳ

ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः प्र ॥ ३ ॥

सुवानः सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन्। वृषा यन्तासि शवसस्तुरस्यान्तर्यच्छ गृणते धर्त्रं दृꣳह। सबाधस्ते मदं च शुष्मयञ्च ब्रह्म नरो ब्रह्मकृतः सपर्यन्। अर्को वा यत्तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम्। वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं ॥ ४ ॥

वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः। प्र तत्ते अद्य शिपिविष्ट नामार्यः शꣳसामि वयुनानि विद्वान्। तं त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजसः पराके। किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ ॥ ५ ॥

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसं। शिशीहि नः सूनुमतः। दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाजꣳ श्रुत्या अपावृधि। प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्न शुक्रमुषसो विदिद्युतुः। अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति। अ-

ग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्रा। मा ॥ ६ ॥

नो मर्धीरा तू भर। घृतं न पूतं तनूररेपाः शुचि हिरण्यं। तत्ते रुक्मो न रोचत स्वधावः। उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आभर। वायो श-तꣳ हरीणां युवस्व पोष्याणां। उत वा ते सहस्रिणो रथ आयातु पाजसा। प्र याभिः ॥ ७ ॥

यासि दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टये दुरो-णे। नि नो रयिꣳ सुभोजसं युवेह नि वीरवद्गव्यम-श्वियञ्च राधः। रेवतीर्नः सधमाद इन्द्रे सन्तु तुवि-वाजाः। क्षुमन्तो याभिर्मदेम। रेवाꣳ इद्रेवतः स्तो-ता स्यात् त्वावतो मघोनः। प्रेदु हरिवः श्रुतस्य ॥ ८ ॥

दधानो जिनोषि देभुः प्र हव्यं बभूथ मा याभिश्च-त्वारिꣳशच्च ॥ १२ ॥

प्रजापतिस्ताः सृष्टा आग्नेयं पथिकृतेऽग्नये कामा-याग्नयेऽन्नवते वैश्वानरमादित्यं चरुमैन्द्रं चरुमिन्द्रा-यान्वृजव आग्नावैष्णवमसौ सौमारौद्रमैन्द्रमेकादश-कपालꣳ हिरण्यगर्भो द्वादश ॥ १२ ॥

प्रजापतिरग्नये कामायाभिसम्भवतो यो विद्विषाण-योरिध्मे सन्नह्येदाग्नावैष्णवमुपरिष्टाद्यासि दाश्वांꣳस-मेकसप्ततिः ॥ ७१ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीय-प्रपाठके द्वादशोऽनुवाकः ॥ * ॥

॥ * ॥ द्वितीयप्रपाठकः सम्पूर्णः ॥ * ॥

---

श्रीवेदव्यासाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥

आद्ये प्रपाठके काम्याः पशवः समुदीरिताः।
द्वितीयादित्रये काम्या वक्तव्या इष्टयोऽखिलाः॥

अनुवाका द्वादश स्युर्द्वितीयेऽर्थस्तु वर्ण्यते।
प्रजाकामः स्पर्धकामो युयुत्सुर्जितशत्रुकः॥

सभामेष्यन्निमे कुर्युरेकादशकपालकं।
ऐन्द्राग्ने पञ्चमे पौष्णं चरुमेवानुनिर्वपेत्॥

सभां प्राप्य चैत्रपत्यं चरुं कुलोर्द्धमाचरेत्।
ऐन्द्राग्नयाग इत्येतेऽनुवाके प्रथमे स्थिताः॥

दर्शाद्यतिक्रमेऽष्टाकपालः पथिकृतेऽग्नये।
अमत्याचरणेऽष्टाकपालं व्रातपतं चरेत्॥

एतदीयाचरार्थस्तूभा वामित्यत्र वर्णितः।

पिशाचग्रहबाधे तु यजेद्राचोघ्नकं हविः ॥
अचरार्थस्त्वेतदीयः शृणुत्वेत्यत्र वर्णितः।
शत्रुं योऽभिचरेदेष कुर्याद्रुद्रवते हविः ॥
कुर्यात्सुरभिमद्यागं न रोगी म्रियते तदा ये।
युयुत्सुरपमृत्युभ्यो भीतस्य गृहदाहवान् ॥
एते त्रयोऽष्टाकपालं कुर्युः चामवतेऽग्नये।
अनुवाके द्वितीये तु स्थिताः पथिकृतादयः ॥
कामोपनतिमाकांक्षन् कामुकायाग्नये चरेत्।
स्पर्धकामो यविष्ठाय वह्नये हविराचरेत् ॥
तथाभिचर्यमाणोऽपि यविष्ठाय हविश्चरेत्।
कृत्स्नायुःप्राप्तये कुर्याद्धविरायुष्मतेऽग्नये ॥
भूतिकामो हविः कुर्याद्वह्नये जातवेदसे।
कान्तिकामोऽष्टाकपालमाचरेद्रुक्मतेऽग्नये ॥
आज्ञां कर्तुमभीष्टः सन् कुर्यात्तेजस्वतेऽग्नये।
वैरिणोऽभिभवं वाञ्छन् साहन्याय हविश्चरेत् ॥
अनुवाके तृतीयेऽस्मिन् कामुकेष्ट्यादयः श्रुताः।
यो वाञ्छत्यन्नवान्स्यात् स कुर्यादन्नवतेऽग्नये ॥
वाञ्छन्नन्नादके शक्तिमन्नादाय हविश्चरेत्।
प्रभूतान्नस्वामितार्थी ह्यन्नस्य पतये चरेत् ॥
पवमानः पावकश्च शुचिश्चेति त्रिभिर्गुणैः।
युक्तेभ्यः कुरुते दीर्घरोगयुक्तो हविस्त्रयं ॥
चक्षुःपाटवकामोऽपि पूर्वोक्तं त्रयमाचरेत्।

रुद्रवद्यागमारभ्य ये प्रोक्ता एतदन्तकाः ॥
त्वमग्ने रुद्र इत्यत्र तदर्थो वर्णितोऽखिलः ।
प्रजाकामः पुत्रवते वञ्चये पुत्रिणे तथा ॥
इन्द्रायेह हविर्भ्यां तु युक्तामिष्टिं समाचरेत् ।
चोरादिरक्षकामस्तु कुर्याद्रक्षवते चरुं ॥
धनकामो वसुमते वञ्चयेऽत्र हविश्चरेत् ।
युद्धं जित्वान्नकामस्तु कुर्याद्वाजसृतेऽग्नये ॥
द्विरग्न्युद्धरणे कुर्यादग्नयेऽग्निवते हविः ।
ज्योतिष्मतेऽग्नये कुर्याद्दृताग्निविनाशने ॥
अग्नवद्यागमारभ्य ज्योतिष्मदवसानकाः ।
अनुवाके चतुर्थेऽत्र क्रमेणैते समीरिताः ॥
पुत्रवद्यागमारभ्य प्रोक्तानामत्रार्थकः ।
यस्त्वा हृदेत्यत्र सर्वो विस्पष्टमुपवर्णितः ॥
वैश्वानरं पुरोडाशं चरुं वरुणदेवकं ।
दधिक्राव्णे चरुं कुर्यादभिशस्तः परैः पुमान् ॥
त्रिहविष्कामिमामेव प्रजार्थ्यपि समाचरेत् ।
एकं वैश्वानरं कुर्य्यात् पुत्रे जातेऽभिवृद्धये ॥
दर्शादिकमतिक्रम्य तद्वद्वैश्वानरं चरेत् ।
अग्निमुद्वासयिष्यन्नाग्नेयमष्टाकपालकं ॥
उक्तं वैश्वानरं चोभे निर्वपेद्धविषी अथ* ।

* अग्निं० अथेत्येतच्छ्लोकस्य स्थाने 'आग्नेयवैश्वानराद्यावग्न्युद्वासनकामिनः' इत्येव पादद्वयं तै० ।

वैश्वानरं मारुतञ्च ग्रामार्थी निर्वपेद्धविः॥
अभिशस्तीष्टिमारभ्य पञ्चमेऽस्मिन्नुदाहृताः।
निर्वपेच्चरुमादित्यं यः सङ्ग्रामं यियासति॥
युद्धभूमिं गतस्तत्र कुर्याद्वैश्वानरं हविः।
मारणोद्यतयोरन्नं जग्ध्वा वैश्वानरं चरेत्॥
कृत्वा यः शपथं पूर्वं द्रुह्येद्देषोऽपि तं चरेत्।
अविं तूभयतोदन्तं वा स्वीकृत्य तमाचरेत्॥
तं चरेद्याचितुं गच्छन्नागत्य च पुनश्चरेत्।
षष्ठेऽनुवाक आदित्यचर्वाद्या उपवर्णिताः॥
वैश्वानरो न इत्यत्र वर्णितोऽर्थोऽनुवाकयोः।
पुष्ट्यर्थी निर्वपेदैन्द्रं चरुं यद्वेन्द्रियावते॥
पुरोडाशं ब्रह्मतेजो वाञ्छन् घर्मवते चरेत्।
अन्नार्थ्यर्कवते कुर्याद्भूत्यर्थी तु हविस्त्रयं॥
घर्मेन्द्रियार्कैर्युक्तेभ्य इन्द्रेभ्यस्तद्यथाक्रमं।
अंहोमुचे पापघाती वैमृधायान्यपीडितः॥
बद्धो वा परियत्तो वा चात्र इन्द्राय निर्वपेत्।
अर्काश्वमेधयुक्ताय महायज्ञेच्छुराचरेत्॥
ऐन्द्रचर्वादयः प्रोक्ता अनुवाकेऽत्र सप्तमे।
इन्द्रं व इत्यत्र सर्वस्तदर्थ उपवर्णितः॥
ग्रामार्थ्यन्वृजवे कुर्यादिन्द्राण्यै सैन्यकामुकः।
युद्धार्थी नष्टधैर्यो वा कुर्यान्मन्युमते हविः॥
दात्रेऽन्यदीयदानार्थी प्रदात्रे तूत्तमर्णकः।

राज्यभ्रष्टो भ्रश्यमानो वा सुत्राम्णे चरेद्धविः ॥
सम्यग्योग्यस्त्वन्यसाम्ये सत्यैन्द्रसम्पदे चरेत्।
अष्टमे त्वनुवाकेऽस्मिन्नृजुप्रमुखाः श्रुताः ॥
तदर्थोऽन्वह मासा इत्यत्र सम्यङ्निरूपितः।
आग्नावैष्णव आद्यः स्यादाज्यं सारस्वतं ततः ॥
बार्हस्पत्यचरुस्त्वेतत् कुर्यादभिचरंस्त्वयं।
यः प्रत्यभिचरेत्सोऽपि कुर्यादेतद्धविस्त्रयं॥
पीडितोऽन्याभिचारेण शान्त्यै तामिष्टिमाचरेत्।
यज्ञोपनतिकामः सन्नाग्नावैष्णवमाचरेत् ॥
घृते चरुं वृष्टिकामोऽध्वरकल्पां चरेद्धविः।
अन्यानुबन्ध्यकालेयं मैत्रावरुणमाचरेत् ॥
अनुवाके तु नवमेऽभिचारादय ईरिताः।
ब्रह्मवर्चसकामस्तु सोमारौद्रं चरुं चरेत् ॥
चर्मदोषाद्विभीतस्तु सोमापौष्णं समाचरेत्।
प्रजाकामोऽभिचारी च दीर्घरोगयुतस्तथा ॥
परस्य वैरिजनको वा सोमारौद्रमाचरेत्।
दशमे त्वनुवाकेऽस्मिन् सोमारौद्रादयः श्रुताः ॥
अग्नाविष्णू महीत्यत्र वर्णितोऽर्थोऽनुवाकयोः।
ग्रामार्थ्यैन्द्रं मारुतञ्च कुर्यादेतद्धविर्द्वयं ॥
विड्राज्ञोः कलहं वाञ्छन्नपि तामेव निर्वपेत्।
कलहं तं समाधातुं वाञ्छन्नपि चरेदमुं ॥
ऐन्द्रञ्च वैश्वदेवञ्च ग्रामकामश्चरेद्धविः।

प्रैयङ्गवं मरुद्भ्यस्तु ग्रामकामश्चरुं चरेत् ॥
समानैरप्रिये जाते सञ्ज्ञानीं तां समाचरेत् ।
एकादशेऽनुवाकेऽस्मिन्नुक्ता ऐन्द्रादयोऽखिलाः ॥
पूर्वप्रपाठकस्यान्त्येऽनुवाकेऽर्थ उदीरितः ।
द्वादशे त्वनुवाकेऽत्र काम्ययाज्याः श्रुता श्रुताः ॥
व्याख्यास्यन्ते तदर्थेष्टीरुदाहृत्यात्र पूर्ववत् ।

मृत्युभीतस्येष्टिं विधातुं प्रस्तौति "देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत् तयैवैष्वमृतमदधात्" (सं०। का०२। प्र०३। अ०२) इति। शतं सुवर्णानि कृष्णलतुलितानि यस्याः समष्टेः सा कृष्णलसमष्टिः शतकृष्णला, तां प्रजापतिदेवताकां निरवपत्, तयैव शतकृष्णलया देवेष्वपमृत्युवारणरूपममृतमदधात्। विधत्ते "यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति" (प्र०३।अ०२) इति। मृत्योरपमृत्योः, सर्वमायुः जन्मकाले यावदायुरारब्धेन कर्मणा प्रापितं तत्सर्वं विघ्नेन विना प्राप्नोति। शतसङ्ख्यां प्रशंसति "शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति" (प्र०३।अ०२) इति। पाकाय घृतद्रव्यं विधत्ते "घृते भवत्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चैवास्मा अमृतञ्च समीची दधाति" (प्र०३।अ०२) इति। आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीक इति मन्त्रे घृतप्रियस्याग्नेरायुःप्रदत्वात् घृतस्यायुष्ट्वं,

यद्वा घृतजन्येन बलेनेन्द्रियाणां देहे दृढबद्धतया निर्गमना-भावादायुर्भवतीति तद्धेतुत्वं। समीची स्वस्वकार्यक्षमे मृत्यु-परिहारायानुकूले। अवदानपरिमाणं विधत्ते "चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै"(प्र०१।अ०२) इति। पुरोडाशे प्रकृतिभूते सकृदुपस्तीर्य द्विरवदाय सकृदभिघा-रणेन चतुरवत्तं सम्पद्यते, अत्र तु एकैकस्मिन्नवदाने कृष्ण-लगतया चतुःसङ्ख्यया चतुरवत्तं सम्पद्यते, तत्र प्रधानस्य हविषः चतुष्टयं द्विरवदातव्यं, इडार्थमपि चतुष्टयं। अने-नाभिप्रायेण तदेतन्मनसि निधाय सूत्रकार आह 'तानि पवित्रवत्याज्य *आवपति धर्ममात्रं अपणं प्रचरणकालेऽष्टौ देवताया अवद्यति चत्वारि स्विष्टकृति द्वे प्राशित्रेऽष्टाविडायां चतुर्धाकरणकाले सर्वाणि प्राशित्रे समोप्यैकधा ब्रह्मण उप-हरति तानि ब्रह्मा भक्षयति भक्षापनय इतरेषां' इति। सर्वेषामप्तिभागानां सहैव ब्रह्मणे प्रदानं विधत्ते "एकधा ब्रह्मण उपहरत्येकधैव यजमान आयुर्दधाति" (प्र०१।अ०२) इति। एकधेत्यनेन सर्वभागसाहित्यमुच्यते, उपहरति दद्या-दित्यर्थः। अनेन दानेन यजमानेऽपि सर्वमायुरेकीकृत्य स्था-पयति। अस्यामिष्टौ याज्यानुवाक्ये द्विविधे विकल्पिते तासु चतसृष्वृक्षु तिसृणां प्रतीकान्याम्नायन्ते "हिरण्यगर्भ आपो ह यत्प्रजापते" इति। 'हिरण्यगर्भः समवर्तताग्रे' इत्येका, 'आपो ह यद्बृहतीर्विश्वमायन्' इति द्वितीया, ते उभे अपि चतुर्थ-

* आवश्येति धर्ममात्रश्रवणमिति तै०।

काण्डस्य प्रथमप्रपाठके समाम्नातत्वात्तत्रैव व्याख्यास्यते। 'प्रजापते न त्वदेतान्यन्यः' इत्येषा तृतीया, सा तु प्रथमकाण्डस्याष्टमप्रपाठके व्याख्याता। अथ चतुर्थीमृचमाह "स वेद पुत्रः पितरꣳ स मातरꣳ स सूनुर्भुवत् स भुवत्पुनर्मघः। स द्यामौर्णोदन्तरिक्षꣳ स सुवः स विश्वा भुवो अभवत्स आभवत्" इति। द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुरिति मन्त्रवर्णात् ब्रह्माण्डमध्ये सत्यलोके वर्तमानस्य प्रजापतेरण्डस्योपरितनकपालरूपा द्यौः पिता अधस्तनकपालरूपा पृथिवी माता, स पुत्रः प्रजापतिः तं पितरं मातरञ्च वेत्ति, अभिज्ञः स प्रजापतिः सूनुर्भुवत् तयोर्मातापित्रोः पुत्रो भवति, अत एव तयोर्वेदनं तस्योपपन्नं। मघशब्दो धनवाची, पुनः पुनर्यजमानाय दातव्यं धनं यस्यासौ पुनर्मघः, तादृशोऽयं प्रजापतिर्भुवत् भवति। किञ्च स प्रजापतिः सर्वव्यापी विराड्रूपं धृत्वा द्यामुपरितनकपालमौर्णोदाच्छादितवान्, तथान्तरिक्षं स्वर्गञ्च स और्णोत् किञ्च स एव विश्वा भुवः इमं लोकमारभ्याधस्तनाः सर्वा भूमीर् अभवत् प्राप्नोत्, आच्छादितवानित्यर्थः। किञ्च सत्यलोके समागत्य चतुर्मुखत्वेन रूपान्तरेण परिमितोऽभवत्। इत्यन्तरं विधत्ते "असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सौर्यं चरुं निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ सौर्यं चरुं निर्वपेदमुमेवादित्यꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति" (प्र०१।अ०२) इति।

यदुक्तं सूत्रकारेण 'सौर्यं चरुं रुक्माभ्यां परिगृह्यासादयति' इति। तदेतद्विधत्ते "उभयतो रुक्मौ भवत उभयत एवास्मिन् रुचं दधाति" (प्र०३।अ०२) इति। उभयत उपरिष्टादधस्ताच्चेत्यर्थः। प्रयाजार्थ आज्ये कृष्णलं प्रक्षिप्य होमं विधत्ते "प्रयाजे प्रयाजे कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्मवर्चसमवरुन्धे" (प्र०३।अ०२) इति। पञ्चसु प्रयाजेषु हूयमानैस्तैजसैः पञ्चभिः कृष्णलैः पञ्चभ्यो दिग्भ्यो ब्रह्मवर्चसस्य तेजसः प्राप्तिर्भवति। अत्र याज्यानुवाक्ययोः प्रतीके दर्शयति "उदु त्यं चित्रं" इति। उदु त्यं जातवेदसमिति पुरोऽनुवाक्या, चित्रं देवानामुदगादनीकमिति याज्या, ते उभेऽपि प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्याते। हिरण्यार्थिनस्त्रिहविष्कामिष्टिं विधत्ते "आग्नेयमष्टाकपालं निर्वपेत्सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोपनमेदिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनꣳ हिरण्यं नमति"(प्र०३।अ०२) इति। हिरण्यं विन्देय प्रथमतः प्रयत्नं कृत्वा कियदपि लभेय तत ऊर्द्धं *वृष्ट्यादिरूपेण अधिकं स्वयमेवमाप्नुयादिति कामयितुरियमिष्टिः। फलान्तराय त्रिहविष्कां तां विधत्ते "वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दते" (प्र०३।अ०२) इति। हिरण्यं लब्धवतश्चौरादिभीत्या कातरत्वमिन्द्रियव्यृद्धिः। पुन-

* पृथिव्यादिरूपेणेति तै०।

रपि फलान्तराय तां विधत्ते "एतामेव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दति" (प्र०३।अ०१)इति। मार्गपातनस्थानविस्मृत्यादिना विनष्टस्य हिरण्यस्य पुनर्लाभार्थमियमिष्टिः। एतेषु त्रिषु हविःषु प्रथमस्य पुरोऽनुवाक्यामाह "स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना" इति। हे अग्ने स त्वं द्युम्नेन हिरण्येन बृहत्ततन्थ महदैश्वर्यं विस्तारय, किं तत् प्रत्नवत् पुरातना धनिका उदाराः सन्त ऐश्वर्यं यथा विस्तारयन्ति तद्वत्। कीदृशेन द्युम्नेन नवीयसा अत्यन्तनूतनेन पितृपितामहाद्युपार्जितव्यतिरिक्तेनेदानीमेवार्ज्यमानेन संयता अस्मान् प्राप्नुवता भानुना कालुष्याभावादत्यन्तभासमानेन। तत्रैव याज्यामाह "नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि। अग्निर्भुवद्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा" इति। कविः पण्डितः तस्य भावः काव्यं पाण्डित्यं बुद्ध्यतिशयः, अयमग्निः काव्या काव्येन स्वकीयबुद्ध्यतिशयेन यजमानान् शश्वतो निरन्तरानुष्ठानशाश्वतिकान् वेधसः विधातृसदृशान् निकः नितरां करोतु। कीदृशोऽग्निः नर्या मनुष्येभ्यो हितानि पुरूणि बहुधनानि हस्ते दधानः, किञ्च सोऽग्निः रयीणां रयिपतिर्भुवत् सर्वेषां धनानामधिपतिरासीत्, अतः अमृतानि

हिरण्यानि विश्वा सर्वाणि सचा सक्ताणः सहस्थितानि कर्तुं शक्तः, तादृशोऽस्मभ्यं हिरण्यं ददातु। द्वितीयस्य हविषः पुरोऽनुवाक्यामाह "हिरण्यपाणिमूतये सवितारमुपह्वये। स चेत्ता देवता पदं" इति। अस्मभ्यं दातुं हिरण्यं पाणौ यस्य सः हिरण्यपाणिः, तादृशं सवितारं उपगम्य ह्वये आह्वयामि, किमर्थं ऊतये रक्षणाय, स सविता देवतारूपः पदं अस्मद्योग्यं स्थानं चेत्ता ज्ञाता। अत्रैव याज्यामाह "वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम" इति। हे सवितरद्यास्मभ्यं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः। श्वोऽपि वामं सावीः तदूर्द्ध्वं दिने दिने वामं सावीः, हे देव वामस्य वननीयस्य भूरेर्विस्तीर्णस्य क्षयस्य स्वर्गनिवासस्य सिद्धये अया अनया धिया श्रद्धायुक्तबुद्ध्या वामभाजो वननीयकर्मानुष्ठायिनः स्याम। तृतीयहविषः पुरोऽनुवाक्यामाह "बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमि प्रवत्वति मह्ना जिनोषि महिनि" इति। हे पृथिवि त्वं पर्वतानां सम्बन्धिनं खिद्रं खेदजनकं भारं इत्था बट् बिभर्षि इत्थमिति हस्तेनाभिनयः, बट् बाढं दृढमित्यर्थः। हे भूमि त्वं मह्ना त्वदीयेन महिम्ना या प्रजिनोषि यान् पर्वतान् प्रकर्षेण प्रीणयसि तेषां खिद्रमिति पूर्वत्रान्वयः। प्रवत्वति महिनीति द्वयं सम्बुद्ध्यन्तस्य भूमिपदस्य विशेषणं, प्रवत्वति प्रवणवति महिनि महत्त्वयुक्ते पूजायुक्ते वा, अत्र प्रवणवत्त्वेन जलसमृद्धिः सूच्यते, तथा

च जलसम्बद्धा यान् प्राणिनः प्रीणयसि तानपि बाढं बिभर्षीत्यपि योजनीयं। तत्रैव याज्यामाह "स्तोमासस्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः। प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि" इति। विविधश्चारो जनानां सञ्चारो यस्यां पृथिव्यां सा विचारिणी, तथाविधे हे पृथिवि स्तोमासः प्राणिनां सङ्घाः अक्तुभिरभिव्यक्तैः* नानाविधसस्यैर्निमित्तभूतैः त्वां प्रतिष्टोभन्ति प्रत्येकमाश्रयन्ते। हे अर्जुनि धवले निर्मले पृथिवि या त्वं पेरुं पानादिभोग्यवस्तुकामिनं प्रकर्षेणास्यसि भोगाय प्रेरयसि, कमिव हेषन्तं वाजं न वाजिनमिव, यथा लोके वाह्यादिप्रदेशे तुरङ्गान्तरं दृष्ट्वा स्वोत्साहेन हेषाशब्दं कुर्वन्तमुत्तमाश्वं सादिनोऽभ्यासाय प्रेरयन्ति तद्वत्। सोमवामिनस्तरुं विधातुं प्रस्तौति "इन्द्रस्त्वष्टुः सोममभीषहापिबत्स विष्वङ् व्यार्च्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्द्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निरवपत् तेनैवास्मिन्निन्द्रियꣳ सोमपीथमदधात्" (प्र०१।अ०२) इति। इन्द्रो विश्वरूपं त्वष्टुः पुत्रं हत्वा सोमयागे तेन त्वष्ट्रा स्वयमनाहूतः सन् कुपितः यज्ञस्य भ्रंशं कृत्वा प्रसह्य तदीयं सोममपिबदिति पञ्चमे प्रपाठके प्रपञ्चयिष्यते। तदत्र सङ्गृह्योच्यते, अभीषहा बलात्कारेणेत्यर्थः। सोमं पीत्वा त्वष्टुर्भीतो नानादिगभिमुखो विशेषेण पलायनं कृतवान्। पलायमानश्च तदुपघातादिन्द्रियस्वास्थ्यकरेण सोमपानेन व्यृद्धा-

* अव्यक्तैरिति तै०।

ऽभूत्, तदानीमिन्द्रो यत्सोमरसस्वरूपं ऊर्द्ध्वमुखेन वमनं कृतवान् तद्भूमौ पतित्वा श्यामाकरूपेण निष्पन्नं। ततः स इन्द्रः प्रजापत्युद्देशेन सोमेन्द्रचरुं कृत्वा स्वोदर एव जरणेन्द्रियप्रदं सोमपानं प्राप्तवान्। अथ विधत्ते "वि वा एष इन्द्रियेण सोमपीथेनर्ध्यते यः सोमं वमिति यः सोमवामी स्यात् तस्मा एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निर्वपेत् सोमञ्चैवेन्द्रञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियꣳ सोमपीथं धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते" (प्र॰३।अ॰२) इति। प्रातःसवनादिप्रयोगे यो यजमानः पीतं सोमं वमिति स एष सोमस्य वमनादिन्द्रियसामर्थ्यप्रदेन सोमपानेन व्यृद्धो भवति। तादृशसोमवामिनो यजमानस्यायं चरुः। द्वौ देवौ द्रव्यञ्च प्रशंसति "यत् सौम्यो भवति सोमपीथमेवावरुन्धे यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमवरुन्धे श्यामाको भवत्येष वाव स सोमः साक्षादेव सोमपीथमवरुन्धे" (प्र॰३।अ॰२।) इति। अत्र पुरोऽनुवाक्यामाह "सुदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः। अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यच्छ" इति। हे हर्यश्व इन्द्र यः सोमः पीतो मा न रिष्येत् वमनेन मां न हिंस्यात्, तादृशेन सख्या सखिवद्धितकारिणा सोमेन सचेय सङ्गतो भूयासं, कीदृशेन सोमेन सुदूदरेण, अत्र सकारो लुप्तः, वमनाभावात्सूदत्वं स्वास्थ्यमापन्नमस्मदुदरं यस्य सोमस्य स एष सुदूदरः। सोऽयं सोमोऽस्मे मदीयोदरे न्यधायि निहितः। तस्मै तदर्थं सोमस्य जरणार्थं प्रतिरं प्रकर्षेण वमनापदं

तारयितारमिन्द्रमच्छैमि आभिमुख्येन प्राप्नोमि भजामीत्यर्थः। तत्रैव याज्यामाह "आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः" इति। अत्र पादत्रयेण सोमस्य स्तुतिः चतुर्थपादेनेन्द्रस्य। अन्ततोऽपगतः आपान्तः सर्वात्मना विनष्टो मन्युः कोपो यस्य सोऽयमापान्तमन्युः, बहुभिर्ग्रावभिरभिषूयमाणोऽपि न क्रुध्यतीत्यर्थः। त्रिषु सवनेषु अभिषवार्थमासादिता उपलास्तृपलास्तेषां प्रभर्म प्रहारो यस्य सोमस्य सोऽयं तृपलप्रभर्मा। धुनिः कम्पमानः प्रहारैरितस्ततः कम्पते। शिमीशब्दः कर्मवाची, शिम्यो बहुविधान्यभिषवशोधनग्रहणादीनि कर्माण्यस्य सन्तीति शिमीवान्। शरवोऽभिषवकाले शीर्णावयवाः ते च बहवो यस्यासौ शरुमान्। रसनिष्पीडनेन यदवशिष्टं नीरसं तदृजीषं तदस्यास्तीत्यृजीषी। ईदृशः सोमो विश्वानि वनानि वर्धयतीति शेषः। 'सोमो वा ओषधीनाँ राजा। सोमो वनस्पतीनां' 'वनस्पतिगते सोमे' इत्यादिश्रुतिस्मृतिभ्यां चान्द्ररश्मिभिर्वनस्याभिवृद्धिदर्शनाच्च वर्धयितृत्वं। कीदृशानि वनानि अतसा सर्वत्र सन्ततानीत्यर्थः। अर्वागर्वाचीनानि प्रतिमानानि लौकिकोपमानानि इन्द्रं न देभुः न हिंसन्ति, नीचैरुपमानैः स्वसाम्यापादनमेवोत्तमाऽस्य हिंसा तां कर्तुमुपमानानि न प्रवर्तन्त इत्यर्थः। तत्रैव विकल्पितां पुरोऽनुवाक्यामाह "प्र सुवानः सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन्। वृषा यन्तासि शवसस्तुरस्या-

न्तर्यच्छ गृणते धर्त्रं दृꣳह” इति। एतयुर्यज्ञमिच्छुर्यजमानः सोमः सुवानः सोममभिषुण्वन्निन्द्राय ब्रह्म इन्द्रार्थं हृत् सोमपानं प्रचिकेत प्रकर्षेण जानाति। कीदृशो यजमानः जमदग्निः एतन्नामकमुनिसदृशः, किं कुर्वन् अर्चन् स्तुतिभिः पूजयन्, हे इन्द्र त्वं वृषा फलस्य वर्षयिता, यस्मासि सोमस्य नियामकोऽसि। कीदृशस्य शवसो बलवतः उदरे स्थापयितुमशक्यस्येत्यर्थः, तुरस्य वमनाय त्वरमाणस्य अन्तर्यच्छ नियन्तृत्वादुदरमध्ये तं सोमं जरयितुं नियच्छ, गृणते त्वां स्तुवते यजमानाय धर्त्रं दृंह सोमस्य धारकं वायुं दृढीकुरु। तत्रैव विकल्पितां याज्यामाह “सबाधस्ते मदञ्च शुष्मयञ्च ब्रह्म नरो ब्रह्मकृतः सपर्यन्। अर्को वा यत्तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्यां” इति। हे सोम नरो मनुष्या ऋत्विजस्ते ब्रह्म श्यामाकचरुरूपं परिवृढं हविः सपर्यन् पूजयन्ति समर्पयन्ति, कीदृशस्य सबाधः धकारान्तो बाधशब्दोऽभिषवकृतमुपद्रवं ब्रूते, तेनोपद्रवेण सह वर्तत इति सबाध् इति प्रातिपदिकं, तस्य षष्ठी सबाध इति, अभिषवपीडितस्य तवेत्यर्थः। कीदृशं ब्रह्म मदञ्च हर्षकरमपि शुष्मयञ्च बलप्रापकमपि। कीदृशा नरः ब्रह्मकृतः इष्टिरूपं परिवृढं कर्म कुर्वन्तीति ब्रह्मकृतः, अर्को वा सोमचक्षाः अर्कः सोमशब्देनाभिधीयमानस्त्वं सूर्य एवातस्तेजस्वित्वात् नास्ति तव कश्चिदप्युपद्रव इत्यभिप्रायः। यत् यदास्मदुदरे पीतो रसः तुरते वमनाय व्ययतां करोति तदेत् तत्रैवोदरेऽयमिन्द्रः पृत्सु

सङ्ग्रामेष्विव तुर्यां दधते तूर्णं यातारं करोति वमनाय सम्भ्रमं कुर्वतः सोमस्य निवारकं वायुं शीघ्रं तत्र प्रेरयतीत्यर्थः। अथ पञ्चमप्रपाठके विहितायामभ्युदयेष्टौ विष्णवे शिपिविष्टाय शृते चरुमित्युक्तं यत्तृतीयं हविस्तत्रानन्तरभावि मन्त्रत्रयमुत्कर्षणीयं। तस्मिंस्तु त्रये पुरोऽनुवाक्यां दर्शयति "वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं। वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः" इति। अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया विधिना वा प्रेर्यत इत्यासो यजमानः, तादृशोऽहं ते तवासमन्ताद्वषट् कृणोमि हविर्दानं करोमि। शिपिषु पशुषु विष्टः प्रविष्टो यज्ञः शिपिविष्टः पशुसाध्यो यज्ञ इत्यर्थः। यज्ञो वै विष्णुः पशवः शिपिरिति श्रुतेः। हे शिपिविष्ट यज्ञात्मक विष्णो मे मदीयं तद्धव्यं जुषस्व, सुष्टुतयः शोभनस्तुतिरूपा मे गिरः त्वां वर्धन्तु वृद्धिं प्रापयन्तु, एकस्मिन्नपि विष्णौ यूयमिति पूजार्थं बहुवचनं, पूज्या यूयं स्वस्तिभिः श्रेयोभिः नोऽस्मान् सदा पात रक्षत। तत्रैव याज्यामाह "प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्। तं त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजसः पराके" इति। हे शिपिविष्ट अद्य अस्मिन् यज्ञे ते त्वदीयं तन्नामाहं प्रशंसामि, कीदृशोऽहं वयुनानि विद्वान् ज्ञापकानि नामनिर्वचनानि जानन् यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठतीति श्रुत्याख्यातं शिपिविष्टनाम्नो निर्वचनं जानामीत्यर्थः। अत

एवार्योऽहं शब्दार्थाभिज्ञानां स्वामी हे विष्णो तं त्वा गृणामि तथाविधं त्वां स्तौमि। किंविधं, अस्य रजसः पराके क्षयन्तं दृश्यमानस्य मलिनलोकस्यात्यन्तं दूरे निवसन्तं, तवसं तपस्विनं, कीदृशोऽहं अतवीयान् अतपस्वी। यद्यप्यहं तपोरहितस्तथापि तपस्विनस्तव प्रसादात् स्तोतुं शक्त इत्यर्थः। तत्रैव विकल्पितां याज्यामाह "किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ" इति। हे विष्णो त्वं यद्यस्मात् कारणात् शिपिविष्टो अस्मीति प्रकर्षेण ववक्षे पुनः पुनर्वचि, तस्मात्ते तव मनसि किमित्परिचक्ष्यं भूत् किमिदं गर्हणीयमभूत्, नैतद्गर्हणीयं वृथैव तव लज्जेत्यभिप्रायः। यद्यप्येतन्नाम लोकेऽत्यन्तरोगिण्युद्घाटितगुह्यत्वविमूढैः प्रयुज्यते शिपिविष्टोऽयमिति, तथाप्यवयवार्थस्य ब्राह्मणेन व्याख्यातत्वान्नास्त्यत्र तव लज्जाकारणं। तस्मादेतद्वर्पो वरिष्ठं नामास्मन्मापगूहः अस्माकमग्रे गूढं मा कुरु। यत् यस्मात्त्वं गूहनायैव समिथे युद्धे कवचशीर्षण्याभ्यां गूढोऽन्यरूपो बभूथ बभूविथ, तदन्यथा यथातथा वा भवतु, तथाप्यस्मद्दृष्टौ प्रशस्तमिदं मा गोपायेत्यर्थः। पशुकामस्य त्रिहविष्कामिष्टिं विधत्ते "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति वृद्धानिन्द्रः प्रयच्छति" (प्र०३।अ०१) इति। पञ्चद्रव्यसमष्टिरूपं तृतीयं हविर्विधत्ते "दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाᳪ रूपᳪ रूपेणैव पशूनवरुन्धे"

(प्र० ३।अ० २) इति। तत्र दधिघृतयोः पशुसम्बन्धात् तत्साहचर्येण सर्वेषां पशुरूपत्वं। अस्मिन् हविषि द्रव्यसङ्ख्यां विविधद्रव्यत्वञ्च प्रशंसति "पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः समृद्ध्यै" (प्र०३।अ०२) इति। एकैकस्य द्रव्यस्य ग्रहणेन पञ्चगृहीतत्वं गोमहिषाश्वादिरूपेण पशूनां बहुरूपत्वं। द्रव्यं विधाय देवतां विधत्ते "प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्रजनयति" (प्र०३।अ०२) इति। 'घृतं न पूतं' 'उभे सुश्चन्द्र' इत्येते ऋचौ विधत्ते "आत्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्रदधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनवरुन्धे" (प्र०३।अ०२) इति। यस्मिन् कस्मिंश्चिद्दुर्गे समुत्पन्नस्य मधुनो दध्यादिवत् सर्वप्राणिसुलभत्वं नास्ति, आत्मापि हस्तपादादिवत् सर्वैः सुष्ठु विज्ञेयो न भवति, तस्मात्साम्यान्मधुनः पुरुषत्वं मधुहोमेन वह्नौ प्रक्षिप्तस्यात्मनः पङ्क्तिच्छन्दसोः पाठेन मृत्योर्निष्क्रियो भवति। तत्र प्रथमस्य हविषः पुरोऽनुवाक्यामाह "अग्ने दा दाशुषे रयिं वीरवन्तं परीणसं। शिशीहि नः सूनुमतः" इति। हे अग्ने दाशुषे हविर्दत्तवते यजमानाय रयिं दा धनं देहि, तथा वीरवन्तं वीरैः भृत्यादिभिरुपेतं पुत्रं देहि, कीदृशं परीणसं परितः शोभना नासिकाद्यवयवा यस्य तं। तथाविधसूनुमतस्त्वया दीयमानैः पुत्रैर्युक्तान् नोऽस्मान् शिशीहि सर्वेषु कार्येषु

तीत्तृणीकुरु। तत्रैव याज्यामाह "दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाज९ँ श्रुत्या अपावृधि। प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्न शुक्रमुषसो विदिद्युतुः" इति। हे अग्ने नोऽस्मभ्यं शतिनो दाः शतसङ्ख्याकान् पशून् देहि, तथा सहस्रसङ्ख्याकान् देहि। दुरो न द्वारानीव पशुसम्पत्तौ देहि, 'वायव्य९ँ श्वेतमालभेत' 'सरस्वत्याज्यभागा स्यात्' इत्यादीनि बहूनि कर्माणि सुखेनानुष्ठातुं शक्यन्ते, अतोऽनुष्ठानस्य द्वारभूतान् पशून् देहि। ततः पशुप्राप्तेरूर्द्ध्वं वाजमन्नं श्रुत्यै ब्राह्मणभोजनादिजन्यकीर्त्तये अपावृधि विघ्नमपनीय वर्धय। प्रकर्षेणानुकूल्यं अञ्चतो गच्छत इति प्राच्यौ, ब्रह्मणा मन्त्रपुरःसरेण कर्मणा तुष्टः सन् द्यावापृथिव्यौ प्राच्यौ कुरु। उषसः उषःकालाः सुवर्न स्वर्ग इवास्मद्गृहे शुक्रं प्रकाशं विदिद्युतुः विशेषेण द्योतितं कुर्वन्तु प्रभूतं कुर्वन्त्वित्यर्थः। तत्रैव विकल्पितां याज्यामाह "अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति। अग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्रा" इति। अयमग्निर्द्रविणं दाः ददातु, वीरपेशाः वीराणामस्मत्पुत्रादीनां पालको योऽग्निरसौ ऋषिं ऋषिसमानं पुत्रं, सहस्रा सहस्रप्रकारेण सनोति ददातु, सोऽग्निर्दिवि स्वर्गे हव्यमस्मदीयमाततान समन्ताद्विस्तारितवान्, तानृशस्याग्नेः पुरुत्रा पुरुषु प्रदेशेषु धामानि स्थानानि विभृता विशेषेण सम्पादितानि। द्वितीयहविषो याज्यानुवाक्ययोः प्रतीके दर्शयति "मा नो मर्धीरा तू भर" इति। 'मा नो मर्धीरा

भरा दद्धि तन्नः’ इति पुरोऽनुवाक्या। ‘आ तू भर माकिरे-तत्परिष्ठात्’ इति याज्या। तदुभयं पूर्वकाण्डे सप्तमप्रपाठके व्याख्यातं। तृतीयहविषः पुरोऽनुवाक्यामाह “घृतं न पूतं तनूररेपाः शुचि हिरण्यं। तत्ते रुक्मो न रोचत स्वधावः” इति। हे स्वधावः अन्नवन् प्रजापते, तनूररेपाः त्वदीयं शरीरं पापरहितं, किमिव पूतं घृतं न घृतमिव। नेत्युत्तरत्रानुवर्तते। शुचि हिरण्यं न शुद्धं सुवर्णमिव, रुक्मो न आभरणमिव, ते त्वदीयं तच्छरीरं रोचत सर्वेभ्यो रोचतां। तत्रैव याज्यामाह “उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आभर” इति। हे सुश्चन्द्र, सुष्ठु आह्लादनकर, आसनि त्वदीय आस्ये सर्पिषः सम्बन्धिन्यावुभे दर्वीसदृशे हनू श्रीणीषे सेवसे हनुपूरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः। उतो अपि च हे शवसस्पते बलस्याधिपते, उक्थेषु शस्त्रवत्सु यज्ञेषु नोऽस्मान् उत्पुपूर्या उत्कर्षेण पूरय प्रापयेत्यर्थः। स्तोतृभ्यो यजमानेभ्य इषमन्नं आभर सम्पादय। अथान्यत्र वायव्यां यवागूं निर्वपेदित्यादिना विहिते कर्मण्युत्कर्षणीयं। पुरोऽनुवाक्यामाह “वायो शतꣳ हरीणां युवस्व पोष्याणां। उत वा ते सहस्रिणो रथ आयातु पाजसा” इति। हे वायो पोष्याणां पुष्टिमतां हरीणामश्वानां शतं युवस्व अस्मद्गृहे समागन्तुं रथे योजय। उत वा ते सहस्रिणः अथ वा ते सहस्रसङ्ख्याका अश्वा रथे युज्यन्तामिति शेषः। स च रथः पाजसा बलेन शीघ्रमायातु। तत्रैव याज्यामाह “प्र

याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टये दुरोणे। नि नो रयिꣳ सुभोजसं युवेह नि वीरवद्गव्यमश्वियञ्च राधः” इति। हे वायो दुरोणे यज्ञगृहे इष्टये क्रियमाणेष्टिसिद्ध्यर्थं नियुत्संज्ञकाभिर्याभिर्वडवाभिः दाश्वांसमच्छ हविर्दत्तवन्तं यजमानं प्राप्तुं प्रकर्षेण यासि ताः समीचीना अस्माकमनुकूला इति शेषः। इह कर्मणि नोऽस्माकं सुभोजसं रयिं सुष्ठु भोजनोपयुक्तं धनं नियुव नितरां मिश्रय। किञ्च राधोऽन्नं नियुव, कीदृशं राधः वीरवद्गव्यमश्वियं पुत्रैर्गोभिरश्वैर्युक्तमित्यर्थः। अथ काम्येन्द्रकर्मण्युक्तयाज्यानुवाक्ये आम्नायेते। तत्र पुरोऽनुवाक्यामाह “रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम” इति। रेवत्यो धनवत्यः, सधमादः अस्माभिः सह मादयन्त्यो हर्षयुक्ताः, तुविवाजाः बह्वन्नोपेताः आपो नोऽस्माकं स्वामिन्यिन्द्रे सन्तु अस्मत्स्वाय समीपस्थाय तिष्ठन्तु, याभिरद्भिः सह वयं क्षुमन्तः शब्दयन्तः इन्द्रं स्तुत्वा मदेम हृष्याम। तत्रैव याज्यामाह “रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः। प्रेदु हरिवः श्रुतस्य” इति। हे हरिवः इन्द्र अयं यजमानो रेवाꣳ इत् धनवानेव सन्, रेवतो धनवतो देवस्य प्रेदु अत्यन्तं प्रकर्षेण स्तोता स्यात्। कीदृशस्य देवस्य त्वावतस्त्वत्सदृशस्य मघोनः अन्नधनवतः श्रुतस्य देवेषु श्रूयमाणस्य। तादृशं देवं स्तुत्वा स्वाभीष्टं प्राप्नोतीत्यभिप्रायः।

अत्र विनियोगसङ्ग्रहः।

“हिरण्यापः प्रजा सेति चतस्रः शतकृष्णलं।

उद् चित्रं चरौ मौर्ये स प्रेत्याग्नेययागके॥
हिर मावित्रके तद्वद्वडित्था भूमिगे चरौ।
सोमेन्द्र रुद्र चत्वारः शिपिविष्टे वषट्त्रयं॥
अग्ने तिस्रो दातृयुक्ते सा न आ तू प्रदातृके।
घृतं दध्यादिगुणके वायो वायव्यके क्वचित्॥
काम्येन्द्री रेवतीलिङ्गादिति त्रिंशदुदीरिताः"। इति।

अथ मीमांसा। अष्टमाध्यायस्य प्रथमपादे चिन्तितं।

"कृष्णलेषु घृतस्योत व्रीहेस्तेजोयुतेर्भवेत्।
घृतस्य नैवं वैशद्याच्चरुशब्दयुतेस्तथा"॥

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलं' इत्यत्र कृष्णलेषूपांशुयाजद्रव्यस्य घृतस्य धर्माः कर्तव्याः कृष्णलाख्यसुवर्णस्य घृतस्य च तेजस्वित्वसाम्यादिति चेत्। न, सुवर्णशकलव्रीह्योर्वैशद्यसाम्यात्। न हि घृतस्य प्रबलकाठिन्यविरलतादिरूपं वैशद्यमस्ति। चरुशब्दश्चौषधिद्रव्यविषयः कृष्णलेषु प्रयुज्यमानान् ओषधिधर्मान् प्रापयति। तस्माद्व्रीहिधर्माः कर्तव्याः।

दशमाध्यायस्य प्रथमपादे चिन्तितं।

"अवघातः कृष्णलानामस्ति नो वास्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत्पाकमवघाते तु नास्ति सा"॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ व्रीहीनवहन्तीति पुरोडाशहेतूनां

व्रीहीणामवघातो विहितः, सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति नो वेति सन्देहः। अस्तीति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं प्रकृत उपकारः, लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनं। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः, तद्वदवघातोऽप्यस्तु। घृते श्रपयतीति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः, अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति।

तत्रैव द्वितीयपादे चिन्तितं।

"नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसम्भवी।
अदृष्टार्थतया स स्यादौष्ण्ये तु सुतरां भवेत्"॥

घृते श्रपयतीति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्तव्य इति पूर्वः पक्षः। दृष्टार्थस्य विक्लेदनस्यासम्भवेऽप्यदृष्टार्थं पाकः कर्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द औष्ण्यवाची तदा न कोऽपि विवादः।

तत्रैवान्यच्चिन्तितं।

"उपस्तराभिघारौ स्तस्तेषु नो वा द्वयं भवेत्।
अदृष्टार्थमसंसक्तिर्दृष्टार्थं नेति लुप्यते"॥

तेषु कृष्णलेषूपस्तरणमभिघारणञ्चेत्युभयं पाकवददृष्टार्थं कर्तव्यमिति पूर्वः पक्षः। न तावत्पाकवदत्र प्रत्यक्षविधिरस्ति। चोदकस्तु दृष्टं द्वारमपेक्षते। प्रकृतावुपस्तरणाभिघारणयोर्दृष्टार्थत्वात्। सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुं तदुभयं क्रियते। कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति।

अतस्तन्निवारणलक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लु-प्यते।

तत्रैवान्यच्चिन्तितं।

"भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः।
चुच्चुषाकारनिर्धानवचनात् स्यात् प्रदानवत्"॥

यथा पुरोडाशे प्राशित्रादिभागो भक्ष्यते तथा तेषु कृष्णलेषु भक्षो नास्ति प्रीतिरूपस्य दृष्टद्वारस्याभावादिति पूर्वः पक्षः। चुच्चुषाकारं भक्षयन्ति निर्धयन्तो भक्षयन्तीति प्रत्यक्षं वचनमाम्नायते। इक्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषस्तस्यानुकरणं चुच्चुषेति। घृते निरूप्तेषु कृष्णलेषु यस्मिन्नाज्यं तदन्तर्नेतुमिव बालाश्चुच्चुषां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुरित्यर्थः। अनदनीयद्रव्याणामपि कृष्णलानां यथा वचनात् प्रदानं तद्वदभक्ष्याणामपि भक्षणं भवेत्।

तत्रैवान्यच्चिन्तितं।

"सकृत्सहत्वयोरेकमेकधेत्यन्यमेव वा।
एकं नियामकाभावादबाधादन्यमेव हि"॥ इति।

तत्रैव कृष्णलभक्षणे श्रूयते 'एकधा ब्रह्मण उपहरति' इति। तत्रैकधेत्ययं धाप्रत्ययः प्रकारवाची सन्नेकवारमित्यमुमर्थं वा बहूनां सहभावं वा ब्रूते। उपहारो भक्षणाय समर्पणं। एकधेत्यनेन शब्देन सकृत्त्वसहत्वयोरन्यतरद्विवक्षितं उत सहत्वमेवेति संशयः। नियामकाभावादुभयोर्मध्ये यत्किञ्चिदन्यतरदिति पूर्वः पक्षः। अबाधोऽत्र नियामकः। सकृता

विडाप्राशित्रचतुर्धाकरणशंयुवाककालेषु चतुर्धाभक्षणसिद्धये चत्वार उपहारा उपदिष्टाः, अत्रापि ते चोदकप्राप्ताः, तत्र सकृत्त्वपक्ष उपरितनास्त्रय उपहारास्तत्कालविशेषाश्च बाध्ये-रन्, सहत्वपक्षे कालविशेषा एव बाध्यन्ते, न तु त्रय उप-हाराः। तस्मादन्यपक्षरूपं सहत्वमेवैकधेत्यस्य शब्दस्यार्थः।

तत्रैवान्यच्चिन्तितं।

"सर्वं ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता।
अन्यभागस्यापि वाऽऽद्यो भागान्तरमबाधितुं॥
सर्वत्वमन्यभागीयं ब्रह्मणेऽत्र विधीयते।
स्वभागीयं चोदकाप्तं बाध्यतामन्यभक्षणं"॥

कृष्णलभक्षण एवेदमपरं श्रूयते 'सर्वं ब्रह्मणे परिहरति' इति। परिहारः समर्पणं। ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु का-लेषु चत्वारो भक्षणभागाश्चोदकप्राप्ताः,तत्र सर्वता किं ब्रह्मसम्ब-न्धिचतुर्भागविषया उतेतरसम्बन्धिभागचतुष्टयविषयापीति स-न्देहः। अध्वर्युप्रभृतीनामृत्विजां ये ये चत्वारो भागास्तेषां बहूनामबाधनायाद्यः पक्षोऽभ्युपगन्तव्यः। तत्रैषा वचनव्यक्तिः। ब्रह्मसम्बन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्येतरद्वि-धेयं, यद्ब्रह्मणे सर्वं तत्परिहरति, यद्ब्रह्मणे परिहरति तत् सर्व-मिति, उभयथापि विधेर्ब्रह्मभागमात्रे पर्यवसानाच्चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्तीति पूर्वः पक्षः। सर्वत्वपरिहा-रावनूद्य ब्रह्मसम्बन्धोऽत्र विधीयते। यत्परिहर्तव्यं सर्वं तद् ब्रह्मण इति वचनव्यक्तिः। तत्र ब्रह्मभागानामितरभागानाञ्च

यत् सर्वत्वं तस्य ब्रह्मसम्बन्धे सति ब्रह्मभागानां ब्रह्मसम्बन्धस्य चोदकादेव प्राप्तत्वात्तत्रानर्थको विधिरन्यभागानां ब्रह्मसम्बन्धविधाने पर्यवस्यति। तस्मादन्येषां भक्षणं बाध्यते।

तत्रैवान्यच्चिन्तितं।

"युगपत् स्वस्वकाले वा तत्सर्वं भक्षयेदयं।
अविलम्बादादिमोऽन्त्यस्तं तं कालमबाधितुं"॥

अतीतेनाधिकरणद्वयेन युगपत् सर्वं ब्रह्मणे समर्पयेदित्युक्तं, तत्र भक्षयितुं युगपत् समर्पितस्य सर्वस्य मध्ये कियदपि भक्षयित्वाऽवशेषितस्य विलम्बे कारणाभावाद्युगपदित्याद्यः पक्षः प्राप्नोति। चोदकप्राप्तस्य तत्तत्कालस्याबाधो विलम्बहेतुः। तस्मात् स्वस्वकाल इत्यन्यः पक्षोऽभ्युपगन्तव्यः।

अष्टमाध्यायस्य प्रथमपादे चिन्तितं।

"फलञ्च नियमः कर्ता सङ्गः सौर्ये न वाग्निमः।
प्रयाजवन्न विध्यादिविध्यन्तत्वविभेदतः"॥

दर्शे फलादयश्चत्वारः सन्ति, फलं स्वर्गः, नियमो यावज्जीवकत्वं, कर्ता स्वर्गकामः, सङ्ग आग्नेयादीनां षण्णां साहित्यं। त एते चत्वारः सौर्ये प्रयाजादिवदतिदेष्टव्या इति चेत्। न, वैषम्यात्। प्रयाजादिराकाङ्क्षितविध्यन्तत्वादतिदिश्यते। विध्यादिस्तु नाकाङ्क्षितः, सौर्यं चरुं निर्वपेदिति मुख्यविधेः प्रत्यक्षश्रवणात्। अन्यथा विध्यन्तेऽपि कस्याकाङ्क्षा वर्ण्येत। तस्मात् प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तेस्तत्सम्बन्धाः फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते।

तत्रैवान्यच्चिन्तितं।

"गोदोहनाद्यस्ति नो वा भवेत् प्रणयनाश्रयात्।
अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते"॥

'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति दर्शपूर्णमासयोः श्रुतं गोदोहनं सौर्येऽप्यतिदेष्टव्यं। कुतः, तदाश्रयस्य प्रणयनस्य सद्भावादिति चेत्। मैवं, क्रत्वङ्गतया चमस एव प्रणयनसाधनमपेक्षितं, न त्वनङ्गं पुरुषार्थं गोदोहनं। अतः फलनियमादिवन्नातिदेशः।

तत्रैवान्यच्चिन्तितं।

"स्पर्शद्वयं व्यवस्थार्थं विकल्प्यं वा व्यवस्थितिः।
प्रकृताविव नो तत्र तस्याः शाब्दत्ववर्जनात्"॥

दर्शपूर्णमासयोर्हविषां स्पर्शनद्वयं व्यवस्थितमन्त्रद्वयमाध्यमाम्नातं 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यां' इति। पृथिवी होतेत्यादिमन्त्रश्चतुर्होता। अग्निर्होतेत्यादिमन्त्रः पञ्चहोता। तदुभयं सौर्यादौ चोदकप्राप्तं सत् कालभेदेनानुष्ठानद्वये व्यवस्थापनीयं। कुतः, प्रकृतौ पौर्णमास्यमावास्ययोः कालभेदेन व्यवस्थितत्वादिति चेत्। न, प्रकृतौ व्यवस्थाया आर्थिकत्वात्। शाब्दस्यैवाङ्गत्वेनातिदेशार्हत्वात्। तस्मादुभयं विकृताविच्छया विकल्प्यते।

तत्रैवान्यच्चिन्तितं।

"षट्सु कस्याप्युताग्नेयस्यैव सौर्येऽग्रिमो यतः।
अविशेषो न दैवैक्यादौषधद्रव्यकत्वतः"॥

दर्शपूर्णमासगतेषु षट्सु यागेषु यस्य कस्यापि विध्यन्तः सौर्ये कर्तव्योऽस्यैवेति विशेषनियामकस्याभावादिति चेत्। न, देवतैक्यस्य नियामकत्वात्। सौर्यशब्दगततद्धितप्रत्ययविग्रहस्य सूर्याविति द्विवचनेनापि कर्तुं शक्यत्वाद्देवतैक्यमनिश्चितमिति चेत्। न, विधिशेषार्थवादोक्तावमुमेवादित्यमित्येकवचनेन तद्व्यपदेशात्। आग्नेयार्थवादेऽपि सोऽग्नयेऽध्रियतेत्येकवचनं व्यपदिष्टं। अत आग्नेयस्यैव विध्यन्तो न त्वग्नीषोमीयैन्द्राग्नयोः। यद्यप्यैन्द्रयोर्दधिपयसोः प्राजापत्ये उपांशुयाजेऽपि देवतैक्यमस्ति तथाप्यौषधद्रव्यकत्वमाग्नेये विशेष्यते। तस्मात् तस्यैव विध्यन्तः।

नवमाध्यायस्य द्वितीयपादे चिन्तितं।

"सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवकौ।
स्तः सङ्घदेवकौ सङ्घाविकारत्वान्न तत्र तौ"॥

दर्शपूर्णमासयोः श्रूयते 'स्रुवेण पार्वणौ जुहोति' इति। तत्र पर्वशब्दः कालविशेषवाची, ततः कालदेवकौ तौ होमावारादुपकारकतया प्रयाजादिवत् सौर्यादिविकृतिष्वतिदिश्येते। इति चेन्नैवं। पर्वशब्दस्याग्नेयादित्रिकसङ्घपरत्वात्। दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नोऽयं पर्वशब्दः, स च प्रीयते दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालमाचष्टे भावव्युत्पत्त्या तु क्रियापरः सन् प्रकरणवशादाग्नेयादिकर्मत्रयसङ्घमाह। तथा च मन्त्रवर्णोऽप्यनुगृहीतो भवति 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' इत्येको मन्त्रः, 'अमावास्या सुभगा सुशेवा धेनुरिव

भूय आप्यायमाना' इत्यपरो मन्त्रः । तत्राग्नीषोमवत्कर्मत्रय-मन्त्रस्य व्यासक्तदेवतात्वं । न च मन्त्रस्य विकृतिः सौर्यादिः, कि-न्त्वाग्नेयस्यैव । ततः मन्त्रार्थयोर्होमयोर्नास्ति सौर्यादौ प्राप्तिः ।

दशमाध्यायस्य प्रथमपादे चिन्तितं ।

"सौर्ये चरौ चरुःस्थाली किं वान्नं लौकिकोक्तितः ।

स्थाल्यस्यां श्रपणं योग्यं कपालविकृतित्वतः ॥

विदच्छ्रुतिप्रसिद्ध्याऽन्नं देवतातद्धितोक्तितः ।

योग्यत्वेन प्रदेयं तत् पुरोडाशहविर्यथा" ॥

सौर्यं चरुं निर्वपेदित्यादिवाक्ये चरुशब्दः किं स्थालीं वक्ति उतौदनमिति सन्देहः । तत्र च लौकिका आहिमवत आ च कुमारीभ्यः सर्वेऽपि सर्वदेशीयस्वस्वभाषाप्रसिद्धा यत्किञ्चित् गकारचकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमन्ये पात्रे पाकाधि-करणे ताम्रादिमये प्रयुञ्जते । निघण्टुकाराश्चोखा स्थाली चरुरित्येतान् शब्दान् पर्यायत्वेनोपदिशन्ति । तस्माच्चरुशब्दः स्थालीं वक्ति । यदि तस्य अदनीयत्वाभावेन पुरोडाशवत् प्रदानयोग्यता न स्यात् तर्हि माभूत् पुरोडाशविकृतित्वं पुरो-डाशाधिष्ठानकपालविकृतित्वं तु भविष्यति श्रपणयोग्यतायाः सद्भावात्, यथा कपालेषु हविः श्रप्यते तथा स्थाल्यामपि श्रपयितुं शक्यते, तस्माच्चरुः स्थालीति प्राप्ते ब्रूमः । अन्नमेव चरुशब्देनोच्यते । कुतः श्रुतिप्रसिद्धेः । आदित्यः प्रायणीय-स्य चरुरिति विधाय तद्वाक्यशेषे हृदितिमोदमनेनौदनशब्देन चरुरनूद्यते । यदि भोज्यान्ने चरुशब्दः क्वापि न प्रयुज्यते

तर्ह्योदनविशेषवाची चरुशब्दोऽस्तु, तत्र विद्वत्प्रसिद्धेः। विद्वांसो याज्ञिकाः शब्दैकगम्यधर्माधर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्यवन्तोऽनवस्रावितान्तरूष्मपक्वे जोवतण्डुले विशदसिक्थे ओदने चरुशब्दं प्रयुञ्जते। सत्योदनवाचित्वे सौर्यमिति तद्धितोऽप्युपपद्यते। यथाग्नेयमिति देवतातद्धितसंयुक्तपुरोडाशः प्रदेयद्रव्यं तथा चरुरपि। अन्ये च निघण्टुकारा हव्यपाके चरुः पुमानिति पठन्ति। तस्माच्चरुशब्दोऽन्नवाची।

तत्रैवान्यच्चिन्तितं।

"चरुः कपाले पक्तव्यः क्वापि वा उचितेऽथवा।
कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित्॥
स्थाल्यां चरुत्वयोग्यत्वात्कटाहे योग्यता न हि।
चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्त्तनं"॥

विषयसंशयनिर्देशकं पूर्वार्धं स्पष्टार्थं, यथा प्रकृतौ पुरोडाशस्य कपाले पाकः तथा विकृतौ चरोरित्याद्यः पूर्वः पक्षः। पुरोडाशस्यापूपत्वात् कपालगतोष्मणा पाकः सम्भवति, चरुस्त्वोदनत्वादुदकगतोष्मणा पक्तव्यः। अतोऽप्राकृतकार्यत्वाच्चोदकप्राप्तिर्नास्तीति यद्युच्येत तर्ह्यनपूपस्य चरोरुदकधारणयोग्ये कटाहघटादौ यत्र क्वापि पाक इति द्वितीयः पूर्वः पक्षः। निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाक इति राद्धान्तः। पूर्वत्र चरुरोदन इति चिन्तितं। न ह्योदने पेषणादिरस्ति अतः पेषणादिनिवृत्तिः पूर्वचिन्तायाः साध्या-

त्फलं, तद्द्वारेण चरुनिष्पादकस्थाली चिन्ताया अपि फलमित्युपचर्यते। पेषणादीन्यनुक्रामति। पेषणं यवनं वापस्तापश्चोपहितिः प्रथा। मार्जनाध्यूहनज्वालास्तथा व्युद्धृत्य सादनं। पेषणं चूर्णनं, यवनं पिष्टस्योदकमिश्रणं, वाप उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः, तापः कपालानामङ्गारैः प्रतापनं, उपहितिरङ्गारेषु कपालस्थापनं, प्रथा कपाले व्यवस्थापितस्य पुरोडाशस्य हस्तसङ्घट्टनेन सर्वेषु कपालेषु प्रसारणं, मार्जनं श्लक्ष्णीकरणं, अध्यूहनं भस्मनाङ्गारैश्चोपर्याच्छादनं, ज्वाला दर्भपिञ्जलैः प्रज्वालनं, व्युद्धृत्य सादनं कपालेभ्यः पृथक्कृत्य पुरोडाशस्यान्तर्वेद्यवस्थापनं। ननु पेषणादिनिवृत्तेः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकसूत्रैर्विचारितवानित्याशङ्क्य मन्दमतिव्युदासायेत्याह। एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः। अपूपस्यैव योग्यानीत्येतत्सूत्रैर्निरूपितं।

तत्रैव चतुर्थपादे चिन्तितं।

"सौर्यादिनिगमे कोऽपि शब्दः स्याद्वैध एव वा।
चरौ सूर्यान्वयादाद्यः प्रयोगान्वयतोऽन्तिमः"॥

सौर्यं चरुं निर्वपेदित्यादिविकृतिषु चोदकातिदिष्टा ये निगमास्तेष्वग्न्यादिशब्दस्थाने सूर्याद्यर्थप्रत्यायकः शब्द ऊहितव्यः स चार्थ आदित्यरव्यादिना पर्यायेणापि प्रत्याययितुं शक्यते, वैधस्तु सूर्यशब्दस्तत्याग एवान्वितः न त्वग्न्यादिशब्दवन्निगमेषु पठितः तस्माद्यः कोऽपीति प्राप्ते ब्रूमः। अत्र

सौर्यं चरुं निर्वपेदिति प्रयोगवचनेन सूर्यान्वयो भवति, न तु सौर्यश्चरुरिति चरुणा। कारकविभक्तिर्हि द्वितीया, सा चाख्यातेन सम्बध्यते न नाम्ना, सति च प्रयोगान्वये याज्या-पुरोऽनुवाक्ययोर्निगमेषु वा यत्र प्रयोगोऽपेक्षितस्तत्र सर्वत्र सूर्यशब्द एव युक्तः। प्रकृतावपि निगमेषु नार्थमात्रविवक्षया-ग्निशब्दः प्रयुज्यते किन्तर्हि वैधशब्दविवक्षयापि। तथा सत्य-तिदेशोऽपि वैधशब्दविषय एव भविष्यति। तस्मात्सूर्यशब्द एव प्रयोक्तव्यः॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितं।

"आरम्भणीया सौर्यादौ नोत स्यान्न प्रयोगवत्।
क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत्"॥

दर्शपूर्णमासयोः प्रथमप्रयोगस्यैवोपक्रम आरम्भणीया न प्रयोगान्तरस्येति नवमे निर्णीतं। आदौ कृतस्य कर्तृसंस्का-रस्य यावज्जीवपर्याप्तत्वात् यथा न प्रयोगान्तर आरम्भणी-यापेक्षा तथा यावज्जीवप्रकृतिकालमध्यपातिनीनां सौर्यादि-विकृतीनां नास्ति तदपेक्षेति प्राप्ते ब्रूमः। दर्शपूर्णमासावा-रप्स्यमान इत्युक्तत्वात्क्रत्वर्थेयमारम्भणीया, न तु प्रयोगार्था। क्रत्वन्तराणि हि सौर्यादीनि, ततः प्रयोगान्तरे वैषम्यात्सौ-र्यादौ सा कर्तव्या। न च यावज्जीवकालः प्रकृत्यङ्गकर्तृधर्मत्वेन द्वितीये वर्णितत्वादतो मोक्तरचोद्गन्यायोऽत्र प्रसरति। त-स्मान्नात्यन्त प्रसङ्गः।

तृतीयाध्याये चतुर्थपादे चिन्तितं।

"सोमवामिचरुर्लोके वेदे वेन्द्रियसङ्क्षयः ।
दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः ॥
अदोषो वमनायैव लोके पानं श्रुतौ पुनः ।
जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः" ॥

इदमाम्नायते 'सोमेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इति। तत्र लौकिके सोमवमने विहितोऽयं चरुः। कुतः, 'वि वा एष इन्द्रियेण वीर्येण ऋध्यते यः सोमं वमिति' इति। दृष्टदोषमुपन्यस्य तच्छान्तये चरुविधानादिति चेत्। मैवं, लोके धातुसाम्यार्थिना वमनायैव सोमस्य पाने सति वमनस्य दोषाहेतुत्वात्। वेदे तु 'हिन्व मे गात्रा हरिवः' इत्यनेन मन्त्रेण जरयितुं सोमः पीयते, तत्र वमनप्रायश्चित्तार्थोऽयं चरुः।

तत्रैवान्यच्चिन्तितं।

"ऋत्विजो वमनेऽप्येष कर्तुरेवात वर्जनात्।
विशेषस्याग्रिमो मैवं कर्तुरेव निरुक्तितः" ॥

ईदृशस्य सोमस्य वमने चरुरिति विशेषस्याभावादृत्विजां यजमानस्य च वमने सर्वत्रासौ चरुरिति चेत्। मैवं, यो वमिति स निर्वपतीति निर्वप्तुर्वमनं चरुनिमित्तं निर्वप्ता च यजमानः ऋत्विजां निर्वप्तृत्वेऽधिकारान्तरप्रसङ्गात्। तस्माद्यजमानस्यैव वमने चरुविधिः।

अष्टमाध्यायस्य प्रथमपादे चिन्तितं।

"क्षीरस्याज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः।
द्रवत्वं न घृतेऽप्यस्य सत्त्वादर्णाच सम्भवात् ॥

चित्रायागे श्रूयते ‘दधि मधु घृतमापो धानास्तण्डुलास्त-त्संसृष्टं प्राजापत्यं’ इति। तत्र मधुन्युदके च द्रवत्वसाम्येन सान्नाय्यगतस्य पयसो धर्मा इति चेत्। न, घृतेऽप्यग्निसम्पर्केण द्रवत्वसद्भावादशुक्लवर्णत्वादाज्यधर्माणामुत्पवनादीनां सम्भवात् पयसो धर्माणां दोहनादीनामसम्भवाच्चोपांशुयागगतस्याज्यस्य धर्माः कर्त्तव्याः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः॥ ०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे द्वितीयः प्रपाठकः सम्पूर्णः॥ ०॥

ॐ तत्सत्॥

## अथ तैत्तिरीयसंहिताभाष्ये

### द्वितीयकाण्डे तृतीयप्रपाठकः ।

हरिः ॐ ।

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रतिनुदन्ते योऽलं भूत्यै सन् भूतिं न प्राप्नोत्यादित्यानेव भुवद्वतः स्वेन भागधेयेनोपधावति त एवैनं भूतिं गमयन्ति भवत्येवादित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वापरुध्यमानो वादित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वतः ॥ १ ॥

स्वेन भागधेयेनोपधावति त एवैनं विशि दाध्रत्यनपरुध्यो भवत्यदितेऽनुमन्यस्वेत्यपरुध्यमानोऽस्य पदमाददीतेयं वा अदितिरियमेवास्मै राज्यमनुमन्यते सत्याशीरित्याह सत्यामेवाशिषं कुरुत इह मन इत्याह प्रजा एवास्मै समनसः करोत्युप प्रेत मरुतः ॥ २ ॥

सुदानव एना विश्पतिनाभ्यमुꣳ राजानमित्याह मारुती वै विड् ज्येष्ठो विश्पतिर्विशैवैनꣳ राष्ट्रेण समर्धयति यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेच्छुक्लाꣳश्च कृष्णाꣳश्च विचिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवावगच्छति ॥ ३ ॥

अवगतास्य विडनवगतꣳ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं वै राष्ट्रमुभे एव विशञ्च राष्ट्रञ्चावगच्छति यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्वपाम्यामुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या एवैनं भागधेयं प्रेप्सन्तो विशमव ॥ ४ ॥

गमयन्ति यदि नावगच्छेदाश्वत्थान्मयूखान् सप्त मध्यमेपायामुपहन्यादिदमहमादित्यान् बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्धवीरा विशमवगमयन्ति यदि नावगच्छेदेतमेवादित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्त्सन्नह्येदनपरुध्यमेवावगच्छत्याश्वत्था भवन्ति मरुतां वा एतदोजो यदश्वत्थ ओजसैव विशमवगच्छति सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमवगच्छति ॥ ५ ॥

धारयद्वतो मरुतो गच्छति विशमवैतदृष्टादश च ॥

॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत् तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपत् प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये ॥ १ ॥

प्रतितिष्ठति घृते भवत्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चैवास्मा अमृतञ्च समीची दधाति चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या एकधा ब्रह्मण उपहरत्येकधैव यजमान आयुर्दधात्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सौर्यं चरुं निरवपन् तेनैवास्मिन् ॥ २ ॥

रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ

सौर्यं चरुं निर्वपेदमुमेवादित्यꣳ स्वेन भागधेयेनोप-धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवत उभयत एवास्मिन् रुचं दधाति प्रयाजे प्रयाजे कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्मवर्चसमवरुन्ध आग्नेयमष्टाकपालं निर्वपेत्साविचं द्वादशकपालं भूम्यै ॥ ३ ॥

चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोपन-मेदिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हि-रण्यं तेनैवैनद्विन्दते साविचो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनꣳ हिरण्यं नमति वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एतां ॥ ४ ॥

एव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यध्यत* एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्या-ग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावि-चो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भव-त्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दतीन्द्रः ॥ ५ ॥

* व्यर्ध्यते इत्येकस्मिन् पुस्तके भूयसः पच्यते।

धारयद्वतो मरुतो गच्छति विश्रमवैतदष्टादश च॥

॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत् तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपत् प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये ॥ १ ॥

प्रतितिष्ठति घृते भवत्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चैवास्मा अमृतञ्च समीची दधाति चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या एकधा ब्रह्मण उपहरत्येकधैव यजमान आयुर्दधात्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सौर्यं चरुं निरवपन् तेनैवास्मिन् ॥ २ ॥

रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ

सौर्यं चरुं निर्वपेदमुमेवादित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवत उभयत एवास्मिन् रुचं दधाति प्रयाजे प्रयाजे कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्मवर्चसमवरुन्ध आग्नेयमष्टाकपालं निर्वपेत्सावित्रं द्वादशकपालं भूम्यै ॥ ३ ॥ ५

चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोपनमेदिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनꣳ हिरण्यं नमति वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एतां ॥ ४ ॥

एव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत* एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दतीन्द्रः ॥ ५ ॥

* व्यर्ध्यते इत्येकस्मिन् पुस्तके भूयसः पठ्यते।

त्वष्टुः सोममभीषहापिबत् स विष्वङ् व्यार्च्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतꣳ सौमेन्द्रꣳ श्यामाकं चरुं निरवपत् तेनैवास्मिन्निन्द्रि-यꣳ सोमपीथमदधात् वि वा एष इन्द्रियेण सोमपी-थेनर्ध्यते यः सोमं वमिति यः सोमवामी स्यात् तस्मै॥ ॥ ६ ॥

एतꣳ सौमेन्द्रꣳ श्यामाकं चरुं निर्वपेत् सोमञ्चैवे-न्द्रञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियꣳ सोमपीथं धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते यत् सौम्यो भवति सोमपीथमेवावरुन्धे यदैन्द्रो भवती-न्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमवरुन्धे श्यामाको भवत्येष वाव स सोमः ॥ ७ ॥

साक्षादेव सोमपीथमवरुन्धेऽग्नये दात्रे पुरोडाश-मष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादश-कपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति वृद्धा-निन्द्रः प्रयच्छति दधि मधु घृतमापो धाना भवन्त्येत-द्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवरुन्धे पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि

मन्द्रद्दौ प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्रजनयत्यात्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्रदधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनवरुन्धे ॥ ९ ॥

इन्द्रियेऽस्मिन् भूम्या एतामिन्द्रः स्यात् तस्मै सोमो बहुरूपा हि पशव एकचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

---

देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामास्तेषाꣳ सोमꣳ राजानं यश आर्च्छत् स गिरिमुदैत् तमग्निरनूदैत् तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत् तावब्रवीद्याजयतं मेति तस्मा एतामिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं तयैवास्मिन् तेजः ॥ १ ॥

इन्द्रियं ब्रह्मवर्चसमधत्तां यो यज्ञविभ्रष्टः स्यात् तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकाद-

शकपालꣳ सौम्यं चरुं यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेनाग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेपयेत् तेजश्चैवास्मिन् ब्रह्मवर्चसञ्च समीची ॥ २ ॥

दधात्यग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोपधावति सैवैनं कामेन समर्धयत्युपैनं कामो नमत्यग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोपधावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव ॥ ॥ ३ ॥

भवति यदष्टाकपालस्तेनाग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् रेतो वाजिनं दधाति न क्लीबो भवति ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामः ॥ ४ ॥

ब्रह्मणस्पतिमेव स्वेन भागधेयेनोपधावति स एवा-स्मै सजातान् प्रयच्छति ग्राम्येव भवति गणवती या-ज्यानुवाक्ये भवतः सजातैरेवैनं गणवन्तं करोत्येता-मेव निर्वपेद्यः कामयेत ब्रह्मन् विशं विनाशयेयमिति मारुती याज्यानुवाक्ये कुर्याद् ब्रह्मन्नेव विशं विना-शयति ॥ ५ ॥

तेजः समीची ब्रह्मवर्चस्येव ग्रामकामस्त्रिंचत्वा-रिंशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीय-प्रपाठके तृतीयोऽनुवाकः ॥ * ॥

श्रीवेदव्यासाय नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
काम्येष्टयः श्रुताः काश्चिद् द्वितीये तु प्रपाठके ।
तृतीये तु विधास्यन्ते तत्तत्फलमभीप्सिनः* ॥
काम्येष्टित्वे समानेऽपि सम्प्रदायकृता भिदा† ।
प्रपाठकद्वयस्यैवं चतुर्थस्यापि गम्यतां ॥

---

* अभीप्सित इत्यादर्शेषु पठ्यते ।
† कृताभिधेति पुस्तकद्वये पठ्यते ।

चतुर्दशानुवाकाः स्युस्तृतीयेऽस्मिन् प्रपाठके।
तदर्थास्तु क्रमेणेह वक्ष्यन्तेऽवसरे सति॥
भूतिकामो भुवद्वद्य आदित्येभ्यश्चरुं चरेत्।
रुद्धोऽवरुध्यमानो वा धारयद्वद्य आचरेत्॥
शुक्लैर्व्रीहिभिरादित्यं चरुं कृष्णैस्तु वारुणं।
रुध्यमानः प्रकुर्वीत मयूखानां च कीर्तनं॥
तद्वन्धनं तथादित्यं चरुमेव समाचरेत्।
आद्यानुवाके कथितमेतत्सर्वं विशेषतः॥
इन्द्रं वो विश्व इत्यत्राचरार्थस्तूपवर्णितः।
मृत्योर्भीतस्त्वायुरर्थे निर्वपेच्छतकृष्णलां॥
ब्रह्मवर्चसकामो यः स सौर्यं चरुमाचरेत्।
हिरण्यकामः कुर्वीत ह्याग्नेयादिहविस्त्रयं॥
हिरण्यलाभे तन्नाशेऽप्येतदेव समाचेत्।
सोमवामी तु सौमेन्द्रं चरुं श्यामाकतश्चरेत्॥
पश्वर्थं ह्यग्नये दात्र इत्यादि त्रयमाचरेत्।
अनुवाके द्वितीयेऽर्था एतावन्त उदीरिताः॥
हिरण्यगर्भ इत्यत्राचरार्थः स्पष्टमीरितः।

अथ तृतीयेऽनुवाके यज्ञविभ्रष्टादीनामिष्टयो विधातव्याः। तत्रादौ यज्ञविभ्रष्टेष्टिविधानाय प्रस्तौति "देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामास्तेषाꣳ सोमꣳ राजानं यश आर्च्छत् स गिरिमुदैत् तमग्निरनूदैत् तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनुपरैत् तावब्रवीद्याजयतं मेति तस्मा एता-

मिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं तयैवास्मिन् तेज इन्द्रियं ब्रह्मवर्चसमधत्ताम्'' इति। ऋद्ध्या काम्यमानेन यशोलक्षणेन फलेन परिमितं सत्रमनुष्ठितवन्तः। सन्ति सहस्रसत्राणि तेषु येन यशः सिध्यति तदन्वतिष्ठन्। तेषां देवानां मध्ये फलीभूतं यशः सोमं प्राप्नोत्। स च सोमोऽन्येषां यशो मा भूदिति मन्वानस्तेन यशसा सह गिरिं कञ्चिद्दुर्गं पर्वतमारोहत्, अग्निश्च सहसा तस्य पृष्ठत एवारोहत्। तौ द्वावग्नीषोमौ परस्परमैकमत्यं गतौ। ततस्तावुभावनु फलरहित इन्द्रश्चिरकालेन गत्वा मां फलाय याजयतमिति प्रार्थयामास। तौ च तस्मै त्रिहविष्कामिष्टिं निरवपतां तैस्त्रिभिर्हविर्भिस्तेजआदिकं त्रयं लब्धं। अथ विधत्ते ''यो यज्ञविभ्रष्टः स्यात् तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेन'' इति। इष्टिपशुसोमानां स्वस्वकालेष्वननुष्ठानं भ्रेषः तं भ्रेषं प्राप्तस्येयमिष्टिः। अत्रैव कञ्चिद्विशेषं विधत्ते। ''आग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत् तेजश्चैवास्मिन् ब्रह्मवर्चसञ्च समीची दधाति'' इति*। तेन समाश्लेषणेनास्मिन् यजमान आज्ञाशक्तिः

---

* अत्र तै० पुस्तके यत् पठ्यते तद्भ्रान्तमिवाभाति। 'एतच्च सूत्रकारेणैव व्याख्यातं संहितानि हवींष्यधिश्रयेदित्यर्थोपो (?) वास्मिन् समाश्लेषयेदिति। संहित्यपक्ष आग्नेयं सौम्यश्चेति द्वितीया द्रष्टव्या। पक्षान्तरे लेपादित्यध्याहार'।

श्रुताध्ययनसम्पत्तिस्वेत्येते सम्पूर्णे स्थापयति। कामितार्थसिद्ध्यर्थमिष्ट्यन्तरं विधत्ते। "अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोपधावति सैवैनं कामेन समर्धयत्युपैनं कामो नमति" इति। अग्निना सह मुखे जातत्वात् सोमपाहत्वाच्च* तदुभयं ब्राह्मणस्य देवता। ब्रह्मवर्चसार्थं श्यामाकपुरोडाशं विधत्ते "अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोपधावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति यदष्टाकपालस्तेनाग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै" इति। कपालगतयाष्टसङ्ख्यया गायत्रीस्मरणात् तद्द्वारेण हविष आग्नेयत्वं, अष्टाक्षरा गायत्री गायत्रोऽग्निरिति श्रुत्यन्तरात्। तथा सोमो वा अकृष्टपच्यस्य राजेत्यादिश्रुतेः श्यामाकधान्येन हविषः सौम्यत्वं। अनेनैवार्थवादेन विधिवाक्ये पुरोडाशस्य श्यामाकमयत्वमुन्नेयं। क्लीबत्वपरिहारायेष्टिं विधत्ते "सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोपधावति स एवास्मिन् रेतो वाजिनं दधाति न क्लीबो भवति" इति। प्रजननसमर्थोऽन्नरसो वाजः, तद्वते वाजिने, यदा वाजिनं प्रजननसमर्थान्नरसरूपं रेतोऽस्मात् पुरुषादपक्रामति रोगेणादृष्टविशेषेण वा तत् सामर्थ्यं प्रतिबध्यते

---

* सोमपातत्वादिति तै०।

तदानीमस्य क्लीबत्वं सम्पद्यते तस्मात् क्लीबत्वात् बिभाय बिभेति। इष्ट्यन्तरं विधत्ते "ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामो ब्रह्मणस्पतिमेव स्वेन भागधेयेनोपधावति स एवास्मै सजातान् प्रयच्छति ग्राम्येव भवति" इति। अत्र 'गणानां त्वा' 'स इज्जनेन' इत्येते ऋचावन्यानुवाके समाम्नास्यमाने विधत्ते "गणवती याज्यानुवाक्ये भवतः सजातैरेवैनं गणवन्तं करोति" इति। गणशब्दो ययोर्ऋचोरस्ति ते गणवत्यौ। यदा वैश्यजातिर्धनिकत्वगर्वेण ब्राह्मणमतिक्रामति तदा तस्मिन् ब्राह्मणे तां जातिं वश्यां कर्तुं तामेवेष्टिं विधत्ते "एतामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं विनाशयेयमिति" इति। ब्रह्मन् ब्राह्मणे विनाशयेयं गर्वविनाशनेनात्मसात्कुर्यां। 'मरुतो यद्ध वो दिवो' 'या वः शर्म' इत्येते ऋचौ 'वैश्वानरो न ऊत्या' इत्यस्मिन्ननुवाके समाम्नाते अत्रापि प्रतीकेन गृहीष्येते। तदुभयमत्र विधत्ते "मारुती याज्यानुवाक्ये कुर्याद्ब्रह्मन्नेव विशं विनाशयति" इति। मरुतां सम्बन्धिन्यौ मारुत्यौ। मरुतो वै देवानां विश इति श्रुतेस्तदनुग्रहेण मानुषीं विशमधीनां करोति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः॥ ० ॥

अर्यम्णे चरुं निर्वपेत् सुवर्गकामोऽसौ वा आदित्योऽर्यमार्यमणमेव स्वेन भागधेयेनोपधावति स एवैनꣳ सुवर्गं लोकं गमयत्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमार्यमणमेव स्वेन भागधेयेनोपधावति स एव ॥ १ ॥

अस्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्त्यर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमार्यमणमेव स्वेन भागधेयेनोपधावति स एवैनं तद्गमयति यत्र जिगमिषतीन्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निः ॥ २ ॥

अवपत्तेनैवैनमग्रं देवतानां पर्यणयद्बुध्नवती अग्रवती याज्यानुवाक्ये अकरोद्बुध्नादेवैनमग्रं पर्यणयद्यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोपधावति स एवैनमग्रꣳ समानानां परिणयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं ॥ ३ ॥

परि॑णयत्यानुपू॒र्को भ॑वत्य॒ेषा ह्ये॑तस्य॑ दे॒वता य आ॑नुजाव॒रः सम॑ृ॒द्ध्यै यो ब्रा॑ह्मण आ॑नुजाव॒रः स्यात्तस्मा॑ ए॒तं बा॑र्ह॒स्पत्यमानुपू॒र्कं च॒रुं नि॒र्वपे॒द् बृह॒स्पति॑मेव॒ स्वेन॑ भाग॒धेये॒नोप॑धावति॒ स ए॒वैन॑मग्र॒ꣳ॑ समा॒ना॒नां॑ परि॑णयति बुध्न॑वती॒ अग्र॑वती या॒ज्या॒नुवा॒क्ये॑ भवतो बु॒ध्नादे॒वैन॒मग्र॒ं परि॑णयत्यानुपू॒र्को भ॑वत्य॒ेषा ह्ये॑तस्य॑ दे॒वता य आ॑नुजाव॒रः सम॑ृ॒द्ध्यै ॥ ४ ॥

ए॒व नि॒रग्र॑मे॒तस्य॒ चत्वा॑रि च ॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीये पञ्चविंशेष्टा यः कामं प्राप्तुमिच्छति ।
ब्रह्मवर्चसकामो यः क्लीबत्वाद्यो बिभेति च ॥
ग्रामकामो ब्राह्मणो यो विशः स्थापनमिच्छति ।
एतेषामिष्टयः प्रोक्तास्तत्तत्फलसमाप्तये ॥

अथ चतुर्थे स्वर्गकामादीनामिष्टयो विधातव्याः । तत्र स्वर्गार्थिन इष्टिं विधत्ते "अर्यम्णे चरुं निर्वपेत् सुवर्गकामोऽसौ वा आदित्योऽर्यमार्यमणमेव स्वेन भागधेयेनोपधावति स एवैनꣳ सुवर्गं लोकं गमयति" इति । प्रतिग्रहार्थिनस्तामेवेष्टिं विधत्ते "अर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सो-

ऽर्यमार्यमणमेव स्वेन भागधेयेनोपधावति स एवास्मै दान-कामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्ति" इति। लोके यः कोऽपि द्रव्यं ददाति सोऽयं सूर्यवत् कीर्त्या भास-मानत्वादर्यमेत्युपचर्यते। तं प्रेरयितुं मुख्यायार्यम्णे चरुर्यु-क्तः। सभां जिगमिषोरिष्टिं विधत्ते "अर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमार्य-मणमेव स्वेन भागधेयेनोपधावति स एवैनं तद्गमयति यत्र जिगमिषति" इति। स्वस्ति निर्विघ्नेन, जनतां जनसमूहं। यः समानानां मध्ये श्रैष्ठ्यमलभमानस्तदीयानुजादवरो निकृष्टो वर्तते तस्य श्रैष्ठ्यप्राप्त्यर्थमिष्टिं विधातुं प्रस्तौति "इन्द्रो वै देवानामनुजावर आसीत् स प्रजापतिमुपाधावत्तस्मा एतमै-न्द्रमानुषूकमेकादशकपालं निरवपत्तेनैवैनमग्रं देवतानां पर्य-णयद्बुध्नवती अग्रवती याज्यानुवाक्ये अकरोद्बुध्नादेवैनमग्रं पर्य-णयत्" इति। अनु पश्चाज्जातो भ्रातानुजः तस्मादप्यवरोऽनु-जावरः, तद्वद्वर्त्तमान आनुजावरः अत्यन्तनिकृष्ट इत्यर्थः। व्रीहिस्तम्बेषु लूनेष्ववशिष्टमूलेभ्योऽनुसृयन्ते पश्चादुत्पद्यन्त इति द्वितीयफलरूपा व्रीहयोऽनुषूकाः। तेभ्यो निष्पन्नमानुषूकं, तेन हविषा प्रजापतिर्देवतानां मध्ये इन्द्रं श्रैष्ठ्यं प्रापितवान्। बुध्नशब्दोऽस्ति ययोर्ऋचोस्ते बुध्नवत्यौ। अग्रशब्दोऽस्ति ययो-र्ऋचोस्ते अग्रवत्यौ। 'बुध्नादग्रं' 'बुध्नादग्रेण' इत्येते अन्यानुवाके समाम्नास्यमाने। बुध्नान्मूलादारभ्याग्रमवसानं प्रापयत्, कर्मा-नुष्ठानकालमारभ्य यावज्जीवं श्रैष्ठ्यं प्रापितवानित्यर्थः। अथ

विधत्ते "यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोपधावति स एवैनमग्रꣳ समानानां परिणयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परिणयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै" इति। यो मानुष आनुजावरः एतस्येयमानुषूकधान्यभागिन्येव देवता युक्ता सदृशत्वात्, तस्मादानुषूकपुरोडाशः समृद्ध्यै सम्पद्यते। आनुजावरब्राह्मणस्येष्टिं विधत्ते "यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोपधावति स एवैनमग्रꣳ समानां परिणयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परिणयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै" इति। अत्र 'प्र यो जज्ञे' 'महान्महो' इति द्वे याज्यानुवाक्ये। 'स बुध्नादाष्ट जनुषाभ्यग्रं' इति बुध्नाग्रशब्दयोस्तत्र विद्यमानत्वात्॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः॥०॥

---

प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर आसन् ताः सोमाय राज्ञेऽददात् तासाꣳ रोहिणीमुपैत् ता ईर्ष्यन्तीः पुनरगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीदृतममीष्व यथा समावच्छ उपै-

ष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत् ता अस्मै पुनरददात् तासाꣳ रोहिणीमेवोप ॥ १ ॥

ऐत्तं यक्ष्म आर्च्छद्राजानं। यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एतं ॥ २ ॥

आदित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन् यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोपधावति त एवैनं पापात् स्रामान्मुञ्चन्त्यमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वाप्याययति नवोनवो भवति जायमान इति पुरोऽनुवाक्या भवत्यायुरेवास्मिन् तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्याययति ॥ ३ ॥

एवोपैतमस्मिन् त्रयोदश च ॥ ५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

स्वर्गकामो दानकामः सभां गन्तुं य इच्छति।
राजन्यो ब्राह्मणश्च द्वौ यौ स्यातामानुजावरौ॥
चतुर्थानुवाक एतेषामाम्नाता इष्टयः क्रमात्।

पञ्चमे राजयक्ष्मगृहीतस्येष्टिं विधातुं प्रस्तौति "प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर आसन् ताः सोमाय राज्ञेऽददात् तासाꣳ रोहिणीमुपैत् ता ईर्ष्यन्तीः पुनरगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत् ता अस्मै पुनरददात् तासाꣳ रोहिणीमेवोपैत् तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत्पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एतमादित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन्" इति। 'अम्बा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती चुपुणीका' (सं॰का॰४।प्र॰४) इत्येवमाम्नाताः सप्त कृत्तिकाः, अवशिष्टा अश्विन्यादयः षड्विंशति तारकास्ता एतास्त्रयस्त्रिंशत्, तत्र रोहिणीव्यतिरिक्ता ईर्ष्यन्तीस्तदीयं सुखमसहमानाः पुनः प्रजापतिमगच्छन् सोमस्ता अनुगम्य प्रजापतिं याचितवान्। स प्रजापतिरेवमब्रवीत् शपथं प्रतिपद्यस्व तद्यथा समावच्छः समस्येन ता उपैष्यामीति, ततस्ताः पुनर्दास्यामीति। स च सोमः शपथं कृत्वा ताः स्वीकृत्य शपथमुल्लङ्घ्य पूर्ववद्रोहिणीमेवोपैत्

ततः स यक्ष्मव्याधिगृहीतोऽभूत्। ततो राजानं यक्ष्मः प्राप्तवानिति व्युत्पत्त्या राजयक्ष्मनाम्नो व्याधेर्जन्म सम्पन्नं। यस्मादयं सोमः पापीयान् तस्मादेतत्प्राप्त्या पापयक्ष्मस्य जन्म सम्पन्नं। यस्माज्जायाभ्यो निमित्तभूताभ्यो व्याधिमलभत तस्मात् जायेन्यनामकस्य व्याधेर्जन्म सम्पन्नं। त एते त्रयः त्रयव्याधेरवान्तरविशेषाः, तज्जन्मवेदिनो व्याधेरलाभः फलं। ततः सोमेन नमस्कृताः सेवितास्तैताः सर्वाः साम्येनोपगमनं वरं कृत्वा व्याधिपरिहाराय चरुं निरुप्य सोमं तस्मात् पापात् स्रामात् *प्रबलाद्रोगादमोचयन्। इदानीं विधत्ते "यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोपधावति त एवैनं पापात् स्रामान्मुञ्चन्ति" इति। आदित्यानित्यर्थवादे श्रवणादस्य चरोरदितिर्देवता न भवति। पौर्णमासीं वारयितुं विधत्ते "अमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वाप्याययति" इति। अमावास्यायामतीतायां शुक्लप्रतिपदमारभ्य सोमस्य कलावृद्ध्याप्यायनं भवति। चतुर्थप्रपाठकस्याष्टमानुवाके समाम्नास्यमाने ऋचौ विधत्ते "नवो नवो भवति जायमान इति पुरोऽनुवाक्या भवत्यायुरेवास्मिन् तया दधाति यमादित्या अंशुमाप्याययन्तीति †याज्यैवैनमेतया प्याययति" इति। ते एते ऋचौ तत्रैव व्याख्यास्येते। प्रथमायामृच्यन्ते दीर्घमायुस्तिरती-

* सोमप्रतिबन्धाद्रोगादिति तै०।

† याज्या। आ। एव। इति पदपाठः।

त्युक्तत्वात् तत्पाठेनायुःप्राप्तिः, अमावास्यायामादित्ये प्रविष्टानां चन्द्रकलानां पुनरादित्यादेव चन्द्रेण लब्धत्वाच्चन्द्रोत्कर्ष आदित्यस्यैवोत्कर्ष इति कृत्वा तस्या ऋच आदित्यचरावैयधिकरण्यं। द्वितीयस्यामृच्याप्याययन्तीति श्रवणात् तया ऋचा यजमानस्याप्यायनं युक्तं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः॥ ० ॥

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमान् लोकानभ्यतिरिच्यातै तन्ममासदिति तदिमान् लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिराजमिन्द्रꣳ स्वराजानं ततो वै स इमान् लोकाꣳस्त्रेधादुहत् तत्त्रिधातोस्त्रिधातुत्वं यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशं॥ ॥ १ ॥

एकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति यथा वत्सेन

प्रत्तां गां दुह एवमेवेमान् लोकान् प्रत्तान् काममन्नाद्यं दुह उत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तर उत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै सर्वेषामभिगमयन्नवद्यत्यच्छम्बट्कारं व्यत्यासमन्वाहानिर्दाहाय॥ २॥

पुरोडाशं त्रयः पञ्चविंशतिश्च॥ ६॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः॥ * ॥

इष्टिर्यज्ञगृहीतस्य पञ्चमे समुदीरिता।

षष्ठे त्वन्नादनशक्तिकामस्येष्टिं विधातुं प्रस्तौति "प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमान् लोकानभ्यतिरिच्यातै तन्ममाऽसदिति तदिमान् लोकानभ्यत्यरिच्यतेन्द्रं राजानमिन्द्रमधिराजमिन्द्रं स्वराजानं ततो वै स इमान् लोकांस्त्रेधादुहत् तत्त्रिधातोस्त्रिधातुत्वं" इति। प्रजापतिरत्तुं योग्यमन्नं देवेभ्यो विभज्य तवेदं तवेदमित्यादिशत्, तस्मादन्नं स्वीकर्तुं प्रवृत्तान् देवान् प्रत्येवमब्रवीद्यदन्नमिमान् लोकानभिव्याप्यातिरिक्तं भवति तन्ममास्त्विति तदवद्यमाणमन्नमिमान् लोकानभिव्याप्यातिरिक्तमासीत्। क इमे लोका इत्युच्यते। इन्द्रराजादिशब्दाभिधेया एवेमे लोकाः, इन्द्रराजादीनां

पृथिव्यादिलोकत्रयपालकत्वात्। एवमुक्त्वा स प्रजापतिरिन्द्रराजादीन् लोकान् त्रेधाऽदुहत्, तेभ्यो लोकेभ्यस्त्रिविधं सारं गृहीतवानित्यर्थः। तदिदं सारं प्रजापतिः स्वप्रियत्वेन स्वीकृतवान्। लोकातिरिक्तमन्नं यस्मात् त्रेधा दोहनमकरोत् तस्मात् त्रिधातुनाम्नो यागस्य त्रिधातुत्वं सम्पन्नं। लोकेभ्यो दुग्धास्त्रयो धातवो भागा यस्मिन् यागे स यागस्त्रिधातुः। अथ विधत्ते "यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोपधावति त एवास्मा अन्नं प्रयच्छन्त्यन्नाद एव भवति यथा वत्सेन प्रत्तां गां दुह एवमेवेमान् लोकान् प्रत्तान् काममन्नाद्यं दुहे" इति। यं यजमानमुद्दिश्याध्वर्युः कामयेत अयं यजमानः अन्नादः स्यादिति तस्मै यजमानायेयमिष्टिः। अयं भूलोकाधिपतिरिन्द्रो राजा। अयमन्तरिक्षाधिपतिरिन्द्रोऽधिराजः। असौ स्वर्गलोकाधिपतिरिन्द्रः स्वराट्। इमानेव लोकान् लोकाधिपतीन् इन्द्रराजादीन् स्वेन भागधेयेन सेवते। यथा लोके वत्सेन वत्सरोपणेन प्रत्तां प्रस्नवनं प्रापितां गां जनो दोग्धि, एवमेवेमान् लोकान् प्रत्तान् देवैरभिवर्धितान् प्राप्य स्वाभीष्टमन्नाद्यं दोग्धि लभते। अत्र यदुक्तं सूत्रकारेण 'अथैनं त्रिधातुमेकादशसूत्तानेषु कपालेष्वधिश्रयति प्रथमं पुरोडाशमधिश्रित्य परितपनान्तं कृत्वा तस्मिन्नुपरि द्वितीयं ज्यायांसमधिश्रित्य

तावदन्तमेव कृत्वा तस्मिन्नुत्तरं ज्यायांसमधिश्रयति प्रचरण-कालै दक्षिणार्धात् प्रथमां देवतां यजेन्मध्यात् द्वितीयामुत्त-रार्धात् तृतीयां सर्वेषामभिगमयन्नवद्यति' इत्युक्तं। प्राच्यां दिशि त्वमिन्द्रेति तिस्र ऋचो व्यत्यासमन्वाह 'प्रथमामनूच्य म-ध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेदेवं सर्वा याज्याः पुरोऽनुवाक्यास्तु भवन्ति' इति। तत्राधि-श्रयणं विधत्ते "उत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय" इति। प्रकृतावधोमुखानां कपालानामुपरि पुरोडाशावधि-श्रयति। अत्रापि तथात्वे यातयामत्वं गतसारत्वं स्यात्, तत्परि-हारायोत्तानत्वं। पुरोडाशसङ्ख्यां प्रशंसति "त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै" इति। ज्याय-स्त्वं विधत्ते "उत्तर उत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै" इति। भूलोकादन्तरिक्षं ज्यायः, तस्मादपि स्वर्गो ज्यायान्। ऊर्द्धाधोभावेन स्थापितानां सर्वेषां पुरोडाशा-नामंशमभिलक्ष्य यथा युगपदेव हस्तप्राप्तिर्भवति तथाव-दानं विधत्ते "सर्वेषामभिगमयन्नवद्यत्यच्छम्बट्कारं" इति। छ-म्बट्कारो वैयर्थ्यं, एकस्यापि पुरोडाशस्य यथा वैयर्थ्यं न भवति तथेत्यर्थः। याज्यानुवाक्यासु विपर्यासं विधत्ते "व्यत्यासमन्वा-हानिर्दाहाय" इति। हविरविनाशायेत्यर्थः। व्यत्यासाभावे ह्यृचां चित्वाद्धवींषि विनश्येरन्, एकैकस्य हविषः पृथग्याज्या-नुवाक्ययोः सम्पादयितुमशक्यत्वात्। सूत्रोक्तप्रकारेण तु व्य-त्यासेन षडृचः सम्पद्यन्त इति नास्ति हविर्नाशः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपायन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत्तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत्तयैवास्मिन्निन्द्रियं वीर्यमदधाद्य इन्द्रियकामः ॥ १ ॥

वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोपधावति ता एवास्मिन्निन्द्रियं वीर्यं दधति यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवावरुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवावरुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तत् ॥ २ ॥

एवावरुन्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवावरुन्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवावरुन्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेज-

स्तदेवावरुन्ध एतावन्ति वै तेजांसि तान्येवावरुन्ध उत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशः ॥ ३ ॥

भवति वैश्वदेवत्वाय समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति व्यत्यासमन्वाहानिर्दाहायाश्व ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृषत्वायैतयैव यजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य* मनुष्याः ॥ ४ ॥

इन्द्रियकामः सवितुस्तेजस्तत्पुरोडाशोऽष्टाचिंशच ॥ ७ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

षष्ठेऽन्नादनकामस्य त्रिधातुर्याग ईरितः।

अथेन्द्रियसामर्थ्यं शरीरसामर्थ्यञ्च कामयमानस्येष्टिं विधातुं प्रस्तौति "देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपायन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत्तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया

* अदन्ति। उ। एव। अस्य। इति पदपाठः।

सर्वपृष्ठयायाजयन्त्यैवास्मिन्निन्द्रियं वीर्यमदधात्" इति। परा-जिग्याना: पराजयं प्राप्नुवन्तो देवा असुराणां सम्बन्धि वैश्यं प्राप्ता:, विशो भावो वैश्यं, असुरसेवकप्रजारूपत्वमित्यर्थ:। तदानीं तेषां यदिन्द्रियसामर्थ्यं यच्छरीरसामर्थ्यं तदुभयं तेभ्यो देवेभ्यो ऽपाक्रामत्। इन्द्रस्तद्विदित्वा तत्सामर्थ्यद्वयमनु स्वयमवरुधं अव-रोद्धुमपाक्रामत्, गत्वा च तदवरोद्धुं नाशक्नोत्। तदानीमि-न्द्रोऽस्मात् सामर्थ्यद्वयादभिप्राप्तार्धः सन्नचरत्। तत इतरार्ध-प्राप्त्यर्थं प्रजापतिमुपसेव्य सर्वपृष्ठयेष्ट्या सम्पूर्णं प्राप्तवान्। रथ-न्तरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यानि* सर्वाणि पृष्ठस्तो-त्राणि तैर्युक्त इन्द्रोऽत्र देवता तस्मादियमिष्टिः सर्वपृष्ठा नात्र स्तोत्रपाठः प्रयोक्तव्यः किन्तु स्तोत्राभिज्ञत्वं देवताया वि-शेषणं। इदानीं विधत्ते "य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेये-नोपधावति ता एवास्मिन्निन्द्रियं वीर्यं दधति" इति। रथ-न्तरादिगुणविशिष्टाः षडिन्द्रविशेषाः एता एव देवता इत्युच्य-न्ते। तान् देवताविशेषान् विधत्ते "यदिन्द्राय राथन्तराय नि-र्वपति यदेवाग्नेस्तेजस्तदेवावरुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवावरुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदे-वावरुन्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवावरुन्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवावरुन्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवावरुन्धे एतावन्ति वै ते-

---

* ०रैवतानि स्तोमानीति तै०।

आꣳसि तान्येवावरुन्धे" इति। पृष्ठस्तोत्रनिष्पादकं रथन्तरं साम वेत्तीति राथन्तरः, एवं बार्हतादिषु योज्यं। अग्नीन्द्रादीनां रथन्तरादिसामाभिमानित्वाद्राथन्तरत्वादिविशेषणैस्तदीयतेजःप्राप्तिर्भवति। पूर्वोक्तत्रिधाताविव विशेषं विधत्ते "उत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय" इति। अत्र निर्वापविधिभेदात् पुरोडाशषट्कप्राप्तेस्तदपवादायैकत्वं विधत्ते "द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय" इति। अन्यत्र वैश्वदेवं द्वादशकपालं ग्रामकाम इत्यादिविधानात् कपालगतद्वादशसङ्ख्या विश्वेषां देवानां प्रिया। अतोऽत्रापि यथोक्तगुणविशिष्टानां विश्वेषामिन्द्रादिदेवानां प्रीतिर्भवति। यदुक्तं सूत्रकारेण 'सर्वपृष्ठां निर्वपति यदिन्द्राय राथन्तरायेति यथा समाम्नातं। द्वादशसूत्तानेषु कपालेष्वधिश्रयति प्रचरणकाले पूर्वार्धात् प्रथमां देवतां यजत्येवमितराः प्रदक्षिणमुत्तरापवर्गं समन्तं पर्यवद्यतीत्युक्तं। 'अभि त्वा शूर नोनुमः' इति षड्टचो व्यत्यासमन्वाह' इति, 'कदाचन स्तरीरसि' इति चतुर्थं दधातीति च। तत्र पूर्वार्धादित्यादिनोक्तं सर्वतोऽवदानं विधत्ते "समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति" इति। चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमानानां 'अभि त्वा शूर नोनुमः' इत्यादीनां पञ्चानामृचां चतुर्थत्वेन प्रक्षिप्यमाणायाः 'कदाचन स्तरीरसि' इत्यस्याश्च पूर्वोक्तत्रिधातुन्यायेनैकैकस्याः पुरोऽनुवाक्यात्वं याज्यात्वञ्च विधत्ते "व्यत्यासमन्वाहानिर्दाहाय" इति। चोदकप्राप्तामन्वाहार्यदक्षिणां बा-

धितुं विधत्ते "अश्व ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृषलाय" इति। अविजातः पुमान् वृष्णिः। अजजातः पुमान् बस्तः। वृषलाय पुंस्त्वाधिक्याय। मिथ्यापवादपरिहारार्थं तामेवेष्टिं विधत्ते "एतयैव यजेताभिशस्यमान एतास्वेदा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः" इति। एता राथन्तरेन्द्रादयो देवताः अस्यान्नं पुरोडाशरूपं यद्यदन्ति तदानीं मनुष्याः सर्वथाप्यदन्त्येव। वेदमनूच्याचार्योऽन्तेवासिनमनुशास्तीत्यादौ शिष्यानुशासने शिष्यस्य मिथ्यापवादयुक्तेषु व्यवहारसन्देहे सति शिष्टाचारेण निर्णय आम्नातः। यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथा इति। यथा मनुष्येष्वपि शिष्टानामाचारो नियामकस्तथा देवतानामाचारो नियामक इति किमु वक्तव्य इत्यभिप्रेत्य अदन्त्युवेवेत्यवस्थापितं।

अथ मीमांसा। तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

"रथन्तरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते।
पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा॥
भिद्येत कर्मणां भेदाच्चोदकैः पृथगुक्तितः।
शेषस्य सर्वतुल्यत्वात् तत्कार्यं सकृदिष्यतां॥

इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदिति विहितायामिष्टौ षडिन्द्रा एवं श्रूयन्ते 'इन्द्राय राथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्करायेन्द्राय रैवताय' इति। तत्र स्वरूपेणैकोऽपीन्द्रः पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथन्तरादिसाम्नां सम्बन्धेन

विशेष्यमाणः षोढा भिद्यते, तासां सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते 'द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय' इति। तस्मिन् पुरोडाशे उक्तदेवताभ्यः पृथक्-प्रदानाय बहुभ्यः प्रदेशेभ्योऽवदानं श्रूयते 'सममन्तं पर्य-वद्यति' इति। तत्र देवताभेदेन प्रदानभेदेन च कर्मणां भेदे सति चोदकैः पृथगतिदेशात् स्विष्टकृदिडादिशेषकार्यं षट्-कृत्वः पृथक्कर्तव्यमिति चेत्। मैवं, शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्कामसम्भवात्, तस्मात् सकृदेव कार्यं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन् चक्षुरदधाद्यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि॥ १॥

पश्यन्ति सूर्यस्य देवा अग्निञ्चैव सूर्यञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन् चक्षुर्धत्तश्चक्षुष्मानेव

भवति यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत्प्रतिदधाति यत्सायौ नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते समानो याज्यानुवाक्ये भवतः समानꣳ हि चक्षुः समृद्ध्या उदुत्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान् प्रयच्छति चक्षुरेवास्मै प्रयच्छति यदेव तस्य तत् ॥ २ ॥

वि ह्यष्टाविꣳशतिश्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

सप्तमे सर्वपृष्ठोक्ता वीर्यकामाभिशस्तयोः।

अथाष्टमे चक्षुष्कामस्य त्विट्विष्कामिष्टिं विधातुं प्रस्तौति "रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन् चक्षुरदधात्" इति। रजननामकः कश्चित्पुरुषः क्रतुजिन्नामकं पुरुषमयात् प्राप्नोत्, रजनः कुणेरपत्यं क्रतुजिज्जनकस्यापत्यं, स तु चक्षुर्वन्यश्चक्षुषो दृष्टेर्वननं सम्भजनं तदर्हतीति चक्षुर्वन्यः, रोगोपहतां दृष्टिं समाधातुं शक्त इत्यर्थः। अतो दृष्टिपाटवाय क्रतुजितं प्राप्य त्विट्विष्कयेष्ट्या तत्पाटवं प्राप्तवान्।

विधत्ते "यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या विपश्यन्ति सूर्यस्य देवा अग्निञ्चैव सूर्यञ्च स्वेन भागधेयेनोपधावति तावेवास्मिन् चक्षुर्धत्तश्चक्षुष्मानेव भवति" इति। भ्राजस्वते दीप्त्या आधिक्ययुक्ताय, उन्मेषनिमेषसद्भावान्मनुष्यदृष्टिरनित्या अग्निश्च कदाचिज्ज्वलति कदाचिदुपशाम्यतीति तस्मादनित्यत्वसाम्यलक्षणेन मनुष्यदृष्टेरग्नेश्च सम्बन्धः। देवानां त्वनिमिषत्वात् सूर्यप्रकाशवन्नित्या तदीया दृष्टिरित्यस्ति तस्याः सौर्यसम्बन्धः। आग्नेयद्वयमध्यवर्ति सौर्यं चरुर्द्वयमध्यवर्तिनासिकासाम्येन प्रशंसति "यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत्प्रतिदधाति यत् सौर्यो नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते" इति। तेनाग्नेयद्वयेनास्मिन् यजमाने चक्षुषोः प्रतिष्ठा, तेन सौर्येण नासिकायाः प्रतिष्ठा। नासिकया चक्षुषी विधृते परस्परमिश्रणाभावाय विविधत्वेन स्थापिते। अत्राग्नेयस्य प्रथमस्य 'उदग्ने शुचयस्तव शुक्रा' इति पुरोऽनुवाक्या। 'वि ज्योतिषा बृहता भात्यग्निः' इति याज्या। चरमस्य मन्त्रान्तरशङ्कां वारयितुं विधत्ते "समानी याज्यानुवाक्ये भवतः समानꣳ हि चक्षुःसमृद्ध्यै" इति। समानी एकविधे। यदुक्तं सूत्रकारेण 'चतुर्धाकरणकाले सौर्यात्त्रीन् पिण्डानुद्धृत्य 'उदु त्यं जातवेदसं' 'सप्त त्वा हरितो रथे' 'चित्रं देवानामुदगादनीकं' इति पिण्डान् यज-

मानाय प्रयच्छति तान् यजमानः प्राश्नाति' इति। तत्र त्रिभि-र्मन्त्रैः पिण्डदानं विधत्ते "उदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान् प्रयच्छति चक्षुरेवास्मै प्रयच्छति यदेव तस्य तत्" इति। उदु त्यं चित्रं देवानामित्येतदुभयं प्रथमकाण्डस्य चतुर्थप्रपाठके (अ० ४३) व्याख्यातं। सप्त त्वा हरित इत्येषा तूपरितनस्य प्रपाठकस्यान्त्या-नुवाके समाम्नास्यमानत्वात् तत्रैव व्याख्यास्यते। तस्य यजमा-नस्य रोगोत्पत्तेः पुरा यदेव चक्षुः पाटवोपेतमासीत् तत् पिण्ड-दानेन दत्तमेव भवति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः॥ ०॥

---

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चे-त्ता वसुविदामनमस्यामनस्य देवा ये सजाताः कु-माराः समनसस्तानहं कामये हृदा ते मां कामय-न्ताꣳ हृदा तान् म आमनसः कृधि स्वाहामनमसि॥ ॥१॥

आमनस्य देवा याः स्त्रियः समनसस्ता अहं कामये हृदा ता मां कामयन्ताꣳ हृदा ता म आमनसः कृधि स्वाहा वैश्वदेवीꣳ साङ्ग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति साङ्ग्रहणी भवति मनोग्रहणं वै सङ्ग्रहणं मन एव सजातानां ॥ २ ॥

गृह्णाति ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परिदधात्याशिषमेवैतामाशास्तेऽथो एतदेव सर्वꣳ सजातेष्वधिभवति यस्यैवं विदुष एते परिधयः परिधीयन्त आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवावरुन्धे त एनमवरुद्धा उपतिष्ठन्ते ॥ ३ ॥

स्वाहामनमसि सजातानाꣳ रुन्धे पञ्च च ॥ ९ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ * ॥

अष्टमे वृष्टिकामस्य चित्रविष्णोष्टिरीरिता।

अथ नवमे साङ्ग्रहणीष्टिं विधास्यन्नादौ चोदकप्राप्तान् 'गन्धर्वोऽसि विश्वावसुः' इत्यादिकान् परिधिमन्त्रानपवदितुं मन्त्रान्तराणि दर्शयति "ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवित्" इति। हे मध्यमपरिधे त्वं स्थिरोऽसि त्वदीयस्थापनेनाहमपि ज्ञातिषु मध्ये स्थिरो भूयासं। किञ्च धैर्यवान् अभिज्ञो धनवांश्च भूयासं। एवं दक्षिणोत्तरपरिधिमन्त्रयोर्व्याख्या। ज्ञातीनां प्रतिवादित्वराहित्यायाज्ञाधारित्वमुग्रत्वं, आज्ञामुल्लङ्घ्य प्रतिवादिनस्तिरस्कर्तृत्वमभिभूत्वं। परिधिमन्त्रानाम्नायोपहोममन्त्रान् पठति "आमनमस्यामनस्य देवा ये सजाताः कुमाराः समनसस्तानहं कामये हृदा ते मां कामयन्ताꣳ हृदा तान् म आमनसः कृधि स्वाहामनमस्यामनस्य देवा याः स्त्रियः समनसस्ता अहं कामये हृदा ता मां कामयन्ताꣳ हृदा ता म आमनसः कृधि स्वाहा" इति। अत्र सजाताः कुमारा इति पदभेदमवलम्ब्यावशिष्टानुषङ्गेण मन्त्रद्वयं द्रष्टव्यं। सजातानाकामयितुं* मनुत इत्यामनं। हे आमन हूयमानाज्य त्वं तादृशमसि अत आमनस्य सजातानाकामयितुं मन्यमानस्य यजमानस्य ये सजाता ज्ञातिप्रभृतयः समनसः समनस्का अनुकूलाः सन्ति हे देवास्तान् सजातानहं हृदा चित्तेन का-

* आकारयितुमिति का०।

मये, ते च मां हृदा कामयन्तां, तान् सजातान् मे मदर्थमामनसः *मामाकामयितुं मन्वानान् कुरु, इदमाज्यं स्वाहुतं। एवं कुमारमन्त्रस्तोमन्त्रौ व्याख्येयौ। इदानीमिष्टिं विधत्ते "वैश्वदेवीꣳ साङ्ग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान् प्रयच्छन्ति ग्राम्येव भवति" इति। मनसा परस्परमैकमत्येन सम्यक् स्वीकारः सङ्ग्रहणं। तद्यस्यामिष्टावस्ति सा साङ्ग्रहणी। तदेतदभिप्रेत्येष्टिविशेषणं प्रशंसति "साङ्ग्रहणी भवति मनोग्रहणं वै सङ्ग्रहणं मन एव सजातानां गृह्णाति" इति। ज्ञातिमनसः स्वाधीनत्वेन ग्रहणं मनोग्रहणं तदेव सम्यग्ग्रहणमित्युच्यते, ततः साङ्ग्रहण्येष्ट्या सजातानां मनः स्वाधीनं करोति। आदावाम्नातान् मन्त्रान् विनियुङ्क्ते। "ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परिदधात्याशिषमेवैतामाशास्तेऽथो एतदेव सर्वꣳ सजातेष्वधिभवति यस्यैवं विदुष एते परिधयः परिधीयन्ते" इति। त्रिषु अपि मन्त्रेषु भूयासमित्यभिधानादाशासनं गम्यते किञ्चैवं विदुषस्तैर्मन्त्रैः परिधाने सति सजातेषु मध्ये मन्त्रैः प्रार्थितं सर्वमधिकं सम्पद्यते। मन्त्रान्तराणि विनियुङ्क्ते "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवावरुन्धे त एनमवरुद्धा उपतिष्ठन्ते" इति। अत्र सजाता इत्यन्ते मन्त्रभागे समनस इत्याद्युक्तभागोऽनु-

---

*मत्कार्यार्थं कारयितुमिति का०।

वञ्जनीयः। कुमारा इत्यादिके मन्त्रभागे आमनमसीत्यादिमन्त्रपूर्वभागोऽनुषञ्जनीयः। तथा सति त्रिभिर्मन्त्रैराहुतित्रयं सम्पद्यते। स्वकुले स्वजातिषु मध्ये स्वग्रामे च ये महान्तः पुरुषाः प्रौढाः ये च क्षुल्लका बालाः याश्च पत्नीभगिनीमात्रादयः स्त्रियः एतावन्त एवापेक्षिताः सजाताः, ताननेन स्वाधीनान् करोति, ते च जनाः स्वाधीना एव सन्तः एनं सेवन्ते।

अथ विनियोगसङ्ग्रहः।

साङ्ग्रहण्यां तु परिधीन् परिधन्ते ध्रुवस्त्वयात्।
आमनेति त्रिभिस्तत्र उपहोमास्त्रयो मताः॥
मन्त्रभेदः सजातेति कुमारेति पदद्वयात्।

अत्र मीमांसा। दशमाध्यायस्य चतुर्थपादे चिन्तितं।

आमनाहुतिभिर्बाध्या अनूयाजा न वाग्रिमः।
त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः"॥ इति।

साङ्ग्रहण्यां श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति। एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनूयाजा बाध्याः, कुतः त्रित्वलिङ्गात्। पूर्वाधिकरणे सप्तदशसङ्ख्याविशिष्टप्राकृतपश्वभावेन मा भूत् बाध्यत्वं, इह तु त्रित्वविशिष्टत्वादनूयाजा बाध्यन्तां। यद्वा तदनुवादेन मन्त्रगुणविधानात् प्राकृतमन्त्रबाध इति पूर्वःपक्षः। किं त्रित्वमात्रमनूद्य मन्त्रसहिता आहुतयो विधीयन्ते, आहोस्वित् त्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः। आद्ये त्रित्वस्य गार्हपत्यादि-

ष्वपि मन्त्रेन नानूयाजलिङ्गं। द्वितीये विशेषणविशेष्ययोरुद्देश्य-योर्भेदेन वाक्यं भिद्येत। तस्मात् कर्मान्तरविधानान्न बाधः, किन्तु समुच्चयः। तत्र मध्योक्तिर्लिङ्गं। तथाचाम्नायते *'यत् प्रयाजानूयाजानां पुरस्तादोपरिष्टाद्वा जुहुयात् बहिरात्मं सजातानादधीताथ यन्मध्यतो जुहोति मध्यत एव सजातानात्मं धत्ते' इति तस्मादामनहोमानामनूयाजैः सह समुच्चयः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः॥ ९॥

---

यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत्सर्पिरभवद्यदध्रियत तद्घृतमभवदश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि॥ १॥

तस्य ते ददतु येषां प्राणोऽसि स्वाहा घृतस्य धारामम़ृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः। तत्त्वा विष्णुः पर्यपश्यत् तत्त्वेडा गव्यैरयत्। पावमानेन त्वा

* 'पुरस्तादोपरिष्टाद्वा जुहुयाद्बहिरात्मनः सजातीयान् दध्यात् यन्मध्यतो जुहोति मध्यत एव सजातीयान् मनुते' इति न्यायमालाया पाठः।

स्तोमेन गायत्रस्य वर्तन्योपाꣳशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत् ॥ २ ॥

सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा मात्रया जगत्यै वर्तन्याग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत्। अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि सोम आयुष्मान्त्स ओषधीभिर्यज्ञ आयुष्मान्त्स दक्षिणाभिर्ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि ॥ ३ ॥

विश्वेषां देवानां प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सोम आयुष्मान् पञ्चविꣳशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ ० ॥

इष्टिः साङ्ग्रहणी प्रोक्ता नवमे ग्रामकामिनः।

अथ व्यवहितेनैकादशानुवाकेनायुष्कामेष्टिं विधित्सुर्दशमे तन्मन्त्रान् पठति। कल्पः। यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्ष्येत्यनेन प्राकृत आज्यमसीत्यवेक्षणमन्त्रो बाधितः। पाठस्तु "यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत्सर्पिरभवद्यद्ध्रियत तद्घृतमभवत्" इति। यद्यस्मात् कारणाद्दध्न उद्ध्रियमाणं सत् नवमैत् नवं नूतनं रूपमभवत् तस्मान्नवञ्च तन्नीतञ्च नवनीतं तेन च उद्धृतस्य सारपिण्डस्य नवनीतनाम सम्पन्नं। यद्यस्मात् कारणादग्निसम्पर्के सति पिण्डो विलीयमानोऽसर्पत् प्रसृतोऽभवत् तस्मात् सर्पिरिति नाम। यस्मात् प्रसृतस्य शीतलपात्रस्यापर्णेन तत् पुनरध्रियत तद्घनीभूतमभवत् तस्माद्घृतमिति नाम। घृ क्षरणदीप्त्योरिति धातोर्निष्पन्नं तद्रूपं किन्तु घृतमित्यत्र धकारस्य घकारादेशः। कल्पः। उपहोमकालेऽश्विनोः प्राणोऽसीत्येतैः प्रतिमन्त्रं चतुर उपहोमान् जुहोतीति। पाठस्तु "अश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि तस्य ते ददतु येषां प्राणोऽसि स्वाहा" इति। हे यजमान त्वं अश्विनोःप्राणोऽसि प्राणवत् प्रियोऽसि, तस्माद्ययोः प्राणोऽसि तावश्विनौ तस्य ते प्रियस्यायुर्हेतुभूतं प्राणं दत्तां, प्राणमित्येतत्सामर्थ्याल्लभ्यते, तयोरश्विनोरिदमाज्यं स्वाहुतमस्तु। एवमुत्तरेषु योज्यं। कल्पः। यत् स्वा-

दिर आज्यं तदग्रेणाहवनीयं पर्याहृत्य तेन दक्षिणस्यां वेदिश्रो-
ण्यामासादयति तद्यजमानोऽवेक्षते घृतस्य धारामसृतस्य पन्था-
मिति। पाठस्तु "घृतस्य धारामसृतस्य पन्थामिन्द्रेण दत्तां प्र-
यतां मरुद्भिः। तत्त्वा विष्णुः पर्यपश्यत् तत्त्वेडा गव्यैरयत्" इति।
घृतस्य धारामवेक्षेतेत्यध्याहारः। कीदृशीं धारां अमृतस्य पन्थां
कर्मफलस्य साधनत्वेन मार्गभूतां, इन्द्रेण वृष्टिद्वारेणोत्पत्त्यादिपर-
म्परया दत्तां सम्पादितां, मरुद्भिः वैश्याधिपैः प्रयतां *क्रयण-
भाण्डेषु प्रयत्नेन धृतां। हे घृत तत्त्वा तथाविधं त्वां विष्णुसदृशो
यजमानः पर्यपश्यत् परिपश्यति, इडा पश्वभिमानिनी देवता
तादृशं त्वां गवि ऐरयत् प्रेरयति गोषु स्थापयति। कल्पः।
अथास्य ब्रह्मा दक्षिणं हस्तं गृह्णाति ब्रह्माण †इतर ऋत्विजो हस्त-
मन्वारभ्य यजमानं पर्याहुः पावमानेन त्वा स्तोमेनेति। पा-
ठस्तु "पावमानेन त्वा स्तोमेन गायत्रस्य वर्त्तन्योपांशोर्वीर्येण
देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तर-
योस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सविता-
त्सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा मात्रया जगत्यै वर्तन्या-
ऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्या-
यै" इति। हे यजमान त्वां सविता देव उत्सृजतु दीर्घरोगान्मोच-
यतु। केन साधनेन, बहिष्पवमानादीनां सम्बन्धिना त्रिवृ-
दादिस्तोमसाध्येन स्तोत्रेण, गायत्रस्य वर्तन्या गायत्रच्छन्दसो
यो मार्गस्तेन सोमाहरणरूपेण यज्ञाङ्गसम्पादनेन, उपां-

* विक्रयाय भाण्डेषु सञ्चितामिति तै०। † इतरम ऋत्विज इति का०।

श्रोर्वीर्येण उपांशुग्रहहोमसाध्यसामर्थ्येन, अत्र प्रतिसाधनं वाक्यभेदेनान्वेतुं त्वेतिशब्दस्य पुनरुक्तिः। किमर्थमुत्सृजसीति तदुच्यते। जीवातवे जीवनहेत्वौषधादिसम्पादनाय। तदपि किमर्थमिति तदुच्यते। जीवनस्यायै चिरं जीवितुमिच्छा जीवनस्या, तदर्थं। एवं द्वितीयतृतीयमन्त्रौ योजनीयौ। अग्नेर्गायत्रा मीयते अग्निर्यया गीत्या सा गीतिर्मात्रा यज्ञायज्ञीयस्य गानमित्यर्थः। कल्पः। अथ यजमानो हिरण्याहृतं निष्पिबतीममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयत इति। पाठस्तु "इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत्" इति। हे अग्ने इमं यजमानं दीर्घायुषे बलाय च कृधि समर्थं कुरु हे वरुण हे सोम राजन् अस्य यजमानस्य प्रियं रेतः पुत्रोत्पादकं सम्पादय। हे अदिते पृथिवि मातृवदस्मै सुखं प्रयच्छ। विश्वे देवा अयं यजमानो यथा जरदष्टिरसत् तथा कुर्वन्तु जराया अष्टिराप्तिर्यस्य सो जरदष्टिः, बाल्ये यौवने च मरणरहितो जरामायुःसंपूर्त्तिपर्यन्तां यथा व्याप्नोति तथा कुर्वन्त्वित्यर्थः। कल्पः। अग्निरायुष्मानित्यनुवाकशेषेण अस्याध्वर्युर्दक्षिणं हस्तं गृह्णातीति। पाठस्तु "अग्निरायुष्मान्स वनस्पतिभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि सोम आयुष्मान्स ओषधीभिर्यज्ञ आयुष्मान्स दक्षिणाभिर्ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि" इति। अग्निरा-

युष्मान् भवति। तत्कथमिति तदुच्यते, सोऽग्निर्वनस्पतिभिरायुष्मान् काष्ठेषु प्रक्षिप्यमाणेषु ज्वालापरम्परया वर्धते न तूपशाम्यति, तेनाग्नेरायुषा अभिवर्धमानेन त्वामायुष्मन्तं करोमि। एवमुत्तरत्र योज्यं। सोमः सोमरस ओषधीष्वभिषूयमाणासु वर्धते। यज्ञो दक्षिणाभिर्वशीकृतेष्वृत्विक्षु वर्धते। वेदश्च ब्राह्मणेष्वध्यापकेष्वविच्छेदेन वर्धते। देवाश्च हवीरूपेणामृतेन जीवन्ति। पितरश्च स्वधाकारपूर्वकेण पिण्डादिना जीवन्ति। प्रतिवाक्यमनुषङ्गद्योतनाय तेन त्वायुषेति पुनः पद्यते।

अत्र विनियोगसङ्ग्रहः।

"ज्योगामयाविनस्त्विष्टौ यन्नवेत्याज्यमीक्ष्यते।
अश्विनोरुपहोमाः स्युर्घृत स्वाम्याज्यमीक्षते॥
स्पृष्टर्त्विजो ब्रह्महस्तं पावेति स्वामिनं जगुः।
इमं घृतं पिबन्तं तु स्वामिनं मन्त्रयेत हि॥
अग्निः सोमस्य यज्ञस्य ब्रह्म देवाः पितेति षट्।
यथोचितानुषङ्गैस्तैर्गृह्यते स्वामिहस्तकं॥
दशमे त्वनुवाकेऽस्मिन् मन्त्राः षोडश वर्णिताः"॥ इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः॥ ० ॥

अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं ॥ १ ॥

वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टेऽश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां ॥ २ ॥

भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति घृतस्य धारामम्तस्य पन्थामित्याह यथायजुरेवैतत्पावमानेन त्वा स्तोमेनेति ॥ ३ ॥

आह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथन्तरयो-स्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहात्मानमेवास्मिन्नेतेन दधात्यृत्विजः प-र्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधति यदेव तस्य तद्धिरण्यात् ॥ ४ ॥

घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृताद्देवा-युर्निष्पिबति शतमानं भवति शतायुः पुरुषः शते-न्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यथो खलु यावतीः समा एष्यन् मन्येत तावन्मानꣳ स्यात्समृद्ध्या इममग्न आयुषे वर्चसे कृधीत्याहायुरेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथासदित्याह जरदष्टिमेवैनं क-रोत्यग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आ-युष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति ॥ ५ ॥

रसं देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वावि-ꣳशतिश्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीय-प्रपाठक एकादशोऽनुवाकः ॥ ० ॥

इष्टेर्विधास्यमानाया दशमे मन्त्र ईरितः।

अथैकादशे तामिष्टिं विधातुं प्रस्तौति "अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति" इति। यं दीर्घव्याधिः पीडयति एतस्य शरीरमग्निं प्रविशति मांसभक्षणेन कृशत्वात्। सोमेन रसस्वीकाराद्बलक्षयः। वरुणपाशेन ग्रहणादुदरादिव्यथा। सरस्वतीमेतदीया वाक् भाषा गच्छति तेनायं भाषितुं न शक्नोति। जीवात्मा त्वग्नाविष्णू प्राप्नोति तेन मुमूर्षति। इदानीं विधत्ते "यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं वारुणेनैवैनं वरुणपाशान् मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव" इति। ज्योगामयाविनो रोगपरिहारार्थमरोगस्य चापमृत्युपरिहारार्थमियं पञ्चहविष्केष्टिः। मन्त्रं विनियुङ्क्ते "यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे" इति। मन्त्रोक्तैर्नवनीतसर्पिर्घृतनिर्वचनैरस्याज्यस्यैतद्विद्यमानरूपं महिमाख्यापनाय मन्त्रो व्याचष्टे। यद्वा मन्त्रस्यैतत् स्वरूपमेव घृतस्य महिमानं व्याचष्टे। मन्त्राक्षरैरेव स्पष्टं प्रतीयते नात्र पृथग्वक्तव्यमस्ती-

त्यर्थः। उपहोममन्त्रान् व्याचष्टे "अश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति" इति। यजमानस्याज्यावेक्षणमन्त्रे स्पष्टार्थतां दर्शयति "घृतस्य धारामम्तस्य पन्थामित्याह यथायजुरेवैतत्" इति। ऋत्विग्भिः पठ्यमानानां मन्त्राणां तात्पर्यं दर्शयति "पावमानेन त्वा स्तोमेनेत्याह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथन्तरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहात्मानमेवास्मिन्नेतेन दधाति" इति। पवमानस्य वायोः प्राणरूपत्वात् तेन प्राणस्थापनं, बृहद्रथन्तरयोः पृष्ठस्तोत्रप्रकृतित्वेन सारत्वात्तेनौजोधारणं। अग्नेरात्मा मीयते अनयेत्युक्तत्वात्तेनात्मस्थापनं। एतेषां त्रयाणां पाठं विधत्ते "ऋत्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति" इति। पाठकाले हस्तग्रहणं विधत्ते "ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधति यदेव तस्य तत्" इति। एकधैव सर्वेषामृत्विजामैकमत्येनैव तस्य यजमानस्य यदेवायुः सम्पादनीयमस्ति तत्सर्वं तस्मिन् यजमाने स्थापयन्ति। यदुक्तं सूत्रकारेण 'पात्रसम्पादनकाले खादिरं पात्रं चतुःस्रक्ति प्रयुनक्ति सौवर्णस्य प्रवर्तं शतमानस्य कृतं अथो खलु यावतीः समा एष्यन् मन्येत तावन्मानꣳ स्यात्' इति।'आज्यग्रहणकाले तुष्णीं खादिरे

चतुर्गृहीत्वा सादनकाल उत्तरेण ध्रुवां खादिरं सादयित्वा तस्मिन् प्रवर्तमवदधाति' इति च। प्रवर्तः कर्णाभरणं कुण्डलं, घृते स्थापितात्प्रवर्तान्निष्पीडितस्य घृतस्य पानं विधत्ते "हिरण्याहृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवायुर्निष्पिबति" इति। तस्य परिमाणं द्वेधा विधत्ते "शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यथो खलु यावतीः समा एष्यन् मन्येत तावन् मानꣳ स्यात् समृद्ध्यै" इति। शतमानं पञ्चपलपरिमितमित्यसकृदुक्तं। अथवा रुग्णो यजमानो यावतो भाविनः संवत्सरान् प्राप्नोत्वित्यध्वर्युर्मन्येत तावद्भिर्मानैः परिमितं कर्तव्यं। मानशब्दो गुञ्जाबीजं ब्रूते। रुग्णस्यातीतमायुः परित्यज्यागामिन आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जाबीजैः परिमितमित्यर्थः। प्राश्नतो यजमानस्यानुमन्त्रणमन्त्रे प्रथमचरमभागयोरभिप्रायं दर्शयति "इममग्न आयुषे वर्चसे कृधीत्याहायुरेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथासदित्याह जरदष्टिमेवैनं करोति" इति। आयुषश्चरमभागस्थाया जराया अष्टिर्व्याप्तिर्यस्य। अथवा जीर्यति अष्टिरशनं यस्यासौ जरदष्टिः नीरोग इत्यर्थः। अध्वर्योर्यजमानदक्षिणहस्तग्रहणं विधत्ते "अग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति" इति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान्* चतुष्कपालान् निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति ॥ १ ॥

चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः समृद्ध्या एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनुनिर्वपेदमुमेवादित्यमुच्चारं कुरुते योऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमवयजतेऽपोनप्त्रीयं चरुं पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनꣳ शान्त उपतिष्ठते ॥ २ ॥

मुञ्चति चरुꣳ सप्तदश च ॥ १२ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

---

* वारुणां चतुष्क० इत्येकस्मिन् पुस्तके।

एकादशे लिष्टिरुक्ता दीर्घरोग्यायुरर्थिनोः।

अथ द्वादशेऽश्वदानवत इष्टिं विधास्यन् प्रस्तौति "प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत" इति। अनयद्दत्तवान्। देवस्य भावो देवता। स प्रजापतिः स्वकीयं देवत्वमार्च्छत् आर्तमकरोत्। प्राजापत्यो वा अश्व इति श्रुतेः प्रजापतिरेव पूर्वमश्वस्य देवता, तस्मिन्नश्वे वरुणाय दत्ते सति स्वकीयमश्वस्वामित्वमपगतं, तन्निमित्तेन दुःखेन स प्रजापतिः पर्यदीर्यत तदीयं शरीरं परितो दीर्णं दीर्घरोगग्रस्तमभूत् स च रोगो वरुणपाशरूपत्वाद्वारुण्येष्ट्या निवृत्तः। इदानीमिष्टिं विधत्ते "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणां चतुष्कपालान् निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति" इति। प्रतिगृह्णातीत्यस्यान्तर्भाविण्यर्थत्वात् प्रतिग्राहयति ददातीत्ययमर्थः सम्पद्यते। कपालसङ्ख्यां प्रशंसति "चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः समृद्ध्यै" इति। अश्वसङ्ख्यातोऽधिकं पुरोडाशं विधत्ते "एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपशान्मुच्यते" इति। यमेवाश्वमित ऊर्द्ध्वं यदा कदाचित्कालान्तरे प्रतिग्रहीष्यति दास्यति, अथवा यं कञ्चिदश्वं प्रतिगृहीतं* नाध्येति विस्मरति तदर्थोऽयमतिरिक्तः पुरोडाशः।

---

* प्रतिग्रहीतुमिति तै०।

निमित्तविशेषेणाङ्गाधिक्यं विधत्ते "यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनुनिर्वपेदमुमेवादित्यमुच्चारं कुरुते" इति। कांश्चिदश्वान् दत्त्वा तदानीमेव इष्ट्यनुष्ठाने सति एकेनातिरिक्तेन सहितास्तावन्तस्तत्र पुरोडाशाः पर्याप्ताः। यदा तु दानादनन्तरमेवेष्टिर्नानुष्ठिता किन्तु कञ्चित्कालमतिलङ्घ्य पुनरप्यपरोऽश्वो दत्तस्तदा सोऽतिरिक्तान् दत्ताश्वसङ्ख्यातान् पुरोडाशान् निरुप्य सौर्यमनुनिर्वपेत् तेनादित्यमेवोर्द्धचारिणं कुरुते, स चादित्यो विलम्बदोषं परिहरन् उपरिष्टाद्वर्तत इत्यभिप्रायः। इष्ट्यङ्गत्वेनावभृथं विधत्ते "अपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमवयजते" इति। अपः प्राप्य तत्रावभृथं कर्म कुर्यात्। तेन वरुणो निराकृतो भवति। अङ्गान्तरं विधत्ते "अपोनप्त्रीयं चरुं पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनꣳ शान्त उपतिष्ठते" इति। अपोनप्ता देवता यस्य सोऽयमपोनप्त्रीयः, तं चरुमवभृथदेशाद्यज्ञभूमौ समागत्य निर्वपेत्। अप्सु योनिरुत्पत्तिर्यस्याश्वस्य सोऽयमप्सुयोनिः। उच्चैःश्रवसोऽश्वस्य समुद्रादुत्पत्तिः पुराणेषु प्रसिद्धा। तस्मादपोनप्त्रीयचरुणा तमश्वं स्वकीययोनिगामिनं करोति। स चाश्वः शान्तः सन् रोगमनुत्पाद्यैनं यजमानं सेवते।

अत्र मीमांसा। तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

"अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते।
दानद्वये लौकिके वा वैदिके वा भवेदियं॥

अविशेषाद् द्वयोर्यद्वा न देयः केसरीत्यतः।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत्॥
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित्।
वैदिके तु श्रुतं तस्मात् तत्प्रायश्चित्तयेऽत्र सा"॥

इदमाम्नायते 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणां चतुष्कपालान्निर्वपेत्' इति। तत्र प्रतिग्रहशब्दो दानपर इत्यनन्तरमेव वक्ष्यते। तत्र विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिरित्येकः पक्षः। न केसरिणो ददातीति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणमश्वदानं लौकिकं निषिद्धं तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिरिति द्वितीयः पक्षः। वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णातीत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितं। वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणं। अतो वैदिकदानेष्टिः प्रायश्चित्तिः। अस्ति हि वैदिकमश्वदानं, वडवा दक्षिणा इत्यादिश्रवणात्।

अत्रैवान्यच्चिन्तितं।

"यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्यस्तु यथाविधि॥
असञ्जातविरोध्यर्थवादाद्दातुः प्रजापतेः।
इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत्"॥

पूर्वोदाहृतवाक्ये प्रतिगृह्णीयादिति विधिपदश्रवणात् प्रतिग्रहीतुरिष्टिरिति चेत्, न, उपक्रमरूपेणार्थवादेन दातुस्

दिष्टिप्रतीतेः। उपक्रमश्चैवं श्रूयते 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत' इति। अनयद्दत्तवान्, स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्, तेन च रोगेण ग्रस्तः प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यतेत्यत्र दातुरिष्टिरित्यवगम्यते। असञ्जातविरोध्युपक्रमानुसारेण विधायकपदमपि प्रतिग्राहयेदित्येवमन्तर्भावितणिजर्थपरतया व्याख्येयं।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितं।

"प्रतिग्रहीतुर्बह्वश्वे पूर्वन्यायोऽस्ति वा न वा।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य शोषतः"॥

यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणां चतुष्कपालान् निर्वपेदिति। अत्र शतसङ्ख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशेषूदाहृतप्रत्यक्षवचनेन साहित्यं प्राप्तं, तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनुष्ठेय इति चेन्मैवं। तप्तेषु कपालेषु क्रमेण पुरोडाशानधिश्रित्य यावता कालेन प्रथमपुरोडाशे द्वितीयसंस्कारं कर्तुमागच्छति तावता कालेनाग्नौ शुष्को भस्मीभवति। तस्मादेकैकस्मिन् पुरोडाशे कृत्स्नधर्मसमापनमित्येवं काण्डानुसमयोऽभ्युपेतव्यः।

एकादशाध्यायस्य चतुर्थपादे चिन्तितं।

"तन्त्रं चतुष्कपालानां भेदो वा तन्त्रमिष्टतः।

कुम्भीवत् तन्त्रता मैवं भेदः स्यात् प्रकृताविव" ॥

इदं श्रूयते 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणां चतुष्कपालान् निर्वपेत्' इति। यथा प्राजापत्येषु कुम्भ्या महत्त्वेन तन्त्रं तथाचापि कपालमहत्त्वेन तन्त्रमिति चेत्, मैवं, प्रकृतौ प्रतिपुरोडाशं कपालभेदेन तद्भेदस्यैव चोदकप्राप्तेः। किञ्चात्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्थापितेषु एकस्यैव कपालस्यैकदेशे पुरोडाशस्यैकस्य समाप्तेर्न कोऽपि पुरोडाशश्चतुष्कपालः सिध्येत्, तस्मात् प्रतिपुरोडाशं कपालचतुष्टुभेदः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

---

या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतं या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममꣳहसो मुञ्चतं यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनावयजे यो वामिन्द्रावरुणा द्विपात्सु पशुषु चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वनस्पतिषु स्रामस्तं वामेतेनावयज इन्द्रो वा एतस्य ॥ १ ॥

इन्द्रियेणापक्रामति वरुण एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत् पयस्या भवति पय एवास्मिन् तया दधाति पयस्यायां ॥ २ ॥

पुरोडाशमवदधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रतितिष्ठति पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति समूह्यावद्यति यथाविद्धं निष्कृन्तति तादृगेव तद्यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनावयज इत्याह दुरिष्ट्या एवैनं पाति यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनावयज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति ॥ ३ ॥

एतस्य पयस्यायां पाति पञ्चविंशतिश्च ॥ १३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ * ॥

चतुष्कपाला विहिता द्वादशे लश्वदानिनः।

अथ त्रयोदशे पाप्मना गृहीतस्येष्टिं विधित्सुरादौ मन्त्रान् पठति। कल्पः। ऐन्द्रावरुणं पुरोडाशं निरुप्यैन्द्रावरुणीं पयस्यां निर्वपेदुद्वास्यालङ्कृत्य पयस्यायां पुरोडाशमवदधात्येतयैव प्रच्छायामादयति, अथास्मात् प्रतिदिशं पयस्यां व्यूहति या वामिन्द्रावरुणा यतव्या तनूरित्येतैरेव पुनः समूहति *मुञ्चतमिति मन्त्रान् सन्नमति सहैव पयस्यायाः पुरोडाशस्यावद्यति यो वामिन्द्रावरुणावग्नौ स्नाम इत्युपहोमा इति। तत्र प्रथमस्य व्यूहनमन्त्रस्य पाठस्तु "या वामिन्द्रावरुणा यतव्या तनूस्तयेमम्ँ हसो मुञ्चतं" इति। हे इन्द्रावरुणौ वां युवयोः या तनूर्यतव्या पापान्मोचने प्रयत्नवती तया तन्वा यजमानं पापान्मोचयतं। द्वितीयतृतीयचतुर्थमन्त्राणां पाठस्तु "या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममँ हसो मुञ्चतं" इति। सहस्येत्यत्र तनूरित्यस्यान्यभागस्यानुषङ्गः। तेजस्येत्यत्र या वामित्यस्याद्यभागस्यानुषङ्गः। रक्षस्येत्यत्रोभयोर्भागयोरनुषङ्गः। सहो बलं तदर्हतीति सहस्या। रक्षो रक्षणं तदर्हतीति रक्षस्या। तेजो रोचनशक्तिस्तदर्हतीति तेजस्या। उपहोमे प्रथममन्त्रपाठस्तु "यो वामिन्द्रावरुणावग्नौ स्नामस्तं वामेतेनावयजे" इति। हे इन्द्रावरुणावग्नौ वां युवयोः यः स्नामः पापविशेषः युवयोर्होमार्थे अग्नौ वह्नौ यजमानेन योऽपराधः कृतः तमपराधं युवयोः सम्बन्धिनैतेन होमेनावयजे विनाशयामि। द्वितीया-

* 'मुञ्चतमित्यस्य स्थानेऽमुक्तमिति मन्त्रान्तान् सन्नमति' इति काशीये पाठान्तरं।

दीनां सप्तानां मन्त्राणां पाठस्तु “यो वामिन्द्रावरुणा द्विपात्सु पशुषु चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वनस्पतिषु स्रामस्तं वामेतेनावयजे” इति। द्विपात्सु पशुष्वित्यत्र स्रामस्तं वामित्याद्युत्तरभागस्यानुषङ्गः। वनस्पतिषु स्राम इत्यत्र यो वामित्यादेः प्रथमभागस्यानुषङ्गः। चतुष्पात्स्वित्यादिषु पञ्चसु पूर्वोत्तरभागयोरनुषङ्गः। हे इन्द्रावरुणौ युवयोः सम्बन्धी यो यजमानः तस्य द्विपात्सु पशुषु मनुष्यादिरूपेषु यः स्रामः पापविशेषः तं पापविशेषं युवयोः सम्बन्धिनैतेन कर्मणा विनाशयामि। एवं सर्वत्र योज्यं। अथेष्टिं विधत्ते “इन्द्रो वा एतस्येन्द्रियेणापक्रामति वरुण एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति” इति। यः पापगृहीत एतदीयेनेन्द्रियेण सहेन्द्रोऽपगच्छति, वरुणो रोगेणैनं बाधते, अतः पापगृहीतस्य तदुभयविषयेष्टिः। पयसि प्रभवाऽऽमिक्षा पयस्या तां प्रशंसति “पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत्पयस्या भवति पय एवास्मिन् तया दधाति” इति। पयःशब्देन क्षीरादिसात्त्विकाहारजनितश्रद्धया कृतं पुण्यमुपलक्ष्यते, तत्पुण्यानुष्ठानमेवैतस्माद्यजमानाद्यदापक्रामति तदानीमेष पाप्मना गृहीतो भवति, यद्यत्र हविः पयस्या भवेत् तर्ह्यस्मिन् यजमाने तया पयस्ययाऽऽहारोपलक्षितं पुण्यमाहितं भवति। अथाप्राप्तं कञ्चिदंशविशेषं विधत्ते “पयस्यायां पुरोडाशमवद-

धात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव" इति। शरीरसदृशस्य कठिनस्य पुरोडाशस्य प्रक्षेपणेनैनं यजमानमात्मन्वन्तं दृढशरीरोपेतं करोति। सति हि पापे तज्जन्यरोगेण शरीरस्यादार्ढ्यं। किञ्च पयस्याया आधारत्वेन यजमानो ऽप्यायतनवान् गृहग्रामादिरूपाधारवान् भवति। यो वामिन्द्रावरुणेत्यादिमन्त्रैर्हविषो विभागं विधत्ते "चतुर्धा व्यूहति दिक्ष्वेव प्रतितिष्ठति" इति। विभक्तस्यैकीभावं विधत्ते "पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति" इति। मिश्रितयोः पुरोडाशामिक्षयोः सहावदानं विधत्ते "समूह्यावद्यति यथाऽऽविद्धं निष्कृन्तति तादृगेव तत्" इति। यथा लोके वैरिणा मुक्तमाविद्धं स्वशरीरे बाणादिकं संदंशादिना निष्कृष्याच्छिनत्ति तादृगेव तत्, समूह्यावदानं सम्पद्यते। उपहोमे प्रथममन्त्रं व्याचष्टे "यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनावयज इत्याह दुरिष्ट्या एवैनं पाति" इति। होमाधारेऽग्नौ घृतेन स्रामेणापराधेन दुरिष्टिर्भवति तमपराधमवयज इत्युक्त्वा तस्या दुरिष्टेः सकाशादेनं यजमानं रक्षति। अवशिष्टानां मन्त्राणां तात्पर्यं दर्शयति "यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनावयज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति" इति। पशुषु स्रामस्तं वामित्येवमनुषङ्गो योजयित्वा प्रदर्शितः, प्राण्युपजीवनयोग्या अबादयः पञ्च पदार्थाः तत्र पशुशब्देन द्विपादश्चतुष्पादश्च गृह्यन्ते। गृहा अप्यत्रोपल-

च्यन्ते। या एतावत्य उपजीवनीयास्ताः सर्वा अपि यजमानार्थं वरुणपाशादुपद्रवान्मोचयति।

अत्र विनियोगसङ्ग्रहः।

या वामिति चतुर्मन्त्रैश्चतुर्धा व्यूहते हविः।
यो वामित्यष्टभिर्मन्त्रैरुपहोमा इतीरिताः॥
द्विपात्स्विल्यादिना मन्त्रभेदः सप्तविधो भवेत्।
त्रयोदशेऽनुवाकेऽस्मिन् मन्त्रा द्वादश कीर्तिताः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ ० ॥

स प्रत्नवन्नि काव्येन्द्रं वो विश्वतस्परीन्द्रं नरः। त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत् त्वावतः सखा। या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय। अग्नीषोमा सवेदसा सहूती वनतं गिरः। सं देवत्रा बभूवथुः। युवं॥ १॥ एतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं। युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं

गृभीतान्। अग्नीषोमाविमꣳ सु मे शृणुतं वृषणा हवं। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः। आन्यं दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं। अग्नीषोमा हविषः प्रस्थितस्य वीतं ॥ २ ॥

हर्यतं वृषणा जुषेथां। सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः। आप्यायस्व सं ते। गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमं। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनं। स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति ॥ ३ ॥

श्रद्धामना हविषा ब्रह्मणस्पतिं। स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण। बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्। मरुतो यद्ध वो दिवो या वः शर्म। अर्यमायाति वृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन्। सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु। ये तेऽर्यमन् बहवो देवयानाः पन्थानः ॥ ४ ॥

राजन् दिव आचरन्ति। तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे। बृभ्रादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत्। रुजद्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार। बृभ्रादग्रेण विमिमाय मानैर्वज्रेण खान्यतृणन्नदीनां। वृथासृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥ ५ ॥

प्र यो जज्ञे विद्वांऽअस्य बन्धुं विश्वानि देवो जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाभि प्रतस्थौ। महान्मही अस्तभायद्वि जातो द्यां सद्म पार्थिवञ्च रजः। स बुभ्रादाष्ट जनुषाभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्। बुभ्राद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमाविवासन्ति देवाः। भिनद्वलं वि पुरो दर्दरीति कनिक्रदत्स्वरपो जिगाय ॥ ६ ॥

युवं वीतमाविवासति पथानो दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार देवा नव च ॥ १४ ॥

आदित्येभ्यो देवा वै मृत्योर्देवा वै सत्रमासतार्यम्णे प्रजापतेस्त्रयस्त्रिंशत् प्रजापतिर्देवेभ्योऽन्नाद्यं देवासुरास्तानृजनो ध्रुवोऽसि यन्नवमैदग्निं वै प्रजा-

पतिर्वरुणाय या वामिन्द्रावरुणा स प्रत्नवच्चतुर्दश॥

॥ १५ ॥

आदित्येभ्यस्त्वष्टुरस्मै दानकामा एवावरुन्धेऽग्निं वै स प्रत्नवत्षट्पञ्चाशत् ॥ ५६ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ * ॥

॥ * ॥ तृतीयप्रपाठकः सम्पूर्णः ॥ * ॥

विहिता पापिनस्त्विष्टिरनुवाके त्रयोदशे।

अथास्मिन्नन्तिमे चतुर्दशेऽनुवाके काम्ययाज्या उच्यन्ते। तत्र त्रिहविष्का विभ्रष्टेष्टिस्तृतीयानुवाके समाम्नाता। तस्यां प्रथमद्वितीययोर्हविषोः क्रमेण याज्यानुवाक्ययोः प्रतीकं दर्शयति "स प्रत्नवन्नि काव्येन्द्रं वो विश्वतस्परीन्द्रं नरः" इति स प्रत्नवन्नवीयसेत्यनुवाक्या। नि काव्या वेधस इति याज्या। एतदुभयमाग्नेये हविषि द्रष्टव्यं। तच्च हिरण्यगर्भ आपो हेत्यस्मिन्ननुवाके व्याख्यातं। इन्द्रं वो विश्वतस्परीत्यनुवाक्या। इन्द्रं नरो नेमधितेति याज्या। एतदुभयमैन्द्रे हविषि द्रष्टव्यं। तच्च प्रथमकाण्डस्य षष्ठप्रपाठके व्याख्यातं। अथ सौम्यस्य हविषः पुरोऽनुवाक्यामाह "त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत् त्वावतः सखा" इति। अघं पापं, अस्मदुपद्रवमिच्छन् अघायन् तस्मात् पापसङ्घात् विश्वतः सर्वस्मात् नोऽस्मान् हे सोम राजन् त्वं रक्ष। त्वावतस्त्वादृशस्य

प्रभोः सखा कश्चित्समर्थोऽपि त्वदनुग्रहात् न रिष्येत् अस्मान्न हिनस्ति। तत्रैव याज्यामाह "या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेडन् राजन् सोम प्रति हव्या गृभाय" इति। हे सोम राजन् ते तव दिवि पृथिव्यादिषु च प्रदेशेषु यानि धामानि स्थानानि सन्ति, प्रतिप्रदेशं पृथगनुवादार्था यच्छब्दावृत्तिः, तेभिर्विश्वैस्तैः सर्वैः स्थानैर्युक्तः शोभनमनस्कः क्रोधरहितः सन् नोऽस्माकं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण। यस्मिन् स्थाने त्वं स्थितस्तत आगत्य हविः स्वीकुर्वित्यर्थः। अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदित्यत्र पुरोऽनुवाक्यामाह "अग्नीषोमा सवेदसा सहूती वनतं गिरः। सं देवत्रा बभूवथुः" इति। हे अग्नीषोमौ गिरोऽस्मदीयाः स्तुतीर्वनतं भजतं। कीदृशौ सवेदसा समानज्ञानयुक्तौ सहूती समानाह्वानयुक्तौ देवत्रा देवेषु मध्ये सम्बभूवथुः युवां सम्भूयैव सन्तौ न कदाचिदप्यन्योऽन्यं वियुक्तावित्यर्थः। तत्रैव याज्यामाह "युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं। युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्" इति। हे सोम त्वमग्निश्चेत्येतौ युवां सक्रतू समानसङ्कल्पौ सन्तौ दिवि एतानि रोचनानि नक्षत्रादीनि अधत्तमस्थापयतं। हे अग्नीषोमौ युवां गृभीतान् सिन्धून् *मध्योदकादिनिमित्तेनापूर्णत्वापवादेन पङ्कादिरूपेण दुष्टेन दोषेण च गृहीताः

* रथ्योदक०। अगाधोदक०। इति पाठान्तरे।

सर्वा नदीः अभिशस्तेस्तस्मादपवादात् अवद्यात् पङ्कादिदृष्टदोषाच्चामुञ्चतं मोचितवन्तौ। यद्यप्येतत् सर्वमीश्वरकृत्यं तथापि तद्रूपत्वेनैतौ स्तूयेते। अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र पुरोऽनुवाक्यामाह "अग्नीषोमाविमꣳ सु मे शृणुतं वृषणा हवं। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः" इति। हे अग्नीषोमौ वृषणा कामानां वर्षयितारौ युवां मे मदीयमिमं हवं आह्वानं सुष्ठु शृणुतं, सूक्तानि अस्मदीयानि प्रतिहर्यतं मनसा प्रतिगृह्णीतं, दाशुषे हविर्दत्तवते यजमानाय मयः सुखं भवतं सम्पादयतं। तत्रैव याज्यामाह "आऽन्यं दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं" इति। मातरिश्वा वायुः अन्यं युवयोरेकमग्निं दिवो द्युलोकस्थादादित्यादाजभार आहृतवान्। तथा चान्यत्र मन्त्र आम्नायते 'आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः' (ऋग्० मं०६। सू०८) इति। श्येनो गायत्र्याः पक्षिरूपावतारोऽन्यं युवयोरेकं सोममद्रेः परि पर्वतवदुन्नततमस्य द्युलोकस्योपरि अमथ्नात् सोमरक्षकाणां तत्रत्यानां मन्थनं विलोडनं पराजयरूपं क्षोभं कृत्वा समानीतवानित्यर्थः। एतच्च कद्रूश्च वै सुपर्णी चेत्यस्मिन्ननुवाके समाम्नातं। हे अग्नीषोमौ युवां ब्रह्मणा वावृधाना मन्त्रेण वर्धमानौ यज्ञार्थमुरुं लोकं विस्तीर्णं स्थानं चक्रथुः कृतवन्तावेव यजमानस्य फलभूतं लोकं सम्पादितवन्तावित्यर्थः। तत्रैव विकल्पितां याज्यामाह "अग्नीषोमा

हविषः प्रस्थितस्य वीतꣳ हर्यतं वृषणा जुषेथां। सु
खवसा हि भूतमथा धत्तं यजमानाय शं योः" इ
अग्नीषोमौ वृषणा कामानां वर्षयितारौ युवां प्र
समर्पितस्य हविषः सारं वीतं प्राप्तं हर्यतं प्रतिगृह्य
षेथां सेवेथां, सुशर्माणा शोभनसुखयुक्तौ स्ववसा शोभ
णोपेतौ भूतं भवतं, हि यस्मादेवं तस्मादथानन्तरं यज
यजमानार्थं शं सुखं योः पुत्रादिमिश्रणञ्च धत्तं कुरुतं
माय वाजिने श्यामाकं चरुं निर्वपेदित्यत्र याज्यानुव
प्रतीके दर्शयति "आप्यायस्व सं ते" इति। आप्यायस्व
त इत्येषा पुरोऽनुवाक्या। सं ते पयाꣳसीत्येषा याज्या
उभे चतुर्थकाण्डस्य द्वितीयप्रपाठके मा नो हिꣳसीड
त्यस्मिन्ननुवाके समाम्नास्येतेऽतस्तत्रैव व्याख्यास्येते। ब्रा
त्यमेकादशकपालं निर्वपेद्ग्रामकाम इत्यत्र पुरोऽनुवाक
"गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्र
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः
सादनं" इति। ब्रह्मणां ब्रह्मणस्पते हे कृत्स्नमन्त्रपते
गणपतिं कृत्स्नदेवगणस्वामिनं त्वां हवामहे आह्वयाम
दृशं त्वां कविं कवीनां विदुषां मध्ये प्रशस्तं विद्वांसं, उप
स्तमं उपमानत्वेन श्रवः कीर्तिर्यस्यासावुपमश्रवाः सर्वगु
न्नत्वेनायमेव सर्वेषां पदार्थानामुपमानमित्येतादृशी
अतिशयेनोपमश्रवा उपमश्रवस्तमः तादृशं, राज्ञां मध्
ज्येष्ठराजः तादृशं, यथोक्तगुणोपेतस्त्वं नोऽस्माकमूतिभि

त्वनैर्निमित्तभूतैर्युक्तः सन् सीदनमस्मिन् कर्मण्युपवेशनमासीद प्राप्नुहि। तत्रैव याज्यामाह "स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिं" इति। स इत् स एव यजमानः जनेन किङ्करादिना युक्तं वाजमन्नं भरते दधाति, स एव विशा करप्रदया प्रजया सहितं वाजं भरते, स एव ब्राह्मणादिजन्मना सहितं वाजं भरते, स एव पुत्रैः सहितं वाजं भरते, स एव नृभिर्बन्धुभिः सहितानि धना द्रव्याणि भरते, यो यजमानः श्रद्धायुक्तमनस्कः देवानां पितरं पालयितारं ब्रह्मणस्पतिं हविषा स्वकीयेनाविवासति आ समन्ताद्विशेषेण परिचरति, स इज्जनेनेति पूर्वत्रान्वयः। अत्रैव विकल्पितां याज्यामाह। यद्वा तत्रैवोपहोममन्त्रमाह "स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण। बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्" इति। स देवः सुष्टुभा शोभनाः स्तुभः सामावयवाः स्तोभा यस्य मन्त्रगणस्य सोऽयं सुष्टुप् तेन सुष्टुभा, ऋक्वता ऋचो बहुविधा यस्मिन् मन्त्रगणे स ऋक्वान् तेन ऋक्वता, रवेण ध्वनियुक्तेन गणेन मन्त्रसमूहेन तुष्टः सन् रुरोज बभञ्जेत्यन्वयः। कं बलं फलिगं फलमस्यास्तीति फली यजमानस्तं गच्छति प्राप्नोतीति फलिगः, तादृशं बलं प्रबलं प्रतिबन्धं रुरोज। हव्यसूदो हविर्भोक्ता, कनिक्रदत् आहोस्विदुत्तमं हविरिति क्रन्दनं कुर्वाणो बृहस्पतिः वावशतीः प्रस्नुतस्तनत्वेन वत्सान्

प्रति हम्बारवं कुर्वन्तीः उस्रिया गा उत्कर्षेणैतदीयगृहं प्रति प्रेरयति, स इत्यभ्यासः आदरार्थः। एतामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं विनाशयेयमिति मारुती याज्यानुवाक्ये कुर्यादिति विहितयोः प्रतीके दर्शयति "मरुतो यद्ध वो दिवो या वः शर्म" इति। मरुतो यद्ध व इत्यनुवाक्या। या वः शर्मेति याज्या। एतच्चोभयं प्रथमकाण्डस्य पञ्चमप्रपाठके व्याख्यातं। अर्यम्णे चरुं निर्वपेत् सुवर्गकाम इति चतुर्थेऽनुवाके यद्विहितं तत्र पुरोऽनुवाक्यामाह "अर्यमायाति वृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन्। सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु" इति। असौ वा आदित्योऽर्यमेति श्रुतेः, अर्यमशब्द आदित्यं ब्रूते, स चेन्द्राभेदोपचारेणैन्द्रधर्मैः स्तूयते। वृषभः कामानां वर्षयिता, तुविष्मान् महाबलः, वसूनां धनानां दाता, पुरुषु बहुषु यज्ञेषु हूतः आहूतः, अर्हन् स्वर्गं दातुं योग्यः। सहस्राक्षत्वादिकं स्पष्टं। तत्रैव याज्यामाह "ये तेऽर्यमन् बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति। तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे" इति। हे अर्यमन् राजन् ते त्वदीया देवयानाः देवैर्गन्तुमर्हा ये बहवः पन्थानः आ दिवः स्वर्गपर्यन्तं चरन्ति गच्छन्ति हे देव तेभिस्तैः पथिभिर्नोऽस्माकं महि शर्म महत्सुखं यच्छ, द्विपदे मनुष्याय नोऽस्माकं सम्बन्धिने शमेधि सुखकरो भव, चतुष्पदे गवादिरूपाय शमेधि। अर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा

मे प्रजाः स्युः। अर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यनयोरप्येते एव याज्यानुवाक्ये। यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदित्यत्र पुरोऽनुवाक्यामाह "बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत्। रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार" इति। बुध्नादग्रं कर्मोपक्रमादारभ्य समाप्तिपर्यन्तं अङ्गिरोभिर्गृणानः अङ्गिरोनाम्ना मुनिना सदृशैर्ऋत्विग्भिः स्तूयमान इन्द्रः पर्वतस्य पर्वतवत्सर्वाधारस्य राज्ञो दृꣳहितानि समानैरन्यैः क्रियमाणान् द्रोहविशेषान् व्यैरत् विगतानकरोत्। किं कुर्वन्। एषां समानानां कृत्रिमाणि बलात् सम्पादितानि रोधांसि ऐश्वर्यप्रतिबन्धकान्यवरोधनानि रुजत् भञ्जयत्। कदैतत् सर्वमकरोत् इत्युच्यते। सोमस्य मदे सोमपानसम्बन्धिनि मदे सति इन्द्रस्ता चकार तानि द्रोहनिवारणादीनि कृतवान्। तत्रैव याज्यामाह "बुध्नादग्रेण विमिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्। वृथासृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार" इति। इन्द्रो नदीनां बुध्नादग्रेण मूलादग्रपर्यन्तं मानदण्डैर्विमिमाय विशेषेण निर्मितवान् निर्मित्य च नदीनां खानि जलप्रवाहार्थानवकाशान् प्रति वज्रेणातृणत् जलप्रवाहनिरोधकपर्वतादीन् वज्रेण हिंसितवान्। दीर्घयाथैः दीर्घाणां प्रवाहाणां गमनोपयुक्तैः पथिभिर्मार्गैर्युक्तान् नदीविशेषानसृजत्। न तत्रास्य भूयान् प्रयासः किन्तु वृथा, यथा लोके नखैस्तृण-

च्छेदादित्यर्थचेष्टामायासमन्तरेण जनाः कुर्वन्ति तद्वदित्यर्थः। सोमस्येत्यादि पूर्ववत्। नखालम्भनमात्रेण महतोर्नदीः सृजत इन्द्रस्य श्रैष्ठ्यप्रापणे कः प्रयास इत्यभिप्रायः। यो ब्राह्मण आनुजावरः स्यात् तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेदित्यत्र पुरोऽनुवाक्यामाह "प्र यो जज्ञे विद्वाꣳ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाभिप्रतस्थौ" इति। विद्वान् सर्वज्ञो यो बृहस्पतिरस्य ब्राह्मणस्य यजमानस्य बन्धुं समानानां मध्येऽनुकूलं प्रजज्ञे प्रकर्षेण जानाति। तदीयमभिज्ञत्वं कथं निश्चीयत इति चेत् उच्यते, यतोऽयं देवः विश्वानि जनिमा सर्वेषां प्राणिनां सर्वाणि जन्मानि विवक्ति पुनः पुनः कथयति, तस्मादभिज्ञत्वं निश्चीयते। अभिज्ञो बृहस्पतिर्ब्रह्मणो वेदस्य मध्यान्नीचादुच्चा मध्यमभागात् प्रथमभागादुत्तमभागाच्च ब्रह्म परिवृढं कर्मोज्जभार उद्धृतवान्। स्वधया अमृतेन श्रैष्ठ्यप्रापणलक्षणेनाभिप्रतस्थौ एनं यजमानमभिलक्ष्य प्रस्थानं कृतवान्। समानानां मध्ये श्रैष्ठ्यं दातुं यजमानसमीपे समागतवानित्यर्थः। तत्रैव याज्यामाह "महान्मही अस्तभायद्वि जातो द्याꣳ सद्म पार्थिवञ्च रजः। स बुध्नादाष्ट जनुषाभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्" इति। महान् सामर्थ्येनाधिको बृहस्पतिर्मही प्रौढे पृथिव्यन्तरिक्षे द्यां द्युलोकं सद्म मनुष्याणां गृहं पार्थिवं रजश्च जात उत्पत्तिमात्रेण व्यस्तभायद्विविधं स्तम्भितवान्। यद्यप्येतत्सर्वमीश्वरस्यैव कर्म तथापि तदभेदेन बृह-

स्पतिः स्तूयते। यद्वा परमेश्वरानुग्रहादयमेव लोकत्रयादिकं स्वस्वव्यापारक्षममकरोत्। यस्य यजमानस्य सम्राट् यथोक्त-रीत्या साम्राज्यं प्राप्तो बृहस्पतिर्देवता स यजमानो जनुषा जन्ममात्रेणैव बुध्नादग्रमभि आयुषोऽनुष्ठीयमानकर्मणो वा मूलादारभ्य समाप्तिपर्यन्तम् आष्ट व्याप्तवान्। ईदृशेन बृहस्पत्यनुग्रहेण युक्तो यजमानः सर्वथा श्रैष्ठ्यं प्राप्नोत्येवेत्यभिप्रायः। तत्रैव विकल्पितां याज्यामाह "बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमाविवासन्ति देवाः। भिनद्वलं वि पुरो दर्दरीति कनिक्रदत्सुवरपो जिगाय" इति। यो बृहस्पतिर्जगतो देहस्य कर्मणो वा बुध्नादारभ्याग्रमभ्यर्ति अवसानमोजसा स्वबलेन प्राप्नोति, तं बृहस्पतिमितरे देवा आविवासन्ति आगत्य विशेषेण वासयन्ति परिचरन्तीत्यर्थः। बृहस्पतिर्बलं यजमानसम्बन्धिनां मध्ये प्रबलं पुरुषं भिनत् भिनत्ति प्रातिकूल्यान्निवारयति, पुरः समानानां पुराणि विशेषेण दर्दरीति प्रातिकूल्यनिवारणाय पुनः पुनर्वारितवान्। कनिक्रदत् उत्साहेन शब्दं कुर्वन्, सुवः तत्सदृशं श्रैष्ठ्यं अपस्तत्साधनं सर्वं जलक्षेत्रादिकं जिगाय जितवान् यजमानार्थं सम्पादितवानित्यर्थः।

अत्र विनियोगसङ्ग्रहः।

यज्ञविभ्रष्टयागे तु आद्ये याज्यासप्तके।
इन्द्रमिन्द्रश्चैन्द्रयागे त्वं नः सौम्यचरौ तथा॥
अग्नी कामप्रापकेऽग्नौ ब्रह्मवर्चसगे त्रयं।

आप्या सं ते चरौ सौम्ये गणा ग्रामवते त्वयं ॥
मरु यागेनाशकेष्टावर्यमार्यमणे चरौ।
बुध्वादैन्द्रे प्र यस्त्रिसो बार्हस्पत्यानुपूकके।
पञ्चविंशतिमन्त्रोक्ता अनुवाके चतुर्दशे ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे तृतीयः प्रपाठकः सम्पूर्णः ॥ * ॥

ॐ तत्सत् ॥

---

## अथ तैत्तिरीयसंहिताभाष्ये

### द्वितीयकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः ।



हरिः ॐ ।

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्सुब्धान्मृतानभिव्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन् वरं वृणामहै यत् ॥ १ ॥

असुरान् जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुरान् जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳसि ॥ २ ॥

आसन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् परासुरा यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते ॥ ३ ॥

अग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्रणुदते यदग्नये विबाधवते यं एवैनेन सदृङ् तं तेन विबाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनापनुदते प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते ॥ ४ ॥

वृणामहे यत्पुरस्ताद्रक्षाꣳसि वपेदग्नये विबाधवत एवं चत्वारि च ॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥
प्रपाठके द्वितीये च तृतीये चेष्टयः क्रमात्।
प्रोक्तास्तत्रावशिष्टास्तु वक्ष्यन्तेऽस्मिंश्चतुर्थके॥

चतुर्थस्य प्रथमानुवाके भ्रातृव्यवतः स्पर्धमानस्य विहविष्कां काञ्चिदिष्टिं विधातुं प्रस्तौति "देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्त्सुब्धान् मृतानभिव्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन् वरं वृणामहै यदसुरान् जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुरान् जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्यासन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् परासुराः" इति। देवानामसुरादीनाञ्च सैन्यद्वयं युद्धाय सन्नद्धमासीत्। असुराणां रक्षसाञ्चात्स्वेवान्तरजातिभेदः। तदीये युद्धे स्वल्पप्रहारेण देवानां शरीरे यल्लो-

हितमितरेऽकुर्वन् तस्मोहितस्थानं रक्षांसि प्रतिदिनं रात्रि-ष्वागत्य केनचिद्विषादिप्रयोगेणासुभ्नन् क्षुभितं कृतवन्तः। तदानीमेव तेन क्षोभेण देवा म्रियन्ते। तान् मृतानभिलक्ष्य पश्चाद्गीच्छत् रात्रिः प्रभातं प्राप्तवती। ततो देवा रक्षसां कृत्यमिदमित्यवगत्य रक्षांसि उपामन्त्रयन्त उत्कोचं प्रति-श्रुत्य स्वाधीनानि कृतवन्तः। ततो रक्षांसि विजयफले भागं सम्प्रार्थ्य स्वसैन्यान्निर्गत्य देवसैन्ये प्रविष्टानि। ततो देवा असुरान् जित्वा रक्षांस्यपनोदितवन्तः। तानि रक्षांसि देवा अनृतम-कुर्वन्निति निश्चित्य प्रवृत्तं परितो वेष्टनमकुर्वन्, तदानीं देवा अग्नौ स्वकार्यसिद्धिमयाचन्त, याचित्वा त्रिहविष्कामिष्टिं नि-रवपन्। तत्र प्रथमस्य हविषः प्रवानग्निर्देवता याज्यापुरोऽनु-वाक्ययोः प्र प्रायमग्निर्भरतस्येत्यादिकयोः श्रुतः प्रशब्दो यस्या-ग्नेरस्ति सोऽयं प्रवान्, द्वितीयस्य हविषो विबाधवान् अग्नि-र्देवता वि पाजसा पृथुनेत्यस्मिन्मन्त्रे श्रूयमाणो विबाधशब्दो यस्याग्नेरस्ति सोऽयं विबाधवान्, तृतीयस्य हविषः प्रतीकवा-नग्निर्देवता स त्वमग्ने प्रतीकेनेति मन्त्रे प्रतीकशब्दो यस्याग्ने-रस्ति सोऽयं प्रतीकवान्। तत्र प्रवतोऽग्नेरिष्ट्या पूर्वस्यां दिशि रक्षांसि प्रणोदितवन्तः। विबाधवतोऽग्नेरिष्ट्या दक्षिणोत्तरयोः पार्श्वयोः रक्षांसि विबाधितवन्तः। प्रतीकवतोऽग्नेरिष्ट्या प्र-तीच्यां दिशि रक्षांस्यपनोदितवन्तः। ततो देवा विजयिनो ऽभवन्नसुराः पराजिता अभवन्। इष्टिं विधत्ते "यो भ्रातृ-व्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाश-

मष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्रणुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन विबाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनापनुदते" इति। त्रिविधो हि भ्रातृव्यः, प्रबलाः समानबला हीनबलाश्चेति। तेषां त्रयाणां क्रमेण त्रिभिर्हविर्भिरपाकरणं भवति। वेदनं प्रशंसति "प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते" इति। भ्रातृव्यं श्रेयांसं प्रणुदते, सदृशमतिक्रामति, पापीयांस्तु न प्राप्नोत्येव॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः॥ ०॥

---

देवासुराः संयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभिभविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती॥ १॥

इत्यब्रवीत्त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे निरवपन्नꣳहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन्नदधत चयस्त्रिꣳशत्कपालं पुरोडाशं निरवपन् चयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ॥ २ ॥

तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान् भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात् समानेष्वन्यः श्रेयानुत ॥ ३ ॥

अभ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनापहते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन्धत्ते चयस्त्रिꣳशत्कपालं पुरोडाशं निर्वपति चयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या

यज॑त उत्त॒माम॒॑व विजि॑तिं॒ भ्रातृ॑व्येण॒ वि ज॑यते ॥ ४ ॥

इ॒न्द्रि॒याव॑ती॒ भूत्या॑ उ॒तैका॒न्नप॑ञ्चा॒शच्च॑ ॥ २ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थ-प्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

आद्येऽनुवाके काम्येष्टिः स्पर्धमानस्य वर्णिता।

अथ द्वितीये तस्यैव विजितिसञ्ज्ञामिष्टं विधातुं प्रस्तौति। "देवासुराः संयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभिभविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमंहोमुगियं विमृधेयमिन्द्रियावतीत्यब्रवीत्त इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायांहोमुचे निरवपन्नंहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन्नदधत त्रयस्त्रिंशत्कपालं पुरोडाशं निरवपन् त्रयस्त्रिंशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त" इति। युद्धायोद्युक्ता देवाः परस्परमिदमब्रुवन् नो अस्माकं मध्ये योऽतिशयेन वीर्यवान् तमनुसृत्य वयं सर्वे समारभामहै सम्यग्युद्धोपक्रमं कुर्म इति। ततस्ते इन्द्रमतिशयेन वीर्यवन्तं निश्चित्य तेनोक्तास्तदीयास्तिस्रस्तनूः

हविर्भिस्तर्पितवन्तः तैश्च हविर्भिः क्रमेण पापविमोकं वैर्यपघातं सामर्थ्यधारणं च क्रतवन्तस्त्रिष्वेकादशकपालपुरोडाशेषु मिलित्वा त्रयस्त्रिंशत्कपालः पुरोडाशः सम्पद्यते तेन च त्रयस्त्रिंशत्सङ्ख्याकान् देवानिन्द्र आत्माधीनान् करोति तच्चैश्वर्याय सम्पद्यते। ततो देवा असुरैः सह युद्धार्थं तां पूर्वोक्तां पापविमोकशत्रुवधेन्द्रियधारणरूपामुत्तमां विजितिं प्राप्नुवन्। विधत्ते "यो भ्रातृव्यवान्त्स्यात् स स्पर्द्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान् भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात् समानेष्वन्यः श्रेयानुताभ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनापहते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन्धत्ते त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै" इति। पूर्वोक्तप्रवदादिविशेषणवत् अंहोमुगादिविशेषणानि याज्यानुवाक्यागतशब्दाभिप्रायेण वा स्वार्थपरत्वेन वा योजनीयानि। अंहोमुचे प्रभरेमा मनीषामित्यस्मिन् मन्त्रेऽस्त्यंहोमुक्शब्दः। वि न इन्द्र मृधो जहीत्यस्मिन् मन्त्रेऽस्ति विमृधशब्दः। इन्द्रियाणि शतक्रतो इत्यस्मिन् मन्त्रेऽस्ति इन्द्रियशब्दः। अर्थपरत्वं तु विस्पष्टं। पूर्वोक्तेषु प्रवदादिष्वपि प्रणोदनवत्त्वं शत्रुविबाधवत्त्वं प्राङ्मुखवत्त्वं चेत्यर्थपरत्वं योज्यं। यस्माद्यजमानात् भ्रातृव्यः श्रेयान् भवति स एव

यजमानः पाप्मना गृहीतो भवति स च प्रथमहविषा पापान्मुच्यते। समानेषु मध्ये यस्माद्यजमानादन्यः श्रेयान् भवति सोऽन्यो यद्यप्यभ्रातृव्यः तथाप्येषोऽश्रेयान् यजमानः, श्रेयस्त्वमत्र सम्पादितवैरित्वं, तेनान्येनाभिषण्णोऽभिभूतो भवति, तदीयश्रेयस्त्वमसहमानः सन् अहमभिभूतोऽस्मीति क्लिश्नाति, स तु द्वितीयेन हविषा मृधस्तादृशाञ्छत्रूनपहते। तृतीयेन हविषेन्द्रियधारणं भवति। पूर्व्ववत् समुदितया त्रयस्त्रिंशत्सङ्ख्यया यजमानस्य सर्वा देवताः स्वाधीना भवन्ति, तच्च भूत्यै सम्पद्यते। इष्टेर्नामोपदिश्य तद्वेदनं प्रशंसति "सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण विजयते" इति। विशेषेण जयन्त्यनयेति विजितिः, एतद्वेदिता भ्रातृव्येण सह युद्धा तां पूर्व्वोक्तां पापमोचादिरूपामुत्तमां विजितिं प्राप्नोति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

---

देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्यादायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भवि-

घ्नन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतराꣳश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि ॥ १ ॥

भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत यद्गायत्र्यपक्रम्यातिष्ठत् तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं ॥ २ ॥

प्रजां पशूनवृञ्जत तस्मादेताꣳ संवर्ग इतीष्टिमाहुर्यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत्तꣳ शृतमासन्नमेतेन यजुषाभिमृशेदोज एव बलमिन्द्रियं वीर्यं प्रजां पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति ॥ ३ ॥

बलमस्येतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं पञ्चचत्वारिꣳशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीये विजयार्थेष्टिः प्रोक्ता विजितिनामका।

अथ तृतीये भ्रातृव्यवतः स्पर्धमानस्य संवर्गेष्टिं विधित्सुरादौ तदङ्गभूतं मन्त्रं पठितुं प्रस्तौति "देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्सङ्गृह्यादायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतरांश्चनोपावर्तत देवा एतद्यजुरपश्यन्" इति। ओजः त्वगसृङ्मांसादिधातुभ्यो जातोऽष्टमो धातुः तथा च सम्प्रदायविद्भिरुक्तं, ओजो नामाष्टममिति। बलं शरीरशक्तिः। इन्द्रियं दृष्ट्यादिपाटवं। वीर्यमुत्साहः। प्रजाः पुत्रादिकाः। पशवो गवादिकाः। देवासुरेषु युद्धार्थं गतेषु तदीयानोजःप्रभृतीन् षट् पदार्थान् गायत्री संगृह्य तदुभयेभ्योऽपक्रम्य दूरे स्थितवती। तां दृष्ट्वा ते देवाश्चासुराश्चैवममन्यन्त उभयोर्वर्गयोर्मध्ये यतरान् यद्वर्गस्थितानियं गायत्री प्राप्स्यति तद्वर्गस्थिता इदं सर्वैश्वर्यं प्राप्स्यन्तीति तदुभयेऽपि तां गायत्रीं विलक्षणेन शब्देनाहूतवन्तः, हे विश्वकर्मन्निति देवानामाह्वानं, हे दाभीत्यसुराणामाह्वानं। विश्वानि कर्माणि यस्याः सा विश्वकर्मा तत्सम्बोधनं हे विश्वकर्मन्निति। दभ्नोति विरोधिनो हिनस्तीति दाभी तत्सम्बोधनं हे दाभीति। सा गायत्री अन्यतरानुभयोर्वर्गयोर्मध्ये कानपि पुरुषान्नैव प्राप्नोत्। ततस्ते देवास्तत्प्राप्त्युपायत्वेनैतद्यजुरपश्यन्। तदिदं यजुः पठति "ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां

धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः" इति। अत्र सर्वात्मकत्वेन गायत्री स्तूयते। ओजोबले व्याख्याते, सहः सहिष्णुत्वं धैर्यं, भ्राजो दीप्तिः, देवानां धाम स्वर्गः, नामेन्द्रादिकं, विश्वमचेतनं कृत्स्नं जगत्, विश्वायुः कृत्स्नान्नयुक्तं, सर्वं चेतनरूपं कृत्स्नं जगत्, सर्वाण्यायुष्याणि यस्य चेतनस्य जगतः तत्सर्वायुः, वैरिणोऽभिभवतीत्यभिभूः। यथा मन्त्रस्यार्थं फलं दर्शयति "इति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत" इति। अनेनैवोक्तेन स्तुतिरूपेण मन्त्रेण गायत्रीं प्रसाद्य तत्प्रसादादसुराणामोज-आदिषट्कं विनाश्य स्वयं तत्सम्भवन्तः। अथेष्टिं विधातुं प्रस्तौति "यद्गायत्र्यपक्रम्यातिष्ठत् तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत तस्मादेताꣳ संवर्ग इतीष्टिमाहुः" इति। विधास्यमानाया इष्टेर्गायत्री संवर्ग इति नामद्वयं। यस्माद्गायत्री सर्वमादायापक्रम्य स्थित्वा मन्त्रेण स्तुता सती सर्वमानीतवती, तस्मात् तेन मन्त्रेण हविरभिमृश्य क्रियमाणेष्टिर्गायत्रीत्युच्यते। सा च गायत्री संवत्सररूपा तदीयाक्षरेष्वर्धमासेषु च चतुर्विंशतिसङ्ख्याकायाः समानत्वात्। अतः संवत्सर एव तदानीं गायत्रीरूपेणापक्रम्यातिष्ठदिति संवत्सरात्मकत्वात् प्रशस्तेयमिष्टिः। यस्मादेतयेष्ट्या देवा असुराणां सम्बन्ध्योजआदिषट्कं वर्जितवन्तः तस्मात् सम्यग् वृज्यते विनाश्यतेऽनेनेति संवर्गनामकोऽयं यागः।

इदानीं विधत्ते "यो भ्रातृव्यवान्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत्" इति। संवर्गं सं रयिं जयेति याज्यायां संवर्गशब्दश्रवणात् वैरिसम्बन्धोजआदिवर्जनहेतुत्वाच्चायमग्निः संवर्गः। पूर्वपठितमोजोऽसीत्यादिमन्त्रं विनियुङ्क्ते "तꣳ शृतमासन्नमेतेन यजुषाभिमृशेदोज एव बलमिन्द्रियं वीर्यं प्रजां पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति" इति। तं पुरोडाशं शृतं पक्वं आसन्नं वेद्यामासादितं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः॥ ०॥

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैताꣳ सोऽब्रवीद्बृहस्पतिरनया त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं प्रातिष्ठत् ततो वै प्रजापतिं प्रजा उपावर्तन्त यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् प्रजापतिं॥

॥ १ ॥

एवं स्वेन भागधेयेनोपधावति स एवास्मै प्रजां प्रजनयति प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टाः पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्ववैतां सोऽब्रवीत् पूषानया मा प्रतिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मां प्रतिष्ठेति सोमोऽब्रवीन्मम वै ॥ २ ॥

अकृष्टपच्यमित्युभौ वां प्रतिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त यः पशुकामः स्यात् तस्मा एतं सौमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोपधावति तावेवास्मै पशून् प्रजनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्रजनयति ॥ ३ ॥

वपेत् प्रजापतिं वै दधाति पूषा त्रीणि च ॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

स्पर्धमानस्य विहिता संवर्गेष्टिस्तृतीयके।

अथ चतुर्थे गार्मुतं चरुं विधातुं प्रस्तौति "प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैताꣳ सोऽब्रवीद्बृहस्पति-रनया त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं प्राति-ष्ठत् ततो वै प्रजापतिं प्रजा उपावर्तन्त" इति। ताः परा-ङ्मुखत्वेनापगताः प्रजाः यत्र देशे निवासं कृतवत्यः तत्र देशे भाण्डचालनादिनिष्कासपातेन ततो देशात् गर्मुत्संज्ञकमकृष्ट-पच्यमरण्यमुद्गरूपं धान्यमुदतिष्ठत् तदानीं बृहस्पतिश्च प्रजा-पतिश्च ताः प्रजा अनुगतवन्तौ। अत्र चकारादनाम्नातोऽपि प्रकृतः प्रजापतिः समुच्चीयते। तदा प्रजापतिं प्रति बृहस्पति-रेवमब्रवीत्, अनया गार्मुतधान्यरूपया त्वां प्रतिष्ठानि धा-न्यवत्त्वेन प्रतिष्ठितं करोमि, ततो धान्यवन्तं त्वां तदर्थिन्यः प्रजा उपगमिष्यन्तीत्युक्त्वा तं प्रजापतिं प्रतिष्ठितवान्, ततो धान्यवन्तं प्रजापतिं धान्यार्थिन्यः प्रजा उपगताः। विधत्ते "यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मै प्रजां प्रजनयति" इति। अथ पशुकामस्य सौमापौष्णं गा-र्मुतं चरुं विधातुं प्रस्तौति "प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टाः पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्ववैताꣳ सोऽब्रवीत् पूषानया मा प्रतिष्ठाय त्वा पशव उपावर्त्स्यन्तीति मां प्रतिष्ठेति सोमोऽब्रवीन्मम वा अकृष्टपच्य-

मित्युभौ वां प्रतिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त" इति। पशुनिवासस्थानेऽपि भक्षितदृणशेषगोमयादिपातेन गर्मुत उत्पत्तिः, तया गर्मुता प्रजापतिः पूषणं सोमञ्च प्रतिष्ठाप्य पशूनाप्नवान्। अथेष्टिं विधत्ते "यः पशुकामः स्यात् तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोपधावति तावेवास्मै पशून् प्रजनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्रजनयति" इति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ * ॥

---

अग्ने गोभिर्न आगहीन्दो पुष्ट्या जुषस्व नः। इन्द्रो धर्ता गृहेषु नः। सविता यः सहस्रियः स नो गृहेषु रारणत्। आ पूषा एत्वा वसु। धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनत्। त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत्। सहस्रेणायुतेन च। येन देवा अमृतं॥ १ ॥

दीर्घꣳ श्रवो दिव्यैरयन्त। रायस्पोष त्वमस्मभ्यं गवां कुल्मिं जीवस आयुवस्व। अग्निर्गृहपतिः सोमो विश्ववनिः सविता सुमेधाः स्वाहा। अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात् पथो मा योषं मूर्धा भूयासꣳ स्वाहा॥ २॥

अमृतमष्टाचिꣳशच्च॥ ५॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ *॥

प्रजापश्चर्थिनोरुक्तश्चतुर्थे गामृतश्चरुः।

अथ व्यवहितेन षष्ठेन चित्रायागं विधित्सुरादौ पञ्चमेनानुवाकेनोपहोममन्त्रान् पठति। कल्पः। चित्रापौर्णमासे चित्रामिष्टिं निर्वपेदाग्नेयादीनि सप्ताग्ने गोभिर्न आगहीत्युपहोमा इति। तत्र प्रथममन्त्रपाठस्तु "अग्ने गोभिर्न आगहीन्दो पुष्ट्या जुषस्व नः। इन्द्रो धर्ता गृहेषु नः" इति। हे अग्ने गोभिः सह नोऽस्मान् प्रत्यागहि आगच्छ, हे इन्दो पशुपुष्ट्या नोऽस्मान् जुषस्व प्रीणय, इन्द्रो नोऽस्माकं गृहेषु धर्ता पशूनां धारयिता भवतु। द्वितीयमन्त्रपाठस्तु "सविता यः सहस्रियः स नो गृहेषु रारणत्। आ पूषा एत्वा वसु" इति। पशूनां सहस्रं यस्यास्त्यसौ सहस्रियः, तादृशो यः

सविता नोऽस्माकं गृहेषु रारणत् भृशं रमतां। पशुपोषक-स्य देव आगच्छतु वसु धनमप्यागच्छतु। तृतीयमन्त्रपाठस्तु "धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनत्" इति। सर्वस्य विधाता जगतः पालक ईश्वरो नोऽस्मभ्यं रयिं धनं ददातु स ईश्वरो नोऽस्मान् पूर्णेन धनेन वावनत् भृशं भजतु रक्षतु। चतुर्थमन्त्रपाठस्तु "त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत्। सहस्रेणायुतेन च" इति। यस्त्वष्टा वृषभः श्रेष्ठः वृषा कामानां वर्षिता सोऽस्माकं गृहेषु पशूनां सहस्रेणायुतेन च सह रारणत् भृशं रमतां। पञ्चममन्त्रपाठस्तु "येन देवा अमृतं दीर्घꣳ श्रवो दिव्यैरयन्त। रायस्पोष त्वमस्मभ्यं गवां कुल्मिं जीवस आयुवस्व" इति। हे रायस्पोष धनपोषक येन त्वया देवा अमृतं पीयूषं दीर्घं सुपूर्णं श्रवः कीर्तिहेतुभूतमन्नं दिव्यैरयन्त स्थापितवन्तः। तादृश-स्त्वमस्मदर्थं गवां कुल्मिं सङ्घं जीवसे जीवनार्थमायुवस्व आ-नीय मिश्रय। षष्ठमन्त्रपाठस्तु "अग्निर्गृहपतिः सोमो विश्ववनिः सविता सुमेधाः स्वाहा" इति। अग्निरस्मद्गृहस्याधिपतिः, सोमो विश्वं वनते भजत इति विश्ववनिः, सविता शोभना मेधा यस्येति सुमेधाः, एतेभ्य इदं स्वाहुतमस्तु। सप्तममन्त्रपाठस्तु "अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात् पथो मा योषं मूर्धा भूयासꣳ स्वाहा" इति। हे गृहपते ऽग्ने घृतमर्हति इति घृत्यो यस्ते भागस्तेन सह ओजोऽष्टमधातु-रूपं शरीरसारमाक्रममाणायानुतिष्ठते यजमानाय धेहि स्था-

पय, यजमानोऽहं श्रैष्ठ्यात् पथः श्रेष्ठानां मार्गकर्तृणां सम्बन्धिनोऽस्मादनुष्ठानमार्गात् मा योषं वियुक्तो मा भूवं मूर्धा यजमानानां मध्ये शिरोवदुत्तमो भूयासं तुभ्यमिदं स्वाहुतमस्तु।

अत्र विनियोगसंग्रहः।

अग्ने गोभिस्तूपहोमाश्चित्रायागे हि सप्त ते।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

---

चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते प्रैवाग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि विकरोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै ॥ १ ॥

मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्याः पशवः

सप्तारण्याः सप्त छन्दाꣳस्युभयस्यावरुध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवास्मिन् पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै ॥ २ ॥

अस्मै त एव द्वादश च ॥ ६ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

चित्रायागस्योपहोममन्त्राः पञ्चम ईरिताः।

अथ षष्ठे तं यागं विधत्ते "चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवंविद्वाꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते" इति। चित्रेति यागस्य नामधेयं सा च चित्रा भूमिस्वरूपा। यस्मात् कारणात् अस्यां भूमौ सर्वं प्राणिजातमाधिक्येनोत्पद्यते तेन चित्रप्राण्युत्पादनेनेयं भूमिश्चित्रा, तद्वद्विचित्रप्रजापशुहेतुत्वाद्यागोऽपि चित्रेत्युच्यते। चित्रायाः स्वरूपभूतान् सप्त यागविशेषान् विधातुं तद्विधिं क्रमेणान्वयति "प्रैवाग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि विकरोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनं" इति।

अत्राग्नेयेन हविषा प्रजापयति प्रकर्षेण पशूत्पत्तिबीजं प्रक्षि-
पति, सौम्येन हविषा व्रीह्यादिबीजेषु गोमयमिव प्रजादि-
बीजेषु पोषकं रेतो धारयति। तृतीयहविर्देवता त्वष्टा नि-
हितं रेतो नानाविधरूपाकारेण विकरोति। *ततः सरस्व-
तीदेवताकः सरस्वद्देवताकश्चेत्युभौ सारस्वतौ भवतः, एतच्च
द्वयं स्त्रीपुरुषरूपत्वाद्देवतासम्बन्धि मिथुनं, तस्य हविषां मध्ये
ऽनुष्ठानेन यजमानार्थं दैव्यं मिथुनं गृहमध्ये सम्पादितवान्
भवति, तच्चोत्पन्नानां प्रजानां पशूनाञ्च पुष्ट्यै सम्पद्यते प्रजा-
नां पशूनाञ्च प्रजननायोत्पत्तये सम्पद्यते। तत्र सिनीवाल्यै
चरुः कर्त्तव्यः सिनीवाल्या वाक्त्वञ्च अर्थवादान्तरे द्रष्टव्यं।
वाचः पुष्टिहेतुत्वं सभामध्ये पण्डितेष्ववलोक्यते। तस्मादनेन
चरुणा पुष्टिहेतुं वाचं प्राप्नोति। ऐन्द्रो यागश्चरमः कर्त्तव्यः
तेनैवेन्द्रस्य पुरुषत्वेन सिनीवाल्या स्त्रीत्वेन च तदुभयं मिलित्वा
मिथुनं भवति। अत्र द्रव्यविशेषाः शाखान्तरे द्रष्टव्याः।
पाठप्राप्तां हविःसङ्ख्यां प्रशंसति "सप्तैतानि हवीꣳषि भवन्ति
सप्त ग्राम्याः पशवः सप्तारण्याः सप्त छन्दाꣳस्युभयस्यावरुध्यै"
इति। गोमहिषाश्वाजाविगर्दभोष्ट्रा ग्राम्याः। द्विखुरश्वापदपक्षि-
सरीसृपहस्तिमर्कटनादेयाः सप्तारण्याः। गायत्र्युष्णिगनुष्टुप्
बृहती पङ्क्ति त्रिष्टुब् जगत्यश्छन्दांसि। उभयस्य पशुसङ्घस्य
छन्दःसङ्घस्य च अग्ने गोभिर्न आगहीत्यादिभिर्मन्त्रैरुपहोमान्
विधत्ते "अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवा-

* 'ततः स्त्री सरस्वतीदेवताका सरस्वद्देवताकश्चेति' इति का०।

स्मिन् पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुती-र्जुहोति प्रतिष्ठित्यै" इति। एते वै मन्त्रोक्ता अग्नीन्द्रादयः॥

अत्र मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत्।
चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः।
स्यान्नाम पृष्ठाज्यवद्दिष्यवमानेषु तत्तथा॥

चित्रया यजेत पशुकाम इत्याम्नायते। तत्र चित्राशब्दो नोद्भिच्छब्दवद्यौगिकः किन्तु रूढ्या चित्रस्त्रीत्वमभिधत्ते। ततो न पूर्वन्यायेन नामत्वं। तथा सत्यग्नीषोमीयं पशुमाल-भेतेति विहितं पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रस्त्रीत्वगुणो विधीयते* इति प्राप्ते ब्रूमः। चित्रत्वं स्त्रीत्वञ्चेति द्वावेतौ गुणौ, तयोर्द्वयोर्विधाने वाक्यं भिद्येत। तथा चोक्तं।

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥ इति।

अथ वाक्यभेदपरिहाराय गुणद्वयविशिष्टपशुद्रव्यरूपं कर्म विधीयते तदा गौरवं स्यात्। तस्माच्चित्राशब्दः पूर्ववद्यजिसा-मानाधिकरण्येन यागनामधेयं भवति। चित्रत्वञ्च तस्य विल-क्षणद्रव्यद्वारेणोपपद्यते। दधि मधु घृतमापो धानास्तण्डुलास्त-त्संसृष्टं प्राजापत्यमिति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि

---

* चित्रत्वस्त्रीत्वगुणौ विधीयेत इति पाठान्तरं।

षडाम्नातानि। तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यं याग-स्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य चित्रया यजेत पशुकाम इत्येतत् फल-वाक्यं। एवं सति प्रकृतार्थौ लभ्येत। अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातां। लिङ्प्रत्ययस्य चानुवादत्वाङ्गीकारान्मुख्यविध्यर्थो बाध्येत। तस्माच्चित्रा कर्म-नामधेयं। यथा चित्राशब्दे नामधेयत्वं तथा बहिष्पवमानशब्दे आज्यशब्दे पृष्ठशब्दे च तत्तत्कर्मनामधेयत्वं योजनीयं।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितं।

चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्यः स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वतः॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पकं।
पुंप्रवृत्त्यादिनोपेते प्रतिबन्धे भवेत् फलं॥

काम्यकर्मणि एवं श्रूयते 'चित्रया यजेत पशुकाम ऐन्द्रा-ग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इति। तत्र यथा स्वर्ग-फलस्यामुष्मिकत्वं नियतं, एवं पश्वादिफलस्यापि। यदि स्वर्ग-हेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादकः तर्हि चित्रादिरपि तथास्त्विति चेत्, मैवं। वैषम्यात्। अस्मिन् देहे स्वर्गस्य भोक्तु-मशक्यत्वादश्रुताप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। चित्रया त्वन्यदेहोऽवश्यमुत्पाद्यत इति नियमो न श्रुतः, नापि किञ्चित् तस्य कल्पकमस्ति, अनेनापि देहेन पश्वादिफलस्य भोक्तुं श-क्यत्वात्। अस्मिन् देहे प्रतिग्रहादिदृष्टोपायमन्तरेण पश्वाद्य-

लाभाद्दैधं चित्रादिफलमामुष्मिकमेवेति चेत्। न, प्रतिग्रहादेः प्रतिबन्धनिवृत्तावुपयुक्तत्वात्। तस्मादसति प्रतिबन्धे फलमैहिकं सति त्वामुष्मिकं।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मगः क्रमः।
नास्त्यस्ति वात्र नास्त्येव तन्नियामकवर्जनात्॥
याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः।
मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः॥

चित्रायागे सप्तानां हविषां मध्ये चतुर्थपञ्चमे इत्यमाम्नायेते 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनं' इति। सरस्वती च सरस्वांश्चेति विग्रह्य समासे कृते पुमान् स्त्रियेति सूत्रेणैकशेषात् सारस्वताविति भवति, तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ, एतच्च मिथुनमिति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्माश्चोदकतः प्राप्तास्तत्र स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वापः कार्यः। कुतः, श्रुत्यर्थपाठप्रवृत्तिस्थानानामन्यतमस्य नियामकस्याभावादिति प्राप्ते ब्रूमः, होत्रकाण्डे स्त्रीदेवतायाः पूर्वं याज्यानुवाक्ये आम्नाते 'प्र णो देवी सरस्वती' 'आ नो दिवः' इति। पश्चात् पुंदेवतायाः 'पीपिवाꣳसꣳ सरस्वतः' 'ये ते सरस्व ऊर्मयः' इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते। ततो धर्माणां मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे नियते सति स्त्रीयागस्यैव प्रथमं निर्वापः कार्यः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

मारुतमसि मरुतामोजोऽपां धारां भिन्धि रमयत मरुतः श्येनमायिनं मनोजवसं वृषणꣳ सुवृक्तिं। येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तꣳ स्वस्ति। पुरोवातो वर्षन् जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत् स्वाहानशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेषरावृत् स्वाहातिरात्रं वर्षन् पूर्तिरावृत् ॥ १ ॥

स्वाहा बहु हायमवृषादिति श्रुतरावृत् स्वाहातपति वर्षन् विराडावृत् स्वाहावस्फूर्जन् दिद्युद्वर्षन् भूतरावृत् स्वाहा मान्दा वाशाः शुन्ध्यूरजिराः। ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः। मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह मावत। वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोपनह्यामि ॥ २ ॥

पूर्तिरावृद्द्विचत्वारिꣳशच्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

पशुकामस्य चित्राख्यो यागः षष्ठे निरूपितः ।

अथ सप्तममारभ्य दशमान्तैश्चतुर्भिरनुवाकैः कारीरीष्टिः प्रतिपाद्यते । तत्र तावत् सप्तमेऽनुवाके केचिन्मन्त्राः पठ्यन्ते । कल्पः । कारीर्या वृष्टिकामो यजेताग्नीनन्वाधायापरेणाहवनीयं दक्षिणातिक्रम्य यजमानो मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्त इति । पाठस्तु "मारुतमसि मरुतामोजोऽपां धारां भिन्धि" इति । हे कृष्णवासस्त्वं मरुत्सम्बन्ध्यसि वस्त्रे प्रक्षिप्तस्य कृष्णद्रव्यमिश्रस्य जलस्य मरुद्भिः शोषणीयत्वात्, अत एव मरुतामोजो बलमसि मेघेषु प्रतिबद्धानामपां धारामुद्दिश्य प्रतिबन्धरूपं मेघं भिन्धि । कल्पः । रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति पुरोवातमेव जनयतीति । प्रतिमीवति प्रतिबध्नाति । पाठस्तु "रमयत मरुतः श्येनमायिनं मनोजवसं वृषणꣳ सुवृक्तिं । येन शर्ध उग्रमवसृष्टमेति तदश्विना परिधत्तꣳ स्वस्ति" इति । हे मरुतः श्येनं श्येनवत् प्रबलगतिं पुरोवातं रमयत क्रीडयत, कीदृशं आयिनं आगच्छन्तं, मनोजवसं मनस इव जवो वेगो यस्य तादृशं, वृषणं उदकस्य वर्षयितारं, सुवृक्तिं सुष्ठु पाश्चात्यवातस्य वर्जयितारं, येन पुरोवातेनावसृष्टं मेघेभ्यो मोचितं जलं उग्रं तीव्रधारारूपं भूत्वा शर्धः शीर्णमतिशोषेण हिंसितं क्षेत्रमेति प्राप्नोति, तादृशं पुरोवातं रमयतेति पूर्वत्रान्वयः । हे अश्विनौ देवभिषजौ तज्जलं स्वस्ति क्षेमकरं यथा भवति तथा परितो धारयतं । कल्पः । पुरोवातो वर्ष-

त्रित्यष्टौ वातनामानि कृत्वेति। पाठस्तु "पुरोवातो वर्षन् जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत् स्वाहाऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेषरावृत् स्वाहा-तिरात्रं वर्षन् पूर्तिरावृत् स्वाहा बहु हायमवृषादिति श्रुत-रावृत् स्वाहाऽऽतपति वर्षन् विराडावृत् स्वाहावस्फूर्जन् दिद्यु-द्वर्षन् भूतरावृत् स्वाहा" इति। यः पुरोवातः वर्षन् वृष्टिं प्रवर्तयन् जिन्वः प्रजाः प्रीणयन्नावृदावर्तताम्, तस्मै स्वाहुत-मस्तु। वातावत् प्रवातेन युक्तः उग्रस्तीव्रधारायुक्तः, स्तनयन् गर्जन् भीमो गर्जनाधिक्येन भयङ्कर इव, अनशनि प्राणघा-तकोऽशनिर्यथा न पतति तथा अवस्फूर्जन् अवसेचनेन शब्द-यन्, दिद्युद्विद्युल्लक्षणेन प्रकाशनेन युक्तः, त्वेषः वर्षधारया शस्यक्षेत्रादेर्दीपकः, अतिरात्रं रात्रिमतीत्य दिवारात्रमित्यर्थः, पूर्तिः महीतलं पूरयिता। अयं वातो बहु यथा भवति तथा अवृषात् अवर्षयत्, किलेति श्रुतो जनेषु ख्यातः। आतपति आतपे स्थिते सति विराड्विशेषेण राजमानः। अवस्फूर्जन् दि-द्युदितिशब्दौ व्याख्यातौ। आदरार्थं पुनर्वचनं। इत्थम्भूतः यथोक्तगुणैर्युक्तः सन् सर्वलोकधारणक्षम इत्यर्थः। कल्पः। अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन् ख-र्जूरसक्तून् करीरसक्तून् वा मान्दा वाशा इति कृष्णमधुना सं-युज्य तिस्रः पिण्डीः कृत्वा पुष्करपलाशैः संवेष्ट्येति। पाठस्तु "मान्दा वाशाः शुन्ध्यूरजिराः। ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः। मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह मावत" इति।

मान्दादीन्येकादशापां नामानि सम्बुद्ध्यन्तानि, तादृश्यो हे आपो यूयं इहास्मिन् कर्मणि मां अवत फलदानेन रक्षत। मान्दाः हर्षहेतवः, वाश्राः शब्देन वर्षणजन्येन युक्ताः, शुन्ध्यूः शुद्धिहेतवः, अजिराः प्रवाहरूपेण गमनशीलाः, ज्योतिष्मतीः शुक्लरूपयुक्ताः, तमस्वरीः सूर्यप्रकाशाच्छादनेन तमो यथा भवति तथा स्वरन्त्यो गच्छन्त्यः, उन्दतीः भूमिं क्लेदयन्त्यः, सुफेनाः जलप्रवाहबाहुल्येन बहुफेनयुक्ताः, जगन्मित्रभूता ओषधीर्बिभ्रति पोषयन्तीति मित्रभृतः, क्षत्रं देशाधिपतिं राजानं सुवृष्टिजन्यसन्तोषेण बिभ्रति पोषयन्तीति क्षत्रभृतः, सुष्ठु शोभनं शस्येन सम्पूर्णं राष्ट्रं यासां ताः सुराष्ट्राः। कल्पः। समुद्यम्य कृष्णाजिनस्यान्तौ वृष्णो अश्वस्य सन्दानमसीति कृष्णेन दाम्नोपनह्यतीति। पाठस्तु "वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोपनह्यामि" इति। हे रज्जो त्वं वृष्णो अश्वस्य सेचनसमर्थस्य अश्वमुख्यस्यैवास्य कृष्णाजिनस्य सन्दानं दृढबन्धनसाधनमसि। अतो वृष्टिसिद्ध्यर्थमनेन सन्दानेन हे कृष्णाजिन त्वामुपनह्यामि बध्नामि॥

अथ विनियोगसङ्ग्रहः।

कारीर्यां मारुतं कृष्णं स्वामी धारयते पटं।
रमेति पश्चिमं वातं पुरोवातं करोति हि॥
पुरोऽष्टावाहुतीर्हुत्वा मान्दाः संयौति सक्तुकं।
कृष्णः सन्नह्यते सक्तुं मन्त्रा द्वादश वर्णिताः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

देवा वसव्या अग्ने सोम सूर्य। देवाः शर्मण्या मित्रावरुणार्यमन्। देवाः सपीतयोऽपां नपादाशुहेमन्। उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत। दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन। पृथिवीं यद्व्युन्दन्ति। आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः। वि पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति॥ १ ॥

वृष्टयः। उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः। न वो दस्रा उपदस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत। सृजा वृष्टिं दिव आद्भिः समुद्रं पृण। अब्जा असि प्रथमजा बलमसि समुद्रियं। उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिं। ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः। त

इ॒मं य॒ज्ञम॑वन्तु॒ त इ॒दं क्षेत्र॒मावि॑शन्तु॒ त इ॒दं क्षेत्र॒मनु॑-
विवि॑शन्तु ॥ २ ॥

य॒न्ति दे॒वा विꣳ॑शति॒श्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थ-
प्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

*प्राच्याङ्गमन्त्राः कारीर्यां सप्तमे समुदीरिताः ।

अथावशिष्टमन्त्रा अष्टमे वर्ण्यन्ते। कल्पः। उत्करे प्रागीषं त्रिगधमनोऽवस्थितं भवति इदींसीत्यर्था देवा वसव्या इति पूर्वस्यां गधायां† कृष्णाजिनमाबध्नीयादहोरात्रावासक्तं भवति यदि वर्षेत् पिण्डीरेव जुहुयाद् यदि न वर्षेद्देवाः शर्मण्या इति मध्यमायामाबध्नीयादहोरात्रावासक्तं भवति यदि वर्षेत् पिण्डीरेव जुहुयाद् यदि न वर्षेद्देवाः सपीतय इति जघन्यायामाबध्नीयादहोरात्रावसक्तं भवति यदि वर्षेत् पिण्डीरेव जुहुयाद् यदि न वर्षेच्छ्वो भूते धामच्छदादीनि त्रीणि हवींषि निर्वपतीति। पाठस्तु "देवा वसव्या अग्ने सोम सूर्य। देवाः शर्मण्या मित्रावरुणार्यमन्। देवाः सपीतयोऽपां नपादाशुहेमन्। उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत" इति। अत्र उद्नो दत्तेत्येषां त्रयाणां मन्त्राणां शेषत्वेनानुषज्यते। हे देवाः उद्नो दत्त उदकानि

* प्रागघोममन्त्रा इति का० । † गदायामिति तै० ।

प्रयच्छत, कीदृशा देवा वसव्याः प्रजानां वासयितारः। क एते देवा इति उच्यते। अग्ने सोम सूर्येत्येवमादिकाः, हे देवा इति पूर्वत्रान्वयः। उदकदाने क उपाय इति तदुच्यते। उदधिं भिन्त उदकं धीयते अस्मिन्नित्युदधिर्मेघः तं विदारयत। केभ्यो निमित्तेभ्यो दिवोऽन्तरिक्षात् पृथिव्याः लोकत्रयं निमित्तीकृत्येत्यर्थः। ततो मेघविदारणादूर्द्ध्वं पर्जन्यादागतया वृष्ट्या नोऽस्मानवत रक्षत। द्वितीयमन्त्रे तु मित्रावरुणार्यमन्नित्येवमादयो हे देवाः शर्मण्याः सुखप्रदा इति व्याख्येयं। तृतीयमन्त्रे त्वपां नपादाशुहेमन् शीघ्रगते इत्येवमादयो हे देवाः सपीतयः समाना पीतिः सोमपानं येषां ते तादृशा इति व्याख्येयं। कल्पः। उपहोमकाले दिवा चित्तमः कृण्वन्तीति तैः प्रतिमन्त्रं पिण्डीरावधाति जुहोतीत्येक इति। तत्र प्रथममन्त्रपाठस्तु "दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन। पृथिवीं यद् व्युन्दन्ति" इति। दिवा चित् दिनेऽपि तमो दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति पर्जन्येन मेघेनोदकपरिपूर्णेन मरुतः पृथिवीं यदा व्युन्दन्ति क्लेदयन्ति, मेघा वा वृष्ट्योदकप्रवाहरूपं दुर्दिनं कुर्वन्तु। भूक्लेदनार्थं यदा देवाः पृथिवीं विशेषेण क्लेदयन्ति तदानीमुदकं वहता पर्जन्येन दिवापि तमः कृण्वन्ति किमुत रात्रौ। द्वितीयमन्त्रपाठस्तु "आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः। वि पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः" इति। नरो मनुष्या ऋत्विजः सुदानवः सुष्ठु हविषां

दातारः, ददाशुषे हविर्दत्तवते यजमानार्थं, यं कोशमुदकधारकं मेघं दिवः सकाशादाचुच्यवुः समन्तात् स्रावितवन्तः प्रसारितवन्त इत्यर्थः। स मेघः पूर्वमेकोऽपि पर्जन्या बहवो मेघाः भूत्वा रोदसी अनु द्यावापृथिव्यौ अनुलक्ष्य विविधां वृष्टिं सृजन्ति, बहुपर्जन्यभावाभिप्रायेण बहुवचनं, ताश्च वृष्टयो धन्वना मरुभूमौ उदकरहितायां यन्ति प्रवर्तन्ते। तृतीयमन्त्रपाठस्तु "उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः। न वो दस्रा उपदस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत" इति। हे मरुतो यूयं समुद्रसदृशान्मेघात् वृष्टिमुदीरयथ उत्पादयत। ततः पुरीषिणः पांसुयुक्तान् भूप्रदेशान् वर्षयथ आप्लावयथ। हे दस्राः भूमिशोषमुपचयितारः मरुतो वो युष्माकं धेनवो धेनुसदृशा मेघाः नोपदस्यन्ति नैवोपचीयन्ते, किं कुर्वतां युष्माकं शुभं यातां जगदनुग्रहरूपमिदं मङ्गलकार्यं प्राप्नुवतां, किञ्चेतरेषां देवानां रथा अन्ववृत्सत भवदीयान् रथाननुवर्तन्तां, वृष्टिं दातुमस्मदीये कर्मणि रथानारुह्य युष्मासु समागच्छत्सु पृष्ठतः सर्वेऽप्यन्ये देवा रथानारुह्य समागच्छन्त्वित्यर्थः। कल्पः। उत्करे कृष्णामपक्कां स्थालीमद्भिः पूरयति सृजा वृष्टिमिति यदि भिद्येत वर्षिष्यतीति विद्यादिति। पाठस्तु "सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण" इति। हे मरुत्सङ्घ दिवः सकाशाद्वृष्टिं सृज, अद्भिः समुद्रसदृशं वह्निदाहमन्तरेणातपेन शुष्कमिमं कुम्भमापृण समन्तात् पूरय। कल्पः। अनउप-

स्तम्भने शङ्क्वा वा* कृष्णाविर्बद्धा भवत्यभ्जा असीति †तां प्रोक्ष-तीति। पाठस्तु "अभ्जा असि प्रथमजा बलमसि समुद्रियं" इति। हे अवे अभ्जा त्वं उदकाज्जातासि मातृपितृदकाद्रेतो-रूपेण परिणतादुत्पन्नासि, किञ्च प्रथमजा असि स्वर्भानु-प्रसारितादादित्यावरकतमोभागात् प्रथममपहतादुत्पन्नासि। तस्य यत् प्रथमं तमोऽपाघ्नन् सा कृष्णाविरभवदिति श्रुतेः। समुद्रियं समुद्रसदृशमेघसम्बन्धि बलं वृष्ट्युत्पादनसामर्थ्यमसि। त्वय्याक्रन्दत्यां वृष्टिर्भविष्यतीति ज्ञातुं शक्यत्वादित्यर्थः। कल्पः। उत्करे वर्षाह्वस्तम्बं प्रतिष्ठाप्योन्नम्भय पृथिवीमिति वर्षाह्वां जुहोतीति। वर्षाह्वः पुनर्नवा। पाठस्तु "उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिं" इति। हे पुनर्नवे पृथिवीमुन्नम्भय उत्कर्षेण क्लेदय तदर्थं दिव्यं दिवि भवमिदं नभः आकाशवद्व्याप्तं मेघ-मण्डलं भिन्धि विदारय, विदार्य च दिव्यस्य दिवि भवस्य उद्न उदकस्य वर्षणं नोऽस्मभ्यं देहि। पुनर्नवाया ओषध्या उत्पादक हे देव त्वमीशानः सन् दृतिं विसृज उदकपूर्णदृति-समानं मेघं वर्षणाय विसृष्टद्वारं कुरु। कल्पः। ये देवा दिवि-भागा इत्युपर्याहवनीये कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवं बहिष्टा-द्विशसनमिति। पाठस्तु "ये देवा दिविभागा येऽन्तरिक्ष-भागा ये पृथिविभागाः। त इमं यज्ञमवन्तु त इदं क्षेत्रमा-विशन्तु त इदं क्षेत्रमनु विविशन्तु" इति। लोकत्रयभाजो ये

---

* 'स्तनसि उपलम्भने शकटे वा' इति ते०।

† तामभिक्रन्देदिति का०।

देवास्ते प्रथमं यज्ञं प्रविश्य शस्यनिष्पादकं चेत्रं सामान्येना-
विश्य ततः प्रतिचेत्रमनु च विशेषेण विशन्तु ॥

अत्र विनियोगसङ्ग्रहः ।

वृष्टिप्रदायां कारीर्यां देवा इत्यादिकैस्त्रिभिः ।
दिनत्रये चर्मबन्धः शकटस्थे छदित्रये ॥
उद्रा दत्तेति वाक्यन्तु त्रयाणां शेष इष्यते ।
दिवा त्रिभिः सक्तुहोमः सृजेत्युत्तरसंस्थितां ॥
स्थालीमद्भिः पूरयित्वा अञ्जाः प्राचत्यविं स्थितां ।
उन्नं पुनर्नवाहोमो ये चर्माग्नौ तु धूयते ॥
अष्टमे त्वनुवाकेऽस्मिन् दश मन्त्रा उदीरिताः ।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीय-
काण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

---

मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति पुरोवातमेव जनयति वर्षस्यावरुद्धै वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोपधावति स एवास्मै पर्जन्यं वर्षयत्यष्टौ ॥१॥

जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सम्प्रच्यावयति कृष्णाजिने संयौति हवि-रेवाकरन्तर्वेदि संयौत्यवरुद्ध्यै यतीनामद्यमानानाꣳ शीर्षाणि परापतन् ते खर्जूरा अभवन् तेषाꣳ रस ऊर्द्ध्वोऽपतत्तानि करीराण्यभवन्त्सौम्यानि वै करी-राणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति यत् करीराणि भवन्ति ॥ २ ॥

सौम्ययैवाहुत्या दिवो वृष्टिमवरुन्धे मधुषा संयौ-त्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधी-भ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं निनयति मान्दा वाशा इति संयौति नामधेयैरेवैना अच्छैत्य-थो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा ॥ ३ ॥

च्यावयति वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वो-पनह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति वर्ष-स्यावरुद्ध्यै ॥ ४ ॥

अष्टौ भवन्ति नामधेयैरेकान्नचिꣳशच्च ॥ ९ ॥

इति तत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थ-प्रपाठके नवमोऽनुवाकः ॥ * ॥

कारीर्युत्तरभागस्था मन्त्रा अष्टम ईरिताः।

अथ नवमे पूर्वभागस्थाः सप्तमानुवाकोक्तमन्त्रा व्याख्यायन्ते। तत्र यजमानस्य वस्त्रपरिधानं विधत्ते "मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति" इति। तूषा वस्त्रस्य दशाः ताः कृष्णा यस्य तत्कृष्णतूषं। जलपूरितैर्मेघैरादित्यप्रकाशे सर्वत आवृते सति वृष्टेः स्वरूपं कृष्णं भाति। यजमानोऽपि कृष्णवस्त्रप्रावरणाद्वृष्टिसमानरूपः सन् पर्जन्यं वर्षयितुं प्रभुर्भवति। मन्त्रान्तरं विनियुङ्क्ते "रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै" इति। प्रतिमीवति प्रतिबध्नाति। पुरोवातो वर्षन्नित्यादिमन्त्राणां विनियोगं दर्शयति "वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोपधावति स एवास्मै पर्जन्यं वर्षयति" इति। जिन्वरुग्ररित्यादीनि वायोर्नामानि तदुद्देशेन होमे सति यो वायुर्वृष्टेरीश्वरः स सन्तुष्टः सन् वर्षयति। पाठप्राप्तां मन्त्रसङ्ख्यां प्रशंसति "अष्टौ जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सम्प्रच्यावयति" इति। मान्दा वाशा इति मन्त्रेण सक्तूनां संयवनं यद्विधास्यते तस्याधारं विधत्ते "कृष्णाजिने संयौति हविरेवाकः" इति। प्रकृतौ कृष्णाजिने हविःस्वरूपान् व्रीहीनवहन्ति तण्डुलान् पिनष्टि च। अतोऽत्रापि कृष्णाजिने हविष्कृतं भवति। देशविशेषं विधत्ते "अन्तर्वेदि संयौत्य-

वर्षन्ति" इति। वेदेर्बर्हिःसंयत्ने यज्ञभूमिमप्रविश्य हविर्निवर्त्स्यते। करीराणि विधातुं प्रस्तौति "यतीनामद्यमानानाꣳ शीर्षाणि परापतन् ते खर्जूरा अभवन् तेषाꣳ रस ऊर्द्ध्वोऽपतत् तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति" इति। पारमहंस्यरूपं चतुर्थाश्रमं प्राप्तानां येषां यतीनां मुखे ब्रह्मात्मप्रतिपादको वेदान्तशब्दो नास्ति तान् यतीनिन्द्र आरण्येभ्यः श्वभ्यः प्रायच्छत्। तथा *कौषीतकिब्राह्मणोपनिषदीन्द्रस्य प्रतिज्ञा समाम्नायते 'अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं' इति। पतितत्वात्तेषां तथात्वं युक्तं। तथा च स्मर्यते,

'नित्यकर्म परित्यज्य वेदान्तश्रवणं विना।
वर्तमानस्तु सन्न्यासी पतत्येव न संशयः'॥ इति।

तेषाञ्च सालावृकैर्भक्षणं षष्ठकाण्डे समाम्नायते 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तान् दक्षिणत उत्तरवेद्या आदन्' इति। वेदान्तश्रवणवाञ्छां विना नित्यकर्म परित्यक्तवतां भवतामपि ईदृशी गतिरिति दर्शयितुं वेदिसमीपे भक्षणमेव। सालावृकैरद्यमानानां यतीनां यानि शीर्षाणि कपालास्थीनि भूमावपतन् तानि खर्जूरवृक्षत्वेनोदभवन्, ये तालाभिधानाः महाखर्जूरास्तेषां फलानि शिरःकपालसदृशानि लक्ष्यन्ते। तेषां फलानां रस ऊर्द्धमुत्क्रम्य भूमावपतत् पतित्वा च सोमलतासदृशीनां लतानां सोमप्रतिनिधिभूतानामङ्कुररूपाणि करीर-

* कौषीतक्युपनिषदीति तै०।

शब्दवाच्यानि अभवन्। अतएव सोमाङ्कुरसदृशत्वात् सौम्यानि करीराणि, तदाहुतिश्च सौम्या सती दिवः सकाशाद्वृष्टिं प्रच्यावयति, अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिरिति स्मृतेः। सक्तूनां प्रकृतिद्रव्यं विधत्ते "यत् करीराणि भवन्ति सौम्ययैवाहुत्या दिवो वृष्टिमवरुन्धे" इति। संयवनसाधनं माक्षिकद्रव्यं विधत्ते "मधुषा संयौत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षयत्यो अद्भ्य एवौषधीभ्यो वृष्टिं नियन्यति" इति। मक्षिका हि नानाविधेभ्यः पुष्पेभ्यो रसानादाय मधु कुर्वन्ति तेषाञ्च रसानामोषधिजन्यत्वाद्द्रवत्वाच्चोभयसारत्वं। मन्त्रेण संयवनं विधत्ते "मान्दा वाशा इति संयौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैराच्यावयति" इति। मान्दादीन्यपां नामानि तैरेना अभिमुखत्वेन प्राप्नोति, किञ्च हे देवदत्त समागच्छेति यथा लोके ब्रूयात् एवमेवैना अपः स्वनामभिराच्यावयति। कृष्णाजिनबन्धममन्त्रं व्याचष्टे "वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोपनह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति वर्षस्यावरुद्ध्यै" इति। यथाश्वो वृषा सेचनसमर्थः एवं पर्जन्योऽपि सेचनसमर्थः, स उदकपूर्णेन कृष्ण एव भूत्वा पश्चाद्वर्षति, अतः कृष्णेन रज्जुरूपेणैनं पर्जन्यं समृद्धं करोति, तच्च वर्षस्यावरोधाय सम्पद्यते॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः॥ ९॥

देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्या-
बध्नाति देवताभिरेवान्वहं वृष्टिमिच्छति यदि वर्षेत्
तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपेद-
होरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो
वर्षति नक्तं वा हि दिवा वा वर्षति मित्रावरुणावेव
स्वेन भागधेयेनोपधावति तावेवास्मै ॥ १ ॥

अहोरात्राभ्यां पर्जन्यं वर्षयतोऽग्नये धामच्छदे पु-
रोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौ-
र्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः
सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ् रश्मि-
भिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा
वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भाग-
धेयेनोपधावति ताः ॥ २ ॥

एवास्मै पर्जन्यं वर्षयन्त्युता वर्षिष्यन् वर्षत्येव सृजा
वृष्टिं दिव आद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः
समर्धयत्यथो आभिरेवामूरच्छैत्यब्जा असि प्रथमजा
बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नभय
पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीनां वृष्टि-
वनिस्तयैव वृष्टिमाच्यावयति ये देवा दिविभागा इति

कृष्णाजिनमवधूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति ॥ ३ ॥

अस्मै धावति ता वा एकविंशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ * ॥

प्राच्याङ्गमन्त्राः कारीर्यां व्याख्याता नवमे स्फुटं।

अथोत्तरभागस्थमन्त्रा दशमे व्याख्यायन्ते। तत्र त्रिषु दिनेषु क्रमेण कृदिस्तये सक्तुबन्धनार्थं मन्त्रान् विनियुङ्क्ते "देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्याबध्नाति देवताभिरेवान्वहं वृष्टिमिच्छति" इति। तत्तन्मन्त्रोक्ताभिर्देवताभिरनुगृहीतः प्रतिदिनं वृष्टिमिच्छति। तत्र वर्षावर्षपक्षयोर्व्यवस्थया सक्तुहोमं पुरोडाशनिर्वापञ्च विधत्ते "यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपेत्" इति। तावत्येव सक्तुबन्धने कृते सति वर्षणपक्षे पुरोडाशनिर्वापमन्तरेण पिण्डीर्जुहुयात्। प्रथमदिने वृष्टौ सत्यां पिण्डत्रयहोमेनैव कर्मसमाप्तिः। तथा द्वितीयतृतीययोर्दिनयोः। त्रिष्वपि दिनेषु वृष्ट्यभावे चतुर्थदिने पुरोडाशनिर्वापं कुर्यात्। अहोरात्रावसक्तं भवतीति वदता सूत्रकारेणात्यन्तसंयोगवाचिनीं द्वितीयां प्रयुञ्जानेनाहोरात्रयोर्निरन्तरं बन्धनं यदुक्तं तद्विधिमर्थवादेनोन्नयति "अहोरात्रे वै मित्रावरुणाव-

होरात्राभ्यां खलु वै पर्जन्यो वर्षति नक्तं वा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहो-रात्राभ्यां पर्जन्यं वर्षयतः" इति। अह्नः सूर्यप्रकाशयुक्तत्वा-न्मित्रत्वं। रात्रेरन्धकारेण *लीनत्वाद्वरुणत्वं। पर्जन्यश्चाहोरा-त्राभ्यामन्तरेण वर्षितुं न क्षमः। कुतः कालान्तरस्याभावात्। तथा सति रात्रौ दिवसे वा सदा वर्षिष्यतीति ज्ञातुमशक्य-त्वान्निरन्तरं बन्धनीयं। तेन तुष्टौ मित्रावरुणौ वर्षयतः। हवि-र्निर्वपेदिति सामान्येन यदुक्तं तदेव विशेषतः प्रपञ्चयति "अग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्त-कपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोपधावति ता एवास्मै पर्जन्यं वर्षयन्त्युता वर्षिष्यन् वर्षत्येव" इति। धामा छ यत्ते अजरेति याज्यानुवाक्ययोर्धामशब्दोपेतत्वाद्धामच्छदग्निः, तदर्थस्तु धामान्यस्माद्गृहादीन्यन्धकारादिकया वृष्ट्याच्छादय-तीति धामच्छत् तस्मै निर्वापः। अग्नौ प्रास्ताहुतिरिति स्मृत्यनुसारेणाग्निरस्माल्लोकादाहुत्याऽऽदित्यद्वारा वृष्टिमुत्पा-दयति। सृष्टामुत्पादितां तां वृष्टिं मरुतो यत्र यत्र नयन्ति यस्मिन् काले असावादित्यो न्यग्भूतैस्तीव्रैरश्मिभिः परित आवर्तते अतिशयेन सन्तापं करोति, तदा पर्जन्यद्वारा वर्षति,

* अपकारत्वादिति तै०।

वर्षन् सं धामानि गृहादीन्याच्छादयन्निव बहुलमेघयुक्तो भूत्वा वर्षति। तथा मरुत्यग्निर्मरुत आदित्य इत्येता एव देवता वृष्टि-नियमनाय समर्थाः, तास्व हविर्भिस्तुष्टा यजमानार्थं वर्ष-यन्ति। यद्यपि पर्जन्यः स्वयमेव वर्षिष्यन्निव पूर्वं स्थितः तथा-प्येताभिर्देवताभिः प्रेरितः क्षणमात्रेण पुरोवातादिसामग्रीं सम्पाद्य सर्वथा वर्षत्येव। आमन्त्र्यालोपूरणमन्त्रं व्याचष्टे "ऊर्जा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः समर्ध-यत्यथो आभिरेवामूरच्छैति" इति। आऽद्भिः पृणेत्यनेनेमा भूलोकस्था अपः समर्धयति। ऊर्जा वृष्टिमित्यनेनामूः स्वर्गस्था अपः समर्धयति। किञ्चाभिरेव भूलोकस्थाभिरद्भिः अमूर-च्छैति, स्वर्गस्था अपः प्राप्तुं गच्छति। कृष्णाविप्रोक्षणमन्त्रस्य स्पष्टार्थतां दर्शयति "अब्जा असि प्रथमजा बलमसि समुद्रिय-मित्याह यथायजुरेवैतत्" इति। पुनर्नवायां होमं विधत्ते "उन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीनां वृष्टिवनिस्तयैव वृष्टिमाच्यावयति" इति। एषा वै पुनर्नवैवौ-षधीनां सर्वासां मध्ये वृष्टिवनिर्वृष्टिभाक्, वर्षर्तौ बहुलतर-समुद्भवात्। मन्त्रान्तरं विनियुङ्क्ते "ये देवा दिविभागा इति कृष्णाजिनमवधूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति" इति। दिविभागा अन्तरिक्षभागाः पृथिविभागा इत्युक्तत्वात् लोकाः प्रीताः सन्तो यजमानायाभीष्टप्रदा भवन्ति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः॥ ० ॥

सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहु-स्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदु-ष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यवरुन्धे गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽ-ध्येवमेव तद्यदृच्यध्यक्षराणि यज्जगत्या ॥ १ ॥

परिदध्यादन्तं यज्ञं गमयेत्त्रिष्टुभा परिदधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्यं यज्ञं प्रतिष्ठापयति नान्तं गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति सरूपत्वाय सर्वो वा एष यज्ञो यत्त्रैधा-तवीयं कामायकामाय प्रयुज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते त्रैधातवीयेन यजेताभिचरन्त्सर्वो वै ॥ ॥ २ ॥

एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैवैनं यज्ञेनाभिचर-ति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैन-मभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्येतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति ॥ ३ ॥

यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्माद्देवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञः ॥ ४ ॥

यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आवृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिषमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तर उत्तरो ज्यायान् भवत्येवमिव हीमे लोका यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै सर्वेषामभिगमयन्नवद्यत्यच्छम्बट्कारꣳ हिरण्यं ददाति तेज एव ॥ ५ ॥

अवरुन्धे तार्प्यं ददाति पशूनेवावरुन्धे धेनुं ददात्याशिष एवावरुन्धे साम्नो वा एष वर्णो यद्धिरण्यं यजुषां तार्प्यमुक्थामदानां धेनुरेतानेव सर्वान् वर्णानवरुन्धे ॥ ६ ॥

जगत्याभिचरन्त्सर्वो वै गच्छति यज्ञस्तेज एव त्रिꣳशच्च ॥ ११ ॥

## इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थ-प्रपाठके एकादशोऽनुवाकः ॥ * ॥

अनुवाके तु दशमे कारीरीष्टिः समापिता।

अथैकादशे त्रैधातवीयेष्टिर्विधातव्या। तत्रादौ सामिधेनीषु द्वे धाय्ये विधत्ते "सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानी-त्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदुष्णिह-ककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यवरुन्धे" इति। एतस्यां त्रैधातवीयेष्टौ सामिधेनीरूपेण सर्वाण्यपि छन्दांस्यनुवक्तव्यानि इत्यभिज्ञा आहुः, तत्तु सर्वच्छन्दोऽनुवचनं कथं घटत इति तदुच्यते। ककुच्छन्दस्त्रिष्टुभः सारं, उष्णिक्छन्दो जगत्याः सारं, अतस्तदुभयानुवचनेन सर्वच्छन्दोऽनुवचनं सम्पद्यते। प्र सो अग्ने तवोतिभिरित्येषा ककुत् तदीयेषु त्रिषु पादेषु मध्यमपादस्य द्वादशाक्षरत्वात्। प्र होत्रे पूर्व्यं वच इत्येषोष्णिक् तदीयेषु त्रिषु पादेष्वन्तिमपादस्य द्वादशाक्षरत्वात्। एतदु-भयवचनेन त्रिष्टुब्जगत्योर्लाभेऽपि गायत्र्या अलाभशङ्कां वा-रयितुमन्तर्भावं दर्शयति "गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरो-डाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्यक्षराणि" इति। उष्णिक्-छन्दसोऽष्टाविंशत्यक्षराणि तत्र चतुर्विंशत्यक्षरैर्गायत्र्यन्तर्भूता, यान्यधिकाक्षराणि चत्वारि सन्ति ते चतुष्पात्पशुस्वरूपा एव। पूर्वस्मिन् प्रपाठके त्रिधाताविष्टौ पुरोडाशस्योपरि पु-

रोडाशांन्तरस्थापनं विहितं। एवमत्रापि विधास्यते । एवं सति यथा पुरोडाशेऽध्युपर्यन्यः पुरोडाशः स्थाप्यते, एवमेवोष्णिक्-छन्दस्कायामृचि गायत्रीच्छन्दोऽचरसङ्ख्याया अधिकाचराणि चत्वारीति यत् तदवगन्तव्यं। अतः पुरोडाशसाम्यायाचराधिक्यं युक्तमित्यभिप्रायः। *प्रकृतौ दे ऋचावुक्ते आजुहोत दुवस्यतेति गायत्री सामिधेनी। त्वं वरुण इति जगती भवति। ते अपवदितुं* त्रिष्टुभं विधत्ते "यज्जगत्या परिदध्यादन्तं यज्ञं गमयेत् त्रिष्टुभा परिदधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रतिष्ठापयति नान्तं गमयति" इति। उष्णिक्-छन्दसो जगतीवीर्यत्वेन निरूपितत्वात् तदेवात्र जगतीशब्देन विवच्यते। तस्मिंश्चोष्णिक्छन्दसि गायत्र्यन्तर्भावस्योक्तत्वाल्ल-चितलचणया जगतीशब्दो गायत्रीं ब्रूते। तथा सति प्रकृति-वद्गायत्र्या परिधानं यत् तदेवात्र जगतीपरिधानमिति विवचितत्वात् तत्र बाध इत्युच्यते। अथवा शाखान्तरानुसा-रेण मुख्ययैव जगत्यात्र प्राप्तं परिधानं दूष्यते। तत्परिधाने हि यज्ञं नाशितवान् भवति, अथ त्रिष्टुभा परिदध्यात् सामि-धेनीः समापयेदित्यर्थः। त्रिष्टुभ इन्द्रियसामर्थ्यरूपत्वात् यज्ञं सामर्थ्ये प्रतिष्ठापितवान् भवति। ततो यज्ञं न नाशयति। तां त्रिष्टुभं दर्शयति "अग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति सरूपत्वाय" इति। त्रिशब्दा बहवो

* प्रकृतावाजुहोत दुवस्यतेति गायत्री सामिधेनीषु परिधानीया भवति, तामपवदितुमिति तै०।

यस्यां सन्तीति त्रिवती, सेयं तृतीयकाण्डस्य द्वितीयप्रपाठके समाम्नास्यमानत्वात् तत्रैव व्याख्यास्यते। यथास्यामृचि त्रि-शब्दस्तथा त्रैधातवीयकर्मनामन्यपि त्रिशब्दोऽस्तीति सा-रूप्यं। सर्वकामसाधनत्वेन यागं विधत्ते "सर्वो वा एष यज्ञो यत्त्रैधातवीयं कामाय कामाय प्रयुज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते" इति। सर्वेषु यज्ञेषु यानि छन्दांसि प्रयो-क्तव्यानि तानि सर्वाण्युष्णिक्ककुब्भ्यामेवावरुध्यानीत्युक्तं। अतो ऽयं सर्वयज्ञस्वरूपत्वाद्यस्य यः कामोऽस्ति तेन तदर्थं प्रयो-क्तव्यः, यस्माज्ज्योतिष्टोमादिरखिलो यज्ञः सर्वकामार्थं प्रयु-ज्यते तस्मात् सर्वयज्ञस्वरूपस्यास्य सर्वकामार्थत्वं युक्तं। सामा-न्येन सर्वकामार्थत्वं विधाय विशेषतोऽभिचारहेतुत्वं विधत्ते "त्रैधातवीयेन यजेताभिचरन् सर्वो वै एष यज्ञो यत्त्रैधात-वीयꣳ सर्वेणैवैनं यज्ञेनाभिचरति स्तृणुत एवैनं" इति। अभि-चारपरिहारार्थत्वं विधत्ते "एतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैनमभि-चरन्स्तृणुते" इति। एतयैव त्रैधातवीयेष्ट्यैव। सहस्रदक्षिणा-कस्य ज्योतिर्विश्वज्योतिरप्तोर्यामसहाव्रतादेरनुष्ठानसिद्धिं प्रति साधनत्वं विधत्ते "एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजात-मेवैनद्ददाति" इति। यस्तु सहस्रदक्षिणाकेन यागेन यष्टु-मसमर्थः सन्नहं तेन यक्ष्य इति कामयते सोऽयमेतयेष्ट्या यजेत पश्चात् तच्च प्रजातं प्रभूतं बहुविधं सहस्रं दातुं शक्तो भवत्येव। ततस्तादृशकर्मानुष्ठानं सिध्यति। अथ सहस्रदक्षिणा-

केन यागेनेष्टवतः उपरितनबहुविधयज्ञसाधनद्रव्यार्थं विधत्ते "एतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनानसृजत उपैनमुत्तरꣳ सहस्रं नमति" इति। यः पुमान् गोसहस्रदक्षिणाकेन यागेनेष्टवान् भवति स एष पशूनामवसानं प्राप्नोति, तेनोत्तरक्रतूननुष्ठातुमसमर्थो भवति, अतस्तत्सामर्थ्याय पशुकामः सन् प्रजापतिवदेतेनेष्ट्वा पशुयोनेरस्मादेव यागात् पशून् प्राप्नोति, तदुत्तरक्रतुषु दातव्यं गोसहस्रमेनं यजमानं प्राप्नोति। यज्ञं सङ्कल्प्याननुष्ठातुः सङ्कल्पभ्रंशपरिहारार्थं विधत्ते "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आवृश्च्यते" इति। आवृश्चनं सर्वथा विच्छेदो देवताद्रोह इति यावत्। अस्मिन् कर्मणि द्रव्यं विधत्ते "द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिषमृद्धत्वाय" इति। समूहाकारेण गणनायां द्वादशकपालत्वेऽप्यनुष्ठाने त्रिसङ्ख्याकाश्चतुष्कपालाः कर्तव्याः, तथा त्रिसङ्ख्यया यजमानस्य त्रिवारं समृद्धत्वं सम्पद्यते। पुरोडाशसङ्ख्यां प्रशंसति "त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै" इति। पूर्वप्रपाठकोक्तत्रिधाताविव प्रमाणवैषम्यं विधत्ते "उत्तर उत्तरो ज्यायान् भवत्येवमिव

ह्यीमे लोकाः" इति। चोदकप्राप्तं व्रीहिमयत्वमपवदितुं यवमयं विधत्ते "यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै" इति। भूलोकवर्तिनो मनुष्याः, स्वर्गलोकवर्तिनः सूर्यचन्द्रादयश्च विस्पष्टमुपलभ्यन्त इत्यस्ति तयोरेकविधत्वं। अन्तरिक्षवर्तिनस्तु यक्षगन्धर्वादयो नोपलभ्यन्त इति वैलक्षण्यमेव। यवमयस्येतरवैलक्षण्यादन्तरिक्षरूपत्वं, तच्च समृद्ध्यै सम्पद्यते। त्रिधातुवत् त्रिष्वपि पुरोडाशेषु सकृदेव हस्तस्पर्शेन अवदानं विधत्ते "सर्वेषामभिगमयन्नवद्यत्यच्छम्बट्कारं" इति। यदुक्तं सूत्रकारेण 'हिरण्यं तार्प्यं धेनुरिति दक्षिणा' इति, तदेतद्विधत्ते "हिरण्यं ददाति तेज एवावरुन्धे तार्प्यं ददाति पशूनेवावरुन्धे धेनुं ददात्याशिष एवावरुन्धे साम्नो वा एष वर्णो यद्धिरण्यं यजुषां तार्प्यमुक्थामदानां धेनुरेतानेव सर्वान् वर्णानवरुन्धे" इति। हिरण्यस्य तेजस्वित्वात् तद्दानेन तेजःप्राप्तिः, तार्प्यस्य घृताक्तवस्त्रत्वात् तद्दानेन पशुप्राप्तिः, धेनोः कामधेनुत्वसाम्यात् तद्दानेनाशिषां प्राप्तिः। सर्वं तेजः सामरूप्यꣳ ह शश्वदित्याम्नानात् हिरण्यस्य सामवर्णत्वं। यजुर्वेदं क्षत्रियस्याहुर्योनिमित्याम्नातत्वात् तार्प्यस्य च राजसूये क्षत्रियेण परिहितत्वादीदृशं सम्बन्धमभिप्रेत्य तार्प्यं यजुषां वर्णस्वरूपमित्युच्यते। उक्थैः शस्त्रैर्देवतानां जायमाना मदा यास्वृक्षु ता ऋच उक्थामदाः, तासां नवप्रसूतधेनुवद्धर्षणहेतुत्वाद्धेन्वा ऋग्वर्णत्वं। उक्तद्रव्यत्रयदानेनोक्तान् वर्णान् प्राप्नोति।

अत्र मीमांसा। षष्ठाध्यायस्य द्वितीयपादे चिन्तितं।

असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते।
आद्यः प्रयोजनाभावादन्यो निन्दादिसंश्रवात्॥

चित्रया यजेत पशुकामः कारीर्या वृष्टिकामो यजेतेत्यादिषु कामप्रेरितेन पुरुषेण कर्मोपक्रान्तं, तस्य च समाप्तेः प्रागेव केनचिन्निमित्तेन तत्फलप्राप्तौ दोषदर्शनेन वा कामो निवर्तते तदानीं कर्मानुष्ठाने प्रयोजनाभावान्न समापनीयमिति चेत्। मैवं। प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात्, देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेति। तदुभयं श्रुतं तस्मात् समापनीयं॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः॥ ० ॥

---

त्वष्टा हतपुत्रो वीन्द्रँ सोममाहरत् तस्मिन्निन्द्र उपहवमैच्छत तन्नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत् प्रवणं॥ १ ॥

आसीद्यदिं वा तावदध्यग्नेरासीत् स सम्भवन्नग्नीषोमावभिसमभवत् स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमांल्लोकानवृणोद्यदिमांल्लोकानवृणोत् तद्वृत्रस्यं वृत्रत्वं तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत् तपो वै स वज्र आसीत् तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुः ॥ २ ॥

अन्या देवतासीत् सोऽब्रवीद्विष्णवे ह्येदमाहरिष्यावो येनायमिदमिति स विष्णुस्त्रेधात्मानं विन्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेद्यत् पृथिव्यां तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं ॥ ३ ॥

मयि वीर्यं तत् ते प्रदास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णादधा मेति तद्विष्णवेऽतिप्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति यदन्तरिक्षे तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं ॥ ४ ॥

मयि वीर्यं तत् ते प्रदास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णाद्द्विर्माधा इति तद्विष्णवेऽतिप्रायच्छत् त-

द्विष्णुः प्रत्यग्टह्लादस्मास्विन्द्र इन्द्रियं दधात्विति यद्दिवि तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहार्येनाहं ॥ ५ ॥

इदमस्मि तत् ते प्रदास्यामीति त्वी३ इत्यब्रवीत् सन्धां तु सन्दधावहै त्वामेव प्रविशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत् त्वामेवेन्धीय तव भोगाय त्वां प्रविशेयमित्यब्रवीत् तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यः ॥ ६ ॥

एवं वेद हन्ति क्षुधं भ्रातृव्यं तदस्मै प्रायच्छत् तत् प्रत्यग्टह्लात् चिर्मोधा इति तद्विष्णवेऽतिप्रायच्छत् तद्विष्णुः प्रत्यग्टह्लादस्मास्विन्द्र इन्द्रियं दधात्विति यत्त्रिः प्रायच्छत् त्रिः प्रत्यग्टह्लात् तत्त्रिधातोस्त्रिधातुत्वं यद्विष्णुरन्वतिष्ठत विष्णवेऽतिप्रायच्छत् तस्मादैन्द्रावैष्णवꣳ हविर्भवति यद्वा इदं किञ्च तदस्मै तत्प्रायच्छदृचः सामानि यजूꣳषि सहस्रं वा अस्मै तत्प्रायच्छत् तस्मात् सहस्रदक्षिणं ॥ ७ ॥

पूर्वणं विष्णुर्वा इदमिदमहं यो भवत्येकविꣳशतिश्च ॥ १२ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

त्रैधातवीयतद्द्रव्ये एकादश उदीरिते।

अथ द्वादशे तस्य द्रव्यस्य ऐन्द्राविष्णुदेवताकत्वं सहस्रदक्षिणाञ्च विधास्यन्नादौ कर्मनाम्नि त्रिधातुत्वसम्पादनाय उपाख्यानं दर्शयति "त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाहरत् तस्मिन्निन्द्र उपहवमैच्छत तन्नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्" इति। विश्वरूपनाम्नस्त्वष्टुः पुत्रस्य इन्द्रेण कृतो बध उपरितनप्रपाठकस्य प्रथमानुवाके स्पष्टीभविष्यति। स च हतपुत्रस्त्वष्टा कोपादिन्द्ररहितं सोमयागं कर्तुमुद्यतः, तस्मिन् यागे मामाह्वयेत्येवमिन्द्रोऽब्रवीत्, स तु त्वष्टा तं पुत्रं मेऽवधीरित्यवदत् तमिन्द्रं नोपाह्वयत, स चेन्द्रो यज्ञस्य विघातं कृत्वा बलात्कारेण सोमं पीतवान्। अथ त्वष्टुरभिचारहोमेनेन्द्रबधहेतोः पुरुषस्योत्पत्तिं दर्शयति "तस्य यदत्यशिष्यत तत् त्वष्टाहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत् प्रवणमासीद्यदि वा तावदध्यग्नेरासीत् स सम्भवन्नग्नीषोमावभिसमभवत्" इति। तस्येन्द्रेण बलात् पीतस्य सोमस्य सम्बन्धि रसरूपं यदल्पमत्यशिष्यत तद्गृहीत्वा त्वष्टाभिचारं कर्तुमाहवनीयमुपेत्य होमेनाग्निं वैर्युत्पादनाय प्रवृत्तमकरोत्। तस्मिन् होमे मन्त्रमिममुच्चारितवान् स्वाहेन्द्रशत्रुर्वर्धस्वेति। तस्यायमर्थः, हे अग्ने तुभ्यमिदं स्वाहुतं, पुनरिन्द्रस्य शातयिता कश्चित् पुरुषो भूत्वा वर्धस्वेति। सोऽग्निर्यावता कालेनोर्द्ध्वज्वालारूपो भूत्वा पराभृत-

मिन्द्रं कर्तुं विध्यामीत्युद्यतो भवति तावति काले वह्निः स्वयमेव विरतोऽभूत् ज्वाला शान्तेत्यर्थः। तत्र मन्त्रगतस्वरापराधो निमित्तं। तथा हि इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यं। आद्युदात्तस्त्वयं शब्दः प्रयुक्तः, स च बहुव्रीहितां द्योतयति। बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदाद्युदात्तत्वविधानात्। सति बहुव्रीहाविन्द्रः शातयिता यस्येत्यर्थो भवति। सोऽयं मन्त्रगतः स्वरापराधः। अपराधाभावे सति उन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति। अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते। यद्यत्र कार्यसिद्ध्यभावसूचनायाग्निः प्रवणमवनतमासीत्, यदि वा कार्यसिद्धेः सूचनार्थमग्निज्वालया अधिका वृद्धिरभूत्, तद्यथा तथा वा तिष्ठतु, स त्वग्निः पुरुषरूपेण सम्भवन्नेवाग्नीषोमावभिव्याप्य समुत्पन्नः होमाधाराङ्गाराभिमानिनमग्निदेवं हूयमानरसाभिमानिनं सोमदेवञ्च स्वमुखे प्रक्षिप्योभयोः पार्श्वयोरूर्द्धाधोदन्तपङ्क्तिभ्यां दष्टवानित्यर्थः। एतच्चोपरितनप्रपाठके तावन्तामभिसंदष्टौ वै स्व इत्यत्र स्पष्टीभविष्यति। एतस्योत्पन्नस्य पुरुषस्य वृत्रत्वं दर्शयति “स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमान् लोकानवृणोद्यदिमान् लोकानवृणोत् तद्वृत्रस्य वृत्रत्वं” इति। इषुपातो यावति देशे भवति तावन्तं देशं सर्वासु दिक्षु व्याप्य प्रतिदिनमयमवर्धत, तेन सर्वलोकावरणादस्य वृत्रत्वं। अथास्य वृत्रस्य वधाय साधनभूतस्य वज्रस्योत्पत्तिं दर्शयति “तस्मा-

दिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत् तपो वै स वज्र आसीत्" इति। तस्मात् सर्वलोकावरकाद्वृत्रादिन्द्रोऽबिभेत् यथेन्द्रस्तथा त्वष्टाप्यबिभेत् त्रिष्वपि लोकेष्वनेनावृतेषु त्वष्टुरिन्द्रस्य चोभयोः समान एव स्थानाभावः। ततस्त्वष्टा तं वृत्रं हन्तुं तेनेन्द्रेण सह मैत्रीं कृत्वा तस्मा इन्द्राय वज्रमसिञ्चत्, अस्त्ररूपतायाभिमन्त्रितेन जलेन तदीयं वज्रं प्रक्षाल्य तस्मै दत्तवानित्यर्थः। सोऽयमिन्द्रसम्बन्धी वज्रोऽभिमन्त्रितत्वात् तपोरूप एवासीत्। तपोरूपस्य तस्य वज्रस्योद्यमनाय विष्णुसहकार्यपेक्षामिन्द्रस्य दर्शयति "तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुरन्या देवतासीत् सोऽब्रवीद्विष्णवे ह्येदमाहरिष्यावो येनायमिदमिति" इति। यदेन्द्र उद्यमने शक्तो नाभूत् तदानीं तस्येन्द्रस्य पुरतो विष्णुर्नाम काचिद्देवतासीत् तं विष्णुमेवं प्रार्थितवान्, वृत्रस्य वीर्यं स्मृत्वा भयमापन्नस्य मम हस्तो वज्रमुद्यन्तुं न प्रभवति, येन वीर्येण अयं वृत्रः इदं जगद् व्याप्तवान् तादृशं वीर्यं आवामुभावस्माद्वृत्रादाहरिष्यावः, अतो हे विष्णो मम सहकारी भवितुमागच्छेति। प्रार्थितस्य विष्णोः साहाय्याचरणप्रकारं दर्शयति "स विष्णुस्त्रेधात्मानं विन्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेत्" इति। विष्णुर्मूर्तित्रयं सम्पाद्य रक्षणाय लोकत्रये स्थापितवान्। यस्मादस्य वृत्रस्याभिपर्यावर्तात् सर्वदिग्व्यापिरूपाया वृद्धेरयमिन्द्रोऽबिभेत् तस्मादिन्द्रभीतिनिवारणाय मूर्तित्रयस्थापनं युक्तमित्यभिप्रायः। मूर्तित्रयस्थाप-

नादूर्द्धं प्रवृत्तमिन्द्रव्यापारं दर्शयति "यत् पृथिव्यां तृतीय-मासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णादधा मेति तद्विष्णवेऽतिप्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति" इति। विष्णुना स्वकीयवक्ष्यमाणद्वयापेक्षया तृतीयं शरीरं पृथिव्यां यत् स्थापितमासीत् तेन युक्तः स इन्द्रः तस्य विष्णोः पृष्ठतः स्थितः तं वज्रमुदयच्छत्, तदानीं स वृत्रो भीतः सन्निन्द्रमिदमब्रवीत्, हे इन्द्र मे शरीरं मा प्रहाः अस्त्येवेदं किञ्चिन्मयि वीर्यं पृथिवीव्याप्तिक्षमं तत् सर्वं तुभ्यं दास्यामीत्युक्त्वा तदिन्द्राय दत्तवान्। स च इन्द्रस्तत् स्वीचकार स्वीकृत्य च मां धारयेति ब्रुवन् विष्णवे तद्वीर्यमत्यादरेण प्रायच्छत्। स च विष्णुरस्मासु मध्येऽयमिन्द्रो वीर्यं धारयत्वित्यभिप्रेत्य इन्द्रार्थं तद्वीर्यं प्रत्यगृह्णात्। ईदृशमिन्द्रकृत्यं द्वितीयपर्यायेण दर्शयति "यदन्तरिक्षे तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णाद्द्विर्माधा इति तद्विष्णवेऽतिप्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति" इति। हे विष्णो पूर्वं सकृद्वीर्यग्रहणेन मां धृतवानसि तदपेक्ष्य द्विर्मां धारयेति ब्रुवन् वीर्यं प्रायच्छत्। तृतीयपर्यायेण तस्येन्द्रस्य कृत्यं दर्शयति "यद्दिवि तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहार्येनाहमिदमस्मि तत्ते

प्रदास्यामीति त्वीः इत्यब्रवीत्" इति। येन वीर्येण अहमिदं जगद्व्याप्तवानस्मि तत्सर्वं ते प्रदास्यामीत्युक्तवान्, इन्द्रोऽङ्गीचकार, अङ्गीकारार्थोऽयं त्वीशब्दः अस्तु तथेत्यर्थः। तस्य वीर्यस्य प्रदानात् प्रागेवेन्द्रवृत्रयोः सन्धिं दर्शयति "सन्धां तु सन्दधावहै त्वामेव प्रविशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत् त्वामेवेन्धीय तव भोगाय त्वां प्रविशेयमित्यब्रवीत् तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो य एवं वेद हन्ति क्षुधं भ्रातृव्यं" इति। तुशब्दो वक्तव्यशेषसद्भावद्योतनार्थः। तत्सर्वं वीर्यं तुभ्यं दास्यामीति किन्त्वन्यच्छेषं वक्तव्यमस्ति। तावदुभौ सन्धानं करवाव। कीदृशसन्धानमिति तदुच्यते, हे इन्द्र त्वामेवाहं प्रविशानीति तत इन्द्र एवमब्रवीत् यदि त्वं मां प्रविशेः तदा किं मामेव भोक्ष्यस इति। ततो वृत्र इदमब्रवीत्। नाहं त्वां भोक्ष्ये किन्तु त्वामिन्धीय उदराग्निपाटवेन प्रकाशयेयं दीपयेयं, तच्च तव बह्वविधान्नभोगायोपयुज्येत ततस्त्वां प्रविशामीत्युक्त्वा तमिन्द्रं वृत्रः प्राविशत् प्रविष्टश्च वृत्रो बह्वन्नपूरणक्षममवकाशरूपमुदरमभवत्, लोकेऽपि मनुष्यस्योदरे वर्तमाना क्षुदेवात्यन्तबाधकत्वात् सहजो भ्रातृव्यः, एतद्वेदनस्य क्षुदुपघातः फलं। तस्य वृत्रस्य प्रवेशात् पूर्वं द्युलोकगतवीर्यदानं यदस्ति तदिदानीं दर्शयति "तदस्मै प्रायच्छत् तत्प्रत्यगृह्णात् त्रिर्माधा इति तद्विष्णवेऽतिप्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति" इति। इदञ्च पूर्ववद्व्याख्येयं। इदानीं त्रिधातुनिर्वचनं दर्शयति

"यस्त्रिः प्रायच्छत् त्रिः प्रत्यगृह्णात् तत्त्रिधातोस्त्रिधातुत्वं" इति। वृत्रस्य त्रिवारप्रदानेनेन्द्रस्य त्रिवारं प्रतिग्रहेण च वीर्यरूपस्य पुरोडाशस्य हविषस्त्रिधा भिन्नस्य त्रिधातुनाम सम्पन्नं। त्रयो धातवस्त्रुतुष्कपालरूपाः भेदा यस्य द्वादश-कपालपुरोडाशस्य सोऽयं त्रिधातुर्यज्ञसञ्ज्ञा। तस्य हविषो *व्यामक्तदेवतां विधत्ते "यद्विष्णुरन्वतिष्ठत विष्णवेऽतिप्रायच्छत् तस्मादैन्द्रावैष्णवꣳ हविर्भवति" इति। यस्मात् कारणाद्विष्णु-रनुकूलत्वेन स्थितः तस्मै च विष्णवेऽयमिन्द्रोऽत्यादरेण प्राय-च्छत् तस्माद्व्यामक्तयोरिन्द्रविष्णोस्तत्र देवतात्वं। त्रिवारं प्रत्तं तद्वीर्यरूपं हविर्वेदत्रयरूपेण प्रशंसति "यद्वा इदं किञ्च त-दस्मै तत्प्रायच्छदृचः सामानि यजूꣳषि" इति। अत्र च या हिरण्यदक्षिणा पूर्वमुक्ता तस्याः सङ्ख्याविधिमुन्नयति "सहस्रं वा अस्मै तत्प्रायच्छत् तस्मात् सहस्रदक्षिणं" इति। यस्मात् सहस्रभेदभिन्नं वीर्यं दत्तवान् तस्मात् सहस्रदक्षिणाकमिदं कर्म द्रष्टव्यं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः॥ * ॥

---

* व्यामदेवतामिति तै०।

देवा वै राजन्याज्जायमानादबिभयुस्तमन्तरेव सन्तं दाम्नापौम्भन्त्स वा एषोऽपोम्भो जायते यद्राजन्यो यद्वा एषोऽनपोम्भो जायेत वृत्रान् घ्नँश्चरेद्यं कामयेत राजन्यमनपोम्भो जायेत वृत्रान् घ्नँश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्रह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति हिरण्मयं दाम दक्षिणा साक्षादेवैनं दाम्नोऽपोम्भनान्मुञ्चति ॥ १ ॥

एनं द्वादश च ॥ १३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ * ॥

त्रैधातवीययागस्य द्वादशे देवतेरिता।

अथ त्रयोदशेऽनुवाके ऐन्द्राबार्हस्पत्यं चरुं विधातुं प्रस्तौति "देवा वै राजन्याज्जायमानादबिभयुस्तमन्तरेव सन्तं दाम्नापौम्भन्त्स वा एषोऽपोम्भो जायते यद्राजन्यो यद्वा एषोऽनपोम्भो जायेत वृत्रान् घ्नँश्चरेत्" इति। राजन्यस्याप्रतिबद्धशक्तिकत्वेनेतरवैरिवद्देवानपि हनिष्यतीति मत्वा देवा भीताः सन्तो गर्भमध्य एव स्थितं सन्तं राजन्यं शक्तिप्रतिबन्धलक्षणेन दाम्नाऽपगतशक्तिको यथा भवति तथा औम्भन् शक्तिप्रति-

बन्धं पूरितवन्तः, अतएव सर्वत्र लोके राजन्यः प्रतिबद्धशक्तिक एव जायते। यद्यप्रतिबद्धशक्तिको जायेत गर्भनिर्गमनमारभ्य वैरिणो मारयन्नेव लोके चरेत्। इदानीं विधत्ते "यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान् घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्रह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति" इति। यं राजन्यं प्रत्यध्वर्युरेवं कामयेत दैवैरप्रतिबद्धशक्तिकोऽयं जायतां सर्वत्र निवारकान् वैरिणो मारयन्नेव चरत्विति तस्येयमिष्टिः। देवेष्विन्द्रस्य चत्रियत्वं बृहदारण्यके समाम्नातं 'यान्येतानि देवत्रा चत्राणीन्द्रो वरुणः सोमो रुद्रः' (अ० ३।ब्रा० ४) इति। तस्मान्मनुष्येषु राजन्य ऐन्द्रः। 'ब्रह्म वै देवानां बृहस्पतिः' इत्यस्य श्रवणात् बृहस्पतेर्ब्राह्मणजातित्वं। अत ऐन्द्राबार्हस्पत्यचरौ निरुप्ते सत्येनमैन्द्रं राजन्यं ब्रह्मणा बृहस्पतिसामर्थ्येन दैविकशक्तिप्रतिबन्धान्मोचयति। अत्रोचितां दक्षिणां विधत्ते "हिरण्मयं दाम दक्षिणा साक्षादेवैनं दाम्नोऽपोम्भनान्मुञ्चति" इति। दाम रज्जुः, बन्धके दामनि दत्ते सति प्रत्यक्षत एव बन्धमोक्षो भवति॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥ *॥

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे। भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरति दीर्घमायुः। यमादित्या अंशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः। प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन् वृत्रहासि। यत्र यन्ति स्रोत्यास्तत् ॥ १ ॥

जितं ते दक्षिणतो वृषभ एधि हव्यः। इन्द्रो जयाति न पराजयाता अधिराजो राजसु राजयाति। विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत्। अस्येदेव प्ररिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय। अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानं ॥ २ ॥

अस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः। त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्तः। यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः। न त्वा वज्रिन्त्सहस्रꣳ सूर्या

अनु न जातमष्ट रोदसी। पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः॥ ३ ॥

सोतुर्बाहुभ्याꣳ सुयतो नार्वा । रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम। उदग्ने शुचयस्तव विज्योतिषोउदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशं विचक्षण। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषः॥ ४ ॥

चं। विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः। जुषन्तां युज्यं पयः। विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वं॥ ५ ॥

तदीशानमद्रिस्तस्थुषस्त्रिꣳशच्च॥ १४ ॥

देवा मनुष्या देवासुरा अब्रुवन् देवासुरास्तेषां गायत्री प्रजापतिस्ता यत्राग्ने गोभिश्चित्रया मारुतं देवा वसव्या अग्ने मारुतं देवा वसव्या देवाः शर्मण्याः सर्वाणि त्वष्टा हतपुत्रो देवा वै राजन्यान्नवो नवचतुर्दश॥ १४ ॥

देवा मनुष्याः प्रजां पशून् देवा वसव्याः परिद्ध्यादिदमस्म्यष्टाचत्वारिꣳशत्॥ ४८॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः॥ * ॥

चतुर्थप्रपाठकः सम्पूर्णः॥

त्रयोदशे चरुः प्रोक्तः शक्तिस्तम्भनिवारकः।

इत्थं काम्येष्टयः समाप्ताः। अथान्तिमानुवाके चतुर्दशे याज्यानुवाक्या वक्तव्याः। तत्र यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदित्यत्र (प्र०३।अ०५) पुरोऽनुवाक्यामाह "नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे। भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरति दीर्घमायुः"इति। आदित्यस्य चन्द्रदीप्तिकारणत्वात् चन्द्राभेदेनादित्य इह स्तूयते, चन्द्रमा जायमानः प्रतिदिनमुदयं गच्छन्नवो नवो भवति। शुक्लप्रतिपद्येककलायुक्तः, द्वितीयायां कलाद्वयं, इत्येवं कलावृद्धिक्षयाभ्यां प्रतिदिनं नूतनत्वं। चन्द्रवद्दीप्तिकारणमभूत्। आदित्योऽपि प्रतिदिनं नूतनो भवति। स्वरूपे वृद्धिक्षयाभावेऽपि दक्षिणोत्तरगतिभ्यां नूतनत्वं। स चाह्नां केतुश्चिह्नं, तस्मिन्नुदिते सत्यहरिदमिति ज्ञायमानत्वात्। उषसां प्रभातकालानामग्र उपक्रमे प्राच्यामुदयमेति, तदनुरोधेन प्रातरग्निहोत्रादीनां

प्रवृत्तेर्देवेभ्यो भागं विदधाति। तादृशश्चन्द्रकलावृद्धिक्षय-हेतुरादित्य इह कर्मण्यागच्छन् दीर्घमायुः प्रतिरति प्रकर्षेण ददातु। तत्रैव याज्यामाह "यमादित्या अ॒ꣳशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृह-स्पतिराप्याययन्तु भुवनस्य गोपाः" इति। यं चन्द्रमसं अंशुं स्थिरभूतैककलामात्रावशिष्टं आदित्याः शुक्लपक्षे प्रतिदिनमे-कैककलाप्रदानेनाप्याययन्ति। कीदृशं यमक्षितं पौर्णमास्या-मक्षीणचन्द्रं कृष्णपक्षे प्रतिदिनं वह्न्यादयो देवाः स्वयमक्षितयः क्षयरहिताः पिबन्ति एकैकां कलामपचयन्ति। अत एव सोमोत्पत्तौ स्मर्यते प्रथमां पिबते वह्निरिति। ज्योतिःशास्त्र-प्रक्रियया त्वादित्यरश्मय एव स्वयमक्षितय एव एकैकां कलां पिबन्ति आच्छादयन्ति। तेन चान्द्रेणामृतेन राजा दीप्य-मान आदित्यो वरुणो बृहस्पतिरित्येवमादयो भुवनस्य गो-प्तारो देवा नोऽस्मान् रोगग्रस्तान् रोगं निवार्याप्याययन्तु। यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदि-न्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इत्यत्र राजेन्द्रहविषः पुरोऽनुवाक्यारूपां स्वराडिन्द्र-हविषो याज्यारूपामुभयाकारामृचं पठति "प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन् वृत्रहासि। यत्र यन्ति स्रोत्यास्तत् जितं ते दक्षिणतो वृषभ एधि हव्यः" इति। हे इन्द्र त्वं प्राच्यां दिशि राजाधिपतिरसि, अपि च हे वृत्रहन् उदीच्यां वृत्रहा वैरिघातकोऽसि। किञ्च स्रोत्या नद्यो यत्र

यन्ति तत् सर्वं ते जितं, यद्दो हि सर्वासु दिक्षु प्रवहन्ति, अतः सर्वत्र तव विजय इत्यर्थः। किञ्च त्वं वृषभः कामानां वर्षयिता हव्यो होमयोग्यः सन् दक्षिणत एधि आहवनीयस्य दक्षिणभागे स्थितो भव, तत्र स्थित्वा ऋत्विग्भिर्हविर्दीयते। राजेन्द्रहविषो याज्या, अधिराजेन्द्रहविषः पुरोऽनुवाक्या, इत्युभयरूपामृचं पठति "इन्द्रो जयाति न पराजयाता अधिराजो राजसु राजयाति। विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत्" इति। इन्द्रः सर्वत्र जयत्येव न तु क्वापि पराजयते, सर्वेषु राजस्वधिको राजा भूत्वा सर्वानन्यान् राजयाति अराज्ञामपि राज्यप्रदानेन राजत्वं सम्पादयति। किञ्च सर्वेषां राज्ञामुपसद्यः शरण्यः नमस्कारार्हश्च यथाऽसत् येन प्रकारेणासि तथा विश्वाः पृतनाः परकीयसेनाः अभिष्टीरभिभवितुं समर्थो भूयाः। अधिराजेन्द्रहविषो याज्या स्वराडिन्द्रहविषः पुरोऽनुवाक्येत्युभयरूपामृचं पठति "अस्येदेव प्ररिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय" इति। इदेवेत्युभयं मिलित्वावधारणे वर्तते, अपि च ननु चेत्यादिवन्निपातसमुदायस्यैकार्थत्वं। प्ररिरिच इत्यत्र प्रशब्दोऽतिशब्दार्थे वर्तते। अस्येदेव अस्येन्द्रस्यैव महित्वं महिमा परितो दिवः पृथिव्या अन्तरिक्षाच्च प्ररिरिचे सर्वतो लोकत्रयमतिरिच्य वर्तत इत्यर्थः। किञ्चेन्द्रो रणाय युद्धार्थमाववक्षे आभिमुख्येन वहति सेनां प्रापयति, कीदृश इन्द्रः स्वराट् स्वयमेव

राजा न तु परतन्त्रः, इमे गृहे विश्वगूर्तः, विश्वानि सर्वा-
ण्यायुधानि गूर्तान्युद्यतानि येन असौ विश्वगूर्तः, युद्धार्थं
त्वया निर्गन्तुं गृहेऽप्युद्यतायुध एव वर्तते, किमु वक्तव्यं
रणभूमावित्यर्थः। स्वरितुं परकीयसेनानामुपरि गन्तुं शील-
मस्येति स्वरिः, अमत्रः अमाद्रोगात् क्षुद्रूपादन्नदानेन त्रा-
यत इत्यमत्रः। य इन्द्रियकामो वीर्यकामः स्यात् तमेतया
सर्वपृष्ठया याजयेदित्यत्र राथन्तरेन्द्रहविषः पुरोऽनुवाक्या रैव-
तेन्द्रहविषो याज्येत्युभयरूपामृचं पठति "अभि त्वा शूर नो-
नुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः सुवर्दृशमीशान-
मिन्द्र तस्थुषः" इति। अदुग्धा धेनवो यथा वत्सान् प्रत्यादरेण
हम्भारवं कुर्वन्ति तथा शूरेन्द्र त्वामभितो नोनुमः पुनः पुनः
स्तुमः, कीदृशं त्वां अस्य जगतो जङ्गमस्य प्राणिजातस्येशानं,
तस्थुषः स्थावरस्यापीशानं, सुवर्दृशं स्वर्गस्य प्रदर्शयितारं।
राथन्तरेन्द्रस्य हविषो याज्या बार्हतेन्द्रहविषः पुरोऽनुवाक्ये-
त्युभयरूपामृचं पठति "त्वामिद्धि हवामहे साता वाजस्य
कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः" इति।
हे इन्द्र कारवः कर्तारो वयं त्वामित् त्वामेव हवामहे आह्व-
यामः। किन्निमित्तं वाजस्य साता अन्नस्य दाननिमित्तं, अत
एव सातावित्ति सप्तम्यन्ततया छन्दोगा अधीयते। वृत्रेषु
वैरिषु प्राप्तेषु सत्पतिं सन्मार्गपालकं त्वामाह्वयामः, नरो
मनुष्या वयं काष्ठासु सर्वासु दिक्षु अर्वतः शत्रुसेनागतानस्मान्
दृष्ट्वा त्वामाह्वयामः, हि यस्मादेवं तस्माद्वीर्यदाने नोऽस्मान्

पालयेत्यर्थः। बार्हतेन्द्रहविषो याज्या वैरूपेन्द्रहविषः पुरोऽनुवाक्येत्युभयरूपामृचं पठति "यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः। न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी" इति। हे इन्द्र यद्यपि शतं द्यावः स्युः द्युलोकाः शतसङ्ख्याका भवेयुः, अपि च भूमयोऽपि शतसङ्ख्याका भवेयुः, तथापि शतसङ्ख्याकैरवान्तरविशेषैर्युक्ते ते द्यावापृथिव्यौ जातं त्वामनु नाष्ट जातमात्रं त्वामैश्वर्येणानुकर्तुं न व्याप्नुतः न शक्नुत इत्यर्थः। तथा यद्यपि सूर्याः सहस्रसङ्ख्याकाः स्युः तथापि हे वज्रिन् तेजसा त्वामनुकर्तुं न क्षमन्त इत्यभिप्रायः। वैरूपेन्द्रस्य याज्या वैराजेन्द्रस्य पुरोऽनुवाक्येत्युभयरूपा कदाचन स्तरीरसीत्येषा नात्राम्नाता किन्तु शाखान्तरवशादध्याहर्तव्या, सा च प्रथमकाण्ड एव व्याख्याता। वैराजेन्द्रस्य याज्या शाक्वरेन्द्रस्य पुरोऽनुवाक्येत्युभयरूपामृचं पठति "पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्याꣳ सुयतो नार्वा" इति। हे इन्द्र त्वं सोमं पिब, स च पीतः सोमः त्वां मन्दतु त्वां हर्षयतु। हरिनामका अश्वा यस्यासौ हर्यश्वः, हे हर्यश्व ते त्वदर्थं अद्रिरुपांशुसवनादिरूपः पाषाणः यं सोमं सुषाव अभिषुतवान् त्वं पिबेति पूर्वत्रान्वयः। कीदृशोऽद्रिः सोतुरभिषोतुः ऋत्विजो बाहुभ्यां सुयतः सुष्ठु नियमितः, अत एव नार्वा न त्वर्वाचीनो नियमनरहितः, सोऽयं यत्र तत्र पातयित्वा विनाशयति। तादृशं सोमं पीत्वा वीर्यं देहीत्यभिप्रायः। शाक्वरेन्द्रस्य याज्या रैवतेन्द्रस्य पुरोऽनुवाक्येत्युभयरूपामृचं पठ-

ति “रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभि-र्मदेम” इति । रेवत्यो धनवत्यः, सधमादः अस्माभिः सह माद-यन्त्यो हर्षयुक्ताः, तुविवाजाः बह्वन्नोपेताः आपो नोऽस्माकं स्वामिनीन्द्रे सन्तु अस्माकं सुखाय तिष्ठन्तु, याभिरद्भिः सह वयं क्षुमन्तः शब्दयन्तः इन्द्रं स्तुवन्तो मदेम हृष्याम । यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टा-कपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं (प्र०३।अ०८) इत्यत्राग्नेये कर्मणि याज्यानुवाक्ययोः प्रतीके दर्शयति “उदग्ने शुचयस्तव वि ज्योतिषा” इति । उदग्ने शुचयस्तव शुक्रा इत्येषा पुरोऽनुवाक्या, सा च प्रथमकाण्डस्य तृतीयप्रपाठके व्याख्याता । वि ज्योतिषा बृहता भात्यग्निरि-त्येषा याज्या, सा तु प्रथमकाण्डस्य द्वितीयप्रपाठके व्या-ख्याता । सौर्ये कर्मणि पुरोऽनुवाक्यायाः प्रतीकं दर्शयति “उदु त्यं जातवेदसं” इति । सेयं प्रथमकाण्डस्य चतुर्थप्रपा-ठके व्याख्याता । तत्रैव याज्यामाह “सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण” इति । हे सूर्य देव त्वां सप्त हरितोऽश्वा रथे वहन्ति । कीदृशं त्वां शोचिष्केशं शो-चींषि दीप्यमानाः केशस्थानीया रश्मयो यस्य तादृशं, हे विचक्षणेति सूर्यविशेषणं । तत्रैव विकल्पितां याज्यामाह “चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च” इति । चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनामनीकं सैन्यसदृशं

मण्डलमुदगादुदेति। कीदृशं मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयं। तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा, स लोकत्रयमाप्राः सर्वतः पूरितवान्। वैश्वदेवीꣳ साङ्ग्रहणीं निर्वपेद्ग्रामकाम इत्यत्र पुरोऽनुवाक्यामाह "विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः। जुषन्तां युज्यं पयः" इति। विश्वे देवा युज्यं योग्यं पयः क्षीरवत् सारभूतं हविर्जुषन्तां, कीदृशा देवाः ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः, ऋतुभिर्हवनश्रुतः तैस्तैर्ऋतुभिरुपलक्षिते कर्मण्याह्वानस्य श्रोतारः। तत्रैव याज्यामाह "विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वं" इति। हे विश्वे देवाः मे मदीयमिमं हवं आह्वानं शृणुत, ये यूयमन्तरिक्षे स्थ अन्तरिक्षलोके स्थिताः ये चोप समीपे पृथिव्यां स्थिताः ये च द्यवि द्युलोके स्थ ये चाग्निजिह्वा अग्निरेव जिह्वा येषां ते अग्निजिह्वाः, अग्निद्वारेण हविषः स्वीकर्तारः, उत वा अन्येऽपि वा यजत्रा यष्टव्याः ते सर्वेऽपि अस्मिन् बर्हिषि यज्ञे आसद्योपविश्य मादयध्वं हृष्टा भवत यजमानं हर्षयध्वं॥

अत्र विनियोगसङ्ग्रहः।

आदित्येष्टौ नवो द्वे तु प्राच्यामित्यादिकं त्रयं।
राजादिगुणकेन्द्रस्य पुरोडाशसमूहके॥
आग्नेय उद् विज्यो द्वे उदु त्यं जातवेदसं।

सप्त चित्रं त्रयं मैत्र्यै साङ्ग्रहण्या उभे इमे ॥
विश्वे देवा इति प्रोक्ता मन्त्राः सप्तदशैव हि ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे चतुर्थः प्रपाठकः सम्पूर्णः ॥ * ॥

ॐ तत्सत् ॥

## अथ तैत्तिरीयसंहिताभाष्ये

### द्वितीयकाण्डे पञ्चमप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ॐ ।

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं विपर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत् सोमपानं ॥ १ ॥

आसीत् स कपिञ्जलोऽभवद्यत् सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति स पृथिवीमुपासीदद्स्यै ब्रह्महत्यायै तृतीयं प्रतिगृहाणेति साब्रवीद्वरं वृणै खातात् पराभविष्यन्ती मन्ये ततो मा पराभूवमिति पुरा ते ॥ २ ॥

संवत्सरादपिरोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपिरोहति वारेवृतꣳ ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नावस्येद्ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृक्णात् ॥ ३ ॥

पराभविष्यन्तो मन्यामहे ततो मा पराभूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत् तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाव्रश्चनान्निर्येषति तस्य नाश्यं ॥ ॥ ४ ॥

काममन्यस्य स स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहै काममा विजनितोः सम्भवामेति तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममा विजनितोः सम्भवन्ति वारेवृतꣳ ह्यासां तृ

तीयं ब्रह्महत्यायै प्रत्यग्रह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न संवदेत ॥ ५ ॥

न सहासीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति यां मलवद्वाससꣳ सम्भवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप-गल्भो या स्नाति तस्या अप्सु मारुको या ॥ ६ ॥

अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलति-रपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्याव-दन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्य खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेद-खर्वेण वा पात्रेण प्रजायै गोपीथाय ॥ ७ ॥

यत् सोमपानं ते वृकणात् तस्य नाश्यं वदेत मा-रुको याऽखर्वेण वा चीर्णि च ॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चम-प्रपाठके प्रथमोऽनुवाकः ॥ * ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥
द्वितीयादिचतुर्थान्तैस्त्रिभिरेतैः प्रपाठकैः।
उक्ताः काम्येष्टयः काण्डे द्वितीये परतस्तु यत्॥
आद्ये दर्शपूर्णमासमन्त्रव्याख्यानमीरितं।
विधयो मन्त्रसम्बद्धा बहवः प्रतिपादिताः॥
तच्छेषविधयो वाच्या व्याख्येया हौत्रमन्त्रकाः।
*अतोऽनुब्राह्मणं त्वत्र वर्ण्यते पाठकद्वये॥
प्रपाठके पञ्चमेऽनुवाका द्वादश संस्थिताः।
आध्वर्यवं पूर्वषट्के हौत्राभिप्राय उत्तरे॥
अग्नीषोमीयहविषो विधिस्तत्राद्ययोर्द्वयोः॥

तत्र द्वितीयानुवाके पौर्णमासीगतमग्नीषोमीयपुरोडाशं विधित्सुस्तदुपोद्घातत्वेन प्रथमानुवाके काञ्चिदाख्यायिकामाह "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयो ऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं विपर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनत्, यत् सोमपानमासीत्

* प्रकृतब्राह्मणमिति तै०।

स कपिञ्जलोऽभवत्, यत् सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिः" इति। विश्वानि बहुविधानि रूपाणि यस्यासौ विश्वरूपः। त्रिभिः शिरोभिरुपेतत्वाद्विश्वरूपत्वं। यो विश्वरूपनामकस्त्वष्टुः पुत्रः स देवानां पुरोहितो न तु शरीरसम्बन्धी, असुराणान्तु भागिनेयः। स च सात्त्विकेन शिरसा सोमं पिबति। राजसेनान्नमत्ति। तामसेन सुरां पिबति। स च यज्ञमण्डपेषु गत्वा सर्वेषां श्रोत्रप्रत्यक्षं यथा भवति तथा देवेभ्यो हविर्भागो युक्त इति वदति। सर्वेषां परोक्षं यथा भवति तथा रहस्ये ऋत्विग्भिः सहाऽयं हविर्भागोऽसुरेभ्यो युक्तोऽतस्तानेवोद्दिश्य प्रयच्छतेति स एवं वदति। तेषामृत्विजां तस्मिन् परोक्षवादे विश्वास उत्पन्नस्तस्य परोक्षवादस्य हृदयपूर्वकत्वात्। लोकेऽपि तवायं भाग इति सर्वस्मै पुरुषाय प्रीतिमुत्पादयितुं तत्समीपे सर्वे वदन्ति, हृदयपूर्वकत्वाभावात् न स उदितो भवति। परोक्षं यदर्थं तु भाग उच्यते, तस्यैव भागो हृदयपूर्वकत्वात् उदितो भवति। एवं वृत्तान्तं श्रुत्वा तस्माद्विश्वरूपादिन्द्रोऽबिभेत्, किमिति ईदृक्स्वामिद्रोहं सर्वथा कृत्वा राष्ट्रं विपर्यावर्तयतीति। अस्मत्तोऽपनीयासुरेभ्यः समर्पणं विपर्यावृत्तिः। ततस्तस्य द्रोहिणः शिरःसु छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि। तस्येन्द्रस्य प्रत्यवायं जनापवादञ्च दर्शयति "तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति" इति। तस्य विश्वरूपस्य बधेन निष्पन्ना या ब्रह्महत्या

तामञ्जलिना स्वीचकार। पापिनां शिक्षायामीश्वरेण नियुक्तानां यमचित्रगुप्तादीनां पुरतोऽञ्जलिं कृत्वा निर्भयः सन् ब्रह्महत्या मया बुद्धिपूर्वकमेव कृतेत्येवमङ्गीचकारेत्यर्थः। प्रायश्चित्तमकृत्वा संवत्सरं निरन्तरं ब्रह्महत्यामङ्गीकृत्यैव तस्थौ। आत्मतत्त्वज्ञानेन पापलेपाभावाद्भीत्यभावस्तस्य युक्तः। अत एव कौषीतकिन इन्द्रवाक्यमेतदामनन्ति 'यन्मां विजानीयास्त्रिशीर्षाणं त्वाष्ट्रमहमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं' इत्यादि। दुरिताभावेऽपि सर्वप्राणिनस्तमिन्द्रं ब्रह्महन्नित्येवं सम्बोध्याभितस्तस्याक्रोशं कृतवन्तः। ततस्तस्य जनापवादस्य परिहारायेन्द्रेणानुष्ठितमुपायविशेषं दर्शयति "स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णाणेति साब्रवीद्वरं वृणै खातात् पराभविष्यन्ती मन्ये ततो मा पराभूवमिति पुरा ते संवत्सरादपिरोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपिरोहति वारेवृतꣳ ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नावस्येद्ब्रह्महत्यायै ह्येष वर्णः" इति। उपासीदत् उपेत्य प्रार्थितवान्। खातात् पराभविष्यन्ती मन्ये, जनाः स्वेच्छया तत्र तत्र भूमिं खनन्ति तदुपद्रवात् पराभूता पीडिता भविष्यामीति मनसा चिन्तयामि। खातप्रदेशः संवत्सरमात्रेण पांसुप्रक्षेपात् तृणाद्युत्पत्तेर्वा अपिरोहात् पूरितो भूयादिति वरः। तदिदमस्यै वारेवृतमस्याः पृथिव्याः खातपूरणं वरेण लब्धं। पृथिव्या स्वी-

छतस्तृतीयो ब्रह्महत्याया भागः स्वकृतमिरिणमभवत्। इत-स्तत आनीय प्रक्षिप्तं न भवतीति स्वतःसिद्धमूषरक्षेत्रमासीत्। यस्मादिरिणं ब्रह्महत्यायाः स्वरूपं तस्मादाहिताग्निः श्रद्धा-देवस्तस्मिन्निरिणे कदाचिदपि न तिष्ठेत्। यद्वा देवयजनत्वेन नाध्यवस्येत्। श्रद्धैव देवो यस्यासौ श्रद्धावानित्यर्थः। एकस्य ब्रह्महत्याभागस्य परिहारोपाययुक्त्वाऽपरस्य तं दर्शयति "स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ते ऽब्रुवन् वरं वृणामहै वृक्णात् पराभविष्यन्तो मन्यामहे ततो मा पराभूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत् त-स्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाव्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य" इति। वृक्णा-च्छेदनात्। आव्रश्चनाच्छिन्नप्रदेशाद्भूयांसो बह्वङ्कुरा उत्ति-ष्ठन्त्विति वरः। वृक्षान्निर्गत्य घनीभूतो रसो निर्यासः। ब्रह्महत्यायाः स्वरूपत्वान्निर्यासस्य स्वरूपं न भोज्यं भवति। अपि च पक्षान्तरमस्ति। न सर्वोऽपि निर्यासो निषिद्धः किन्तु लोहितवर्णः यश्च छिन्नवृक्षप्रदेशान्निर्गतः तदेवोभयं निषिद्धं। अन्यस्य तु निर्यासस्य स्वरूपं काममाश्यमिच्छायां सत्यामशितुं योग्यं। त्रिषु ब्रह्महत्याभागेषु द्वयोः परिहारमुक्त्वा तृतीय-स्यावशिष्टस्य परिहारं दर्शयति "स स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ता अब्रुवन् वरं वृणामहा

ऋत्वियात् प्रजां विन्दामहै काममा विजनितोः सम्भवामेति तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममा विजनितोः सम्भवन्ति वारेवृतꣳ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाऽऽहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति" इति। स्त्रियः सम्यक् सीदन्ति विश्रम्भेणोपविशन्ति यस्यां सभायामिति स्त्रीसभाविशेषः स्त्रीषꣳसादः। ऋत्वियात् ऋतुसम्बन्धात् वीर्यात् प्रथमसम्भोगादेव गर्भे जातेऽपि काममुद्दिश्या विजनितोः आ प्रसवात् पुरुषेण सङ्गच्छेमहि। गर्भोपद्रवः प्रत्यवायस्य निषिद्धदिनकृतोऽस्माकं मा भूदिति वरः। अतएव याज्ञवल्क्यस्मृतिः 'यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्' इति। यो ब्रह्महत्यायास्तृतीयो भागः सा मलवद्वासा रजस्वला योषिदभवत्। यस्मादियं ब्रह्महत्याया रूपं शरीरे कञ्चुकवत्प्रतिमुच्यास्ते तस्मात् तया सह सम्भाषणं न कुर्यात्, तया सहैकस्मिन् गृहे वासो न कर्तव्यः। तत्स्वामिकं तत्स्पृष्टं वान्नं नाश्नीयात्। अपि चाभिज्ञाः केचित् एवमाहुः, स्त्रियाः शृङ्गारोपयोगित्वेनाभ्यञ्जनमेवान्नस्थानीयं तदीयं तैलादिकमेव न गृह्णीयात्, तया वा स्वशरीराभ्यञ्जनं न कारयेत्, अन्यदन्नं सत्यामिच्छायां भोक्तव्यमिति। प्रसङ्गाद्रजस्वलाव्रतानि विधत्ते "यां मलवद्वाससꣳ सम्भवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये

तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको याभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खल-तिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय" इति। अभिशस्तो मिथ्यापवादयुक्तः। यामरण्ये। मलवद्वाससं सम्भवन्तीत्यनुवर्तते। पराचीं उच्चारणभीत्या लज्जया वा पराङ्मुखीं। सभायामवाङ्मुखो वक्तुमशक्तो ह्रीतमुख्यपगल्भ इत्युच्यते। मारुको मरणशीलः। दुश्चर्मा कुष्ठी। प्रलिखते भित्तौ चित्रादिकं करोति। खलतिः केशशून्यः। अपमारी दुर्मरण-युक्तः। काणः कुण्ठिताक्षः। श्यावदन् मलिनदन्तः। कृणत्ति तृणादि छिनत्ति। उद्बन्धुको रज्जुं बद्ध्वा मरणशीलः। खर्वेण वह्निपक्केन शरावादिना। खर्वो वामनः। यस्मादुक्ता दोषा वर्तन्ते तस्मात् तत्परिहाराय रजस्वला व्रतं सम्भवादिवर्जनरूपं नियममाचरेत्। भोजनेऽञ्जलिरदग्धशरावादिर्वा साधनमस्तु। व्रताचरणमुत्पत्स्यमानायाः प्रजाया रक्षणार्थं भवति।

अत्र मीमांसा। तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

न संवदेत मलवद्वाससेत्यपि पूर्ववत्।
पुमर्थः स्यात् क्रतौ क्वापि संवादस्याप्रसक्तितः॥

दर्शपूर्णमासप्रकरणे श्रूयते 'मलवद्वाससा न संवदेत' इति।

अस्य निषेधस्य प्रकरणात् क्रत्वङ्गत्वमिति चेत्। न, अप्रसक्त-प्रतिषेधप्रसङ्गात्। यस्य व्रत्येऽहन् पत्न्यनालम्भुका भवति ताम-पहृध्य यजेतेति रजस्वलाया निःसारणान्न क्रतौ संवादप्रसक्तिः तस्मात् केवलपुरुषार्थस्यास्य प्रकरणादुत्कर्षः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः॥ * ॥

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्य॥ १॥

इन्द्रः शत्रुरभवत् स सम्भवन्नग्नीषोमावभिसमभवत् स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद् यदिमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत् स प्रजापतिमुपाधावच्छत्रुर्मे

ऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत तावब्रूतामग्नीषोमौ मा ॥ २ ॥

प्रहाराव मन्तःस्व इति मम वै युवꣳ स्थ इत्यब्रवी-न्मामभ्येतमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नी-षोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् तावब्रूता-मभिसन्दष्टौ वै स्वो न शक्नुव ऐतुमिति स इन्द्र आ-त्मनः शीतरूरावजनयत् तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद ॥ ३ ॥

नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्मा-ज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहितां प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्ज-ञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवा-त्मन्धत्ते सर्वमायुरेति स देवता वृत्रान्निर्हूय वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद् घ्नन्ति वा एनं पूर्णमास आ ॥ ४ ॥

अमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासे ऽनूच्येते वृधन्वती अमावास्यायां तत् सꣳस्थाप्य वा-र्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावा-पृथिवी मा प्रहारावयोर्वै श्रित इति ते अब्रूतां वरं

वृणावहै नक्तंचविहिताहमसानीत्यसावब्रवीच्चिवि-हिताहमितीयं तस्मान्नक्तंचविहितासौ चिचविहितेयं य एवं द्यावापृथिव्योः ॥ ५ ॥

वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन् ते देवा वृत्रꣳ हत्वाग्नीषोमावब्रुवन् हव्यं नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साब्रवीत् ॥ ६ ॥

वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौ-राहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्ते-जो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयो-स्तेजो वेद तेजस्व्येव भवति ब्रह्मवादिनो वदन्ति कि-न्देवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं निरवासाययदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ॥ ७ ॥

अस्य मा वेदा द्यावापृथिव्योरब्रवीदिति तस्माच्च-त्वारिं च ॥ २ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चम-प्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

उपोद्घाते विश्वरूपवधः सम्यक् समीरितः।

अथ द्वितीयानुवाकेऽग्नीषोमीयपुरोडाशं विधित्सुरादौ तस्योपोद्घातस्य विध्युपयोगं दर्शयति "त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मे ऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत् स सम्भवन्नग्नीषोमावभिसमभवत् स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद् यदिमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रो ऽबिभेत्" इति। यस्मात् कारणादस्योत्पत्त्यर्थमाहुतिमवर्तयत् तस्मात् कारणाद्वर्तयत्येतदर्थमिति व्युत्पत्त्या वृत्रत्वं सम्पन्नं। यस्मात् कारणात् षष्ठीसमासस्वरं विसृज्य बहुव्रीहिस्वरमुच्चारितवान् तस्मात् कारणादिन्द्रः शातयिता यस्येति व्युत्पत्त्या वृत्रस्यास्येन्द्रो घातकोऽभूत्। शेषं पूर्वप्रपाठके व्याख्यातं। तस्य बधोपायं दर्शयति "स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत" इति। इन्द्रो मम कश्चिच्छत्रुर्जात इति वदन् प्रजापतिमसेवत। तस्मादिन्द्राय स प्रजापतिर्वज्रं सिक्त्वा वृत्रमुद्दिश्य कृत्याभिमन्त्रितजलेन प्रोक्ष्य* एतेन जहीति वदन् प्रायच्छत्। जहि मारयेत्यर्थः। तेन वज्रेण सहितः स इन्द्र एनं वृत्रं हन्तुमभिलक्ष्यायत

* सिक्त्वा तीक्ष्णं कृत्वाभिमन्त्रितजलेन प्रोक्ष्य वेति तै०।

आगतवान्। इत्यमुपोद्घातं तदुपयोगञ्चोक्ताग्नीषोमीयपुरो-डाशविधिमर्थवादेनोन्नयति "तावब्रूतामग्नीषोमौ मा प्रहा-रावमन्तःस्व इति मम वै युवᳲ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्ण-मासे प्रायच्छत्" इति। हे इन्द्र मा प्रहाः वृत्रं मा प्रहर, आव-मन्तःस्वः आवामुभावेतस्य मुखे तिष्ठावः। तत् ज्ञात्वा स इन्द्रो ऽब्रवीत् युवां मम स्थः वै खलु इति। तस्मान्मामभ्येतं माम-भिलक्ष्यागच्छतं। ततोऽग्नीषोमौ त्वत्सकाशमागतयोरावयोः किं भागधेयमिति पप्रच्छतुः। स चेन्द्रः पूर्णमासे योऽग्नीषो-मीयपुरोडाशः स युवयोर्भाग इति दत्तवान्। अग्नीषोमीय-मेकादशकपालं निर्वपेदिति विधिरत्र द्रष्टव्यः। अग्नीषोमयो-र्निर्गमनप्रकारं दर्शयति "तावब्रूतामभिसन्दष्टौ वै स्वो न श-क्नुव ऐतुमिति स इन्द्र आत्मनः शीतरूरावजनयत् तच्छीत-रूरयोर्जन्म य एवᳲ शीतरूरयोर्जन्म वेद नैनᳲ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्माज्जञ्जभ्यमानादग्नीषोमौ निर-क्रामतां" इति। वृत्रस्य मुखे दन्तपङ्क्तिभ्यामभितः सम्यग् दष्टावेव वर्तावहे, तस्मादागन्तुं न शक्नुव इति उक्त इन्द्र-स्तयोरागमनाय स्वात्मनः सकाशात् शीतज्वरं तदनन्तर-भाविसन्तापज्वरं चोत्पादितवान्। तदानीं शीतरूरशब्दाभि-धेययोर्ज्वरतापयोर्जन्म समुत्पन्नं। तज्जन्मवेदिनं न शीतरूरौ हतः न मारयतः। ततः स इन्द्रस्ताभ्यां शीतरूराभ्यामायुध-सदृशाभ्यामेनं वृत्रमभिलक्ष्य प्रयुक्ताभ्यामनयदेनं वृत्रं सं-

योजितवान्। तदा शीतज्वरसन्तापाभ्यां जृम्भमाणान्मुख-विदारणं कुर्वतस्तस्माद्वृत्रादग्नीषोमौ निर्गतौ। प्रसक्तान्मन्त्र-मुत्पाद्य विनियुङ्क्ते "प्राणापानौ वा एनं तदजहितां प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवात्मन्धत्ते सर्वमायुरेति" इति। अग्नीषोमौ यदा निर्गतौ तदानीं प्राणापानावेव एनं वृत्रं त्यक्तवन्तौ तयोश्च प्राणापानयोः क्रमेण दक्षः क्रतुरित्येव नामनी। यस्मात् कारणादेते तयोर्नामनी तस्मात् कारणात् क्रतुकाले जञ्जभ्यमानो मुखविदारणरूपं गात्रविनामं कुर्वन् यजमानो मयि दक्षक्रतू इति मन्त्रं ब्रूयात्। तिष्ठेतामिति मन्त्रवाक्य-शेषस्याध्याहारः। तेन मन्त्रपाठेन प्राणापानावेव स्वात्मनि स्थिरौ धारितवान् भवति। ततोऽपमृत्युपरिहारेण सर्वमायुः प्राप्नोति। अथानेन वृत्रवधप्रसङ्गेनाज्यभागमन्त्रयुगलयोः का-लभेदेन व्यवस्थां विधत्ते "स देवता वृत्रान्निर्हृत्य वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद् घ्नन्ति वा एनं पूर्णमास आऽमावा-स्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायां" इति। स इन्द्रः अग्नीषोमप्रमुखा वृत्रमुखे स्थिताः सर्वाः देवता वृत्रात् निर्हृत्य निःसार्य वृत्रहननहेतु-भूतं हविराज्यभागद्रव्यरूपं पूर्णमासे सम्पादितवान्। लोके ऽप्येनं वृत्रमावरणात्मकं तमोऽन्धकाररूपेणावस्थितं शत्रुं पू-र्णिमादिने ज्योत्स्नया विनाशयन्ति। अमावास्यायां ज्योत्स्नाया अभावात् वृत्ररूपमन्धकारमाप्याययन्ति सर्वतो वर्धयन्ति।

यस्मादेवं तस्मात् वृत्रहननशब्दलाञ्छिते आज्यभागयोः पूर्णमासे पुरोऽनुवाक्ये कर्तव्ये। वृधिधातुयुक्ते ऋचौ अमावास्यायां पुरोऽनुवाक्ये कर्तव्ये। अग्निर्वृत्राणि जङ्घनत्, त्वꣳ सोमासि सत्पतिरित्यनयोर्वृत्रहननप्रतीतेरेते ऋचौ वार्त्रघ्नौ। अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा वयमित्येते ऋचौ वृधिधातुयुक्तत्वाद्वृधन्वत्यौ। प्रासङ्गिकीमाज्यभागव्यवस्थां विधाय प्रकृतं वृत्रवधप्रकारं दर्शयति "तत् सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्रहारावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै नक्षत्रविहिताहमसानीत्यसावब्रवीच्चित्रविहिताहमितीयं तस्मान्नक्षत्रविहितासौ चित्रविहितेयं य एव द्यावापृथिव्योर्वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्" इति। स इन्द्रो वृत्रहननहेतुभूतमाज्यभागरूपं हविः सम्पूर्णं कृत्वा पूर्ववद्वज्रमादाय पुनरपि वृत्रमभिलक्ष्य हन्तुमागतवान्। तदानीं द्यावापृथिव्याविन्द्रमब्रूतां। अयं वृत्रो भूमिमारभ्य द्युलोकपर्यन्तं व्याप्यावयोराश्रितो वर्तते, तस्मान्मदीयमेनं मा प्रहरेति। ततः इन्द्रस्यानङ्गीकारमवलोक्य प्रहारमभ्यनुज्ञातुमुत्कोचत्वेन वरं वृतवत्यौ। नक्षत्रैर्विहिता अलङ्कृता स्यामिति दिवो वरः। मनुष्यपशुवृक्षनगनदीसमुद्रादिरूपेण विचित्रेण विहिताऽलङ्कृता स्यामिति पृथिव्या वरः। तेन वरेण ते तथैव स्यातां। एतद्वराभिज्ञोऽपि स्वाभीष्टं वरं प्राप्नोति। ततः स इन्द्रः द्यावापृथिवीभ्यामनुज्ञातो वृत्रं हतवान्। अथ विहित-

स्याग्नीषोमीयपुरोडाशस्य द्वैतौ प्रशंसति "ते देवा वृत्र५ हत्वाग्नीषोमावब्रुवन् हव्यं नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साब्रवीत् वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति" इति। इन्द्रयुक्ताः पार्श्ववर्तिनः सर्वे देवा वृत्रं हत्वा तन्मुखान्निःसृतावग्नीषोमौ प्रति हव्यमस्मदर्थं वहतमित्यब्रुवन्। ततस्तावग्नीषोमौ तान् देवान् प्रत्येवमब्रूतां त्यौ तथाविधौ वृत्रेण चिरं दंशनादपगततेजस्कावेव सम्पन्नौ, त्ययोस्तथाविधयोस्तेजः सामर्थ्यं वृत्र एव स्थितमिति। ते देवा अब्रुवन् परस्परं को नामेदं तेज *आप्तुमच्छैति प्राप्तुमिच्छति। तत्र बुद्धिमन्तः केचन गौः सर्वमित्रत्वेन वैराभावात् गौरेव वृत्रशरीरे गत्वा तेजः समानेष्यतीत्युक्तवन्तः। सापि गौस्तत्कोपत्वेन वरमेवमयाचत। अनयोः सम्बन्धि घृतपयोरूपं तेजो वृत्रशरीरादानेष्यामि आनीतञ्च तन्मय्येव सर्वदा तिष्ठतु, मय्येव स्थितेन तेनोभयेन तदा तदा स्वीकृतेन भोजनं निवर्तयध्वमिति। तमिमं वरं लब्ध्वा तत्तेजो गौरानयत्। तस्मादद्यतनलोकेऽपि निरन्तरं गवि तिष्ठतैव तेजसा घृतपयोरूपेणोभयेन तदा तदा स्वीकृतेन सर्वे भोजनं निष्पादयन्ति। तत्र यद्घृतमेतद्देवाग्नेस्तेजो यत्पय

---

* आप्तुं गच्छतीति इति तै॰।

एतदेव सोमस्य तेजस्तदुभयवेदनेन तेजस्वी भवतीति। तदि-दमग्नीषोमीयपुरोडाशरूपं पौर्णमासकर्म प्रजापतिसम्बन्धित्वेने-न्द्रसम्बन्धित्वेन च प्रशंसति "ब्रह्मवादिनो वदन्ति किन्देवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं नि-रवासाययदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति" इति। नात्र प्रजापतेर्हविर्भोक्तृत्वेन पौर्णमासदेवतात्वं, किन्तु तत्कर्मस्रष्टृत्वेन। तच्च पूर्वकाण्डे (का०१।प्र०६।अ०६) उदाहृतं 'प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमञ्च पौर्णमासीञ्चोक्-थ्यञ्च' इत्यादि। स च प्रजापतिस्तेन पौर्णमासकर्मणा स्वकीयं ज्येष्ठपुत्रमिन्द्रं निरवासाययत् निःशेषवित्तदानेन स्थिरनिवा-समकरोत्। एतदपि पूर्वकाण्ड एव स्पष्टमुदाहृतं 'तेनेन्द्रं निरवासाययत् तेनेन्द्रः परमां काष्ठामगच्छत्' इति। यथा प्रजापतिर्यज्ञान् ससर्ज तथेन्द्रोऽप्यग्नीषोमौ वृत्रान्निःसार्य ता-भ्यामिमं पुरोडाशं दत्तवानिति। अस्ति प्रजापतेरिवेन्द्रस्यापि सम्बन्धः। यस्मात् प्रजापतिरिन्द्रं निरवासाययत् तस्माल्लोकेऽपि ज्येष्ठं पुत्रं धनेन निरवसाययन्ति निःशेषमायुषोऽवसानं धनेन युक्तो यथा प्राप्नोति तथा कुर्वन्तीत्यर्थः।

अथ मीमांसा। पञ्चमाध्यायस्य प्रथमपादे चिन्तितं।

अग्नीषोमीय आग्नेयात् पूर्वो नो वास्तु पूर्वता।
ब्राह्मणक्रमतो नैवं मन्त्रक्रमबलत्वतः॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः।
प्राबल्यं ब्राह्मणस्यास्ति विधिनापि कृतार्थता॥

अग्नीषोमीययागस्तैत्तिरीये ब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाक आम्नातः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति' इति। तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति प्राप्ते ब्रूमः। मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः। तथा हि हौत्रकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथममग्निर्मूर्धेत्यादिके आग्नेय्यौ याज्यानुवाक्ये आम्नाते। ततः प्रजापते न त्वदेतानीत्यादिके प्राजापत्ये। ततोऽग्नीषोमा सवेदसेत्यादिकेऽग्नीषोमीये। आध्वर्यवकाण्डेऽग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामित्याग्नेयः पूर्वमाम्नातः। याजमानकाण्डेऽप्यग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयस्य, पश्चादग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याम्नायते। मन्त्रक्रमस्य प्रबलः। मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात्। ब्राह्मणन्तु अप्राप्तपदार्थविधिनापि चरितार्थं। अतोऽनुष्ठानस्मरणार्थैवोत्पन्नान् मन्त्रान् बाधितुं नालमिति मन्त्रक्रमेणाग्नेयस्यैव प्रथममनुष्ठानं।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत।
वाक्यादाद्यः प्रक्रियया द्वितीयस्त्वविरुद्धया॥

दर्शपूर्णमासप्रकरणे श्रूयते 'प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवा-

त्वम्यत्ते सर्वमायुरेति' इति। गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः। तस्य वाक्यात् मन्त्रोक्तिः प्रतीयते। वाक्यञ्च प्रकरणाद्बलीयः। तस्मात् केवलं पुंधर्म इति चेत्। मैवं, क्रतावपि जञ्जभ्यमानपुरुषसम्भवेन वाक्यप्रकरणयोर्विरोधाभावे सति उभाभ्यां क्रतुयुक्तपुरुषसंस्कारत्वावगमात्।

तत्रैव प्रथमपादे चिन्तितं।

> वार्त्रघ्नी पूर्णमासे स्तो वृधन्वत्यौ तु दर्शगे।
> इति प्रधानशेषत्वमुक्तं किं वा व्यवस्थितिः॥
> क्रमेण प्रापिता मन्त्रास्तत्वारोऽप्याज्यभागयोः।
> क्रमाद्वाक्यं बलीयोऽत एषां दर्शादिशेषता॥
> न मुख्ये सोम एकोऽस्ति नाधारत्वादिकालयोः।
> दर्शादेरव्यवस्थित्या प्राप्तौ वाक्याद्व्यवस्थितिः॥

दर्शपूर्णमासप्रकरणे श्रूयते 'तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायां' इति। तत्रेदं वार्त्रघ्नीयुगलं वृधन्वतीयुगलञ्च हौत्रकाण्डे आज्यभागयोः क्रमे अग्निर्वृत्राणि जङ्घनदित्यनुवाकेनाम्नातं। उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरवगम्यते। तत्र वाक्यस्य प्रबलत्वादेषां मन्त्राणां दर्शपूर्णमासयागाङ्गत्वं न त्वाज्यभागाङ्गत्वमिति प्राप्ते ब्रूमः। अग्निर्वृत्राणि जङ्घनदित्याग्नेयी प्रथमा वार्त्रघ्नी। त्वं सोमासि सत्पतिरिति सौम्या द्वितीया वार्त्रघ्नी। अग्निः प्रत्नेन जन्मनेत्याग्नेयी प्रथमा वृधन्वती। सोम गीर्भिष्ट्वा वयमिति सौम्या द्वितीया वृधन्वती। तत्र मुख्ययोर्दर्शपूर्णमासयागयोराग्नेयपुरो-

ज्ञाग्निसद्भावात् आग्नेयीद्वयस्य विकल्पेन पुरोऽनुवाक्यात्वं युक्तमित्यस्तु। सौम्ययोस्तु तन्न सम्भवति, सोमदेवताया अभावात्। न ह्यग्नीषोमीयेऽपि केवलः सोमो विद्यते। किञ्च पौर्णमास्याममावास्यायामिति सप्तमीभ्यां आधारत्वं गम्यते। तच्च यागवाचित्वे यागस्य मुख्यत्वान्न सम्भवति। कालस्य तूपसर्जनत्वात् तद्वाचित्वं युक्तं। किञ्च प्रयाजमन्त्रानुवाकस्यानन्तरमेव अयमनुवाकः पठितः स चाज्यभागयोरङ्गयोः क्रमः। न तु मुख्ययोर्दर्शपूर्णमासयोः। तस्मान्न मन्त्रचतुष्टयस्य मुख्ययागाङ्गत्वं। किन्तु आज्यभागाङ्गत्वं। नन्वेतत् क्रमेणैव लभ्यं तत्राप्याग्नेये प्रथमाज्यभागे मन्त्रोऽप्याग्नेयः। सौम्ये द्वितीये सौम्य इत्येषा व्यवस्था लिङ्गेनैव लभ्यते। बाढं। तथापि आर्चघ्नीयुगलं दर्शपूर्णमासे वृधन्वतीयुगलममावास्यायामित्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येनाभिधीयत इति न तद्वैयर्थ्यं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

---

इन्द्रं॒ वृ॒त्रं ज॑घ्निवा॒ꣳसं॒ मृधो॒ऽभिप्रावे॑पन्त॒ स ए॒तं वै॑मृ॒धं पू॒र्ण॒मा॒सेऽनु॒नि॒र्वा॒प्य॑मपश्यत् तं निर॑वपत् तेन॒ वै स मृधो॒ऽपा॑हत॒ यद्वै॑मृ॒धः पू॒र्ण॒मा॒सेऽनु॒नि॒र्वा॒प्यो॑ भव॑ति

मृध एव तेन यजमानोऽपहत इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि ॥ १ ॥

तन्निरवपत् तेन वै स देवताश्चेन्द्रियञ्चावारुन्ध यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवताश्चैव तेनेन्द्रियञ्च यजमानोऽवरुन्ध इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं ॥ २ ॥

पृथिवीमनुव्यारत् तदोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सन्नयतेति तत् पशव ओषधीभ्योऽध्यात्मन्त्समनयन् तत् प्रत्यदुहन् यत् समनयन् तत् सान्नाय्यस्य सान्नाय्यत्वं यत् प्रत्यदुहन् तत् प्रतिधुषः प्रतिधुक्त्वꣳ समनैषुः प्रत्यधुक्षन् न तु मयि श्रयत इत्यब्रवीदेतदस्मै ॥ ३ ॥

शृतं कुरुतेत्यब्रवीत् तदस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छृतस्य शृतत्वꣳ समनैषुः प्रत्यधुक्षञ्छृतमक्रन्न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् त-

दध्नो दधित्वं ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं॥
॥ ४ ॥

दधि हि पूर्वं क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्यावद्येदिन्द्रियमेवास्मिन् वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं तद्यत् कलैराक्षसं तद्यत् तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत् सेन्द्रं दध्नाऽऽतनक्ति ॥ ५ ॥

सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सन्तत्या इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्यां प्रत्यागच्छत् तं देवा अभिसमगच्छन्तामा वै नः ॥ ६ ॥

अद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वं ब्रह्मवादिनो वदन्ति किन्देवत्यꣳ सान्नाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभिसमगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूया-

दिन्द्रं वाव ते तन्निषज्यन्तोऽभिसमगच्छन्तेति ॥ ७ ॥

दधि मे जग्धुष इन्द्रियं वीर्यमित्यब्रवीदेतदस्मा अवदेयं तनक्ति नो द्विचत्वारिꣳशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीयेऽग्नीषोमयागोऽभिहितः पूर्णिमादिने।

अथ तृतीयेऽमावास्यायां साम्नाय्ययागो वक्तव्यः। तत्र प्रथमं तावत् पौर्णमास्यामनुनिर्वाप्यं वैमृधं विधातुं प्रस्तौति "इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभिप्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत् तं निरवपत् तेन वै स मृधोऽपाहत" इति। इन्द्रो वृत्रं हतवान् तमिन्द्रं मृधो वृत्रपक्षपातिनो वैरिणोऽभितः समागत्य प्रकर्षेण भयमुत्पाद्याकम्पयन्त। विनाशिता मृधो वैरिणो येन देवेनासौ विमृत्। स देवो यस्यैकादशकपालस्य पुरोडाशस्य सोऽयं वैमृधः। तं पुरोडाशं पूर्णमासयागेऽनुनिर्वाप्यं प्रधानकर्मणः पश्चात् निर्वापयोग्यमपश्यत्। अथ विधत्ते "यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽपहते" इति। अथ साम्नाय्यनामकमैन्द्रं दधि विधातुं प्रस्तौति "इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि तन्निरवपत् तेन वै स देवताश्चेन्द्रियञ्चावा-

रुन्ध" इति। इन्द्रो वृत्रवधेन भीतो दूरे पलायमानः 'स्वकीयाभिर्देवताभिश्च स्वकीयेन सामर्थ्येन च व्यृद्धो वियुक्तोऽभूत्। अथ विधत्ते "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवतास्वेव तेनेन्द्रियञ्च यजमानोऽवरुन्धे" इति। अत्राग्नेयो न विधीयते। षष्ठे प्रपाठके यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवतीति कालद्वयविधानात्। अत ऐन्द्राग्नैकादशकपालविध्युन्नयनायायमर्थवादः। यदा केवलेनाप्याग्नेयेन देवतानामिन्द्रियस्य चावरोधो भवति तदानीं किमैन्द्राग्नेन तदवरोध इति किमु वक्तव्यमिति। अनयोः स्तुत्या तद्विधिरुन्नीयते, शाखान्तरे समानप्रकरणे स्पष्टं तद्विधानात्, ऐन्द्रदधिविधिस्त्वसन्दिग्ध एव। तमेतं विधिं स्तोतुं सान्नाय्यनिर्वचनं दर्शयति "इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुव्यारत् तदोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सन्नयतेति तत् पशव ओषधीभ्योऽध्यात्मन् समनयन् तत् प्रत्यदुहन् यत् समनयन् तत् सान्नाय्यस्य सान्नाय्यत्वं यत् प्रत्यदुहन् तत् प्रतिधुषः प्रतिधुक्त्वं" इति। जघ्नुषो हतवतः। व्यार्च्छत् विविधत्वेन प्राप्नोत्। ओषधिवीरुधोर्भेदः पूर्वाचार्यैर्दर्शितः।

'ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः' इति।

तदेतदिन्द्रियसामर्थ्यस्यौषध्यादिरूपत्वं प्रजापतेरग्रे कथितवान्। स च प्रजापतिरेतदिन्द्रियसामर्थ्यमिन्द्रार्थं सम्यक् प्रापयतेति

पशूनब्रवीत्। तत् सामर्थ्यं पशव ओषधीभ्यः सकाशादानीय स्वात्मन्नधि स्वशरीरे सम्यक् स्थापितवन्तः। पुनः स्वनिष्ठं तदीयं क्षीरादिरूपमिन्द्रं प्रति दुग्धवन्तः। यस्मात् पशवः समनयन् तस्मात् सान्नाय्यस्य गोरसस्य सम्यगानयनेन सम्पन्नमिति व्युत्पत्त्या सान्नाय्यनाम भवति। यस्मादिन्द्रं प्रति दुग्धवन्तः तस्मात् प्रतिधुषः प्रतिदिनं दुह्यमानस्य क्षीरस्य प्रतिधुगिति नाम सम्पन्नं। अथ शृतनामनिर्वचनं दर्शयति "समनैषुः प्रत्यधुक्षन् न तु मयि श्रयत इत्यब्रवीदेतदस्मै शृतं कुरुतेत्यब्रवीत् तदस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छृतस्य शृतत्वं" इति। भो प्रजापते त्वदाज्ञया पशवः समनैषुः प्रत्यधुक्षंश्च क्षीररूपं तदीयं मयि न श्रयते पाकाभावान्मदुदरे तन्न जीर्यतीत्यर्थमुक्तवान्। ततः प्रजापतिः *पाककर्तॄन् प्रति शृतं पक्वं कुरुतेत्यब्रवीत्। तथा कृते सति तदिन्द्रियसामर्थ्यरूपं पक्वं पयोऽस्मिन्निन्द्रोदरे सम्यक् आश्रितमभूत्। यस्मात् पक्वं श्रितञ्च तस्मात् आ पाक इत्यस्मात् श्रीञो वा शृतमिति नाम निष्पन्नं। अथ दधिनामनिर्वचनं दर्शयति "समनैषुः प्रत्यधुक्षञ्छृतमक्रन्न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वं" इति। समयनप्रतिदोहनशृतत्वानि सम्पन्नान्येव, किन्तु तच्छृतं मां न धिनोति न प्रीणयतीत्युक्ते प्रजापतिरातञ्चनकर्तॄन् प्रति दधि कुरुतेत्यब्रवीत्। तच्च दधि कृतं सदेनमिन्द्रमधिनोत् अप्रीणयत्, तस्माद्दधिनाम सम्पन्नं।

*. पशून् इति का०।

अत्रैन्द्रं दधीति विधिर्विस्पष्ट एव। श्रृतनामनिर्वचनार्थवादेन ऐन्द्रं पय इति विधिमुन्नयेत्, अन्यथा वक्ष्यमाणश्रृतावदान-विचारानुदयप्रसङ्गात्, तमेव विचारमभिप्रेत्य पूर्वपक्षमुपन्य-स्यति "ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं दधि हि पूर्वं क्रियत इति" इति। यस्मात् पूर्वदिने रात्रौ दधि क्रियते तस्मात्क्रमावदानकाले दध्नः स्वरूपमेव पूर्वमवदेयं। तमेवं पूर्वपक्षं दर्शयित्वा सिद्धान्तं विधत्ते "अनादृत्य तच्छृतस्यैव पूर्वस्यावद्येदिन्द्रियमेवास्मिन् वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति" इति। तत् पूर्वं दध्यवदानमनादृत्य क्षी-रस्यैव स्वरूपं पूर्वमवदेयं। तथा सत्यस्मिन् यजमाने इन्द्रि-यरूपमेव क्षीरं पूर्वमवस्थाप्य उपरिष्टाद्दध्ना प्रीणयति। क्षीरं पूर्वभावि दधि पश्चाद्भावीत्येवमुत्पत्तिक्रममपि प्राप्तवान् भवति। अथातञ्चनं विधत्ते "यत् पूतीकैर्वा पर्णवल्कैर्वातञ्च्यात् सौम्यं त-द्यत् क्वलैराक्षसं तद्यत् तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्य-द्दध्ना तत्सेन्द्रं दध्नाऽऽतनक्ति सेन्द्रत्वाय" इति। सोमवल्लीसमाना-या लतायाः खण्डाः पूतीकाः। पलाशकाष्ठस्यांशाः पर्णवल्काः। प्रौढबदरफलानि क्वलाः। ईषदम्लतक्रमातञ्चनं। पूतीकादि-भिरातञ्चनं सोमप्रियं। तथा सति अत्रेन्द्रप्रीत्यै दध्ना आत-ञ्च्यात्। दध्ना आतञ्चनस्योपरि अग्निहोत्रार्थं यवागूश्रेषेणा-तञ्चनं विधत्ते "अग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सन्तत्यै" इति। दर्शयागस्याग्निहोत्रेण सहाविच्छेदः सन्ततिः। अथ पिण्डपितृयज्ञं विधत्ते "इन्द्रो वृत्रꣳ हत्वा परां परावतमग-

च्छदपराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन् सोऽब्रवीत् प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते” इति। वृत्रवधेनासुराणामपराधं कृतवानस्मीति मन्यमान इन्द्रो भीतोऽत्यन्तं दूरमगच्छत्। तमिन्द्रं प्रति देवता आह्वानमैच्छन्। देवतानां मध्ये योऽन्विष्य प्रथममिन्द्रं लभते तस्य प्रथमं भागो दीयत इति प्रजापतिना उक्ताः पितरः प्रथममिन्द्रं यस्मादलभन्त तस्मात् पितृभ्यः पूर्वेद्युः पिण्डपितृयज्ञं कुर्यात्। दर्शयागदेवतानाममावास्यायामारम्भः प्रतिपदि तद्यागः। पितॄणान्त्वमावास्यायामेव पिण्डदानं। ननु ब्राह्मणग्रन्थे प्रथमकाण्डस्य तृतीयप्रपाठकेऽन्त्यानुवाके महता प्रपञ्चेन पिण्डपितृयज्ञो विहितः, बाढं। एवं तर्हि साम्नाय्यप्रशंसार्थमत्र तदनुवादोऽस्तु तामेव स्तुतिं द्योतयितुं अमावास्यानिर्वचनं दर्शयति “सोऽमावास्यां प्रत्यागच्छत् तं देवा अभिसमगच्छन्तामा वै नोऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वं” इति। पितृभिरन्विष्य लब्धः स इन्द्रः अमावास्यायां पलायनदेशात् प्रतिनिवृत्य समागतस्ते देवास्तमिन्द्रमभिमुखीकर्तुं सम्प्राप्ताः परस्परमिदमब्रुवन्। अद्य नोऽस्माकं वसु श्रेष्ठं धनममावसति सहतिष्ठति, सर्वेषां साधारणत्वेन वर्तत इत्यर्थः। किं तद्वस्विति तदुच्यते। इन्द्रः खलु सर्वेषां देवानां वसु श्रेष्ठं धनं, तस्मिन् वर्तमाने सति स्वामिलाभात्। यस्माद्देवा एवमुक्तवन्तः तस्मादमावसत्यत्येति व्युत्प-

स्यामावास्यानाम सम्पन्नं। ऐन्द्रं दधि इति विधिवाक्ये सा-न्नाय्यस्य यदैन्द्रत्वमुक्तं तदेव पूर्वोत्तरपक्षाभ्यां द्रढयति "ब्रह्म-वादिनो वदन्ति किन्देवत्यꣳ सान्नाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभिसमगच्छन्तेत्यथो खल्वैन्द्रमि-त्येव ब्रूयादिन्द्रं वाव ते तद्भिषज्यन्तोऽभिसमगच्छन्तेति" इति। पितृभिरानीयमानमिन्द्रमभिमुखीकर्तुं सर्वेऽपि देवा यदा स-मागच्छन् तदा तत्सान्नाय्यलक्षणं भागमभिलक्ष्यैव समागच्छ-न्निति सान्नाय्यं वैश्वदेवमिति केषाञ्चित्पक्षः। अथोशब्दः पक्षा-न्तरार्थः। भीत्या दूरदेशं गतमिन्द्रं भिषज्यन्त एव भयनिवा-रणेन समाधित्सन्त एव ते देवास्तत्र समागताः न तु सान्नाय्य-लिप्सया। तस्मात् सान्नाय्यमैन्द्रमित्येव बुद्धिमान् ब्रूयात्॥

अत्र मीमांसा। चतुर्थाध्यायस्य तृतीयपादे चिन्तितं।

संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।
द्वयोरङ्गमुतैकस्य द्वयोः स्यात् प्रक्रियावशात्॥
उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात्।
तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता॥

दर्शपूर्णमासप्रकरणे श्रूयते 'संस्थाप्य पौर्णमासीं वैमृधमनु-निर्वपति' इति। तत्रेयं वैमृधेष्टिः प्रकरणबलात् प्रयाजादिवदु-भयोरपि दर्शपूर्णमासयोरङ्गमिति चेत्। न, वाक्यस्य प्रबलत्वात्। न च संस्थाप्येति पौर्णमासस्य समाप्त्यभिधानात् तदङ्गत्वमयुक्त-मिति वाच्यं। दर्शसाधारणाङ्गसमाप्त्यभिप्रायेण तदुपपत्तेः। त-स्मादुत्पत्तिवाक्यादेककर्तृकत्ववाचिक्त्वाप्रत्ययाच्च पूर्णमासस्यैवाङ्गं।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितं ।

दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ ।
दर्शे यदितिवाक्याभ्यां कर्मान्यद्वानुवादगीः ॥
अभ्यासादन्यकर्मत्वं द्विर्दर्शेऽसौ प्रयुज्यतां ।
एकत्वं प्रत्यभिज्ञानादनूक्तिरैन्द्राग्नसंस्तुतिः ॥

यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवतीति कालद्वये विहितं 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति एकस्मिन् काले पुनर्विहितं, तत्राविशेषे पुनः श्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः। तथा सत्याग्नेययागस्य दर्शकाले द्विःप्रयोगः इति चेत्। न, प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्यानुवादत्वात्। न चानुवादो व्यर्थः, विधेयैन्द्राग्नस्तुत्यर्थत्वात्। यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथापि न केवलेनाग्निना साधुर्भवति, इन्द्रसहितोऽग्निः समीचीनतरः। तस्मादैन्द्राग्नः कर्तव्य इति विधेयस्तुतिः। प्रयाजवैषम्यन्तूक्तमेवानुसन्धेयं। तस्मादनुवादः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतां ॥ १ ॥

इष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानुनिरवपन् ततो देवा अभवन् परासुरा यो भ्रातृव्यवान्त्स्यात् स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनुनिर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञञ्च भ्रातृव्यस्य वृङ्क्ते मिथुनान् पशून् सारस्वताभ्यां यावद्देवास्यास्ति तत् ॥ २ ॥

सर्वं वृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाप्याययति साकम्प्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाहरन्ति नात्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पर्णꣳ होतव्यं तृप्त एवैन-

मिन्द्रः प्रजया पशुभिस्तर्पयति दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानश औदुम्बरं ॥ ३ ॥

भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे नागतश्रीर्महेन्द्रं यजेत चयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति संवत्सरमिन्द्रं यजेत संवत्सरꣳ हि व्रतं नाति स्वा ॥ ४ ॥

एवैनं देवतेज्यमाना भूत्या इन्धे वसीयान् भवति संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमालम्भयति ततोऽधि कामं यजेत ॥ ५ ॥

एतां तदौदुम्बरꣳ स्वा चिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

उक्तो वैमृधसान्नाय्ये द्वितीयानुवाकके ।

अथ चतुर्थे आग्नावैष्णवादयो वक्तव्याः। तत्रादौ तावत् पूर्वोक्तानुवाकयोर्दर्शपूर्णमासयोः प्रशंसामाह “ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः

पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति" इति। एतौ दर्शपूर्णमासयागाविन्द्रसहितौ यो यजते स एव दर्शपूर्णमासयाजी न त्वन्यः, तयोश्च यागयोः सेन्द्रत्वं वैमृधसान्नाय्याभ्यां सम्पद्यते। एवं विदुषः सेन्द्रयागेनोत्तरोत्तरदिने धनाधिक्यं भवति। अथ पौर्णमास्यां काम्यमनुनिर्वाप्यमिष्ट्यन्तरं विधातुं प्रस्तौति "देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानुनिरवपन् ततो देवा अभवन् परासुराः" इति। देवानां यज्ञं दृष्ट्वा तथैवानुतिष्ठतामसुराणां देवसमानं विजयं दृष्ट्वा देवास्तानसुरान् वञ्चयित्वानुष्ठितेनानुनिर्वाप्येण स्वयं विजयं प्राप्ताः, असुराश्च पराभूताः। अथ विधत्ते "यो भ्रातृव्यवान्त्स्यात् स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनुनिर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञञ्च भ्रातृव्यस्य वृङ्क्ते मिथुनान् पशून् सारस्वताभ्यां यावदेवास्यास्ति तत् सर्वं वृङ्क्ते" इति। पौर्णमासेन प्रधानयागेन वज्रप्रहारः। अग्निः सर्वा देवता विष्णुर्यज्ञ इत्युक्तत्वात्, तदीयहविषा वैरिणो देवता यज्ञं क्रतुञ्च विनाशयति। सारस्वतयोः स्त्रीपुरुषदेवत्वात् तदीयहविर्भ्यां मिथुनानां पशूनां वर्जनं। एतावता भ्रातृव्यस्य यावद्वित्तमस्ति तत् सर्वं नाशितं

भवति। यदुक्तं सूत्रकारेण, 'पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्यां पितृयज्ञमेवामावास्यायां कुरुते ।' तदेतद्विधत्ते "पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाप्याययति" इति। द्वितीयानुवाके वृत्रप्रसङ्ग इदमुक्तं 'घ्नन्ति वा एनं पूर्णमास आमावास्यायां प्याययन्ति' इति। तस्मादत्रापि पूर्णमासानुष्ठानेन भ्रातृव्यं हत्वा दर्शयागपरित्यागेन भ्रातृव्यस्याप्यायनं परित्यक्तवान् भवति। अथ दर्शपूर्णमासस्य गुणविकृतिरूपं कञ्चिद्यागं विधत्ते "साकम्प्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाहरन्ति नात्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति। दधिक्षीरपूर्णाभिस्ताभिः कुम्भीभिर्ब्राह्मणाहृताभिः साकमध्वर्योः प्रस्थानं होमस्थानं प्रति प्रस्थानं यस्मिन् यागे सोऽयं साकम्प्रस्थायीयो यागः। तेन पशुकामो यजेतान्यत्र महता क्षीरद्रव्येण पूर्णं हविर्होतव्यं। लोके च यस्मै राज्ञे करप्रदायिन्यः प्रजा अल्पेन प्रमाणेन धनमाहरन्ति स राजा न स्वयं तृप्यति नाप्यन्यस्मै दातुं शक्नोति। यस्मै तु महता प्रमाणेन धनमाहरन्ति स राजा स्वयं तृप्यति च अन्यस्मै दातुमपि च प्रभवति। तस्मादत्रापि महता प्रमाणेन पूर्णस्य द्रव्यस्य होमे सति स्वयं तृप्त इन्द्रः प्रजया पशुभिश्चैनं यजमानं तर्पयति। तद्यागप्रकारः सूत्रकारेण स्पष्टीकृतः 'साकम्प्रस्थायीयेन यजेत पशुकाम इत्य-

मावास्या विक्रियते द्वौ सायं दोहावेवं प्रातः सायं' सायं-दोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्यां सर्वेषां प्रातः' इति। क्षीरस्थपणपात्राणां मृन्मयत्वाद्धोमेऽपि तत्प्रसक्तिं वारयितुं वि-धत्ते "दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानशे" इति। यस्मान्मृन्मयपात्रमाहुतिं व्याप्तुं नार्हति तस्माद्दारुपात्रेण होमः। न त्वत्र जुह्वामवदानमस्ति, पूर्णस्य होतव्यत्वात्। अतो हविः-पूरणक्रमेण जुहुयात्। दारुविशेषं विधत्ते "औदुम्बरं भव-त्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे" इति। प्रथमप्रपाठके औदुम्बरो यूपो भवतीत्यत्रैतद्व्याख्यातं। अत्र सूत्रं 'पात्रसंसादनकाले चत्वार्यौदुम्बरपात्राणि प्रयुनक्ति तेषां जुहू-वत् कल्पः' इति। 'यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरेवाध्वर्युं जुह्वन्तमनुजुह्वति स्विष्टकृद्भक्षाश्च न विद्यन्ते' इति च। अधि-कारिभेदेन सान्नाय्यस्य देवताव्यवस्थां विधत्ते "नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति" इति। शुश्रुवान् वेदत्रया-भिज्ञः। वेदत्रयस्य च श्रीरूपत्वात् तदभिज्ञः प्राप्तश्रीर्भवति। श्रीरूपत्वञ्चैवमाम्नायते "अहे बुध्निय मन्त्रं मे गोपाय। यमृषय-स्त्रयिविदा विदुः। ऋचः सामानि यजूंषि। सा हि श्रीरमृता सतां" (ब्रा०का०१।प्र०२) इति। ग्रामाध्यक्षो ग्रामणीः। राज्ञः पुत्रो राजन्यः। तयोः प्राप्तश्रीकत्वं प्रसिद्धं। तेषामेव त्रयाणां

महेन्द्रो देवता। एवं सति यः पुरुषः स्वकीयां देवतामतिक्रम्य यजते, एतेषु कश्चिदिन्द्रं यजति अन्यो वा महेन्द्रं यजति, तादृशः स्वकीयदेवतायाः प्रच्युतः सन् परकीयां देवतां न प्राप्नोति। तद्देवताशापेन पापीयान् दरिद्रश्च भवति। अगतश्रियः सर्वदा इन्द्रप्राप्तौ विशेषं विधत्ते "संवत्सरमिन्द्रं यजेत संवत्सरꣳ हि व्रतं नाति स्वैवैनं देवतेज्यमाना भूत्या इन्धे वसीयान् भवति" इति। संवत्सरमतिक्रम्य यस्माद्व्रतं नानुष्ठेयं भवति तस्मादगतश्रीः संवत्सरमिन्द्रं यजेत। एवं सति स्वकीयैव देवतान्यस्मिन् संवत्सर इज्यमाना सती भूत्यर्थं यजमानं प्रकाशयति। ततोऽयं धनवत्तरो भवति। अगतश्रियः काश्चिदिष्टिं विधत्ते "संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमालम्भयति" इति। व्रतपालकोऽग्निर्महेन्द्रयागाधिकारनिवारकं पापरूपं वृत्रं संवत्सरेन्द्रानुष्ठानेन हतवन्तं यजमानं महेन्द्रयागानुष्ठानरूपं व्रतं प्रापयति। व्रातपतेष्टेरूर्द्धमगतश्रिय* इन्द्रमहेन्द्रयोरैच्छिकत्वं विधत्ते "ततोऽधिकामं यजेत" इति॥

अत्र मीमांसा। तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

आक्रामन् सह कुम्भीभिरस्ति शेषक्रिया न वा।
जुह्वावदानात् प्रकृताविव शेषक्रियोचिता॥
कुम्भीषु शेषासंसिद्धेः साकम्प्रस्थायकर्मणि।
न स्विष्टकृदिदं कार्यमाग्नीध्रस्रुक्प्रदानतः॥

* ऊर्द्धं गतश्रिय इति का०।

'साकम्प्रस्थायीयेन यजेत पशुकामः' इति विहिते कर्मणि श्रूयते 'सह कुम्भीभिरभिक्रामन् जुहोति' इति। तत्र स्रु-ग्भिः दधिपयःकुम्भीभिः सहाहवनीयदेशेऽभिक्रमणमात्रं श्रुतं न तु तत्र कुम्भीभिर्होमः श्रुतः। तथा सत्यस्य कर्मणः सा-न्नाय्यविकृतित्वाज्जुह्वा कुम्भीभ्योऽवदाय जुहुयात्, हुतशेषेण च स्विष्टकृदादिकं सान्नाय्यशेषेणेव कर्तव्यमिति प्राप्ते ब्रूमः। नात्र कुम्भीषु हुतशेषः सिध्यति सान्नाय्यवत् जुह्वा तदवदा-नाभावात्। अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्राम-न्नित्युक्तत्वात् जुहूपभृतोः प्रत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते न हुतहविःशेषः, तत्र कुतः शेषकार्यं॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥ ०॥

---

नासोमयाजी सन्नयेदनागतं वा एतस्य पयो यो
ऽसोमयाजी यदसोमयाजी सन्नयेत् परिमोष एव सो
ऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सन्नयेत्
पयो वै सोमः पयः सान्नाय्यं पयसैव पय आत्मन्धत्ते
वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं
यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमाः॥ १॥

अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति न द्वे ॥ २ ॥

यजेत यत्पूर्वया सम्प्रति यजेतोत्तरया छम्बट्कुर्याद्यदुत्तरया सम्प्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयावरुन्ध इन्द्रियमुत्तरया देवलोकमेव ॥ ३ ॥

पूर्वयाभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति दाक्षायणयज्ञेन सुवर्गकामो यजेत पूर्णमासे सं नयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेत पूर्णमासे वै देवानाꣳ सुतस्तेषामेतमर्धमासं प्रसुतस्तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् ॥ ४ ॥

पूर्वेद्युर्यजते वेदिमेव तत् करोति यद् वत्सानपाकरोति सदोहविर्धाने एव सम्मिनोति यद्यजते देवैरेव सुत्याꣳ सम्पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति यन्मैत्रावरुण्यामिक्षयामावास्यायां यजते यैवासौ देवानां वशानूबन्ध्या सो एवैषैतस्य साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञं ॥ ५ ॥

अभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सहङ् व्याहृत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक् पुण्यो वा भवति प्र वा मीयते तस्यैतद्व्रतं नानृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति ॥ ६ ॥

चन्द्रमा ह देवलोकमेव यद्यज्ञं पल्पूलयेयुः षट् च ॥ ५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

द्विधा चतुर्थे पुंभेदात् प्रोक्ता सान्नाय्यदेवता।

अथ पञ्चमेऽभ्युदयेष्ट्यादयो वक्तव्यास्तत्र तावत् सान्नाय्याधिकारिणं विविनक्ति "नासोमयाजी सन्नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी सन्नयेत् परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सन्नयेत् पयो वै सोमः पयः सान्नाय्यं पयसैव पय आत्मन्धत्ते" इति। सोमयागात् पुरा दर्शयाजी सान्नाय्यं नानुतिष्ठेत्। असोमयाजिनः पयोऽनागतमप्राप्तं। सोमस्यौषधिरसत्वेन तदभावे तत्प्रोषधिरसविशेषस्य पयसः सुतरामभावात्। एवं सति यद्यसोमयाजी सन्नयेत् तर्ह्यसौ परिमोष एव तस्कर एव सन्ननृतं अन्याय्यं करोति। अपि च वह्नौ सिच्यमानं तत्सान्नाय्यमन्याय्यत्वात् परैव सिच्यते विनाश्यत एव। तस्मात् सोमयाज्येव सन्नयेत्। न चास्येतरवत् पयोऽनागतं, सोमस्यौषधिरसत्वेन पयोरूपत्वात्। सान्नाय्यमपि तथाविधं। अतः सोमयाजी सोमरूपेण पयसा सह सान्नाय्यरूपं पय आत्मनि धारयति। अथाभ्युदयेष्टिं विधत्ते "वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधᳪंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति यज्ञो वै विष्णुः पशवः

ग्निपिर्यंश्च एव पशुषु प्रतितिष्ठति" इति। चतुर्दश्याममावा-
स्येयमिति भ्रान्त्या सन्दिहानो रात्रावेव हवींषि निर्वपेत्।
तथा च श्रुत्यन्तरमाम्नायते 'यदि बिभीयादभि मोदेष्यतीति
महारात्रे हवींषि निर्वपेत् फलीकृतैस्तण्डुलैरुपासीतार्धं दधि
हविरातञ्चनस्य निदध्यात्, अर्धं न। यद्युदियात् तेनातञ्च्य
प्रचरेद्यदि नाभ्युदियात्तेन ब्राह्मणान् भोजयेत्' इति।
अयमर्थः। यदि चतुर्दश्यां प्रातरग्निहोत्रादूर्ध्वं अमावास्या-
भ्रान्त्या वत्सानपाकृत्य सायं दुग्ध्वा दध्यर्थमातञ्चनं वि-
धाय पश्चात् तिथौ सन्दिहानो मां प्रति चन्द्रोऽभ्यु-
देष्यतीति भीतो भवेत् तदा रात्रिमध्ये हवींषि निरुप्य
फलीकरणान्तं विधाय तादृशैस्तण्डुलैर्युक्तश्चन्द्रोदयं प्रतीक्षेत।
तत्पूर्वातञ्चनेन निष्पन्नस्य दध्नोऽर्धमुत्तरस्यां रात्रौ पुन-
रातञ्चनार्थमवस्थापयेत्, इतरत्त्वर्धं न पृथगवस्थापयेत्, किन्तु
तण्डुलैः सह पुरतोऽवस्थाप्य चन्द्रोदयं प्रतीक्षेत। यदि चन्द्रो
ऽभ्युदियात् तदानीं पृथगवस्थापितेनार्धेन परेद्युर्मुख्यामावा-
स्यायां रात्रौ सायं दोहमातञ्च्य निष्पन्नेन दध्ना प्रतिपदि
प्रातः प्रचरेत्। यदि तु न चन्द्रोऽभ्युदियात् तदा तण्डुलैर्द-
ध्यर्धेन च दर्शकर्म निष्पाद्य पृथगवस्थापितार्धान्तरेण ब्राह्म-
णान् भोजयेदिति। एवं स्थिते सति यस्य यजमानस्य रात्रा-
वेव फलीकृततण्डुलपर्यन्तं हविर्निरुप्तं सम्पादितं भवति
ततः प्रतीक्ष्यमाणश्चन्द्रमाः पूर्वस्यां दिशि अभ्युदेति, चन्द्रः एतं
यजमानं प्रजया पशुभिश्च व्यर्धयत्येवास्य भ्रातृव्यश्च वर्धयति।

अभ्युदयं निमित्तीकृत्य एतत्तण्डुलान्मध्यमस्थविष्ठाणिष्ठरूपै-स्त्रेधा भिन्नांस्तान् पूर्वदेवताभ्यो विभजेत्, विभज्य च दात्रा-दिगुणकाम्यादिदेवताभ्यो हविः कुर्यात्। यदुक्तं सूत्रकारेण 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामित्यु-क्ताह एकामेव यजेत' इति। अस्यायमर्थः। पौर्णमास्या-मन्वाधाय प्रतिपदि पौर्णमासयागं कृत्वा तदानीमेवान्वाधाय द्वितीयायां पुनः पौर्णमासयागं कुर्यात्। एवममावास्याया-मपि। सेयमृद्धिकामस्येष्टिः सुमना इत्यभिधीयते। तामेतां सुमनसमिष्टिं पूर्वोत्तरपक्षाभ्यां विचार्य विधातुमादौ पूर्वपक्षो सिद्धान्तं निराकृत्य स्वपक्षं विधत्ते "न द्वे यजेत यत् पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते" इति। सिद्धान्तिना यदुच्यते द्वे यजेतेति तन्न युक्तं। यदि तत्र पूर्वया पौर्णमास्या संप्रतियजेत सम्यगनुतिष्ठेत् तदानीमुत्तरया छम्बट्कुर्यात्। यदुत्तरा सम्यगनुष्ठिता तदा पूर्वैवैयर्थ्यं, तथा सति द्विरनु-ष्ठिता सेयमिष्टिरित्यपि वक्तुं न शक्यते, इष्टावधिकावृत्तेरवि-हितत्वात्। नाप्यग्निष्टोमादियज्ञवत् इति वक्तुं शक्यते, अधिक-प्रयोगे सत्यपि प्रातःसवनादीनामभावात्। अत उभयभ्रष्टत्वात् तदनुष्ठाता यजमानः सभार्यो ह्रीतमुखो भवति, तैः पृष्टः सन्नुत्तरं वक्तुं न प्रगल्भो भवेत्। तस्मात् ऋद्धिकामो आवृत्तिं परित्यज्य एकामेव पौर्णमासीममावास्यां च यजेत तथा सत्यस्य

यजमानस्य पुत्रोऽपि सभार्यो प्रगल्भो जायते किमु 'वक्तव्य-मथमिति। तमिमं पूर्वपक्षं निराकृत्य सिद्धान्तं विधत्ते "अनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयावरुन्ध इन्द्रियमुत्तरया देवलोक-मेव पूर्वयाभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतू-नुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्य-स्मिन्नेवास्मै लोकेऽर्धुकं भवति" इति। एकामेवेति यदुक्तं तदनादृत्य द्वे एव यजेत, तत्र पूर्वयेष्ट्या सम्यगनुष्ठितया यज्ञ-मुखरूपयज्ञोपक्रमस्यालम्भनं देवतावरोधो देवलोकजयश्चेति प्रयोजनत्रयं सम्पद्यते। उत्तरया सम्यगनुष्ठितया प्रकृतयज्ञसम्पू-र्तिरिन्द्रियावरोधो मनुष्यलोकजयश्चेति सम्पद्यन्ते त्रीणि प्रयो-जनानि। अतो नैकस्या अपि वैयर्थ्यं, नापीष्टियज्ञत्वयोरभावः, प्रत्येकमिष्टित्वेऽपि समूहितस्य प्रौढयज्ञत्वात्, अत एतदनुष्ठानेन भूयसो बहून् एकाहीनसत्ररूपान् यज्ञक्रतूनुपैति। कि-ञ्चास्य द्वितीयायामिष्टवन्तं यजमानमभिलक्ष्य पश्चाच्चन्द्रमा अभ्युदेति तस्येयमिष्टिर्नाम्ना सुमना इत्युच्यते। वर्धिष्णु-चन्द्रोदयस्य सौमनस्यहेतुत्वात्। ततोऽस्मिन्नेव लोके तस्य समृद्धिर्धनं भवति। यथेयं सुमना नामेष्टिर्दर्शपूर्णमासयोर्गुण-विकृतिस्तथैवान्यां गुणविकृतिं विधत्ते "दाक्षायणयज्ञेन सुवर्ग-कामो यजेत" इति। एतस्य यज्ञस्य स्वरूपं सूत्रकारेण स्पष्टी-कृतं 'दाक्षायणयज्ञेन सुवर्गकामो द्वे पौर्णमास्यौ द्वे अमा-वास्ये यजेताग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्व-

स्यां पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्यामाग्नेयो ऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुणामिक्षा द्वितीयोत्तरस्यां' इति। तत्रोत्तरस्यां पौर्णमास्यामुत्तरस्याममावास्यायाञ्चैकैकं विधत्ते "पूर्णमासे सन्नयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेत" इति। तत्रैन्द्रं दधिरूपं यदुत्तरस्मिन् पौर्णमासे सान्नाय्यं तत् प्रशंसति "पूर्णमासे वै देवानाꣳ सुतस्तेषामेतमर्धमासं प्रसुतः" इति। यदैन्द्रं दध्यनुष्ठितं तेन पौर्णमास एव देवानां सोमो ऽभिषुतो भवति। पयो वै सोमः पयः सान्नाय्यमित्युक्तत्वात्। तेषां देवानां पौर्णमासीमारभ्यामावास्यापर्यन्तमर्धमासं नैरन्तर्येण सोमः प्रकर्षेण सुतो भवति। प्रतिदिनमनुष्ठिताभिः सोमविकृतिभिर्या प्रीतिः सा तेन सान्नाय्येन सम्पद्यत इत्यर्थः। अथोत्तरस्याममावास्यायां विहितामामिक्षां प्रशंसति "तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् पूर्वेद्युर्यजते वेदिमेव तत् करोति यद्वत्सानपाकरोति सदोहविर्धाने एव सम्मिनोति यद्यजते देवैरेव सुत्याꣳ सम्पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति यन्मैत्रावरुण्यामिक्षयामावास्यायां यजते यैवासौ देवानां वशानूबन्ध्या सो एवैषैतस्य" इति। येयममावास्यायामनुष्ठिता मैत्रावरुण्यामिक्षा सा तेषां देवानां वशानूबन्ध्या सम्पद्यते। तत्कथमिति तदुच्यते। पूर्वेद्युः शुक्लप्रतिपदि यजत इति यत् तेन सौमिकीं वेदिमेव कृतवान् भवति तस्मिन्नेव दिने पुनरेव वत्सानपाकरोतीति यत् तेन सदो

हविर्धाने द्वौ यागमण्डपौ सम्पादितवान् भवति। द्वितीयायां प्रातराग्नेयेनाष्टाकपालेन यजत इति यत् तेन देवैरिष्यमाणां सुत्यामेव सम्पादितवान् भवति। स तादृशो यजमान एतमर्धमासं शुक्लपक्षं नैरन्तर्येण देवैः सधमादं सहपीतं सोमं पीतवान् भवति। तस्मादाग्नेयादूर्ध्वं तस्मिन् द्वितीयामावास्याकर्मणि मैत्रावरुण्याऽऽमिक्षया यजत इति यत् सोम एवामिक्षा यजमानस्य वशा सम्पद्यते। कासौ वशेति तदुच्यते। सोमयागावसाने देवानामर्थं एव या वशानूबन्ध्या क्रियते सैवेयमामिक्षेत्यर्थः। दाक्षायणयज्ञानुष्ठानं प्रशंसति "साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञमभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति" इति। यो यजमान एषां विधिवाक्योक्तानामग्न्यादीनां देवानां यज्ञमभ्यारोहति सम्यगनुतिष्ठति एष साक्षादेव तानग्न्यादिदेवानभ्यारोहति प्राप्नोति, बहुकालं व्यवधानमन्तरेणैव देवसदृशं भोगं प्राप्नोतीत्यर्थः। प्राप्य च यथा लोके श्रेयान् राजामात्यादिरुत्तमं पदमभ्यारूढः स्वकीयभृत्यानामग्रे ममेदं भोगसाधनमानयेति पुनः पुनः कामयते तथायं यजमानः आवृत्तयाजी पुनः पुनः फलसम्पादनं करोति। पूर्वं स्वर्गकामस्यायं यज्ञ उक्तः इदानीं व्यावृत्कामस्य स एवोच्यते "यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सदृङ् व्यावृत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक् पुण्यो वा भवति प्र वा मीयते" इति। अन्येषु यज्ञेषु यद्यवविध्यति कि-

च्छिद्वैकल्यं करोति तदानीं पापीयान् भवति अन्ययजमाना-पेक्षया अतिनिकृष्टो भवति। यदि नावविध्यति वैकल्यं न करोति तदानीमन्यैः सदृक् समान एव भवति, न तु तेभ्य आधिक्यलक्षणा व्यावृत्तिः सिध्यति। अतो व्यावृत्काम एतेन दाक्षायणयज्ञेन यजेत। यस्मादेष यज्ञः क्षुरवद्धवत्वाति-तीक्ष्णस्तस्मादेतदनुष्ठायी ताजक्पुण्यो वा भवति तदानीमेवेत-रेभ्यो व्यावृत्त एव भवति। एतद्विरोधी ताजक् प्रमीयत एव। अथ वा यजमान एव सम्यगनुष्ठानादुत्तमो भवति वैकल्यात् प्रमीयते वा। अतो वैकल्यपरिहाराय व्रतविशेषान् विधत्ते "तस्यैतद्व्रतं नानृतं वदेन्न मांसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति" इति। पल्पूलनं वस्त्रशुद्धिसाधनं *ऊषादि, तेनास्य वासो न शोध-येयुः। यस्माद्देवाः पूज्या एतत् सर्वमनृतवदनादिकं न कुर्वन्ति तस्मादयमपि न कुर्यात्। अस्य दाक्षायणयज्ञस्याधानादूर्द्ध्वं दर्शपूर्णमासाभ्यां सह विकल्पो द्रष्टव्यः। तथा च सूत्रकार आह †दर्शपूर्णमासयोः प्रक्रमे विकल्पते 'एतेन दर्शपूर्णमा-साभ्यां वा यजते, न पञ्चदशवर्षाणीष्ट्वा वा विरमेत् यजेत वा संतिष्ठते दाक्षायणयज्ञः' इति॥

अथ मीमांसा। षष्ठाध्यायस्य पञ्चमपादे चिन्तितं।

इष्टिरभ्युदये दर्शात् कर्मान्यदुत देवताः।

---

* मदकादीति का०।     † "सोऽयं दर्शपूर्णमासयोः प्रक्रमोऽनेन दर्शपूर्णमासाभ्यां यजेत तेन पञ्चवर्षाण्योष्ट्वा विरमेद्यजेत वा" इति तै०।

पूर्वाख्याज्ञा विशिष्टस्य विधानादन्यकर्म तत् ॥

प्रकृतप्रत्यभिज्ञानाच्च कर्मान्तरचोदना।

देवताः प्राकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते ॥

दर्शपूर्णमासयोः श्रूयते 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं' इति। अयमर्थः, दर्शभ्रान्त्या केनचिच्चतुर्दश्यां हविर्निरुप्तं भवति ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तदा निरुप्तास्तण्डुलास्त्रेधा विभक्तव्याः। अखण्डिता ईषत्खण्डिता अतिसूक्ष्मकणाश्चेति त्रैविध्यं। ते च त्रिविधा दात्रादिगुणविशिष्टेभ्योऽग्न्यादिभ्यो देवेभ्य इति। तच्चेदं प्रक्रान्तदर्शकर्मणोऽन्यत् कर्म। कुतः कालापराधप्रायश्चित्तार्थं द्रव्यदेवताविशिष्टस्य कर्मणो विधीयमानत्वात्। तत इदं प्रायश्चित्तं कृत्वा परेद्युरनुष्ठेयमिति प्राप्ते ब्रूमः। हविर्निरुप्तमिति प्रकृतं यद्दर्शकर्म तत् परित्यज्य कर्मान्तरविधिकल्पने प्रकृतहानाप्रकृतागमौ प्रसज्येयातां। अतस्तस्मिन्नेव प्रकृते कर्मणि निरुप्तस्य हविषः पूर्वदेवताभ्यो दर्शसम्बन्धिनीभ्योऽपनयोऽत्राभिधीयते। तण्डुलोपलक्षितं यद्धविर्दधिरूपं व्रीहिरूपञ्च पूर्वेद्युर्निरुप्तं तद्धविः पूर्वदेवतात्मनोऽग्नेरिन्द्राच्च विभजेदिति देवताहविषोः परस्परविभागोऽत्र विधीयते। न तु तण्डुलानां स्थविष्ठमध्यमाणिष्ठरूपत्रिविधो विभागो विधीयते, तस्य प्राप्तत्वात्। ये मध्यमाः

ष्युरिति विनियोगभेदादर्थप्राप्तेः स त्रिभागः। ततः पूर्वदेवतात्यक्त्वा दातृत्वादिगुणयुक्ताभ्यो वज्र्यादिदेवताभ्यः पूर्वं निरुप्तं हविः प्रदातव्यं। ननु प्रतिपदि प्रातर्निर्वापकालो न तु दर्शे तथा सति दर्शभ्रान्त्यापि चतुर्दश्यां निर्वापाभावात् निर्वापादूर्द्ध्वं चन्द्रोदयो न प्राप्नोति। नैष दोषः। दभ्रो ह्रस्वकालीनत्वेनार्थसिद्धेः पूर्वेद्युर्दोहातञ्चने तदभिप्रायेण निरुप्तमित्युच्यते। यद्वा व्रीहिनिर्वापोऽपि पूर्वेद्युर्विकल्पितः। तथा च श्रूयते 'यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत्' इति। अयमर्थः, भ्रान्त्या प्रमादेन वा दर्शोऽयमित्यभिनिश्चितवतो मां प्रति चन्द्रोऽभ्युदेष्यतीति भीतिरस्ति तदा तस्मिन्नेव दिने महारात्रे सर्वाणि निर्वपेदिति। अतो निरुप्तस्यैव हविषोऽस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेद उपदिश्यते। ततो दर्शस्यैवायं नैमित्तिकः प्रयोगो न तु दर्शलोपप्रायश्चित्तमिति, नैमित्तिकं दर्शप्रयोगमनुष्ठाय पश्चात् स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठातव्यः।

तत्रैवान्यच्चिन्तितं।

> ऊर्द्ध्वं चन्द्रोदये चेष्टिर्निर्वापात् पूर्वमप्युत।
>
> उक्तेराद्योऽन्तिमः पक्षो निरुप्तेत्यविवक्षया॥ *

सा पूर्वोक्ताऽभ्युदयेष्टिर्हविर्निर्वापादूर्द्ध्वं चन्द्रोदये सति कर्तव्या। निरुप्तं हविरभ्युदेतीत्युक्तत्वात् इति चेत्। नैवं, हविरभ्युदयस्य निमित्तत्वेन तद्विशेषणस्य निर्वापस्याविवक्षितत्वात्। अन्यथा वाक्यभेदापत्तेः। यस्य हविरभ्युदेति तच्च हविर्निरुप्तमित्येवं वाक्य-

भेदः, तस्मान्निर्वापात् प्रागपि चन्द्रोदये सत्यविहितकाले कर्मोपक्रममात्रेणेयमिष्टिः कर्तव्या।

तत्रैवान्यच्चिन्तितं।

> प्राक् प्राकृताभ्यो निर्वापो वैकृतीभ्योऽथ वादिमः।
> तण्डुलोक्तेर्वैकृतीभ्यो हविर्मात्रोपलक्षणात्॥

निर्वापात् प्राग्यदा चन्द्रोदयस्तदा चन्द्रोदयादूर्द्धं क्रियमाणो निर्वापः प्राकृतीभ्यो देवताभ्यो युक्तः। कुतः तण्डुलान् विभजेदिति वाक्येन तण्डुलीभावादूर्द्धं प्राकृतदेवतापनयनश्रवणात्, निर्वापस्तु व्रीहीणामेवेति। तस्मिन् काले प्रकृताग्न्यादिदेवता नापनीता इति प्राप्ते ब्रूमः। वैकृतीभ्यो दातृत्वादिगुणयुक्ताभ्यो निर्वापः कर्त्तव्यः। कुतः,तण्डुलशब्देन हविर्मात्रस्योपलक्षणात्, अन्यथा दधिपयसोरतण्डुलत्वेन देवतापनयो न स्यात्। हविर्मात्रविवक्षायान्तु व्रीहीणामपि हविष्ट्वेन प्राकृतदेवतासम्बन्धमपनीय देवतान्तरसम्बन्धस्य कर्तुं युक्तत्वात् वैकृतीभ्यो निर्वपेत्।

तत्रैवान्यच्चिन्तितं।

> प्राकृतीभ्योऽन्यनिर्वापेऽभ्युदये शिष्टतण्डुलान्।
> प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह॥
> प्राकृतीभ्यः प्रवृत्तत्वात् वैकृतीभ्यो निमित्ततः।
> शिष्टांशस्यापदार्थत्वादसंयोगादिहान्तिमः॥

यदा प्राकृतीभ्यो मुष्टिमात्रे निरुप्ते सति चन्द्रोऽभ्युदेति तदा मुष्टित्रयरूपोऽवशिष्टांशः प्राकृतीभ्य एव निर्वप्तव्यः। कुतः,

प्राकृतानां प्रवृत्तत्वात् इत्येकः पक्षः। चन्द्रोदये निमित्ते सति नैमित्तिकस्य पूर्वदेवतापनयस्यावश्यम्भावात् वैकृतीभ्योऽवशि-ष्टांशनिर्वाप इति द्वितीयः पक्षः। अस्तु प्राकृतदेवतापनयो निमित्ताधीनः, अन्यदेवतासंयोगस्त्वंशस्य न सम्भवति। अन्यास्तु देवताः प्राकृतदेवतास्थाने निवेशनीयाः। प्राकृतानान्तु निर्वाप-पदार्थसम्बन्धः क्लृप्तो न पदार्थांशेन, ततस्तत्स्थानपतितानां वैकृतीनाञ्च नांशसंयोगो युक्त इत्यस्यांशस्य प्राकृतीभ्योऽपनीत-त्वाद्वैकृतीभिरसंयोगाच्च तूष्णीमेव निर्वाप इति राद्धान्तः।

तत्रैवान्यच्चिन्तितं।

सेष्टिः सान्नायिनो वा स्यादन्यस्यापि दधिश्रुतेः।
नान्यस्येत्यग्निमोऽन्यः स्याद्देवमात्रविधानतः॥

न हि सान्नाय्यरहितस्य दधिपयसी विद्येते तदभावे च दधन्ँश्चरुं शृते चरुमिति विधिर्न सङ्गच्छते, तस्मात् सान्ना-यिन एव सा पूर्वोक्ताभ्युदयेष्टिरिति चेत्। मैवं, अप्राप्ता देवता एवात्र विधीयन्ते दधिपयसोरपि विधाने वाक्यं भिद्येत, ततः तण्डुलवत् प्राप्तयोर्दधिशृतयोरनूद्यमानतया विध्यभावात्, उदके चरुश्रपणसम्भवाच्च, सान्नायिवदन्यस्यापि सेष्टिरस्ति।

नवमाध्यायस्य द्वितीयपादे चिन्तितं।

शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा न हि।
अपाकार्थत्वतः सन्ति पाकहेतुत्वसाम्यतः॥

अभ्युदयेष्ट्यां श्रूयते 'शृते चरुं दधनि चरुं' इति शृत-दधिनी आम्नायेते। तयोः प्रणीता धर्मा न कर्तव्याः। हविः-

अपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः प्रणीता उच्यन्ते, दधिपयसी तु अपणार्थं नोत्पन्ने, किन्तु हविष्ट्वेन प्रदानार्थमुत्पन्ने, ततः साम्याभावात् न उत्पवनादयो धर्मास्तयोरिति चेत्। नैवं, अन्यार्थमुत्पन्नयोरपि दधिपयसोरत्र चन्द्रोदयं निमित्तीकृत्य चरुश्रपणहेतुत्वं वाचनिकं। ततः समानत्वात् तद्धर्माः सन्ति।

*द्वितीयाध्यायस्य तृतीयपादे चिन्तितं।

यद्दाक्षायणयज्ञेन स्वर्गकामो यजेत तत्।
कर्मान्तरं गुणो वाऽऽद्यदर्शादौ फलसिद्धये॥
गुणस्यास्य प्रसिद्धत्वात् कर्मभेदोऽत्र सञ्ज्ञया।
गुणे व्युत्पत्तिशेषाभ्यामावृत्त्या स्यान्न नाम तत्॥

दर्शपूर्णमासप्रकरणे श्रूयते 'दाक्षायणयज्ञेन सुवर्गकामो यजेत' इति। तत्र दाक्षायणशब्दवाच्यस्य कस्यचिल्लोके प्रसिद्ध्यभावात्। उद्भिदादिवत् यजिसामानाधिकरण्येन कर्मनामत्वात्। 'अथैष ज्योतिः' इत्यादिवत् अपूर्वसञ्ज्ञया कर्मान्तरविधिरिति चेत्। न, दाक्षायणशब्दस्यावृत्तिवाचकत्वात्। तच्च शब्दनिर्वचनाद्वाक्यशेषाच्चावगम्यते। तथा हि अयनमित्यावृत्तिरुच्यते, दक्षस्यैते दाक्षास्तेषामयनमिति तन्निर्वचनं। दक्ष उत्साही, पुनः पुनरावृत्तावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः। तया चावृत्त्या युक्तः प्रकृतौ दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः। आवृत्तिप्रकारस्तु 'द्वे पौर्णमास्यौ द्वे अमावास्ये' इत्यादिवाक्यशेषादवगम्यते, ततो दध्यादि-

* जैमिनीयन्यायमालाविस्तरपुस्तके नास्ति।

वत्प्रसिद्धत्वात् दर्शपूर्णमासयोः प्रकृतयोः अयं स्वर्गफलसिद्ध्यर्थं आवृत्त्याख्यस्य गुणस्य विधिः न तूद्भिदादिवत्कर्मनामधेयं। एवं साकम्प्रस्थायीयेन यजेत पशुकाम इत्यत्रापि द्रष्टव्यं। अमावास्यायागे द्वौ द्वौ दोहौ सम्पाद्य चतसृणां दधिपयसोः कुम्भीनां सह प्रस्थापनं साकम्प्रस्थायः तद्युक्तो यागः साकंप्रस्थायीयः। तथा सति प्रकृते दर्शयागे पशुफलाय साकम्प्रस्थायाख्यो गुणो विधीयते।

*तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

अनृतं न वदेदेष पुंधर्मो वानुवादगीः।
स क्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ॥
अनृतोक्तेः पुमर्थत्वात् तन्निषेधे तथा विधिः।
स्मार्तानुवादः पुंक्रत्वोः श्रुतिप्रक्रिययोर्वशात्॥
नाख्याते पुरुषानूक्तिः क्रतावेव प्रयाजवत्।
स्मार्तोक्तनियमादन्यः संयोगेऽतः क्रतौ विधिः॥

दर्शपूर्णमासप्रकरणे श्रूयते 'नानृतं वदेत्' इति। तत्र पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते। कुतः, प्रतियोगिनोऽनृतवदनस्य पुंधर्मतया तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात्। वदेदित्येतदाख्यातं तावत् कर्तृवाचकं, तेन आख्यातेन कर्तुः प्रतीयमानत्वात्, पुरुषस्याख्यातप्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तं। †अन्यथा भिन्नविषयत्वेन बाधकत्वं न

* एतदप्यधिकरणं मातापुस्तके नास्ति।

† प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येनेति शाब्दिकैरनुस्मरणात् वदनस्य पुरुषधर्मत्वे तन्निषेधस्यापि पुरुषधर्मत्वं युक्तमित्यतिरिक्तपाठः तै० वर्तते।

स्यात्। तस्मात् पुरुषवाचकाख्यातश्रुत्या प्रकरणं बाधित्वा पुरुषार्थोऽयं निषेधो विधीयते। अस्यैव स्मार्तः प्रतिषेध इति चेत्। तर्हि तस्यैतत् श्रुतिवाक्यं मूलमस्तु, तस्मात् पुरुषार्थ इत्येकः पूर्वः पक्षः। आख्यातभिन्नविषयत्वेन बाधकत्वं न स्यात्, आख्यातश्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुषधर्मोऽस्तु। न ह्येतद्वाक्यं *श्रुतेर्मूलं, भिन्नविषयत्वात्, स्मृतिस्त्वोपनयनमारभ्यामरणं पुरुषस्यानृतं प्रतिषेधति, तन्मध्यपातित्वात् क्रतावपि स्मार्तो निषेधः प्राप्त एव, तदुभयार्थोऽप्ययं प्रतिषेधो न विधीयते किन्तु अनूद्यत इति द्वितीयः पूर्वः पक्षः। आख्यातेन भावनाऽभिधीयते कर्ता तु तदविनाभूतोऽर्थात् प्रतीयते, अतः श्रुत्यभावात् केवलेन प्रकरणेन प्रयाजादिवदारादुपकारकः क्रतावेव निविशते न च तत्रापि विधीयते किन्तु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वात् अनूद्यत एवेति तृतीयः पूर्वः पक्षः। सत्यमेव वदेन्नानृतमिति योऽयं स्मार्तनियमरूपः पुरुषार्थसंयोगः तस्मादन्यः क्रत्वर्थसंयोगः, अतोऽप्राप्तत्वाद्विधीयते। एतद्विध्यतिक्रमे क्रतोरेव वैगुण्यं न तु पुरुषस्य प्रत्यवायः। अतोऽत्र क्रतुगामि प्रायश्चित्तं। पुरुषार्थनियमातिक्रमे तु तत्पुरुषस्यैव प्रत्यवायः न तु क्रतोर्वैगुण्यं, तत्र स्मार्तप्रायश्चित्तमिति विशेषः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

* स्मृतेर्मूलमिति भवितुं युक्तं।

एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यत्येतानि वा अङ्गापरूꣳषि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजतेऽङ्गापरूꣳष्येव संवत्सरस्य प्रतिदधात्येते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनुपश्यति ॥ १ ॥

एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनुविक्रमत एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहत्येतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्यां ॥ २ ॥

एवैभ्यो हव्यं वहत्येतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोत्येष वै हविर्धानी यो दर्शपूर्णमासयाजी सायम्प्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनाꣳ सुतो य एवं विद्वान् दर्श-

पूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति देवा वा अहः ॥ ३ ॥

यज्ञियं नाविन्दन् ते दर्शपूर्णमासावपुनन् तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान् दर्श-पूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते नामा-वास्यायाञ्च पौर्णमास्याञ्च स्त्रियमुपेयाद्यदुपेयान्नि-रिन्द्रियः स्यात् सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् तासाममावास्याञ्च पौर्णमासीञ्च नो-पैत् ॥ ४ ॥

ते एनमभिसमनह्येतां तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयान-भवत् तत् पापयक्ष्मस्य यज्जायाभ्यामविन्दत् तज्जाये-न्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एते एव नमस्यन्नुपाधावत् ते अब्रूतां वरं वृणावहा आवं देवानां भागधे असाव ॥ ५ ॥

आवदधि देवा इज्यान्ता इति तस्मात् सदृशीनाꣳ रात्रीणाममावास्यायाञ्च पौर्णमास्याञ्च देवा इज्यन्ते एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवं वेद भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे

देवा मासि पितरः संवत्सरे वनस्पतयस्तस्मादहरह-र्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृव्यं ॥ ६ ॥

पश्यति ताभ्यामहरैदसाव फलं सप्त च ॥ ६ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

पञ्चमेऽभ्युदयेष्ट्याद्यास्तिस्र इष्टय ईरिताः।

अथ षष्ठे दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यं विधीयते "एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यति" इति। दर्शपूर्णमासाविति यदस्ति एष एव देवानां रथः रथसदृशः, तथा सति प्रथमतो दर्शपूर्णमासाविष्ट्वा पश्चात् सोमेन यो यजते तस्यानुष्ठाने महत्सौकर्यं भवति। यथा लोके भूयो रथसञ्चरणेन महामार्गस्थकण्टकपाषाणादिषु क्षुण्णेषु मार्गो विस्पष्टो भवति, अयमस्य ग्रामस्य मार्ग इति सुखेनाध्यवसातुं शक्यते कण्टकाद्यभावात्, वरः श्रेष्ठश्चासौ भवति

तादृशे मार्गे मनुष्या अनायासेन गन्तुं शक्नुवन्ति, तथा देवानां सम्बन्धिना दर्शपूर्णमासरथेन स्पष्टे सुखेनाध्वगमन्तुं शक्यते, श्रेष्ठे मार्गे यजमानः सोमेन यष्टुमध्यवस्यति दर्शपूर्णमासयो-रिष्टिप्रकृतित्वात्, तयोः प्रयोगे स्वाधीने सति तद्विकृतिभूताः सोमाङ्गभूताः प्रायणीयाद्याः साङ्गाः सुखेनानुष्ठातुं शक्यन्ते, अननुष्ठितयोस्तु दर्शपूर्णमासयोः सोमप्रकरणे दीक्षणीयादि-कर्मस्वरूपमात्रस्योपदिष्टत्वात् तदङ्गानि प्रयाजादीन्यनुष्ठातुं न शक्यन्ते तस्मादिष्टिपूर्वत्वं दर्शपूर्णमासयोर्बहुधा प्रशस्यते। तत्र प्रथमं संवत्सरावयवत्वेन प्रशंसति "एतानि वा अङ्गापरूꣳषि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते-ऽङ्गापरूꣳष्येव संवत्सरस्य प्रतिदधाति" इति। यथा मनुष्यस्य हस्तपादादीन्यङ्गानि मणिबन्धकूर्परकक्षादिसन्धिरूपाणि प-रूꣳषि पर्वाणि, तथा संवत्सरस्य द्वादश दर्शा अङ्गानि द्वादश पौर्णमास्यः परूꣳषि, तद्विदित्वाऽनुष्ठाने तदुभयं प्रतिदधाति सम्यगनुष्ठापयति। अथ चक्षुष्ट्वेन प्रशंसति "एते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनुपश्यति" इति। अथेन्द्रपराक्रमरूपेण प्रशंसति "एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनुविक्रमते" इति। सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति शाखान्तरे श्रुतत्वात् युद्धजयहेतुत्वमप्यस्तीति पराक्रमरूपत्वं। अथ *स्वर्गमार्गत्वेन

* स्वर्गत्वेनेति का०।

प्रशंसति "एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहति" इति। देवा यान्ति गच्छन्ति अस्मिन् मार्गे सोऽयं देवयानः। अथाश्वरूपेण प्रशंसति "एतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्यामेवैभ्यो हव्यं वहति" इति। एभ्योऽग्न्यादिदेवेभ्यः, ताभ्यामेव दर्शपूर्णमासाभ्यां यजमानः पुरोडाशं वहति। अथ देवमुखत्वेन प्रशंसति "एतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोति" इति। साक्षाद्व्यवधानमन्तरेणैव यथा ब्राह्मणाय दत्तमन्नं पात्रहस्तव्यवधानेन मुखं प्रविशति तद्वदित्यर्थः। अथ सोमयाजित्वसम्पादनेन प्रशंसति "एष वै हविर्धानी यो दर्शपूर्णमासयाजी सायम्प्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनाꣳ सुतो य एवं विद्वान् दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति" इति। हवींषि सोमग्रहरूपाणि धीयन्ते आसाद्यन्ते यस्मिन्मण्डपे तदिदं हविर्धानं तदस्यास्तीति हविर्धानी सोमयाजी। दर्शपूर्णमासयाजिनः सोमयाजित्वं कथमित्युच्यते। आधानानन्तरमेव प्रवृत्तं यदग्निहोत्रं तत् प्रतिदिनं सायम्प्रातरनुतिष्ठति पर्वणि पर्वणि च दर्शपूर्णमासौ यजते। तदुभयानुष्ठानेन हविर्धानिनां सोमदेवानां प्रतिदिनं सोमोऽभिषुतो भवति। सोमाभिषवणे या प्रीतिः सा देवाना-

मत्र सम्पद्यते। अग्निहोत्रदर्शपूर्णमासप्रवृत्तौ तदनन्तरभाविनि सोमयागेऽपि प्रवर्तिष्यत इत्येव तैर्निश्चेतुं शक्यत्वात्। तत्प्रवृत्तिक्रमस्य सूत्रकारेण दर्शितः 'अथैकेषामग्नीनाधाय हस्तावनिज्य संवत्सरमग्निहोत्रं हुत्वा दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजेत तत ऊर्द्धमन्यानि कर्माणि कुरुते' इति। यो यजमान एवं देवानां भविष्यत्सोमयागविषयां प्रीतिं विद्वान् अहं हविर्धानी सोमयाजी भवामीति बुद्धा दर्शपूर्णमासौ यजते तत ऊर्द्धं अस्य यजमानस्य बर्हिषि सोमयागे दातव्यं यद्यद्दियते तत्सर्वं बर्हिष्यं दत्तं भवति। स्वल्पेऽपि कर्मण्यधिककर्मसम्पादनवेदनेन फलाधिक्यप्राप्तिः पूर्वकाण्डे प्रजापतिर्यज्ञानसृजतेत्यनुवाके प्रपञ्चिता। अथ दर्शपूर्णमासकर्मणोस्तिथिविषयविधिमर्थवादेनोन्नयति "देवा वा अहर्यज्ञियं नाविन्दन् ते दर्शपूर्णमासावपुनन् तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते" इति। एतौ दर्शपूर्णमासौ यष्टुमर्हतीति यज्ञियं, तादृशमेकमप्यहः देवा नाविन्दन् न लेभिरे। ततो विचार्य दर्शपूर्णमासावमावास्यां पौर्णमासीञ्च दिनद्वयमपुनन् शोधितवन्तः, यज्ञियत्वं निश्चितवन्त इत्यर्थः। यस्मिन् दिने सूर्य एव दृश्यते चन्द्रमास्तु न दृश्यते सोऽयं दर्शः, अमावास्या च तादृशी, तस्यां तिथौ सूर्येण सहैव वसतः चन्द्रमसो द्रष्टुमशक्यत्वात्। अतः सा तिथिः सूर्यमात्रदर्शनात् दर्शनामाङ्कितस्य कर्मणो योग्या। यस्यां तिथौ चन्द्रमण्डलं

सम्पूर्णो दृश्यते सा पौर्णमासी। सा चन्द्रमसः पूर्तिः पूर्णनामा-ङ्कितस्य कर्मणो योग्या। प्रतिपदादिषु चतुर्दश्यन्तासु तिथिषु चन्द्रमा लेशतो दृश्यते न पूर्णो नाप्यत्यन्तमदृष्टः, अतस्तयोः कर्मणोः योग्या न भवन्ति। तस्मात् तावेवैतावुक्तौ तिथि-विशेषौ देवैरुक्तरीत्या शोधितौ सन्तौ यज्ञयोग्यौ सम्पन्नौ। अत्र दर्शपूर्णमासशब्दस्तिथिपरो न कर्मपरः। यस्त्वेवं तिथ्योः शुद्धिं विद्वान् कर्मद्वयं कुरुते, सोऽयं शोधितौ यज्ञयोग्यौ तिथिविशेषावेव प्राप्य कृतवान् भवति, तस्मात् तयोस्तिथ्योः कुर्यादिति तात्पर्यार्थः। प्रसङ्गात् पुरुषार्थं कञ्चिन्नियमं विधत्ते "नामावास्यायाञ्च पौर्णमास्याञ्च स्त्रियमुपेयाद्यदुपेयान्निरि-न्द्रियः स्यात्" इति। पूर्वोक्तयोस्तिथ्योर्यज्ञियत्वमाख्यायिकया प्रपञ्चयति "सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् तासाममावास्याञ्च पौर्णमासीञ्च नोपैत् ते एनमभिसमनह्येतां तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्यामविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एते एव नमस्यन्नुपाधावत् ते अब्रूतां वरं वृणा-वहा आवं देवानां भागधे असावाऽऽवदधि देवा इज्यान्ता इति तस्मात् सदृशीनाꣳ रात्रीणाममावास्यायाञ्च पौर्णमास्याञ्च देवा इज्यन्त एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवं वेद" इति। अर्धमासस्य शुक्लपक्षस्य रात्रय एको वर्गः, कृष्णपक्षस्य रात्रयोऽपरो वर्गः, ते अमावास्या-

पौर्णमास्यावेनं सोममभिसमनह्यतां आभिमुख्येन सम्भोगाय गृहीतवत्यौ, बलात्कारेण भुज्यमानं तं सोमं अतिव्यवायेन क्षय-व्याधिः प्राप्तवान्। एतच्च प्रजापतेस्त्रयस्त्रिंशद्दुहितर इत्यत्र यथा व्याख्यातं तथैव व्याख्येयं। आवामुभे एव देवानां हवि-र्भागधारिण्यौ भवाव आवयोरधिश्रित्याग्न्यादयो देवा इज्य-न्तामित्यनयोर्वरः। एतयोर्भागधारित्वं जानते मनुष्याः मन्त्रे-ऽपि भागं धारयित्वा प्रयच्छन्ति। अथ मनुष्यादिसाम्योप-न्यासेन उक्तार्थमेव पुनः प्रशंसति "भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितरः संवत्सरे वनस्पतय-स्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृव्यं" इति। भूतानि मनुष्याद्याः प्राणिनः, वनस्पतयः पनसाम्राद्याः, तेषां फलग्रहणमेव क्षुन्निवारणरूपां तृप्तिं सूचयति। एवं क्षुधो हननं यो वेद सोऽप्यन्नसमृद्धः क्षुद्रूपं शत्रुं सर्वदा हन्ति॥ • ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वि-तीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ * ॥

देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाश्रयन्त हिङ्करोति सामैवाकर्हिङ्करोति यत्रैव देवा अश्रयन्त तत एवैनान् प्रयुङ्क्ते हिङ्करोति वाच एवैष योगो हिङ्करोति प्रजा एव तद्यजमानः सृजते त्रिः प्रथमामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्दसं ॥ १ ॥

नह्यत्यप्रस्रꣳसाय सन्ततमन्वाह प्राणानामन्नाद्यस्य सन्तत्या अथो रक्षसामपहत्यै राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयं लोक इममेव लोकमभिजयति त्रिर्विगृह्णाति त्रय इमे लोका इमानेव लोकानभिजयति बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभिजयति प्र वः ॥ २ ॥

वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह यज्ञो वै प्रजापतिर्यज्ञमेव प्रजापतिमारभते प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमेवावरुन्धे प्र वो वाजा इत्यन्वाह तस्मात् प्राचीनꣳ रेतो धीयतेऽग्न आयाहि वीतय इत्याह तस्मात् प्रतीचीः प्रजा जायन्ते प्र वो वाजाः ॥ ॥ ३ ॥

इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यज-

मानः सुमेयुरिदमसीदमसीत्येव यज्ञस्य प्रियं धामा-वरुन्धे यं कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्यानूच्याग्न आयाहि वीतय इति सन्ततमुत्त-रमर्धर्चमालभेत ॥ ४ ॥

प्राणेनैवास्यापानं दाधार सर्वमायुरेति यो वा अरत्निः सामिधेनीनां वेदारत्निमावेव भ्रातृव्यं कुरुते ऽर्धर्चौ सन्दधात्येष वा अरत्निः सामिधेनीनां य एवं वेदारत्निमावेव भ्रातृव्यं कुरुत ऋषेर्ऋषेर्वा एता नि-र्मिता यत् सामिधेन्यस्ता यदसंयुक्ताः स्युः प्रजया प-शुभिर्यजमानस्य वितिष्ठेरन्नर्धर्चौ सन्दधाति संयुन-क्त्येवैनास्ता अस्मै संयुक्ता अवरुद्धाः सर्वामाशिषं दुह्रे ॥ ५ ॥

वसं वै आयन्ते प्र वो वाजा लभेत दधाति सं दश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चम-प्रपाठके सप्तमोऽनुवाकः ॥ * ॥

अनुवाकैः षड्भिरेतैराध्वर्यवमुदीरितं ।

अथोत्तरैरनुवाकैर्हौत्रं विवक्षुरस्मिन् सप्तमेऽनुवाके तदनन्तर-भाव्युक्ते च सामिधेनीमन्त्रा व्याख्यायन्ते, ते च ब्राह्मणग्रन्थे तृतीयकाण्डे पञ्चमप्रपाठके समाम्नाताः। कल्पः। पुरस्तात् सामिधेनीनाꣳ होतेत्युपक्रम्य अन्तराहवनीयमुत्करञ्च प्रतीचीनं गच्छन् अपति कं प्रपद्ये तं प्रपद्य इत्यादिकमुक्त्वा सत्यं प्रपद्य इति वेति पक्षान्तरमुक्तं। तत्पाठस्तु "सत्यं प्रपद्ये। ऋतं प्रपद्ये। अमृतं प्रपद्ये। प्रजापतेः प्रियां तनुवमनार्तां प्रपद्ये। इदमहं पञ्चदशेन वज्रेण। द्विषन्तं भ्रातृव्यमवक्रामामि। योऽस्मान् द्वेष्टि। यञ्च वयं द्विष्मः। भूर्भुवः सुवः। हिं" (ब्रा०का०३।प्र०५। अ०१) इति। सत्यं यथार्थभूतमिदं कर्म प्रपद्ये प्रारभे, अस्मिन् कर्मणि वाचिकोऽपराधो माभूदित्यर्थः। मनसा चिन्त्यमा-नमप्यृतं यथा भवति तथा प्रपद्ये। मानसोऽप्यपराधो मा भूदित्यर्थः। अमृतत्वहेतुभूतमिदं कर्म प्रपद्ये, अनेन कर्मणा देवत्वं प्राप्यतामित्यर्थः। देवेष्वप्यातिंरहितां प्रजापतेः प्रियां तनुवं प्रजापतिशरीरमिदं कर्म प्रपद्ये। इदमिति हस्तेनाभि-नयः। अहं होता पञ्चदशसोमसङ्घेन वज्ररूपेणानेन कर्मणा द्विषन्तं शत्रुमवष्टभ्य पीडयामि, यः शत्रुरस्मान् मनसा द्वेष्टि यञ्च शत्रुं वयं मनसा द्विष्मस्तमुभयविधमवक्रामामीति पूर्व-त्रान्वयः। भूर्भुवः सुवरित्येतन्नामका ये लोकास्तान् हिनोमि प्रीणयामीत्यर्थः। कल्पः। व्याहृतीरुक्त्वा त्रिरभिहिङ्कृत्यानवान-मभिहिङ्काराहृक्षमुपसन्दधाति प्र वो वाजा अभिद्यव इत्येका-

इत्येताः सामिधेन्य इति। अन्ववागमनुष्टुवन्। तत्र प्रथमायाः पाठस्तु "प्र वो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयुः" (मा०३का०।५प्र०।२अ०) इति। हे देवाः वो युष्मदीयाः स्तुतिमिच्छमानाः प्रवर्तन्ते। वाजाः गमनशीला मासा अभिद्यवः अभितः पूर्वपक्षेणोत्तरपक्षरूपेण च दीप्यमाना अर्धमासाः हविष्मन्तो हविर्भाजो देवाश्च। घृताच्या यागसाधनभूतघृतप्रदया गवा सहानुकूलाः प्रवर्तन्तामित्यध्याहारः। किञ्च अयं यज्ञो देवान् जिगाति प्राप्नोतु, यजमानस्य सुम्नयुः सुखेच्छुर्भवतु। यदेतदुक्तं चिरभिहिङ्करोतीति तदेतद्विधत्ते "देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाश्रयन्त हिङ्करोति सामैवाकर्हिङ्करोति यत्रैव देवा अश्रयन्त तत एवैनान् प्रयुङ्क्ते हिङ्करोति वाच एवैष योगो हिङ्करोति प्रजा एव तद्यजमानः सृजते" इति। देवाः पूर्वमृचि नाश्रयन्त यजुष्यपि नाश्रयन्त न सन्तुष्टा इत्यर्थः। किन्तु सामन्येव सन्तुष्टाः, ततो हिमितिशब्दमुच्चारयेत्, तेन सामैव कृतं भवति। पञ्चकृत्वः सप्तकृत्वो वा साम्न आदौ हिङ्कारस्य विद्यमानत्वात्। तस्य हिमितिशब्दस्य चिरुच्चारणमभिप्रेत्य त्रिवारं विधिरनूद्य प्रशस्यते। यत्रैव देवा अश्रयन्त यत्रैव सामनि देवाः सन्तुष्टास्तत एव साम्न एनान् देवान् प्रयुङ्क्ते होता हिङ्कुर्वन् प्रकर्षेण तोषयतीत्यर्थः। यथा प्रथमोच्चारणेन साम कृतं भवति तथा द्वितीयोच्चारणेन वाचो योगः सम्पद्यते। सामाश्रयभूताया ऋग्रूपाया वाचः सम्बन्धः सम्पद्यत इत्यर्थः। तृतीयोच्चारणं चष्टिस्रि तेन यज-

मानः प्रजा एव सृष्टवान् भवति। एकादशानां सामिधेनीना-
मृचामाद्यन्तयोरावृत्तिं विधत्ते "त्रिः प्रथमामन्वाह त्रिरुत्तमां
यज्ञस्यैव तद्धर्सं नह्यत्यप्रस्रंसाय" इति। प्र वो वाजा अभि-
द्यव इत्येषा प्रथमा, आजुहोत दुवस्यतेति त्वं वरुण उत
मित्र इति वा इयोरन्यतरोत्तमा, तत्तेन प्रथमोत्तमयोस्त्रि-
रभ्यासेन यज्ञस्य बर्सं अन्तभागान् नह्यति बध्नाति। यथा
लोके वस्त्रेण कम्बलेन वा व्रीहीन् वोढुकामोऽन्तद्वयं बध्नाति
तद्वत्। तच्च बन्धनं संसनराहित्याय भवति। पूर्वस्यामृच्युत्त-
रार्धस्योत्तरस्यामृचि पूर्वार्धस्य च परस्पराविश्लेषं विधत्ते
"सन्ततमन्वाह प्राणानामन्नाद्यस्य सन्तत्या अथो रक्षसामपहत्यै"
इति। तदेतत् सन्ततोच्चारणं यजमानस्य प्राणानां सन्तत्यै भो-
ग्यवस्तुसन्तत्यै च सम्पद्यते। किञ्च राक्षसाः श्वासनिरोधेन
अपहता भवन्ति। यस्याः प्रथमाया आवृत्तिर्विहिता तां स्व-
रूपेण विधत्ते "राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयं
लोक इममेव लोकमभिजयति" इति। कस्मिंश्चित् साम-
शाखाविशेषे प्र वो वाजा इत्यस्यामृचि रथन्तरसाम्नो गीत-
त्वात् इयं राथन्तरी। रथन्तरसामयुक्तेन कर्मणा सम्पादयितुं
शक्यत्वात् भूलोकस्य राथन्तरत्वं। यदुक्तं सूत्रकारेण 'तृतीयां
सामिधेनीं त्रिर्विगृह्णाति' इति। तदेतद्विधत्ते "त्रिर्विगृह्णाति
त्रय इमे लोका इमानेव लोकानभिजयति" इति। तृतीयस्याः
सामिधेन्याः प्रथमपादमुच्चार्य सकृदवग्रहः कार्यः। अर्धर्चे द्वि-
तीयो विग्रहः। तत उत्तरार्धे उपरितनमन्त्रस्य पूर्वार्धस्य

संयोज्य तदन्ते तृतीयो विग्रहः। एतेन विग्रहत्रयेण लोकत्रय-
जयो भवति। यस्मात्त्र्ययं त्रिविधो विग्रहस्तस्मात् विधत्ते
"बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लो-
कमभिजयति" इति। तस्यामृचि इडच्छोपा यविष्ठेतिशब्दस्य
श्रूयमाणत्वादियं बार्हती। सा च तृतीयेति कृत्वा प्रथम-
मध्यमापेक्षयोत्तमा। तथा सत्युत्तमामन्वाहेत्युक्ते तृतीयात्वेन
पाठादित्यर्थो भवति। एतन्मन्त्रोपेतकर्मसाध्यत्वात् स्वर्गलोकस्य
बार्हतत्वं। प्रथमायामृचि देवतादिविशेषाभिव्यक्त्यभावं प्रशंसति
"प्र वो वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह यज्ञो वै प्रजा-
पतिर्यज्ञमेव प्रजापतिमारभते" इति। कस्यापि देवविशेषस्य
निरुक्तं नाम विशेषकथनं तच्च नास्ति सेयमनिरुक्ता। प्रजा-
पतिश्च सृष्टेः प्राग्रूपविशेषाभावादनिरुक्तः, अत इयं प्राजा-
पत्या। यज्ञश्च प्रजापतिसृष्टत्वात् तत्स्वरूपः। तस्मात् प्राजा-
पत्यमन्त्रस्य प्रथमपाठेन यज्ञरूपमेव प्रजापतिं प्रारब्धवान्
भवति। अस्मिन्मन्त्रे वाजशब्दोच्चारणं प्रशंसति "प्र वो वाजा
इत्यन्वाहान्नं वै वाजोऽन्नमेवावरुन्धे" इति। तथा च प्रशब्दो-
च्चारणं प्रशंसति "प्र वो वाजा इत्यन्वाह तस्मात् प्राचीनꣳ
रेतो धीयते" इति। यस्मात् प्रशब्द उच्चारितः तस्मात् प्रा-
चीनं, प्रमुखे रेतोवर्तिनि योषिच्छरीरे अञ्चति गच्छतीति प्रा-
चीनं, तथाविधं रेतो धीयते गर्भाशये स्थाप्यते। एतस्य
मन्त्रस्य चरमपादेन सहोत्तरस्य मन्त्रस्य प्रथमपादोच्चारणं
प्रशंसति "अग्न आयाहि वीतय इत्याह तस्मात् प्रतीचीः

प्रजा आयन्ति" इति। यस्मादायातीत्युक्तं तस्मात् प्रतीचीः प्रत्यङ्मुखाः बह्वः प्रजा उत्पद्यन्ते। मन्त्रगतानां पदानामर्थान् दर्शयति "प्र वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवान् जिगाति यजमानः सुम्नयुः" इति। वजन्ति गच्छन्ति क्रमेण प्रवर्तन्त इति चैत्रादिमासा वाजाः, इदमेव ब्राह्मणवाक्यं हृदि निधाय मन्त्रार्थः पूर्वं दर्शितः। पदार्थानभिधाय मन्त्रतात्पर्यार्थमाह "इदमसीदमसीत्येव यज्ञस्य प्रियं धामावरुन्धे" इति। सामिधेनीभिः समिध्यमान हे अग्ने त्वमिदं मासानां स्वरूपमसि, अर्धमासानां स्वरूपमसि, देवानां स्वरूपमसीत्येव तात्पर्यार्थः। अनेन तात्पर्येण यज्ञस्य प्रियं धामाकृतिस्थानमिध्यमानाग्निस्वरूपं सम्पादितवान् भवति। यदुक्तं 'सन्ततमन्वाह प्राणानामन्नाद्यमसि सन्तत्यै' इति तदेवेदानीं काम्यत्वेनापि विधत्ते "यं कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्यानूच्याग्न आयाहि वीतय इति सन्ततमुत्तरमर्धर्चमालभेत प्राणेनैवास्यापानं दाधार सर्वमायुरेति" इति। यं यजमानमुद्दिश्य होता कामयेत। किमिति। अयं यजमानः मृत्युरहितः सर्वमायुः प्राप्नुयादिति, तस्य यजमानस्यायुःप्राप्तये प्रथमां सामिधेनीं सर्वामनूच्य विच्छेदमकृत्वोत्तरमन्त्रस्य प्रथममर्धर्चमुपक्रमेत। तेन सान्तत्येनास्य यजमानस्य प्राणवायुना बहिर्निर्गच्छता सहैवापानवायुं पुनरप्यन्तरागच्छन्तं धारितवान् भवति। तेन च धारणेन सर्वमायुः प्राप्नोति। तदेव सान्तत्यं पुनः प्रका-

रान्तरेण प्रशंसति "यो वा अरत्निꣳ सामिधेनीनां वेदारत्नावेव भ्रातृव्यं कुरुते" इति। एतस्य मन्त्रस्य चरमपादेन सहोत्तरमन्त्रस्य प्रथमपादोच्चारणं प्रशंसति "अर्धर्चौ सन्दधात्येष वा अरत्निः सामिधेनीनां य एवं वेदारत्नावेव भ्रातृव्यं कुरुते" इति। कूर्परमारभ्य प्रसारितकनिष्ठाङ्गुलिपर्यन्तो हस्तभागोऽरत्निः, स च तस्यारत्नेर्मध्ये विच्छेदोऽस्ति तद्दुभयोः सामिधेन्योर्मध्ये साम्यमरत्निलिनोपचर्यते। यो होता तदिदं साम्यं विदित्वा अनुतिष्ठति, स होता भ्रातृव्यं यजमानस्यारत्नौ स्थापयति। चतुररत्निपरिमितस्य पुरुषस्यारत्निमात्रपरिमितो बालो यथा नीचो भवति तद्वदमुं कुरुत इत्यर्थः। य एवं वेदेति पुनरभिधानं प्रतिज्ञातस्य निगमनार्थं। तदेव साम्यं विपक्षबाधोपन्यासपुरःसरं प्रशंसति "ऋषेर्ऋषेर्वा एता निर्मिता यत् सामिधेन्यस्ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरन्नर्धर्चौ सन्दधाति संयुनक्त्येवैनास्ता अस्मै संयुक्ता अवरुद्धाः सर्वामाशिषं दुह्रे" इति। ऋषिरतीन्द्रियस्य द्रष्टा, तादृश ऋषिरेकैकां सामिधेनीमीश्वरानुग्रहेण दृष्ट्वा तत् सम्प्रदायपरम्परां निर्मितवान्। अतएव स्मर्यते,

> युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
> लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥ इति।

तथा सति भिन्नेभ्य ऋषिभ्यः प्रवर्तितास्ताः सामिधेन्यो यद्यसंयुक्ता भवेयुः तदानीं यजमानस्य प्रजया पशुभिरेताः सामिधेन्यो वितिष्ठेरन् वियुक्तास्तिष्ठेयुः। प्रजापशुसमृद्धिहेतवो न भवेयु-

रित्यर्थः। तत्परिहाराय पूर्वस्याः सामिधेन्या उत्तरार्धर्चमुत्तरस्याः सामिधेन्याः पूर्वार्धर्चञ्च सन्दध्यात्। तथा सत्येताः सामिधेनीः संयोजितवान् भवति। न चैवमेकस्यामपि सामिधेन्यां पूर्वोत्तरार्धर्चौ सन्धातव्याविति शङ्कनीयं, तयोरेकर्षिप्रवर्तितत्वेन होतृप्रयुक्तसन्धानमन्तरेणापि स्वरूपतो वियोगाभावात्। यथोक्तरीत्या संयुक्तास्ताः सामिधेन्यो यजमानाय सर्वामाशिषं दुह्रे दुहन्ति सम्पादयन्ति॥

अथ मीमांसा। नवमाध्यायस्य प्रथमपादे चिन्तितम्।

त्रिरनूक्तिर्ऋचो धर्मः स्थानधर्मोऽथवाऽऽदिमः।
स्त्रीलिङ्गत्वान्न तत्प्रातिपदिकप्रबलत्वतः॥

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य श्रूयते, त्रिः प्रथमामन्वाहेति। सोऽयं त्रिरभ्यास आदौ पठितस्य प्र वो वाजा इत्यृग्विशेषस्य धर्मः। कुतः। प्रथमामित्यस्य स्त्रीलिङ्गत्वात् ऋक्परत्वोपपत्तेरिति चेन्नैतद्युक्तं, स्त्रीलिङ्गवाचिनष्टाप्प्रत्ययादपि पूर्वं पठितस्य स्थानवाचिनः प्रथमेत्यस्य प्रातिपदिकस्य प्रबलत्वात्। अतो विकृतिष्वन्यस्या अप्यृचः प्रथमस्थाने पठितायाः त्रिरभ्यासः कर्त्तव्यः। स्थानान्तरे पठितायाः प्र वो वाजा इत्यस्या अप्यृचो नाभ्यासः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ * ॥

अयंमो वा एष यो सामाम्न आयाहि॰ वीतय इत्याह रथन्तरस्यैव वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैव वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत् सामन्वन्तं करोत्यग्निरमुष्मिन् लोक आसीदादित्योऽस्मिन् ताविमौ लोकावशान्तौ ॥ १ ॥

आस्तां ते देवा अब्रुवन्नेतेमौ विपर्यूहामेत्यग्न आयाहि वीतय इत्यस्मिन् लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिन् लोक आदित्यं ततो वा इमौ लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद पञ्चदश सामिधेनीरन्वाह पञ्चदश ॥ २ ॥

वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन् दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत् स धूममजनयत् परुच्छेपोऽभ्यवदत् सोऽग्निमजनयदृष इत्यब्रवीत् ॥ ३ ॥

यत्, समावद्विह कया त्वमग्निमजीजनो माहमिति सामिधेनीनामेवाहं वर्णं वेदेत्यब्रवीद्यद्वृतवत्यदम-नूच्यते स आसां वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति स्त्रियस्तेन यहचः स्त्रियस्तेन यद्गायत्रिय स्त्रियस्तेन यत् सामिधेन्यो वृषण्वतीमन्वाह ॥ ४ ॥

तेन पुꣳस्वतीस्तेन सेन्द्रास्तेन मिथुना अग्निर्देवा-नां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभि-पर्यावर्तत ततो देवा अभवन् परासुरा यस्यैवं विदु-षोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना परास्य भ्रातृव्यो भवत्यध्वरवतीमन्वाह भ्रातृव्यमेवैतया ॥ ५ ॥

ध्वरति शोचिष्केशस्तमीमह इत्याह पवित्रमेवैत-द्यजमानमेवैतया पवयति समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परिदधात्यस्कन्दाय यदतं ऊर्ध्वमभ्या-दध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत् त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणां त एतह्र्याशꣳसन्ते मां वरिष्यते मां ॥ ६ ॥

इति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीत आर्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्यै परस्तादर्वाचो वृणीते तस्मात् परस्तादर्वाञ्चो मनुष्यान् पितरोऽनु प्रपिपते ॥ ७ ॥

अग्नान्तावाह पञ्चदशाब्रवीदन्वाहैतया वरिष्यते मामेकान्नत्रिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

सप्तमे सामिधेन्याद्या व्याख्याताऽत्यन्तविस्तरात्।

अथाष्टमेऽवशिष्टाः सामिधेन्यो व्याख्यायन्ते। तत्र द्वितीया सामिधेनी मन्त्रकाण्ड एव पठिता "अग्न आयाहि वीतये। गृणानो हव्यदातये। नि होता सत्सि बर्हिषि" (ब्रा०का०३। प्र०५।अ०२)इति। हे अग्ने हव्यदातये यजमानस्य हविर्दानाय, वीतये देवानां हविर्भक्षणाय, गृणानः यजमानो देवानां हविर्दास्यतीति भवद्भिर्भक्षणीयमिति वदन् आयाहि। आगत्य च होता आह्वाता भवन् बर्हिषि यज्ञे निषत्सि निषीद। तृतीयसामिधेनीपाठस्तु "तं त्वा समिद्भिरङ्गिरः। घृतेन वर्द्धयामसि। बृहच्छोचा यविष्ठ्य" (ब्रा०) इति। हे अङ्गिरः अग्ने तं त्वा तादृशं देवानामाह्वातारं त्वां समिद्भिः घृतेन च वर्धयामः, हे यविष्ठ्य युवतम बृहत् ज्वालाधिक्यं यथा भवति तथा शोचा दीप्यस्व। चतुर्थसामिधेनीपाठस्तु "स नः पृथु

अवाय्यं। अच्छा देव विवाससि। बृहदग्ने सुवीर्यं"(का०)इति। हे अग्ने देव स त्वं, नः अस्मदर्थं, पृथु विस्तीर्णं, अवाय्यं देवैः श्रोतुं योग्यमिदं कर्म अच्छ अभिमुखीकृत्य बृहत् सुवीर्यं च यथा भवति तथा विवाससि विभातं कुरु प्रकाशयेत्यर्थः। बृहच्छब्देन ज्वालाधिक्यं विवक्षितं। सुवीर्यशब्देन हूयमानस्य हविषः सम्यग्दहनसामर्थ्यमुच्यते। पञ्चमसामिधेनीपाठस्तु "ईडेन्यो नमस्यस्तिरः। तमाꣳसि दर्शतः। समग्निरिध्यते वृषा" (का०) इति। अयमग्निः सम्यगिध्यते। कीदृशः, ईडेन्यः स्तोतुं योग्यः, नमस्यः नमस्कारयोग्यः, तमांसि तिरस्कुर्वन् दर्शतः पदार्थानां दर्शयिता। वृषा कामानां वर्षयिता। षष्ठसामिधेनीपाठस्तु "वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तꣳ हविष्मन्त ईडते" (का०) इति। अयमग्निः सम्यगिध्यते। कीदृशः, वृषः कामानां वर्षयिता। अश्वो न देववाहनः, अश्व इव देवार्थस्य हविषो वोढा। तमिममग्निं हविष्मन्तो यजमानाः स्तुवन्ति। सप्तमसामिधेनीपाठस्तु "वृषणं त्वा वयं वृषन्। वृषाणः समिधीमहि। अग्ने दीद्यतं बृहत्" (का०) इति। हे वृषन् कामानां वर्षकाग्ने, वृषणं कामानां वर्षितारं त्वां वृषाणो वयं आहुतिवृष्टिं कुर्वन्तो वयं समिधीमहि सम्यक् प्रकाशयामः। कीदृशं त्वां बृहत् दीद्यतं प्रौढज्वालं यथा भवति तथा दीप्यमानम्। अष्टमसामिधेनीपाठस्तु "अग्निं दूतं वृणीमहे। होतारं विश्ववेदसं। अस्य यज्ञस्य सुक्रतुं" (का०) इति। इममग्निं वयं वृणीमहे प्रार्थयामहे।

कीदृशं, दूतं देवान् प्रति प्रेषणार्हं, होतारमाह्वातारं, विश्ववेदसं विश्वान् सर्वान् देवान् वेत्तीति विश्ववेदास्तादृशं, अस्य यज्ञस्य सम्बन्धिनं सुक्रतुं शोभनकर्माणं। नवमसामिधेनीपाठस्तु "समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे" (ब्रा०) इति। योऽग्निरध्वरेऽस्मिन् कर्मणि समिध्यमानः, पावकः शुद्धिहेतुः, ईड्यः स्तुत्यः, शोचींषि दीप्तयः केशस्थानीयाः यस्यासौ शोचिष्केशः तमग्निमीमहे प्राप्नुमः। दशमसामिधेनीपाठस्तु "समिद्धो अग्न आहुत, देवान् यक्षि स्वध्वर। त्वं हि हव्यवाडसि" (ब्रा०) इति। हे आहुत आहुत्याराधिताग्ने त्वं समिद्धः सन् देवान् यक्षि यजसि। हे स्वध्वर सुष्ठु निष्पादितयाग हि यस्मात् त्वं हव्यवाडसि तस्मात् यजेत्यन्वयः। एकादशसामिधेनीपाठस्तु "आजुहोत दुवस्यत। अग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनं" (ब्रा०) इति। हे यजमाना इममग्निमाजुहोताहुतिभिः प्रीणयत, दुवस्यत परिचरत, प्रयति प्रयत्नेन वर्तमानेऽस्मिन्नध्वरे यागे हव्यवाहनमग्निं वृणीध्वं प्रार्थयध्वं। अनया सामिधेनीनां परिसमाप्यमानत्वात् इयं परिधानीया, तत्र पुरुषभेदेनान्या परिधानीया विकल्प्यते। तथा च सूत्रकारः 'त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया, आजुहोतेतीतरेषां गोत्राणां' इति। विकल्पितायाः पाठस्तु। "त्वं वरुण उत मित्रो अग्ने। त्वां वर्धन्ति मतिभिर्वसिष्ठाः। त्वे वसु सुषणनानि सन्तु। यूयं पात स्वस्तिभिः सदा नः" इति। हे अग्ने त्वमनिष्टनिवारकत्वात् वरुणः

दृष्टप्रापकत्वात् मित्रस्य, वसिष्ठगोत्रीया मतिभिर्मनीषाभिः स्तु-
तिभिर्वर्धन्ति वर्धयन्ति त्वां। ते त्वयि वसु धनं सुवर्णानि सुष्ठु
दातव्यानि स्वौंषि च सन्तु तिष्ठन्तु। यूयं च नोऽस्मान् स्वस्तिभिः
सदा पात रक्षत। यूयमिति बहुवचनं पूजार्थं। आसु सामिधे-
नीषु द्वितीयादिचतुर्थ्यन्तं तृचं प्रशंसति। "अयज्ञो वा एष यो
सामाग्न आयाहि वीतय इत्याह रथन्तरस्यैष वर्णस्तं त्वा समि-
द्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह
बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत् सामन्वन्तं
करोति" इति। दर्शपूर्णमासयोः सामानि न सन्ति, तद्र-
हितश्च न मुख्ययज्ञः, अतोऽयं तृचः सामत्रयस्वरूपत्वेनाच पद्य-
ते। यद्यप्येता ऋचो रथन्तरादीनां योनयो न भवन्ति तथापि
स्तुतित्वात् तद्रूपत्वमविरुद्धं। शाखान्तरे वा तास्वृक्षु गीतानि सा-
मानि द्रष्टव्यानि। एतेन तृचपाठेन दर्शपूर्णमासयज्ञं सामवन्तं
करोति। बृहदग्न इति तृतीयपादोपादानं बृहत्सामद्योतकस्य
बृहच्छब्दस्य प्रदर्शनार्थं। अस्मिन्नेव तृचे आद्यन्तौ पुनः प्रशं-
सति। "अग्निरमुष्मिन् लोक आसीदादित्योऽस्मिन् ताविमौ
लोकावशान्तावास्तां ते देवा अब्रुवन्नेतेमौ* विपर्यूहामेत्यग्न
आयाहि वीतय इत्यस्मिन् लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमि-
त्यमुष्मिन् लोक आदित्यं, ततो वा इमौ लोकावशाम्यतां यदेव-
मन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं
वेद" इति। पुरा स्वर्गलोकेऽग्निः स्थितः, आदित्यस्तु भूलोके।

---

* आ। इत। इमौ। इति पदपाठः।

तदानीं लोकद्वयमशान्तं क्षुब्धमासीत्। स्वर्गे ह्यमृतसेविनां पाकापेक्षा नास्ति, प्रकाशाय केवलमादित्योऽपेक्षित एव। भूलोकवासिनां तु पाको मुख्यं प्रयोजनं। तदुभयासिद्धेर्लोकक्षोभः, तं क्षोभं दृष्ट्वा ते देवाः परस्परमिदमूचुः इमावग्न्यादित्यौ विपर्यूहाम विपरिवृत्तौ स्थापयाम, तस्मादेते सर्वे यूयमागच्छतेति। अग्न आयाहीत्यस्यामृचि बर्हिषि निषीदेति लिङ्गात् ऋचः प्राथम्याच्च प्रथमलोके स्थापनं तया सम्पद्यते। हृहदग्ने सुवीर्यमित्यस्यामृचि विवासतीति विभातलोक्तिलिङ्गाद्दृचस्तृतीयत्वाच्चास्यास्तृतीयलोके स्थापनहेतुत्वं गम्यते। यद्यप्यादित्यो नास्मिन्मन्त्रे श्रुतः तथाप्युच्चैःस्थानवृत्तित्वकारित्वेन विभातत्वेनादित्यः श्रूयते*। किञ्च हंसमन्त्रावसाने ऋतं बृहदित्यादित्यमण्डलपरत्वेन श्रुतो बृहच्छब्दोऽत्रापि श्रूयमाण आदित्यस्य प्रत्यभिज्ञापकः, तस्मात् तेन मन्त्रेण आदित्यस्थापनं सिध्यति। अनया विपर्यावृत्त्या लोकयोः स्वस्वकार्यसिद्धेर्युक्ता शान्तिः। तस्मादनेन क्रमेण पाठो लोकयोः शान्त्यै भवति, तद्वेदितुश्च तदुभयशान्तिर्भवति। सङ्ख्यां विधत्ते "पञ्चदश सामिधेनीरन्वाह पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते" इति। यद्यपि द्वादश पठितास्तथाप्येकस्याः पुरुषभेदेन विकल्पितत्वात् तासु च प्रथमोत्तमयोस्त्रिरावृत्त्या पञ्चदशत्वसम्पत्तिः। अर्धमासस्य रात्रीणां पञ्चदशत्वात् तद्रूपत्वमपि सम्पद्यते। एकैकस्मि-

* तथापि हवस्थानवर्त्तित्वकारित्वेन विभातत्वेनादित्यः सूच्यत इति तै०।

त्र्यर्धमासे ऽपञ्चदशत्वमभूत्तासु तासामर्धमासानां चतुर्विंशतिवारमावृत्त्या संवत्सरप्राप्तिश्च सम्पद्यते। इदानीमक्षरसङ्ख्यां संवत्सरसम्पत्त्या प्रशंसति "तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति" इति। तासां सामिधेनीनां पञ्चदशसङ्ख्याकानां गायत्रीच्छन्दस्कत्वात् एकैका चतुर्विंशत्यक्षरा। तथा सति मिलिताऽक्षरसङ्ख्या संवत्सररात्रिसङ्ख्या च समेति तत्ताऽक्षरद्वारा तदैव संवत्सरप्राप्तिर्भवति। यद्यपि वासिष्ठानां परिधानीयायाः त्रिष्टुप्त्वादधिकान्यक्षराणि तथापीतरगोत्रापेक्षयाऽयमर्थवाद इत्यविरोधः। आसु सामिधेनीषु 'तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि' इत्येतं मन्त्रविशेषं प्रशंसति "नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन् दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत् स धूममजनयत् परुच्छेपोऽभ्यवदत् सोऽग्निमजनयदृष इत्यब्रवीत् यत् समावद्विद्व कथा त्वमग्निमजीजनो नाहमिति सामिधेनीनामेवाहं वर्णं वेदेत्यब्रवीद्यद् घृतवत् पदमनूच्यते स आसां वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति" इति। नृमेधपरुच्छेपनामानावृषी परस्परं ब्रह्मवाद्यं अवदेतां मन्त्रसामर्थ्यविषयं संवादमकुरुतां। तत्रानयोरियं प्रतिज्ञा। आवयोरुभयोर्मध्ये यतरो ब्रह्मीयान् ब्रह्माणि सामिधेनीमन्त्रेऽत्यन्तं कुशलः, तादृशं निश्चेतुं स्वस्वमनसि सामिधेनीमन्त्रमनुस्मरन्तौ अस्मिन्नार्द्रे काष्ठेऽमथनेनाग्निं जनयावेति। तदा

प्रथमं नृमेध आर्द्रं काष्ठमभिलक्ष्य मन्त्रमवदत्, स तन्मन्त्रसा-मर्थ्यात् धूममुत्पादितवान्। परुच्छेपो मन्त्रं पठित्वा अग्निम-जनयत्। तदिदानीं नृमेधः परुच्छेपम्प्रति हे ऋषे त्वमतो-न्यिद्रष्टासि इत्यभिप्रेत्य सम्बोधितवान्, सम्बोध्य च एवं पप्रच्छ। यत् यस्मात् कारणात् समावद्विद आवयोः सामिधेनी-वेदनं समानमेव तथा सति कथं त्वमग्निमुत्पादितवान् न त्वहमिति। तत्र परुच्छेप उत्तरमुवाच। यद्यप्यावयोः सा-मिधेनीपाठस्तदर्थज्ञानं च समानं तथाप्यहं तासामेव सामि-धेनीनां वर्णं रहस्यं तेजो वेद त्वं तु न वेत्सि। किं तत्तेज इति तदुच्यते। घृतशब्दोपेतः पादोऽनूच्यत इति सोऽयमनूच्यमानः पादः सामिधेनीनां वर्णः सारभूतं तेजः। स पादः कस्यामृचि वर्तत इति चेत्, तदुच्यते। तं त्वा समिद्भिरङ्गिर इत्येतामृचं पठेत्। तस्यामृचि घृतेन वर्धयामसीत्ययं पादो वर्तते। ततो-ऽनेन पठितेन पादेन सामिधेनीष्वेव ज्योतिर्जनयति। तेन त्वं पादं पठन्नपि महिमानं न जानासि, अहं तु जानामि। तस्मादार्द्रकाष्ठे मयाग्निरुत्पादितः। वृषणं त्वा वयमित्येतामृचं विशेषतः प्रशंसति "स्त्रियस्तेन यद्वृचः स्त्रियस्तेन यद्गाय-त्रियः स्त्रियस्तेन यत् सामिधेन्यो वृषण्वतीमन्वाह तेन पुंस्व-तीस्तेन सेन्द्रास्तेन मिथुनाः" इति। ऋग्गायत्रीसामिधेनीशब्दैः स्त्रीलिङ्गैरभिधीयमानत्वात् स्त्रीत्वमेव। अतः पुरुषत्वाय वृ-षन्शब्दवतीमृचं ब्रूयात्। तेन पाठेन पुंस्वतीः पुरुषवत्यः सेन्द्रा इन्द्रिययुक्ताः स्त्रीपुरुषरूपेण मिथुनरूपाः सम्पद्यन्ते। ईडेन्य

इत्येषापि वृषण्वती। समग्निरिध्यते वृषेत्यन्मे पठितत्वात्। वृषो अग्निरित्येषापि वृषशब्दोपेतत्वाद्वृषण्वती। तयोरप्येषा प्रशंसा द्रष्टव्या। अथाग्निं दूतमित्येतामृचं विशेषतः प्रशंसति "अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभिपर्यावर्तत ततो देवा अभवन् परासुरा यस्यैवं विदुषोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना परास्य भ्रातृव्यो भवति" इति। देवाः स्वकार्येष्वग्निं दूतत्वेन प्रेषयन्ति, असुरास्तु कवेः पुत्रमुशनसं। तावुभावपि प्रजापतिमुपेत्य पृष्टवन्तौ, आवयोर्मध्ये सन्धिविग्रहादिकार्येषु कस्य दौत्यमुचितमिति। तदानीं प्रजापतिरग्निं दूतं वृणीमह इति मन्त्रेणोत्तरमुवाच। उक्त्वा चोशनसः सकाशात्परावृत्त्याग्नेरभिमुखोऽभूत्। ततो देवानां विजयोऽभूदसुराश्च पराभूताः। एवं विदुषो यजमानस्याप्यनेन मन्त्रेण स्वविजयः शत्रुपराजयश्च भवति। समिध्यमानो अध्वर इत्येतामृचं विशेषतः प्रशंसति "अध्वरवतीमन्वाह भ्रातृव्यमेवैतया ध्वरति" इति। हिनस्तीत्यर्थः। तस्यामृचि तृतीयपादं प्रशंसति "शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया पवयति" इति। मध्यपादे अग्निः पावक ईड्य इति पावकशब्देनैव पवित्रत्वं विस्पष्टम्। अत्र शोचिःशब्देन शुचिहेतूनां रश्मीनामुक्तिमभिप्रेत्य पवित्रमेतद्वाक्यमित्यभिधीयते, तस्मादेतयर्चा यजमानमेव शोधयति। समिद्धो अग्न आहुतेत्येषा काचिदध्वरवती। देवान् यक्षि स्वध्वरे-

त्युक्तत्वात्। आजुहोतेत्ययावयध्वरवती। अग्निं भृयत्यध्वर इत्युक्तत्वात्। तयोरप्युभयोरुक्तप्रशंसा योजनीया। तदेवं सर्वासामृचां सामान्यतो विशेषतश्च प्रशंसा दर्शिता। यदुक्तं सूत्रकारेण 'समिद्धो अग्न आहुतेत्यभिप्रायैकामनूयाजसमिधमवशिष्य सर्वमिद्धशेषमभ्यादधातीति' तदेतद्धृदि निधाय समिद्धो अग्न इति मन्त्रं पुनः प्रशंसति "समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परिदधात्यस्कन्दाय यदत ऊर्द्ध्वमभ्यादध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्" इति। समिद्धो अग्न इत्यनेन भूतार्थवाचिनोक्तप्रत्ययेन सामिधेनीसाध्यस्याऽग्निसमिन्धनस्य समाप्तिः सूच्यते। परितः समन्तात् धीयमानः प्रक्षिप्यमाणः काष्ठविशेषः परिधिः। तथा सति समिद्ध इति समाप्तिसूचनात् एतं मन्त्रं परिधित्वेन स्थापितवान् भवति। स च परिधिः प्रक्षिप्यमाणानां समिधामस्कन्दायाविनाशाय भवति। यद्येतस्मात् मन्त्रपाठादूर्द्ध्वमाजुहोतेति मन्त्रे समिधोऽभ्यादध्यात्, यथाज्यपुरोडाशादिहविषः परिधेर्बहिः पतनं विनाशाय सम्पद्यते तादृगेव तद्द्रष्टव्यं। एवं च 'प्रणवे प्रणवे समिधमादधातीति सूत्रकारेण प्रतिमन्त्रमवसानकालीने प्रणवे समिदाधानस्योक्तत्वात्, समिद्ध इति मन्त्रावसाने समिदेका ततः प्रक्षेपणीया: प्राप्ता, आजुहोतेत्यस्य त्रिरावृत्त्या तिस्रः समिधस्तत्र प्रक्षेपणीयाः प्राप्ताः, तदेतच्चतुष्टयं समिद्धो अग्न इत्येतस्य पादस्य पाठकाले एव प्रक्षिपेत् इति विधिरुन्नेयः। परस्तादप्युपरि मध्ये समिधमिन्धनमित्यग्नि-

विशेषणं प्रशंसति "त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाꣳ सहरक्षा असुराणां त एतर्ह्याशꣳसन्ते मां वरिष्यते मामिति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीते" इति। देवादीनां सम्बन्धिनो हव्यवाहनादयोऽग्नयः प्रत्येकं मामेव वरिष्यत इत्येवमपेक्षन्ते, अतो देवा अग्नेरेव *वरणसिद्ध्यर्थं हव्यवाहनं वृणीध्वमित्युच्यते। यदुक्तमाश्वलायनेन 'सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाꣳ असि ब्राह्मणभारतेति निगदेऽवसाय यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः परं परं' इति। तदेतद्विधत्ते "आर्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्यै" इति। ऋषेरपत्यमार्षेयं। आत्मीयगोत्रर्षीन् तद्धितप्रत्ययान्तान् आमन्त्रितविभक्त्या यथाप्रवरं वृणीते। तथा अग्ने महाꣳ असि ब्राह्मणभारत। भार्गवच्यावनाप्नवानौर्वजामदग्न्येति भृगुगोत्राणां पञ्चार्षेयः प्रवर इति। अनेन तत्तदपत्यतयाग्निरुपचर्यते। एवं वृणानः पुरुषो बन्धोर्भ्रात्रादेः सकाशात् नैति नापगच्छति। अपि चेदमार्षेयवरणमस्य पुत्रादिसन्तानाय भवति। अस्मिन् वरणे प्रकारविशेषं विधत्ते "परस्तादर्वाचो वृणीते तस्मात् परस्तादर्वाञ्चो मनुष्यान् पितरोऽनु प्रपिपते" इति। वर्तमानं यजमानमपेक्ष्य पूर्वभावी यो गोत्रप्रवर्तकस्तमारभ्य तदपत्यपरंपरयार्वाचो गोत्रान् वृणीते। तथैव पूर्वमुदाहृतं। भृगोरपत्यं च्यवनः तस्यापत्यमप्नवानस्तस्यापत्यमौर्वस्तस्यापत्यं जमदग्निस्तस्य

---

* अग्नेरेवं गुणसिद्ध्यर्थमिति क०।

सम्पत्तिर्यजमान इति। तदेतदर्वाक्त्वं। यस्माद्धोता पूर्वभाविनमारभ्यार्वाचो वृणीते तस्मादेव कारणाल्लोकेऽपि पूर्वपूर्वभाविनः पितर उत्तरोत्तरभाविनः पुत्राननुक्रमेण पालयन्ति।

इति श्रीमाधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके ऽष्टमोऽनुवाकः॥

---

अग्ने मृहाꣳ असीत्याह मृहान् ह्येष यद॒ग्निर्ब्रा᳚ह्म॒णेत्याह ब्राह्मणो ह्येष भार॒तेत्याहै॒ष हि दे॒वेभ्यो॑ ह॒व्यं भर॑ति दे॒वेद्ध॒ इत्या॑ह दे॒वा ह्ये॑तमैन्ध॑त मन्वि॑द्ध॒ इत्या॑ह॒ मनु॒र्ह्ये॑तमुत्त॑रो दे॒वेभ्य॒ ऐन्धा॑षिष्टु॒त इत्या॑हर्षयो॒ ह्ये॑तमस्तु॑वन्विप्रा॑नुमदि॒त इत्या॑ह॥ १॥

विप्रा॒ ह्ये॑ते यच्छु॑श्रु॒वाꣳसः॑ कविश॒स्त इत्या॑ह क॒वयो॒ ह्ये॑ते यच्छु॑श्रु॒वाꣳसो॒ ब्रह्म॑सꣳशित॒ इत्या॑ह ब्रह्म॑सꣳशितो॒ ह्ये॑ष घृता॑हवन॒ इत्या॑ह घृता॑हुति॒र्ह्य॑स्य प्रि॒यत॑मा प्र॒णीर्य॑ज्ञाना॒मित्या॑ह प्र॒णीर्ह्ये॑ष य॒ज्ञाना॒ꣳ र॒थीर॑ध्व॒राणा॒मित्या॑है॒ष हि दे॒वर॒थोऽतू॑र्तो॒ होतेत्या॑ह॒ न ह्ये॑तं कश्च॒न॥ २॥

तरति तूर्णिर्हव्यवाडित्याह सर्वं ह्येष तरत्यास्यार्थं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां चमसो देवपान इत्याह चमसो ह्येष देवपानोऽराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसीत्याह देवाꣳ ह्येष परिभूर्यद्ब्रूयादावह देवान् देवयते यजमानायेति भ्रातृव्यमस्मै ॥ ३ ॥

जनयेदावह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयत्यग्निमग्न आवह सोममावहेत्याह देवता एव तद्यथापूर्वमुपह्वयत आ चाग्ने देवान् वह सुयजा च यज जातवेद इत्याहाग्निमेव तत्सꣳश्यति सोऽस्य सꣳशितो देवेभ्यो हव्यं वहत्यग्निर्होता ॥ ४ ॥

इत्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते स्मो वयमित्याहात्मानमेव सत्त्वं गमयति साधु ते यजमान देवतेत्याहाशिषमेवैतामाशास्ते यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परिगृह्णीयात् प्रमायुकः स्याद्यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृत् ॥ ५ ॥

यद्वे इव ब्रूयात् भ्रातृव्यमस्मै जनयेद्घृतवतीमध्वर्यो स्रुचमास्यस्वेत्याह यजमानमेवैतेन वर्धयति

देवायुवमित्याह देवान् ह्येषावति विश्ववारामित्याह
विश्वꣳ ह्येषावतीडामहै देवाꣳ ईडेन्यान्नमस्याम न-
मस्यान् यजाम यज्ञियानित्याह मनुष्या वा ईडेन्याः
पितरो नमस्या देवा यज्ञिया देवता एव तद्यथा-
भागं यजति ॥ ६ ॥

विप्रानुमदित इत्याह चनास्मै होतोपभृद्देवता
एव वीर्यं च ॥ ९ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चम-
प्रपाठके नवमोऽनुवाकः ॥ ० ॥

द्वितीयाद्याः सामिधेन्यो व्याख्याता अष्टमे स्फुटं।

अथ नवमे प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च
व्याख्यानं प्रवर्तते। ते च निगदादयो मन्त्रकाण्डे समाम्नाताः।
कल्पः। अथ निवित्पदान्यन्वाह देवेद्धो मन्विद्ध इति सप्तमे
ऽन्यानिति। अथ चतस्रश्चेति। पाठस्तु "अग्ने महाꣳ असि
ब्राह्मण भारत। ऋषावसो। देवेद्धो मन्विद्धः। ऋषिष्टुतो वि-
प्रानुमदितः। कविशस्तो ब्रह्मसꣳशितो घृताहवनः। प्रणी-
र्यज्ञानां। रथीरध्वराणां। अतूर्तो होता। तूर्णिर्हव्यवाट्।
आस्पात्रं जुहूर्देवानां। चमसो देवपानः। अराꣳ इवाग्ने
नेमिर्देवाꣳस्त्वं परिभूरसि। आवह देवान् यजमानाय"

(आ१कठ०२।प्र०५।अ०२) इति। अत्राग्ने महानित्यारभ्यासा-वसाविन्त्यन्तः प्रवरमन्त्रः। अवशिष्टा निविन्मन्त्राः। तेषामर्थं ब्राह्मणव्याख्यानमुखेनैव स्पष्टीकरिष्यामः। अत्र प्रवरमन्त्रार्थं दर्शयति "अग्ने महाꣳ असीत्याह महान् ह्येष यदग्निर्ब्रा-ह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति" इति। अग्निरिति यत् एष यस्मात् सर्वाहुत्याधारत्वेन महान् तस्मान्मन्त्रे महानसीत्युच्यते। यस्मात् ब्राह्मणवर्णाभि-मानी तस्मात् ब्राह्मणेति सम्बोध्यते। यस्मादेष देवेभ्यो हव्यं भरति धारयति तस्माद्भारतेति सम्बोध्यते। मन्त्रे येयमसा-वसाविति वीप्सा तेन भृग्वादीनामृषीणां नामनिर्देशोऽभि-प्रेतः। स च भार्गवच्यावनेत्यादिना पूर्वानुवाक एवास्माभि-रुदाहृतः। निवित्पदेषु सप्तसु प्रथमस्यार्थं दर्शयति "देवेद्ध इत्याह देवा ह्येतमैन्धत" इति। यस्मात् देवाः स्वकीयेषु यागेषु एतमग्निमैन्धत प्रज्वालितवन्तः तस्माद्देवेद्ध इत्युच्यते। द्वितीयपदस्यार्थं दर्शयति "मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्ध" इति। देवेभ्य उत्तरो देवैरिन्धनादूर्ध्वं स्वकीय-यागे मनुरैन्ध। उत्तरेष्वपि पञ्चपदेषु प्रसिद्धार्थतां हि-शब्दो द्योतयति "ऋषिष्टुत इत्याहर्षयो ह्येतमस्तुवन् विप्रानुम-दित इत्याह विप्रा ह्येते यच्छुश्रुवाꣳसः कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवाꣳसो ब्रह्मसꣳशित इत्याह ब्रह्मसꣳशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा" इति। शुश्रुवाꣳ-सः श्रुताध्ययनसम्पन्नाः जात्या विप्राः विद्यया विबुधाः कवयश्च

भवन्ति तैरयमनुमदितः तोषितः प्रत्तः स्तुतश्च, ब्रह्मणा मन्त्रेण संशितः तीक्ष्णीकृतः। घृतरूपमाहवनमाहुतिर्यस्यासौ घृताहवनः। अनुच्छ्वासेन पठनीयानां सप्तपदानामर्थं दर्शयित्वोच्छ्वासादूर्द्धं पठनीयानां चतसृणां निविदामर्थं दर्शयति "प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञाना५ रथीरध्वराणामित्याहैष हि देवरथोऽतूर्तो होतेत्याह न ह्येतं कश्चन तरति तूर्णिर्हव्यवाडित्याह सर्व५ ह्येष तरति" इति। यज्ञानां नेतृत्वमग्नौ प्रसिद्धं। रथीर्देवानां हविर्वहनाय, अध्वराणां सम्बन्धी रथोऽयमग्निः, यस्मादाक्रान्तारमेतमग्निं कोऽपि देवो न तरति नातिक्रामति तस्मादयमतूर्तो होतेत्युच्यते। यस्मात् सर्वमपि देवं अयं हविर्वहनात्तरति प्राप्नोति तस्मात् तूर्णिर्हव्यवाडित्युच्यते। एताभ्यश्चतसृभ्यो निविद्भ्य ऊर्द्धमुच्छ्वासं कृत्वा पश्चात् पठनीयानां चतसृणां निविदामर्थं दर्शयति "आस्पात्रं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां चमसो देवपान इत्याह चमसो ह्येष देवपानोऽरा५ इवाग्ने नेमिर्देवा५स्त्वं परिभूरसीत्याह देवा५ ह्येष परिभूर्यद्‌धृयादावह देवान् देवयते यजमानायेति भ्रातृव्यमस्मै जनयेदावह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयति" इति। एषोऽग्निर्देवानां जुहूसदृशः जुह्वामिवास्मिन् हविःप्रक्षेपात्। न चास्य दारुमयजुहूवत् शैथिल्यं। किं त्वास्यात्रं लोहपात्रवद्दृढमित्यर्थः। यथा मनुष्याणां सोमपानहेतुश्चमसः तथा देवानां पानसाधनचमसस्थानीयोऽयमग्निः। हे अग्ने त्वं, यथा शकटचक्रस्थितान् कुशा-

अपक्रमितान् वा तिर्यक्कोलरूपानरान् नेमिः परितो व्याप्नोति, तथा देवानां परिभूः परितो व्याप्तवानसि। चतुर्थ्यां निविदि देवयत इति पदं शाखान्तरे पठ्यते, तदत्र यदि ब्रूयात् तदा होता यजमानस्य भ्रातृव्यं जनयेत्। देवानिच्छतीति देवयत् तस्मै देवयते यजमानाय। एतत्पदप्रयोगेणान्यः कश्चित् एतदीयान् देवानिच्छतीति प्रतिभाति। तदेतत् भ्रातृव्यस्योत्पादनं। तस्मात् तत्पदं परित्यज्यास्मै यजमानाय देवानावहेत्येतावदेव वाक्यशेषात् तेनैव यजमानं वर्धयति वृद्धिं प्रापयति। कल्पः 'देवतां देवतामावाह्य व्यनित्यग्निमग्न आवह सोममावहाग्निमावह प्रजापतिमित्युपांश्वावहेत्युच्चैर्यद्देवत्यो वा भवत्यग्नीषोमावावहेन्द्राग्नी आवहेन्द्रमावह महेन्द्रमावह देवाꣳ आज्यपाꣳ आवहाग्निꣳ होत्रायावह स्वं महिमानमावहेति न स्वं महिमानमावहादावग्ने देवान् वह सुयजा च यज जातवेद इत्युक्त्वा' इति। अत्रावाहननिगदो मन्त्रकाण्डे समाम्नातः सर्वोऽन्यत्र नात्र पठितः। तस्य सर्वस्य तात्पर्यं दर्शयति "अग्निमग्न आवह सोममावहेत्याह देवता एव तद्यथापूर्वमुपह्वयते" इति। तत तेनावाहननिगदे आवहेति पाठेन आज्यभागादिसर्वयागदेवता अनुक्रमेण ह्वयते। हे आहुत्याधारभूताग्ने प्रथमाज्यभागदेवतामग्निमावह। द्वितीयाज्यभागदेवं सोममावह। पौर्णमास्याममावास्यायां च प्रथमपुरोडाशदेवमग्निमावह। पौर्णमास्यामुपांशुयाजदेवं प्रजापतिमावह। प्रजापतिपदं ब्रूने-

इत्यावहेति पदं उच्चैरुच्चारयेत्। पौर्णमास्यां द्वितीयपु-
रोडाशदेवमग्नीषोमरूपमावह। अमावास्यायामसान्नाय्यिनो
द्वितीयपुरोडाशदेवत्वेनेन्द्राग्नी आवह। अगतश्रियः सान्नाय्य-
देवमिन्द्रमावह। गतश्रियो महेन्द्रमावह। आज्यपान् प्रयाजानु-
याजदेवानावह। अग्निं होत्राय होमस्य स्विष्टकृत्त्वकरणाय।
आवाहनविषयाणामुक्तानां देवानां यो यस्य देवस्य स्वकीयो
महिमा सामर्थ्यातिशयस्तं महिमानमावह। अत्र हविर्भुज एव
देवानभिप्रेत्य स्वं महिमानमित्युच्यते, न त्वावाहनकर्तुरग्नेर्म-
हिमानं तस्यावाहनविषयत्वाभावात् इति कल्पसूत्रस्यार्थः।
जातानि वेदांसि ज्ञानानि यस्मादसौ जातवेदाः सर्वज्ञोऽयं
सर्वदेवमहिमाभिज्ञत्वादित्यर्थः। तादृश हे अग्ने त्वं देवाना-
वह च सुयजा शोभनेन यज्ञेन यज च। न केवलमावाहनं
कर्तव्यं किं तु हविःप्रापणलक्षणो यागोऽपि त्वयैव कर्तव्यः।
अत्र सूत्रे प्रजापतिमित्युपांश्वावहेत्युच्चैर्यद्देवत्यो वा भवतीत्युक्तं
तत्रोपांशुयाजे प्रजापतिविष्ण्वग्नीषोमाणां विकल्पाभिप्रायेण
द्रष्टव्यम्। एतस्यावाहननिगदस्य तात्पर्यं संक्षेपेण दर्शयति।
"अग्निमग्न आवह सोममावहेत्याह देवता एव तद्यथापूर्वमु-
पह्वयते" इति। तत् तेनावाहननिगदेनाज्यभागादिस्विष्टकृ-
दन्तदेवताः सर्वाः क्रमेण ह्वतवान् भवति। प्रथमाज्यभागदेवौ
तथा प्रधानदेवता इत्यादिक्रमो यथापूर्वमित्यादिनोच्यते।
आवाहननिगदावसाने यदेतन्निगमनवाक्यं तस्य तात्पर्यं दर्श-
यति "आ चाग्ने देवान् वह सुयजा च यज जातवेद इत्याहा-

ग्निमेव वृणीष्व इत्याह अग्निर्वै देवानां होता य एवं विद्वानग्निं होतारं वृणुते अग्निमेव तद्वृणुते सोऽस्य वृतः देवेभ्यो हव्यं वहति" इति। तत् तेन वाक्यपाठेन अग्निमेव वृणुते तौस्वीकरोति। सोऽग्निस्तौस्वीकृतोऽप्रमत्तः सन् तस्य यजमानस्य हव्यं देवेभ्यः क्रमेण वहति। कल्पः 'अथ स्रुगादापनेन स्रुचावादापयत्य-ग्निर्होता वेत्त्वित्यनुवाकेनाध्वर्युर्जुहूपभृतौ स्रुचावादत्ते' इति। घृतवतीमन्त्रे जुहूपभृतावादायेत्याध्वर्यवसूत्रे दर्शितवान्। होता तु घृतवतीमध्वर्यो स्रुचमास्यस्वेत्यनेन मन्त्रेण युक्तमनुवाकं पठति। तदिदं स्रुचोरादापनं। सोऽयमनुवाकः मन्त्रकाण्डे समाम्नातः। तस्य पाठस्तु "अग्निर्होता वेत्त्वग्निः। होत्रं वेत्तु प्रावित्रं। स्मो वयं। साधु ते यजमान देवता। घृतवतीमध्वर्यो स्रुचमास्यस्व। देवायुवं विश्ववारां। ईडामहै देवाꣳ ईडेन्यान्। नमस्याम नमस्यान्। यजाम यज्ञियान्" (ब्रा०१का०।५प्र०।४अ०) इति। अयमग्निर्होता होमस्य कर्ता। तथा चान्यत्र मन्त्रब्राह्मणे आम्नातं 'अग्ने यष्टरिदं नम इत्याह। अग्निर्वै देवानां यष्टा' इति। अतोऽयमग्निर्वेत्तु होमक्रमं जानातु। तदेव वेदनमुत्तरवाक्येन स्पष्टीक्रियते। प्रकृष्टमवित्रं फलदानरूपमस्य-द्रक्षणं यस्मिन् होमानुष्ठाने तदिदं प्रावित्रं, तादृशं होत्रं होमानुष्ठानं वेत्तु होमक्रमं जानातु। न केवलं दैव्यस्य होतुरग्नेरुपरि भारः प्रक्षिप्यते किन्तु वयं स्मो मनुष्यहोतारो वयमपि अत्र वर्तामहे। अतो वयमपि होमक्रमज्ञानवन्तस्तिष्ठामः। हे यजमान ते तव हविःस्वीकर्त्री देवता साधु फलं ददात्विति शेषः। हे अध्वर्यो घृतपूर्णां स्रुचं जुह्वमास्यस्व

आक्षिप स्वीकुर्वित्यर्थः। कीदृशीं स्रुचं देवायुवं, देवान् यौति मिश्रयतीति देवायुस्तादृशीं। विश्ववारां, विश्वान् सर्वान् राक्षसकृतान् विघ्नान् वारयतीति विश्ववारा तादृशीं। ईडेन्यान् स्तुतिप्रियान् मनुष्यान् वयं स्तुमः। नमस्यान् नमस्कारप्रियान् पितृन् नमस्कुर्मः। यज्ञियान् यज्ञप्रियान् देवान् यजाम। अग्नेर्होतृत्वं वेदेषु प्रसिद्धमित्येतद्दर्शयति "अग्निर्होतेत्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते" इति। दैव्यस्य होतुः सहायमाचरितुं मानुषस्य स्वस्य सद्भाव इत्येतद्दर्शयति "स्मो वयमित्याहात्मानमेव सत्त्वं गमयति" इति। ददात्वित्येतादृशेनाशीरर्थेन वाक्यपूरणाय तात्पर्यार्थं दर्शयति "साधु ते यजमान देवतेत्याहाशिषमेवैता-माशास्ते" इति। शाखान्तरे साधु ते यजमान देवतेत्यस्योपरि 'यो अग्निं होतारमवृथाः' इति किञ्चिद्वाक्यमाम्नातं, तस्या-यमर्थः। हे यजमान यस्त्वमग्निं होतारमवृथाः होतृत्वेन वृत-वानसि तस्य तव साधु ददात्विति। तमिमं शाखान्तरपाठं दूषयति "यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परिगृह्णीयात् प्रमायुकः स्यात्" इति। अग्निर्हो-ता वेत्त्वग्निरित्युपक्रमे पठितं साधु ते यजमानदेवतेत्यस्मादूर्ध्वं यद्यग्निꣳ होतारमिति ब्रूयात् तदोभयोः पार्श्वयोर्यजमानो-ऽग्निना परिगृहीतो भवेत्, ततो दाहाधिक्येन म्रियेत, तस्मात् शाखान्तरपाठो नादर्तव्यः। यद्यपि जुहूपभृतौ द्वे अपि आदर्तव्ये तथापि तयोः समं प्राधान्यं निवार्य जुह्वा एव

प्राधान्यं द्योतयितुं स्रुचमित्येकवचनमेव पठनीयमित्येतद्दर्शयति "यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृद्यद् द्वे इव ब्रूयात् भ्रातृव्यमस्मै जनयेत् घृतवतीमध्वर्यो स्रुचमास्यस्वेत्याह यजमानमेवैतेन वर्धयति" इति। स्रुचाविव्येवं द्विवचनेन द्वे इव द्वे अपि समप्रधाने इव यदि ब्रूयात् तदा यजमानसमानं भ्रातृव्यमुत्पादयेत्। तस्मादुपभृतमुपेक्षितामिव तिरस्कर्तुं जुहूप्राधान्यायैकवचनाभिधानेन यजमानं वर्धितवान् भवति। न हि जुह्वा इवोपभृतः कचिदपि साचाद्धोमसाधनत्वमस्ति तस्मादुपसर्जनत्वं तस्या युक्तं। देवमिश्रेण देवरक्षणं विघ्ननिवारणेन विश्वरक्षणमभिप्रेतमित्येतद्दर्शयति "देवायुवमित्याह देवान् ह्येषाऽवति विश्ववारामित्याह विश्वꣳ ह्येषाऽवति" इति। ईडेन्यादिशब्दैर्विवक्षितं दर्शयति "ईडामहै देवाꣳ ईडेन्यान् नमस्याम नमस्यान् यजाम यज्ञियानित्याह मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञिया देवता एव तद्यथाभागं यजति" इति। देवान् यजतीत्येतदुपलक्षणं मनुष्यान् स्तौति पितॄन् नमस्यतीत्येतदपि द्रष्टव्यम्। एवं च सति यस्य मनुष्यादेर्यो भागः स्तुत्यादिरूपः उपचरितस्तं भागमनतिक्रम्यानुष्ठितवान् भवति।

अथ मीमांसा दशमाध्यायस्य चतुर्थपादे चिन्तितं।

चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति।
विक्रियेत न वाऽऽद्येऽपि किं स्याद्धाज्यपानिति॥
दधिपानिति वा यद्देत्येवं स्यात् पृषदाज्यपान्।

द्रव्यद्वयोक्तेराद्यः स्यात् दधिमात्रहविष्ट्वतः ॥
द्वितीयः स्यात् तृतीयोऽस्तु द्रव्यान्तरविधानतः ।
गुणो दध्ना विचन्ताऽऽज्ये ततो विक्रियते न हि ॥

चातुर्मास्येषु चोदकेनावाहनस्वाहाकारायाज्यानुवाक्येति निगमा अतिदिष्टाः, तत्राज्यपशब्दः प्रयुक्तः। देवाꣳ आज्यपाꣳ आवह स्वाहा देवाꣳ आज्यपान्। अयाड् देवानामाज्यपानां प्रिया धामानि। देवा आज्यपा आज्यमजुषन्तेति। सोऽयमाज्यपशब्दो विक्रियते न वेति संशयः। विकारोऽपि त्रिविधः। तत्र दध्याज्यपान् इत्याद्यस्तावत्प्राप्नोति। कुतः, अथ पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्च दधि चेति द्रव्यद्वयस्योक्तत्वात्। आज्यस्योपस्तरणाभिघारणार्थत्वेन हविःशेषत्वात् हविष्ट्वं नास्तीति दध्येव हविः, ततो दधिपानिति द्वितीयः पक्षः। दध्याज्यमेलनेन निष्पद्यते पृषदाज्यं द्रव्यान्तरं। तदेव हविरिति पृषदाज्यपानिति तृतीयः पक्षः। दधिमेलनादाज्ये पृषत्तागुणो निष्पद्यते। तस्मादाज्यस्यैव हविष्ट्वमित्याज्यपशब्दोपेता एव निगमाः पठितव्याः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

त्रीꣳस्तृचाननुब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति पञ्चदशानुब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रतिष्ठापयति त्रिष्टुभा परिदध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परिगृह्णाति यदि कामयेत ॥ १ ॥

ब्रह्मवर्चसमस्त्विति गायत्रिया परिदध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति सप्तदशानुब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनꣳ स्तोमे प्रतिष्ठापयति जगत्या परिदध्याज्जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून् परिगृह्णात्येकविꣳशतिमनुब्रूयात् प्रतिष्ठाकामस्यैकविꣳशस्तोमानां प्रतिष्ठा प्रतिष्ठित्यै ॥ २ ॥

चतुर्विꣳशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमवरुन्धे त्रिꣳशतमनुब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराजैवास्मा अन्नाद्यमवरुन्धे द्वात्रिꣳशतमनुब्रूयात् प्रतिष्ठाकामस्य द्वात्रिꣳश-

दक्षरानुष्टुगनुष्टुप्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै षट्त्रिंꣳशतमनुब्रूयात् पशुकामस्य षट्त्रिंꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशून् ॥ ३ ॥

अवरुन्धे चतुश्चत्वारिंꣳशतमनुब्रूयादिन्द्रियकामस्य चतुश्चत्वारिंꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभैवास्मा इन्द्रियमवरुन्धेऽष्टाचत्वारिंꣳशतमनुब्रूयात् पशुकामस्याष्टाचत्वारिंꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धे सर्वाणि छन्दाꣳस्यनुब्रूयाद्बहुयाजिनः सर्वाणि वा एतस्य छन्दाꣳस्यवरुद्धानि यो बहुयाज्यपरिमितमनुब्रूयादपरिमितस्यावरुद्ध्यै ॥४॥

कामयेत प्रतिष्ठित्यै पशून् सप्तचत्वारिंꣳशच्च ॥१०॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ * ॥

व्याख्याता नवमे स्पष्टं प्रवरा निविदादयः।

अथ दशमे नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते। तत्र राजन्यं निमित्तीकृत्य विधत्ते "त्रीꣳस्तृचाननुब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति" इति। प्र वो वाजा इत्येका त्रिरावृत्तात्। अग्न आयाहीत्येकस्तृचः। तं त्वा इत्येका परिधानीया त्रिरावृत्ता, एवं त्रयस्तृचाः। तेन त्रयाणां

त्रित्वेन राजन्यव्यतिरिक्तान् ब्राह्मणादीन् त्रीन् वर्णान् राजन्यस्यानुकूलान् करोति। पक्षान्तरं विधत्ते "पञ्चदशानुब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रतिष्ठापयति" इति। प्रजापतेरुरसो बाहुभ्यां च पञ्चदशस्तोमस्य राजन्यस्य चोत्पन्नत्वात् असौ स्तोमो राजन्यस्य स्वकीयः। यद्यपि पञ्चदशसामिधेनीरन्वाहेति वर्णत्रयसाधारणवचनेनैवायं पक्षः प्राप्तः तथापि त्रीꣳस्तृचानित्यनेन विशेषवचनेन नित्यबाधप्राप्तौ विकल्पार्थं पञ्चदशेति प्रतिप्रसवो विधीयते। त्वं वरुण इत्येतां परिधानीयां विधत्ते "त्रिष्टुभा परिदध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परिगृह्णाति" इति। त्रिष्टुभः इन्द्रेण सहोत्पन्नत्वात् तत्सम्बन्धीन्द्रियरूपत्वं राजन्यस्य युयुत्सुत्वात् इन्द्रियसामर्थ्यकामः। राजन्यस्य नित्यां परिधानीयां विधाय काम्यां विधत्ते "यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परिदध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति" इति। आजुहोत दुवस्यतेत्येषा गायत्री। तत्सवितुरित्यस्या गायत्र्या उपदेशेन ब्रह्मवर्चसनिष्पत्तेस्तस्याः गायत्रीरूपत्वं। वैश्यं निमित्तीकृत्य विधत्ते "सप्तदशानुब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनꣳ स्तोमे प्रतिष्ठापयति" इति। 'समिध्यमानो अध्वरे' 'समिद्धो अग्न आहुत' इत्यनयोर्मध्ये 'पृथुपाजा अमर्त्यः' 'तꣳ सबाधो यतस्रुचः' इत्येतयोर्धाय्ययोः प्रक्षेपेण सप्तदशसङ्ख्यानिष्पत्तिः। प्रजापतेर्मध्यदेशात् सप्तदशस्तोमवैश्ययोरुत्पन्नत्वात् सप्तदश-

सोमस्तदीयः। वैश्यस्य 'समिध्यमानो अध्वरस्य राजसि' इत्येतां परिधानीयां विधत्ते "जगत्या परिदध्याज्जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून् परिगृह्णाति" इति। जगत्यनुष्ठानसम्बन्धात् पशूनां जागतत्वं। वैश्यस्य क्षीरदध्यादिविक्रयाय पशुकामत्वं प्रसिद्धं। नैमित्तिकीं विधाय काम्यां विधत्ते "एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्यैकविंशस्तोमानां प्रतिष्ठा प्रतिष्ठित्यै" इति। अत्र सङ्ख्यापूरणं सम्प्रदायविद्भिरेवमुक्तं। एकविंशत्यादिषु प्रथमाया उपरि द्वे ईडे अग्निमित्यादिके, अथाग्न आयाहीत्यादि अग्र त्वामग्ने पुष्करा दधीति चयस्तृचाः। अग्निमग्निमित्येकादश। पृथुपाजा इत्यष्टौ। अष्टाचत्वारिंशत्पञ्च*दाशतय्यास्तिस्र आम्नायितव्याः। एकविंशत्यादिषु कार्येषु एतासां यथार्थमागम इति। अस्यायमर्थः। यदा सामिधेनीष्टद्भिरपेक्षिता तदाऽऽम्नाताया: प्र वो वाजा इत्यस्या उपरि ईडे अग्निमित्यादिकं द्वयं प्रक्षेपणीयं, तत ऊर्द्धमग्न आयाहीत्यादिकं यथाम्नातं पठितं, तत्र समिध्यमानसमिद्धवत्योर्मध्ये त्वामग्न इत्यादिका उदाहृताः प्रक्षेपणीयाः। यावतीनां प्रक्षेपेण सङ्ख्या पूर्य्यते तन्मात्रवतीनां† प्रक्षेप इति। मीमांसकास्तु‡ धाय्यासञ्ज्ञकानामेव समिध्यमानसमिद्धवत्योर्मध्ये प्रक्षेपः इतरासां त्वन्ते प्रक्षेपमाहुः। तथापि परिधानीयाया उत्तमायाः प्रा-

* अष्टाचत्वारिंशत्पञ्चदशस्येति तै०। † तन्मन्त्रीनामिति तै०।
‡ धाय्यासंज्ञकानामिति तै०।

णेवेत्ययं विशेषो द्रष्टव्यः। त्रिवृत्पञ्चदशसप्तदशानां मध्ये चतुर्थ एकविंशस्तोमे अन्तर्भवतीति स स्तोम इतरेषां स्तोमानां प्रतिष्ठा। फलान्तराय विधत्ते "चतुर्विꣳशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमवरुन्धे" इति। पुनरपि फलान्तराय विधत्ते "त्रिꣳशतमनुब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमवरुन्धे" इति। दशाक्षरैस्त्रिभिः पादैर्विराजस्त्रिंशदक्षरत्वं, तच्छन्दोऽनुष्ठानेनान्नस्य लभ्यत्वात् तस्य छन्दसोऽन्नत्वं। पुनः फलान्तराय विधत्ते "द्वात्रिꣳशतमनुब्रूयात् प्रतिष्ठाकामस्य द्वात्रिꣳशदक्षरानुष्टुगनुष्टुप् छन्दसां प्रतिष्ठा प्रतिष्ठित्यै" इति। अन्यत्र वाग्वा अनुष्टुगिति श्रवणात् वाग्रूपत्वमनुष्टुभः। वाचि सर्वेषां छन्दसामन्तर्भावात् अनुष्टुप् इतरच्छन्दसां प्रतिष्ठा। पुनः फलान्तरं विधत्ते "षट्त्रिꣳशतमनुब्रूयात् पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्धे" इति। पशूनां बृहतीछन्दसोऽनुष्ठानेन लभ्यत्वाद्बार्हतत्वं। फलान्तराय विधत्ते "चतुश्चत्वारिꣳशतमनुब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभैवास्मा इन्द्रियमवरुन्धे" इति। पुनः फलान्तराय विधत्ते "अष्टाचत्वारिꣳशतमनुब्रूयात् पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धे" इति। सोमयाजिनं निमित्तीकृत्य विधत्ते "सर्वाणि छन्दाꣳस्यनुब्रूयाद्बहुयाजिनः सर्वाणि वा

एतस्य छन्दांꣳस्यवरुद्धानि यो बहुयाजी" इति। बहुभिर्दीक्षणीयादिभिरिष्टिभिरग्नीषोमीयादिपशुभिरैन्द्रवायवादिग्रहैश्च यजत इति बहुयाजी। एतस्य बहुयाजिनः सवनत्रये गायत्र्युष्णिगनुष्टुप्जगतीरूपाणि सर्वाणि छन्दांस्यवरुद्धानि भवन्ति। तस्मात् सोमयाजी यदा दर्शपूर्णमासावनुतिष्ठति तदा तस्य त्रीणि छन्दांस्यनुब्रूयात्। समिध्यमानः प्रथमोऽनुधर्म इत्येषा त्रिष्टुप्। त्वामग्ने प्रदिव आहुतं घृतेनेत्येषा जगती। एतद्द्वयं समिद्धवत्याः पूर्वं पठनीयं। तस्य सोमयाजिनः त्रीꣳस्तृचानित्यनुवाके अष्टाचत्वारिꣳशतमनुब्रूयादित्यत्र यः सङ्ख्याविशेषस्तत्र स्वेच्छैव नियामिका न तु वाचनिको नियमोऽस्तीत्येतदभिप्रेत्य "अपरिमितमनुब्रूयादपरिमितस्यावरुद्ध्यै" इति। अपरिमितस्याधिकस्य फलस्येत्यर्थः।

अथ मीमांसा। तृतीयाध्यायस्य षष्ठपादे चिन्तितं।

> सामिधेनीः सप्तदश प्रकृतौ विकृतावुत।
> पूर्ववत् प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते॥
> विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात्।
> पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः॥

अनारभ्य श्रूयते 'सप्तदश सामिधेनीरनुब्रूयात्' इति। प्र वो वाजा अभिद्यव इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः, तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतं। यदि प्रकृतौ पञ्चदश सामिधेनीरन्वाहेति विधिः स्यात् तर्हि पाञ्चदश्यं साप्तदश्यञ्च विकल्प्येयातामिति प्राप्ते ब्रूमः। विकृतावेव साप्तदश्यं निविशते.

प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां सङ्ख्याकाङ्क्षाया अभावात्। न च पाञ्चदश्यसाप्तदश्यवाक्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयं, पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात्। तस्मात् मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते। न चात्र पूर्वन्यायोऽस्ति। साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधानदोषाभावात्।

तत्रैवान्यच्चिन्तितं।

साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत।
पूर्ववत्तेन सङ्कोचान्नित्ये नैमित्तिकोक्तितः॥
गोदोहनेन प्रणयेत् कामीत्येतदुदाहरत्।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः॥

'सप्तदशानुब्रूयाद्वैश्यस्य' इति विहितं वैश्यनिमित्तं साप्तदश्यं। पूर्वन्यायेन विकृतिगामीति चेत्। मैवं, नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया सङ्कोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलं नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलं, तस्माद्वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते। अत्र भाष्यकारोऽन्यदुदाजहार 'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य' इति। तत्र प्रकृतेश्चमसेनावरुद्धत्वात् गोदोहनं विकृताविति पूर्वः पक्षः। कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनमिति सिद्धान्तः।

द्वशमाध्यायस्याष्टमपादे चिन्तितं।

सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः।
संहतिर्वोपकारश्च क्रुप्ताद्यास्वाज्यभागवत्॥
सामिधेन्यश्चोदकाप्ताः साप्तदश्यन्तु वैमृधे।
पुनर्वाक्येन संधार्यमनारभ्योक्तिचोदितं॥

अनारभ्य किञ्चिदाम्नायते 'सप्तदश सामिधेनीरनुब्रूयात्' इति। तथा वैमृधेऽध्वरकल्पायां पशौ मित्रविन्दायामाग्रयणेष्यादौ च पुनः साप्तदश्यं विहितं। यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथापि श्रुतेन पाञ्चदश्येनावरुद्धत्वात् विकृतिष्वेतन्निविशते। तथा सति वैमृधादिविकृतिषु अनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना दर्शपूर्णमासयोराज्यभागवत् क्लृप्तोपकारकत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यः वैमृधादेरपूर्वकर्मतां गमयन्ति। साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः। वैमृधादिषु सामिधेन्य आज्यभागवन्न विधीयन्ते किन्तु चोदकप्राप्तास्ता अनूद्य साप्तदश्यं विधीयते। तत्र साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तमनारभ्यवादेन तु सर्वासु विकृतिषु, तथानारभ्यवादो विलम्बते। प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसम्बन्धमवबोध्य तत्सम्बन्धस्यान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इति विलम्बः। प्राकरणिकैर्विधिभिः सामिधेनीसम्बन्ध एव बोधनीयः क्रतौ तद्विशेषे च प्रवेशो न बोध-

नीयः। प्रत्यक्षप्रकरणपाठेनैव तत्सिद्धेः। तत्र साप्तदश्यस्य वैमृ-
धादिविकृतिविशेषसम्बन्धे वचसा प्रतिपन्ने सति तद्विरोधी वि-
कृतिसम्बन्धो न कल्पयितुं शक्यः। अनारभ्यवादस्तु वैमृधादिषु
प्राप्तस्य नित्यानुवादोऽस्तु। यद्वा प्रकरणविधिर्वैमृधादिषु
साप्तदश्यस्य प्रापकः। अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चद-
श्यस्य बाधकः। सर्वथापि चतुर्धाकरणवत् उपसंहारो न
त्वाज्यभागवत् अपूर्वं कर्म।

तत्रैव पञ्चमपादे चिन्तितं।

सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत।
आगमः पूर्ववन्नैवमभ्यासप्रकृतित्वतः॥
तत्राप्याद्यं तयोर्यावत् पूर्त्यभ्यासो यथोक्ति वा।
अभ्यस्यागमतः पूर्त्तिः पूरणार्थत्वतोऽग्रिमः॥
त्रित्वं न पूरणायोक्तमन्यथाप्यत्र पूरणात्।
विवक्षितमबाधित्वा भवेत् पूरणमागमात्॥

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय काम्या तद्वृद्धि-
र्विधीयते 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यादिना।
यथा वर्द्धिष्यमाण ऋगागमस्तथाभ्यासोऽपीति प्राप्ते ब्रूमः।
एकादशभिः पठिताभिः पञ्चदशसंख्याया अपूर्तौ ऋगन्त-
रागमनेन तत्पूरणं न कृतं, किन्तु तत्पूरणायाभ्यासो
विहितः। त्रिः प्रथमामन्वाह त्रिरुत्तमामिति। अतः काम्या-
नामप्यभ्यासेन पूरणं युक्तं। अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे
सति एकविंशतिसंख्या पूर्यते तावत्कृत्वः प्रथमोत्तमे अभ्यस-

नीये। कुतः विहितस्य त्रिरभ्यासस्य पूरणार्थत्वदर्शनात्। मैवं, न हि त्रित्वं पूरणार्थं विहितं। प्रथमाया त्रिरभ्यासेन उत्तमायाश्चतुरभ्यासेन पञ्चदशसङ्ख्यापूरणात्। अतो विवक्षितं त्रित्वं। तथा सति तदबाधाय प्रथमोत्तमे त्रिरभ्यस्य षण्णामृचामागमेनैकविंशतिसङ्ख्या पूरणीया ॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ * ॥

---

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते तिष्ठन्नन्वाह तिष्ठन्ह्याश्रुततरं वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रतितिष्ठति यत् क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत् सदेवमन्तरानूच्यꣳ सदेवत्वाय विद्वाꣳसो वै ॥ १ ॥

पुरा होतारोऽभूवन् तस्माद्विधृता अध्वानोऽभूवन्न पन्थानः समरुच्यन्तान्तर्वेदिः पादौ भवति बहि-

वैधन्ये॒ऽस्याम्बाह्वाध्वनां विधृत्यै पथामसंरोहा-याथो भूतश्चैव भविष्यच्चावरुन्धेऽथो परिमितश्चैवा-परिमितश्चावरुन्धेऽथो ग्राम्यांश्चैव पशूनारण्यांश्चा-वरुन्धेऽथो ॥ २ ॥

देवलोकश्चैव मनुष्यलोकञ्चाभिजयति देवा वै सा-मिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णी-माघारमाघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्या अथो सामिधेनीरेवाभ्यनक्त्यलूक्षो भवति य एवं वेदाथो तर्पयत्येवैनास्तृप्यति प्रजया पशुभिः ॥ ३ ॥

य एवं वेद यदेकयाघारयेदेकां प्रीणीयाद्द्वाभ्यां द्वे प्रीणीयाद्यत् तिसृभिरति तद्रेचयेन्मनसाघारयति मनसा ह्यनाप्तमाप्यते तिर्यञ्चमाघारयत्यच्छम्बट्कारं वाक् च मनश्चार्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैतां सोऽब्रवीत् ॥ ४ ॥

प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्या-यति तद्वाचा वदतीति तत् खलु तुभ्यं न वाचा जुह-वन्नित्यब्रवीत् तस्मान्मनसा प्रजापतये जुह्वति मन इव

हि प्रजापतिः प्रजापतेराप्त्यै परिधीन्त्सम्मार्ष्टि पुना-त्येवैनान् त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभिज-यति त्रिर्दक्षिणार्ध्यं त्रयः ॥ ५ ॥

इमे लोका इमानेव लोकानभिजयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति त्रिरुपवा-जयति त्रयो वै देवलोका देवलोकानेवाभिजयति द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्या आघारमाघारयति तिर इव ॥ ६ ॥

वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्ररोचयत्यृजु-माघारयत्यृजुरिव हि प्राणः सन्ततमाघारयति प्रा-णानामन्नाद्यस्य सन्तत्या अथो रक्षसामपहत्यै यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याघारयेत् प्रा-णमेवास्माज्जिह्मं नयति ताजक् प्रमीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा ॥ ७ ॥

आघारमाघार्य ध्रुवां समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रतिदधात्यग्निर्देवानां दूत आसीद्दैव्योऽसुरा-णां तौ प्रजापतिं प्रश्नमैतां स प्रजापतिर्ब्राह्मणमब्र-वीदेतद्विब्रूहीत्याश्रावयेतीदं देवाः शृणुतेति वाव

तदब्रवीदग्निर्दैवो होतेति य एव देवानां तमवृणीत ततो देवाः ॥ ८ ॥

अभवन् परासुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना परास्य भ्रातृव्यो भवति यद्ब्राह्मणश्चा-ब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयाद्यद्ब्राह्मणा-याध्याहात्मनेऽध्याह यद्ब्राह्मणं पराहात्मानं पराह तस्माद्ब्राह्मणो न परोच्यः ॥ ९ ॥

वा आरण्यांश्चावरुन्धेऽथो पशुभिः सोऽब्रवीद्दक्षि-णाधं वय इव भुवा देवाश्चत्वारिंशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चम-प्रपाठके एकादशोऽनुवाकः ॥ * ॥

नैमित्तिक्यः सामिधेन्यः काम्याश्च दशमे श्रुताः ।

अथैकादशे सामिधेनीषु होतुर्नियमविशेषोऽध्वर्योराचारा-दिविशेषश्चाभिधीयते। तत्रादौ तावत् यागकर्तॄणामुपवीतं विधातुं प्रस्तौति "निवीतं मनुष्याणां प्राचीनावीतं पितॄणामु-पवीतं देवानाम्" इति। यदोभावपि बाहू न्यग्भूतौ संतौ कण्ठ-लम्बेन वस्त्रेण वा वीयेते संवृतावाच्छादितौ क्रियेते तन्निवीतं।

तच्च मनुष्याणां कार्येषु प्रशस्तं। तस्मादृषितर्पणं निवीतयुक्तैः पुरुषैरनुष्ठीयते। प्राचीनो दक्षिणो बाहुरावीयते प्रधानात् क्रियते यच्च तत्प्राचीनावीतं। तच्च पितॄणां कर्मणि प्रशस्तं। अतएव शिष्टाः प्राचीनावीतयुक्ताः पिण्डदानं कुर्वन्तीति। उपवीतस्य लक्षणं स्वाध्यायब्राह्मणे समाम्नातं 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्' इति। तच्च देवानां कर्मणि प्रशस्तं। अतएव शिष्टाः स्वाध्यायादिकं तथैवाचरन्ति। इदानीं विधत्ते "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति। तत् तेनोपवीतेन देवलक्ष्ममेव देवचिह्नमेव कृतं भवति। यागकर्तॄणामुपवीतं विधाय होतुः सामिधेन्यादनुवचनकाले स्थितिं विधत्ते "तिष्ठन्नन्वाह तिष्ठन्वा अनुततरं वदति" इति। आसीनो नानुब्रूयात् किंतु तिष्ठन्नेव ब्रूयात्। तस्मात्तिष्ठन् मनुष्यः आ समन्तादतिशयेन श्रुतं यथा भवति तथा वदितुं प्रभवति, तस्मात्तिष्ठन्ननुब्रूयात्। तदेवानूद्य प्रशंसति "तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्यै" इति। आसनादुत्थितस्य प्रत्यासन्नः स्वर्गः तस्मात्तस्याभिजित्यै सम्पद्यते। याज्याकाले उपवेशनं विधत्ते "आसीनो यजत्यस्मिन्नेव लोके प्रतितिष्ठति" इति। यजति याज्यां पठेदित्यर्थः। चालनस्य चलनाभावात् अत्र प्रतिष्ठा। अत्युच्चध्वनिमतिनीचध्वनिं चापवदन् मध्यमध्वनिं विधत्ते "यत्क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं मानुषं तदन्तरा तत् यदेवमन्वाहाभूयः सदेवत्वाय" इति। यथा क्रौञ्चाख्यः पक्षिविशेषः उच्चध्वनिं करोति तस्मादुच्चैः सति आसुरं भवेत्।

मनुष्यास्तूपविश्य मन्द्रस्वरेण संभाषन्ते। अतः सोऽपि वर्ज्यः। मध्यमध्वर्देवप्रियत्वात् तदेवानुवचनं कार्यं। अपरं कश्चिद्विशेषं विधत्ते "विद्वाꣳसो वै पुरा होतारोऽभूवन् तस्माद्विधृता अध्वानोऽभूवन्न पन्थानः समरुच्छन्नन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽथान्वाहाध्वनां विधृत्यै पथामसꣳरोहाय" इति। मूढः कश्चिद्धोता वेदेर्बहिरेव पादद्वयमवस्थाप्यानुब्रूते, तस्य पादद्वयस्थापनान्मार्गः सङ्कीर्णो भवति। अपरस्तु मूढः पादद्वयं वेदिमध्ये एव प्रक्षिप्यानुब्रूते, स तु मार्गं न जानाति, तदिदं दोषद्वयं विद्वांसः केचित् कुशलाः पुरा यज्ञेषु होतारोऽभूवन्, ते च दक्षिणं पादं बहिर्न प्रक्षिपन्ति, तेन तेषामध्वानो विस्तीर्णत्वेन धृता भवन्ति। वामपादमन्तर्न प्रक्षिपन्ति किन्तु बहिरेव स्थापयन्ति, तेन बहिःस्थापनेन पन्थानः तान् विदुषः पुरुषान् नैव समरुन्धन् संरोधं न कृतवन्तः। अन्यो मार्गः, अन्यत्र च गच्छन्ति इत्येतादृशो मार्गभ्रंशो मार्गकृतः संरोधः। सोऽप्येषां नासीत्। तस्मात् पुरातनविद्वांस इवायमपि दक्षिणं पादं वेदेरन्तः प्रक्षिपेत्। वामपादं बहिः प्रक्षिपेत् ततोऽनुब्रूयात्। एवं च सत्यध्वनां विस्तीर्णत्वेन धारणं भवति, पथि विषये संरोधश्च न भवति। परस्परविलक्षणं पादविन्यासं बहुधा प्रशंसति "अथो भूतं चैव भविष्यच्चावरुन्धेऽथो परिमितं चैवापरिमितं चावरुन्धेऽथो ग्राम्याꣳश्चैव पशूनारण्याꣳश्चावरुन्धेऽथो देवलोकं चैव मनुष्यलोकञ्चाभिजयति" इति। चतुर्ष्वप्येतेषु पर्यायेषु प्रथमेनान्तःपादप्रशंसा द्वितीयेन बहिःपादप्रशंसेति द्रष्टव्यं। त-

इत्थं सामिधेनीषु विशेषनियमा शेषाः समापिताः, अथा-ध्वर्यवमाघारं विधत्ते "देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन् स प्रजापतिस्तूष्णीमाघारमाघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै" इति। पूर्वं देवाः सामिधेनीरनूच्य तदर्थेषु नियमविशेषेषु व्यापृतमनस्काः सन्तः उपरितनयज्ञगतं कर्तव्यविशेषं कञ्चिदपि नैव स्मृतवन्तः। ततः प्रजापतिर्मन्त्रं कमप्यनुच्चार्य तूष्णीमेव स्रुवमाघारमनुष्ठितवान्, तावता कालेन देवाः सामिधेनीषु विक्षिप्तं चित्तं समाधाय एकाग्रेण मनसा यज्ञगतकर्तव्यविशेषमनुस्मृतवन्तः। अतोऽद्यापि तूष्णीमनुष्ठितः प्रथमाघारानन्तरभाविनो यज्ञकर्तव्यानुस्मरणाय भवति। यद्यपि पौरोडाशिककाण्डे वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयतीति अय-माघारो विहितः, तथापि तूष्णींभावादयो गुणविशेषा न विहिता इति नास्ति पुनरुक्तिः। तमेवाघारं प्रशंसति "अथो सामिधेनीरेवाभ्यनक्ति" इति। न केवलमनन्तरभावियज्ञकर्तव्यप्रतिभानमाघारस्य प्रयोजनं किन्तु वह्नौ प्रक्षिप्तानां सामिधेनीकाष्ठानामभ्यञ्जनमप्येकं प्रयोजनं। एतद्वेदनं प्रशंसति "अ-रूक्षो भवति य एवं वेद" इति। उक्ताभ्यञ्जनाभिज्ञः स्वयमरूक्षः पारुष्यरहितः स्नेहोपेतो भवति। आघारमेव पुनः प्रशंसति "अथो तर्पयत्येवैनाः" इति। क्रियमाणेनाघारेणैनाः सामिधेन्यभिमानिदेवतास्तर्पयति। एतदीयतृप्तिवेदनं प्रशंसति "तृप्यति प्रजया पशुभिर्य एवं वेद" इति। वक्तुं वषट्कारेण 'स्रुवेण

ध्रुवाया आज्यमादाय वेदेनोपयम्यासीन उत्तरं परिधि-सन्धिमन्ववहृत्य प्रजापतिं मनसा ध्यायन् दक्षिणाप्राञ्चमृजुं सन्ततं ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्मकाष्ठानि संस्पर्शयति' इति। वेदेनोपयम्य स्रुवस्याधस्ताद्वेदं धारयित्वा उत्तरं परिधिसन्धिमन्ववहृत्य वायवीये सन्धौ स्रुवयुक्तहस्तमन्तःप्रसार्य ज्योतिष्मति वह्नौ घृतं धारयन् तत् घृतं सर्वसामिधेनीकाष्ठस्पृष्टं कुर्यादित्यर्थः। तत्र मनसा प्रजापतेर्यत् ध्यानं तदेतद्विधत्ते "यदेकयाघारयेदेकां प्रीणीयाद्यद्वाभ्यां द्वे प्रीणीयाद्यत् तिसृभिरति तद्रेचयेन्मनसाघारयति मनसा ह्यनाप्तमाप्यते" इति। यद्येकामृचं पठित्वाघारयेत् तदानीमेकैव सामिधेनी तृप्ता भवेत्। द्वाभ्यामृग्भ्यां द्वे एव तृप्ते भवेतां। त्रिप्रभृतिभिर्ऋग्भिः आघारं यदि कुर्यात् तेनायमाघारः सर्वाणि कर्माण्यतिरिक्तवान् भवति, एकस्य हि कर्मणः एकैव ऋक् प्राप्ता, तथा सति बहुभिरनुष्ठानमतिरेकः। तस्य सर्वस्य दोषस्य परिहाराय मनसैवाघारयेत् मनसोऽप्रतिहतगतित्वात्। यद्वागादिभिर्न प्राप्तं तत् सर्वं मनसा प्राप्तुं शक्यते। दक्षिणाप्राञ्चमित्युदाहृते सूत्रे वायवीं दिशमारभ्याग्नेय्यां समापनमुक्तं। स एव सूत्रकारः आघारयोः पुनरपि द्वे पक्षान्तरे दर्शितवान्। 'ऋजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा' इति। तत्र तिर्यक्पक्षं विधत्ते "तिर्यञ्चमाघारयत्यच्छम्बट्कारं" इति। दक्षिणां दिशमारभ्य उत्तरस्यां समापनं तिर्यक्त्वं। प्रतीच्यामारभ्य प्राच्यां समापने सति ऋकस्या एव

समिध उपरि घृतं पतेत् तथा सति समिदन्तराणामस्पर्शात् छम्बट्कारो वैयर्थ्यं भवेत्। तस्मादच्छम्बट्कारं यथा भवति तथा होतव्यं। तिर्यक्त्वे सति सर्वसमित्संस्पर्शात्, वैयर्थ्यं न भवति। मनसाघारयतीति यद्विहितं तदेव पुनः प्रशंसति "वाक् च मनश्चार्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत् प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत् खलु तुभ्यं न वाचा जुहवन्नित्यब्रवीत् तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै" इति। आर्तिररतिभयः तामिच्छेतां। सैवार्तिः स्पष्टीक्रियते अहं देवेभ्यो हव्यं वहामीति वाक्येन, ततो वाक् च मनश्चार्त्येते। हविर्वहननिर्णयाय प्रश्नं कर्तुं प्रजापतिं प्राप्तौ, स प्रजापतिर्वाचमब्रवीत्। हे वाक् त्वं मनसः दूतीरेवासि दासीभूतैवासि न तु स्वतन्त्रा। तत्कथमित्युच्यते, यस्माल्लोके पुरुषो यत् पूर्वं मनसा ध्यायति तत् पश्चाद्वाचा वदति। तस्माद्वाचो दूतीत्वमेवेति। अनन्तरं क्रुद्धा वाक् अब्रवीत्, हे प्रजापते यद्यहं दूती तर्हि तुभ्यं कोऽपि वाचा मा जुहोत्विति। तस्मात् आघारं प्रजापतये मनसा जुह्वति। यथा मनः सङ्कल्पेन कार्यं साधयति तथा प्रजापतिरपि। अतः सादृश्यात् मनसा होमः प्रजापतेराप्त्यै भवति। यदुक्तं सूत्रकारेण 'इध्मसन्नहनैः सह स्रुवेऽर्थते स्रुचौ वा आग्नीध्रोऽनुपरिक्रामन् परिधीन् यथापरिधि तमभ्यर्चं चित्रिः संस्पृश्य' इति। तदेतत्

संमार्जनं स्फ्येनसहितैरिध्मसन्नहनदर्भैः कर्तव्यमिति विधत्ते "परिधीन्त्संमार्ष्टि पुनात्येवैनान्" इति। क्रमेणैकैकस्य परिधेः सम्मार्जनावृत्तिं विधत्ते "त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभिजयति त्रिर्दक्षिणार्धं त्रय इमे लोका इमानेव लोकानभिजयति त्रिरुत्तरार्धं त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति" इति। प्राणापानव्याना इति त्रित्वं। लोकत्रित्वं प्रसिद्धं। स्वर्गलोकयमलोकब्रह्मलोकविषयाः त्रयः पन्थानः, तत्र यमलोकविषयस्य परिहारो जयः, इतरयोः प्राप्तिर्जयः। त्रित्वसाम्यात् तज्जय इति स्तूयते। यदुक्तं सूत्रकारेण 'वेदेनाग्निं त्रिरुपवाज्य' इति तदेतद्विधत्ते "त्रिरुपवाजयति त्रयो वै देवलोका देवलोकानेवाभिजयति" इति। देवलोकानां त्रित्वं तदभिजयश्च मार्गत्रयवद्व्याख्येयं। त्रिषु परिधिषु वह्नौ च येयं प्रत्येकं त्रिः क्रियावृत्तिः तामेकीकृत्य प्रशंसति "द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्यै" इति। न केवलं संवत्सरदेवतायाः प्रीतिः किन्तु तत् संवत्सरं यजमानार्थं कर्मानुष्ठानकालत्वेन सम्पादयति, तच्च स्वर्गलोकप्राप्त्यै भवति। पूर्वत्र विहितं तिर्यग्माघारमनूद्य प्रशंसति "आघारमाघारयति तिर इव वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्ररोचयति" इति। प्राङ्मुखेन यजमानेन दृश्यमानः स्वर्गो लोको दक्षिणोत्तरायामेन प्रतीयमानत्वात् तिर इव भवति। अतस्तिर्यगाघारेण यज-

मानाय स्वर्गमुत्पादितवान् भवति। अथवा सुच्याघा-रस्य द्वितीयस्यायं विधिर्द्रष्टव्यः। आघारे गुणान्तरद्वयं विधत्ते "ऋजुमाघारयत्यृजुरिव हि प्राणः सन्ततमाघारयति प्राणानामन्नाद्यस्य सन्तत्या अथो रक्षसामपहत्यै" इति। दक्षिणां दिशमारभ्य उत्तरदिगवसानपर्यन्तं आघारधाराया वक्रत्वं यथा न भवति यथा च विच्छेदो न भवति तथा कुर्यात्। प्राणवायुश्च हृदयमारभ्य मुखे निःसरन् वाम-दक्षिणपार्श्वयोरप्रवेशेन ऋजुरेव भवति सन्ततश्च भवति। अतः प्राणस्यान्नस्य च सन्तत्यै सम्पद्यते, किञ्च सान्तत्येन रक्षसामव-काशाभावात् अपहतिर्भवति। ऋजुत्वस्य नित्यप्रयोगाङ्गत्वात् काम्यत्वेन वक्रत्वं विधत्ते "यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याघारयेत् प्राणमेवास्माज्जिह्मं नयति ताजक् प्रमी-यते" इति। यं यजमानमुद्दिश्य मरणं कामयेत तस्य जिह्मं वक्रं यथा भवति तथाघारयेत् तेन वक्रत्वेनास्मात् यजमानात् प्राणं वामादिपार्श्वादिनाडीषु प्रविश्य वक्रत्वं प्रापयति। तेन श्वासोपरोधेन तदानीमेवासौ म्रियते। आघारशेषेण ध्रुवाया-भञ्जनं विधत्ते "शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा आघारमाघार्य ध्रुवाꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति-दधाति" इति। स्वात्मस्थानीयायां ध्रुवायां यज्ञशिरः-स्थानीयस्याघारस्य प्रक्षेपे सति स्वस्मिन्नेव यज्ञशिरः स्थापित-वान् भवति। ननु परिधिसम्मार्जनादयः पौरोडाशिककाण्डे-ऽपि विहिताः। बाढं। तत्र ह्यनुक्रमेण मन्त्राणां व्याख्यायमान-

त्वात्। भुवनमसीत्यादिमन्त्रव्याख्यानावसरे युक्ता एतद्विधयः।
इह तु तदनुवादेन प्रत्यभिज्ञाप्य तेष्वजुत्वादयो गुणविशेषाः वि-
धीयन्ते। ततो नास्ति पुनरुक्तिदोषः। अत एवोक्तानुवादकत्वाद-
नुब्राह्मणमेतदिति सम्प्रदायविदः। यदुक्तं सूत्रकारेण "*ऊर्द्ध-
स्तिष्ठन् होतारं वृणीतेऽग्निर्देवो होता देवान् यचद्विद्वाꣳ-
श्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः'
इति। 'इत ऊर्द्धानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता' इति च। अ-
स्यायमर्थः। यजमानस्य यादृशान्यार्षेयाणि तादृशानि होतारं
प्रति अमुवदमुवदिति तत्तन्नामपुरःसरं प्रयोक्तव्यानि। तदिद-
मध्वर्युकर्तृकं होतृविषयं वरणं, सामिधेनीप्रस्तावे त्वार्षेयं वृणीत
इति होतृकर्तृकमग्निविषयं वरणमुक्तं, तयोरयं विशेषः।
अर्वाञ्चमारभ्य इत ऊर्द्धानुत्तरोत्तरानध्वर्युर्वृणीते। होता तु
उत्तममारभ्याधस्तनान् वृणीते। तद्यथा। भार्गवच्यावनाप्न-
वानौर्वजामदग्न्येत्येवं होतृकर्तृकं पूर्वमुदाहृतं। अध्वर्युकर्तृके
तु मनुष्वद्भरतवदित्यन्तं मन्त्रं पठित्वा जमदग्निवदूर्ववदप्न-
वानवच्च्यवनवद्भृगुवदिति प्रयोक्तव्यमिति। तदिदमध्वर्युकर्तृकं
होतृविषयं वरणं विधत्ते "अग्निर्देवानां दूत आसीद्दैव्योऽसु-
राणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदेत-
द्विब्रूहीत्याश्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो
होतेति य एव देवानां तमवृणीत ततो देवा अभवन् परा-
सुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना परास्य भ्रा-

* ऊर्द्धमासीनं होतारमिति तै०।

हव्यो भवति" इति। द्विविधो ह्यग्निः मानुषो दैव्यश्चेति। भूलोके वर्तमानो होमसाधनभूतो मानुषोऽग्निः। स च देवानां हविर्वहनेन तदीयो दूत आसीत्। दिवि वर्तमानो दैव्यः, स चान्यत्रापि श्रूयते 'दिवानाको नामाग्निः। तस्य विप्रुषो भागधेयं' इति। स चासुराणां हितमाचरन् तदीयो दूत आसीत्। तावुभावावयोः कस्य दौत्यमुचितमिति प्रश्नमभिलक्ष्य प्रजापतिं प्राप्तुतां। तत्र योऽयं मानुषोऽग्निः स ब्राह्मणः, ब्रह्मणि वेदे विहितं कर्म साधयितुं प्रवृत्तत्वात्। दैव्यस्तु असुराणां कर्म साधयितुं प्रवृत्तत्वादासुर इत्युच्यते न तु ब्राह्मण इति। तयोर्मध्ये ब्राह्मणमग्निं प्रति प्रजापतिरब्रवीत्। हे मानुषाग्ने त्वमेव दूत्यमर्हसि तस्मात् त्वमेव यागे वक्तव्यमेतत् सर्वं ब्रूहीति। किं तत् सर्वमिति तदुच्यते। होतारं प्रत्यध्वर्युराश्रावयेति प्रयुङ्क्ते। तस्य प्रयोगस्याभिप्रायः कथ्यते। हे देवाः इदं यजमानसम्बन्धि हविर्दानं शृणुतेत्येतमर्थमेव होतर्ब्रूहीत्यभिप्रेत्य तदाश्रवणवाक्यं हे होतस्त्वां प्रत्यध्वर्युरब्रवीत्। तस्मात् त्वमेव याज्यापाठमुखेन देवानां श्रवणं यथा भवति तथा हौत्रमेतत् सर्वं त्वमेव ब्रूहीति। आसुरं प्रत्यध्वर्युणाश्रावयेत्यनुक्तत्वादसौ याज्यादिकं मा ब्रवीदित्यभिप्रायः। यस्मात् प्रजापतिर्ब्राह्मणाग्निवरणं कृतवान् तस्माद्देवा उत्कृष्टा अभवन्, पराभूता असुराः। प्रशंसति "यद्ब्राह्मणस्याब्राह्मणस्य प्रश्नमेयातां ब्राह्मणायाधिब्रूयाद्यद्ब्राह्मणायाध्याहात्मनेऽध्याह यद्ब्राह्मणं पराहात्मानं पराह तस्माद्ब्राह्मणो न

परोक्ष्यः" इति। यदि लोके ब्राह्मणाब्राह्मणौ विवदमानौ अहमेवाधिक इति अधिविषयं प्रश्नं कर्तुं कञ्चिदभिज्ञं प्रत्यागच्छेतां तदानीं सोऽभिज्ञो ब्राह्मणस्यैवाधिक्यं ब्रूयात् तेन वक्तुः स्वस्यैवाधिक्यं सम्पादितं भवति। ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति। तस्मात् कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः॥

अत्र मीमांसा। तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

निवीतं तु मनुष्याणां विधिर्वैषोऽर्थवादकः।
अपूर्वत्वात् प्रकरणात् क्रतोर्वापि विधीयते॥
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात्।
उपवीतविधावेकवाक्यत्वादर्थवादता॥

दर्शपूर्णमासयोः श्रूयते 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते' इति। तत्र निवीतस्य पूर्वं मानान्तरेणाप्राप्तत्वात् विधेयत्वमभ्युपेतव्यं। तच्च निवीतं मनुष्याणामिति षष्ठ्या पुरुषार्थत्वेन विधीयते इत्येकः पूर्वः पक्षः। अस्मिन् पक्षे मनुष्यसम्बन्धो द्विविधः सुवर्णधारणवत् सर्वपुरुषार्थं इत्येकः प्रकारः। उपवीतप्राचीनावीतयोः क्रतुप्रवेशरहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात् तस्मादपूर्वेण स्वतन्त्र आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतमित्यपरः प्रकारः। प्रकरणबलात् यागधर्म इति द्वितीयः पूर्वः पक्षः। अस्मिन् पक्षे मनुष्यग्रहणं कर्तृसम्बन्धानु-

वादः। षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसम्बन्धिमनुष्यधर्म इति पक्षान्तरमुदेति तच्च द्विविधं। लोहितोष्णीषादिवत् ऋत्विग्धर्म इत्येकः प्रकारः। क्रतावेव यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तद्धर्मत्वे सति उपवीतसाहचर्यमप्यनुग्रहीष्यत इत्यपरः। सर्वथा निवीतं नार्थवाद इत्येवं प्राप्ते ब्रूमः। अत्र प्रतीयमानं निवीतादिकं वासोविषयं, न तु त्रिवृत्सूत्रविषयं। अजिनं वासो वा दक्षिणत उपवीयेत्यनेन सदृशत्वात्। वस्त्रस्य च निवीतं सौकर्याय प्राप्तं। अत्र प्राचीनावीतोपवीतयोरवश्यमेकस्मिन् पार्श्वे वस्त्रमधःपतेत्, अतः प्राप्तेऽर्थे मनुष्याणामिति षष्ठीश्रुतिर्न विधायिका। न च प्रकरणात् क्रत्वङ्गत्वेन विधिः वाक्यभेदप्रसङ्गात्। उपवीतं तावद्विधीयते। अन्यथा देवलक्ष्ममेव तत् कुरुत इति प्रशंसावैयर्थ्यापत्तेः। तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसम्भवे पृथग्विधानमयुक्तं। निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद्दैविके कर्मण्ययोग्ये उपवीतं तु योग्यमिति व्यतिरेकमुखेन स्तावकं निवीतं। तस्मादर्थवादः। उपव्ययत इत्यस्य तु विधित्वं प्रथमकाण्डस्याद्यानुवाके चिन्तितं।

तृतीयाध्यायस्यैव प्रथमपादे चिन्तितं।

उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा।
दर्शाङ्गता प्रक्रियैषाऽवान्तराऽतोऽस्त्वसावियम्॥
लिङ्गादग्नेरनुभूतैर्निविदन्त्यकमन्त्रकैः।
विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः॥

दर्शपूर्णमासप्रकरणे 'विश्वरूपो वै त्वाष्ट्रः' इत्यस्मिन् प्रपाठके सप्तमाष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातं। नवमे निवित्संज्ञकानां 'अग्ने महाँ असि ब्राह्मण भारत' इत्यादीनां मन्त्राणां ब्राह्मणं। दशमे काम्याः सामिधेनीपक्षाः। एकादशे तूपवीतमेवं विहितं 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते' इति। तत्र पूर्वन्यायेन सामिधेनीप्रकरणस्यावान्तरस्य स्वीकारात् सामिधेन्यङ्गत्वमुपवीतस्येति चेत्। न, निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छिन्नत्वात्। न च निविदामपि सामिधेन्यङ्गतया तत्प्रकरणपाठादविच्छेदकत्वमिति वाच्यं। लिङ्गेन निविदामन्यङ्गत्वावगतत्वात्। आहुत्यधिकरणभूतमग्निं सम्बोध्य 'महाँ असि' इत्यादिभिर्निविद्वाक्यैरग्नेरुत्साहजननाय तद्गुणा आवेद्यन्ते। अत एव निर्वचनमेवं श्रूयते 'निविद्भिर्न्यवेदयन्। तन्निविदां निवित्त्वं' इति। ननु समिध्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्य इति व्युत्पत्त्या ता अप्यत्र ज्वलनद्वारेणाग्न्यर्था एवेति चेत् भवतु नाम नैतावता परस्परमङ्गाङ्गिभावः। ननु विच्छिद्यतां सामिधेनीप्रकरणं निवित्प्रकरणेन उपवीतस्य निविदङ्गत्वं स्यादिति चेत्। न, पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणाभावात्। सन्निधिना तदङ्गत्वमिति चेत्। न, काम्यसामिधेनीभिर्व्यवहितत्वात्। न च काम्यसामिधेन्यङ्गता शङ्कनीया सन्निधितः प्रकरणस्य प्रबलत्वात्। तस्मादिह प्रयाजन्यायाभावान्महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतं।

तत्रैव चतुर्थपादे चिन्तितं ।

सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः ।
सर्वार्थमग्निहोत्रे स्यादुपवीतीति लिङ्गतः ॥
दर्शाद्यर्थं प्रकरणाल्लिङ्गे स्यात् सिद्धिरन्यथा ।
होत्रं स्मृताग्निहोत्रस्य स्तोतुमेतदनूदितं ॥

'यज्ञोपवीती हि देवेभ्यो होत्रयति' इत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवदनुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतमिति चेत् । न, लिङ्गस्यान्यथोपपत्तेः । स्मृताग्निहोत्रं तस्मिन् दिनेऽन्येन ह्रयते । तत्र प्राचीनावीती होत्रयेदिति विधाय तस्य स्तुतये यज्ञोपवीतीत्यादि अनूदितं, अतो लिङ्गाभासेन बाधासम्भवात् प्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतं ।

द्वादशाध्यायस्य तृतीयपादे चिन्तितं ।

ऋजुत्वादय आघारे विकल्पन्ते न वाऽग्रिमः ।
एकार्थत्वाददृष्टार्थभेदात् सम्भवतोऽन्तिमः ॥

दर्शपूर्णमासयोराम्नायते 'ऋजुमाघारयति सन्ततमाघारयति आघारमाघारयति' इति । तेषामृजुत्वादीनामाघारोपकारद्वारा कार्यस्यैकत्वाद्विकल्प इति चेत् । न, दृष्टद्वारभेदाभावेऽप्यदृष्टार्थभेदात् सहानुष्ठानसम्भवाच्च न विकल्पः ।

तत्रैवान्यच्चिन्तितं ।

आघारे मन्त्रसाहित्यं धारा वा सन्तताऽग्रिमः ।
कर्मैकत्वादाज्यधाराविच्छेदार्थस्य सम्भवात् ॥

'सन्ततमाघारयति' इत्यत्र पूर्ववदाकृतिभेदार्थं न सम्भवति

आहुतेरेकत्वात्। अतो मन्त्रकर्मसाहित्यस्यैव सन्ततशब्दार्थत्वात् मन्त्रादौ कर्मोपक्रम इति चेत्। मैवं, धार्यमाणस्याज्यस्य बिन्दुनैरन्तर्यस्य, सन्ततशब्दार्थत्वसम्भवात्। न च प्रयाजाद्याहुतिष्वपि नैरन्तर्यमस्तीति शङ्क्यं। तत्र विच्छिद्य विच्छिद्य बिन्दुपातेऽपि कर्मवैफल्याभावात्। अत्र तु न तथेति कर्मवैषम्यं। तथा सत्याघाराय यदाज्यं जुह्वा गृहीतं तत् सर्वं शनैरविच्छेदेन आहवनीये पातयेदिति सन्ततशब्दार्थः। यदि मन्त्रकर्मणोः सहोपक्रमः स्यात् तदानीममनेन मन्त्रेणेति तृतीयाश्रुत्युक्तं पूर्वकालवर्तित्वलक्षणं मन्त्रस्य करणत्वं हीयेत। तस्मात् पूर्ववन्मन्त्रान्ते कर्मसन्निपातः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥ * ॥

---

आयुष्ट आयुर्दा अग्न आप्यायस्व सं तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू। इमं मे वरुण तत्त्वा याम्युद्गुत्यं चित्रं। अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्द्ध्वो विद्युतं वसानः। तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परियन्ति यह्वीः सं ॥ ॥ १ ॥

अन्या यन्त्यपयन्त्यन्याः समानमूर्वं नद्यः पृणन्ति।

तमू शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परितस्थुरापः। तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परियन्त्यापः। स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मा घृतनिर्णिगप्सु। इन्द्रावरुणयोरहꣳ सम्राजोरव आवृणे। ता नो मृडात ईदृशे। इन्द्रावरुणा युवमध्वराय नः ॥ २ ॥

विशे जनाय महि शर्म यच्छतं। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। आ नो मित्रावरुणा प्रबाहवा। त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्। स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणं ॥ ३ ॥

रराणो। वीहि मृडीकꣳ सुहवो न एधि। प्र प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः। प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥ ४ ॥

वि पाजसा वि ज्योतिषा। स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः। उरुक्षयेषु दीद्यत्। तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्टरꣳ सपेम। स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत्। अꣳहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायि ॥ ५ ॥

यज्ञीः समध्वराय नो वरुणꣳ राजꣳश्चतुश्चत्वारिꣳशच्च ॥

विश्वरूपस्त्वष्टेन्द्रं वृत्रं ब्रह्मवादिनः स त्वै नासोमयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोऽग्ने महांचीन्निवीतमायुष्टे द्वादश ॥ १२ ॥

विश्वरूपो नैनꣳ शीतरूरावद्यवसु पूर्वेद्युर्वाजा इत्यग्ने महान्निवीतमन्या यन्ति चतुःसप्ततिः ॥ ७४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

पञ्चमप्रपाठकः सम्पूर्णः ॥

होतुर्नियम आधारस्तोममेकादशे इयं।

अथ द्वादशे काम्येष्टियाज्यानुवाक्या उच्यन्ते। अतीते द्वितीयप्रपाठके (अ०११) इदमाम्नातं 'यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालं' इति। तथा (अ०१२) 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेत्' इति च। 'यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनुनिर्वपेत्' इति। एतेषु सप्तसु हविःषु क्रमेण याज्यानुवाक्याप्रतीकानि दर्शयति "आयुष्ट आयुर्दा अग्न आप्यायस्व सं तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत् त्वा यामुदु त्यं चित्रं" इति। तत्राग्नेयस्य 'आयुष्टे विश्वतोऽदधत्' इति पुरोऽनुवाक्या। 'आयुर्दा अग्ने हविषो जुषाणः' इति याज्या। तदुभयं 'त्वमग्ने रुद्रः' इत्यनुवाके व्याख्यातं। सौम्यस्य तु 'आप्यायस्व समेतु ते' इति पुरोऽनुवाक्या। 'सं ते पयाꣳसि समु यन्तु वाजाः' इति याज्या। एतदुभयं चतुर्थकाण्डे 'मा नो हिꣳसीत्' इत्यनुवाके व्याख्यास्यते। वारुणं दशकपालमित्यस्य 'अव ते हेडः' इति पुरोऽनुवाक्या।'उदुत्तमं' इति याज्या। एतच्चोभयं 'वैश्वानरो नः' इत्यनुवाके व्याख्यातं। सारस्वतस्य 'प्र णो देवी' इत्यनुवाक्या। 'आ नो दिवो बृहतः' इति याज्या। आग्नावैष्णवस्य 'अग्नाविष्णू महि तद्वां' इति पुरोऽनुवाक्या। 'अग्नाविष्णू महि धाम' इति याज्या। चतुष्टयमप्येतत् प्रथमकाण्डस्यान्त्यानुवाके व्याख्यातं।

वारुणचतुष्कपालस्य 'इमं मे वरुण श्रुधी' इति पुरोऽनुवाक्या। 'तत्त्वा यामि' इति याज्या। एतच्चोभयमस्मिन्नेव काण्डे प्रथमप्रपाठकस्यान्त्यानुवाके व्याख्यातं। सौर्यस्य 'उदु त्यं जातवेदसं' इति पुरोऽनुवाक्या। 'चित्रं देवानां' इति याज्या। एतच्चोभयं पूर्वकाण्डस्य चतुर्थप्रपाठके (अ०४३) व्याख्यातं। अथ 'अपोनप्त्रीयं चरुं पुनरेत्य निर्वपेत्' इत्यस्य पुरोऽनुवाक्यामाह "अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्द्ध्वो विद्युतं वसानः। तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परियन्ति यह्वीः" इति। अपामुदकानां नपात् अविनाशयिता तथाविधनामकः कश्चिद्देवः उपस्थं स्वस्योपवेशनस्थानं आस्थात् आतिष्ठति प्राप्नोतीत्यर्थः। कीदृशो देवः जिह्मानामूर्द्ध्वः आवर्तरूपेण कुटिलगतीनामुदकानामुपरिवर्तमानः। विद्युतं वसानः मेघमण्डलमध्ये उपविष्टत्वाद्विद्युदेव तस्याच्छादकं वस्त्रं, आपश्च तं देवं परियन्ति परितो व्याप्य वर्तन्ते। कीदृश्य आपः तस्य देवस्य ज्येष्ठं प्रशस्तं महिमानं माहात्म्यं वहन्तीधारयन्त्यः। बहुलवृष्ट्या स्वकीयस्य स्वामिनः तस्य देवस्य माहात्म्यं ख्यापयन्त्य इत्यर्थः। हिरण्यवर्णाः बहूनां विद्युतां मध्ये वर्तमानत्वात् हेमवर्णत्वं। यह्वीः महत्यः। तत्रैव याज्यामाह "समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यः पृणन्ति। तमू शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परितस्थुरापः" इति। अन्याः काश्चिदापः संयन्ति परस्परं सङ्गताः प्रवाहरूपेण गच्छन्ति। ताभ्योऽन्याः काश्चिदुपयन्ति प्रवाहमन्तरेण

*प्रविष्टा इव तिष्ठन्ति। ऊर्वो वडवाग्नेराधारः समुद्रः, स च बह्वीषु स्थिरासु चाप्सु समानः, न तावदयं प्रवहन्तीनामपां प्रवेशेन वर्धते स्वयं, नापि तासामभावे सति स्थिराभिरद्भिः परिक्षीयते। तादृशं समुद्रं नद्यः पृणन्ति स्वप्रवेशेन प्रीणयन्ति। तमू शुचयः आपः परितो व्याप्य तस्थुः स्थिताः, कीदृशं शुचिं शोधयितारं, दीदिवांसं वडवाग्निजनकत्वेन दीप्यमानं, अपां नपातं अविनाशयितारं। तत्रैव विकल्पितां याज्यामाह "तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परियन्त्यापः। स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु" इति। तमपां नपातमापः परियन्ति। कीदृशं तं युवानं सर्वदा यौवनोपेतं। कीदृश्य आपः अस्मेराः विडम्बनारूपेण स्मयरहिताः अनुकूला इत्यर्थः। युवतयः सर्वदा यौवनोपेताः, मर्मृज्यमानाः तत्संयोगेन शोध्यमानाः। सोऽपां नपादग्निरनिध्मः काष्ठरहितो ऽप्यप्सु दीदाय दीप्यते। कीदृशः शुक्रेण शिक्वना युक्तः शुद्धेन प्रकाशेन युक्तः, रेवत् धनवान्, घृतनिर्णिक् विलापनेन घृतं निर्णेनेक्ति निःशेषेण शोधयतीति घृतनिर्णिक्। 'यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेत्' इत्यस्याः (का०२।प्र०३।अ०१३) पुरोऽनुवाक्यामाह "इन्द्रावरुणयोरहꣳ सम्राजोरव आवृणे। ता नो मृडात ईदृशे" इति। सम्राजोः सम्यक् दीप्यमानयोरिन्द्रावरुणयोरवो रक्षणमहमावृणे सर्वतः प्रार्थये। तौ चेन्द्रावरुणौ ईदृशे रक्षणे प्रवृत्तौ

* उपरिष्टादिव। इति तै०।

नोऽस्मान् स्रुडातः सर्वदा सुखयतां। तत्रैव याज्यामाह “इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतं। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः” इति। हे इन्द्रावरुणौ युवां नोऽस्मभ्यं महि शर्म महत् सुखं आपन्निवारणरूपं यच्छतं। किमर्थं। अध्वराय यागानुष्ठानाय, विशे प्रजासमृद्धये, जनाय परिवारकजनसिद्धये च, यः पाप्मा दीर्घप्रयज्युमति अस्मदीयं दीर्घकालभावियागप्रयोगमतिलङ्घ्य नोऽस्मान् वनुष्यति पीडयति, वयं तु युवयोरनुग्रहवशात् पृतनासु पापकृतासु पीडासु दूढ्यः दृढतराः अपीडिताः सन्तः तं पाप्मानं जयेम। पञ्चमकाण्डे मैत्रावरुणामिक्षा विहिता ‘यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्यामिक्षया यजेत’ इति। तत्र याज्यानुवाक्ययोः प्रतीके दर्शयति “आ नो मित्रावरुणा प्र बाहवा” इति। ‘आ नो मित्रावरुणा घृतैः’ इति पुरोऽनुवाक्या। ‘प्र बाहवा सिसृतं’ इति याज्या। एतदुभयं ‘अग्नाविष्णू महि तद्वां’ इत्यनुवाके व्याख्यातं। पुनराधेयप्रकरणे आम्नातं ‘वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनुनिर्वपेत्’ (का०१। प्र०५।अ०२) इति। अत्र पुरोऽनुवाक्यामाह “त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्” इति। हे अग्ने त्वं नोऽस्माकं भक्तिं विद्वान् सन् वरुणस्य देवस्य

हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठाः अपनय। यजिष्ठो यष्टृ-तमोऽतिशयेन यागनिष्पादकः, वह्नितमोऽतिशयेन देवहवि-र्वोढा, शोशुचानोऽत्यन्तं दीप्यमानः, विश्वा द्वेषांसि सर्वान् विरोधिकृतान् द्वेषान् अस्मत् प्रमुमुग्धि अस्मत्तः प्रमोचय। तत्रैव याज्यामाह “स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि” इति। हे अग्ने स त्वं नोऽस्माकं ऊत्या रक्षणेन अवमो भव रक्षको भव। कीदृशस्त्वं अस्या उषसो व्युष्टौ नेदिष्ठः अद्यतनस्योषःकालस्योपरितने प्रातःकाले अत्यन्तं प्रत्यासन्नः नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकं अवयक्ष्व नाशय। रराणो रममाणः सन् मृडीकं सुखसाधनमस्मदीयं हविः वीहि भक्षय। ततो नोऽस्माकं सुहव एधि सुखेनाह्वातुं शक्यो भव। ‘यो भ्रातृव्यवान्त्स्यात् स स्पर्धेमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते’ (का०२।प्र०४।अ०१) इत्यत्र प्रवतोऽग्नेर्हविषः पुरोऽनुवाक्यामाह “प्र प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः” इति। अयमग्निर्भरतस्य हविर्भरणवतो यजमानस्याह्वानं प्र शृण्वे अतिप्रकर्षेण शृणोतु। यत् योऽग्निः सूर्यो न सूर्य इव भाः भासमानः सन् बृहद्रोचते अत्यन्तं दीप्यते। योऽग्निः पृतनासु सङ्ग्रामेषु पूरुं जयपूर्तिमभितस्थौ सर्वतः करोति योऽग्निर्नोऽस्माकमतिथिर्दीदाय

भवतु अतिथिरिवेह समागच्छतु। कीदृशोऽग्निर्देवो देवेभ्यो हितः, शिवः परममङ्गलभूतः। तत्रैव याज्यामाह "प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु। धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्" इति। हे अग्ने ते त्वदर्थं प्रयक्षि प्रकर्षेण यजेति त्वदीयं मन्म मननं मानसमनुग्रहविशेषं प्रकर्षेणेयर्मि प्राप्नोमि। नोऽस्माकं हवेषु यागेषु वन्द्यो नमस्कार्यो यथा भुवो येन प्रकारेण भवसि तेन प्रकारेणानुग्रहमियर्मीति पूर्वत्रान्वयः। हे अग्ने त्वमियक्षवे यष्टुमिच्छवे पूरवे हविः पूरयित्रे यजमानाय प्रियं दातुं धन्वन् प्रपा इवासि मरुभूमौ शीतलपानीयपूर्णशालेवासि। हे प्रत्न पुरातन, हे राजन् दीप्यमान, एतदुभयं वह्निविशेषणं। अथ विवाधवतोऽग्नेर्याज्यापुरोऽनुवाक्ये प्रतीकेन दर्शयति "वि पाजसा वि ज्योतिषा" इति। 'वि पाजसा पृथुना शोशुचानः' इत्येषा पुरोऽनुवाक्या। सेयं चतुर्थकाण्डस्य प्रथमप्रपाठके व्याख्यास्यते। 'वि ज्योतिषा बृहता भात्यग्निः' इति याज्या 'कृणुष्व पाजः' इत्यनुवाके व्याख्याता। अथ प्रतीकवतोऽग्नेर्हविषि पुरोऽनुवाक्यामाह "स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः। उरुक्षयेषु दीद्यत्" इति। हे अग्ने स त्वं प्रतीकेन कर्मप्रारम्भमात्रेण यातुधान्यो राक्षसजातीः सर्वाः प्रत्योष प्रत्येकं दह। कीदृशस्त्वं, उरुक्षयेषु विस्तीर्णेषु यागगृहेषु दीद्यत् दीप्यमानः। तत्रैव याज्यामाह "तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्टरं सपेम। स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्य-

मग्निरमृतेषु वोचत्" इति। वयं तमग्निं सपेम समवेताः प्राप्ता भूयास्म। कीदृशमग्निं सुप्रतीकं शोभनोपक्रमं अस्मा-स्वनुग्रहस्तेन सुष्ठूपक्रामन्तं। सुदृशं शोभनकटाक्षेणास्मान् पश्यन्तं। स्वञ्चं अस्मदीये कर्मणि सुष्ठागच्छन्तं। विदुष्टरं अतिशयेन भक्तचित्तवेदिनं। यद्यपि वयमविद्वांसस्त्वदीयं महिमानं न जानीमः तथापि तं प्राप्ताः स्मः। सोऽग्निर्वोचत् यष्टुमिच्छतां पुरु-षाणां विश्वा वयुनानि सर्वानभिप्रायविशेषान् विद्वान् जानन् अवतिष्ठति। अतः सोऽग्निरस्मदीयं हव्यं प्रवोचत् प्रकर्षेण ब्रवीतु। अथ 'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावते' (का०२।प्र०४।अ०१) इत्येतेषु त्रिषु हविःषु याज्यापुरोऽनुवाक्ययोः प्रतीकानि दर्शयति "अꣳहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायि"इति। 'अꣳहोमुचे प्रभरेमा' इत्येषा प्रथमस्य हविषः पुरोऽनुवाक्या। 'विवेष यन्मा' इति याज्या। 'वि न इन्द्र मृधः' इति द्वितीयस्य हविषः पुरोऽनुवाक्या। 'इन्द्र क्षत्रमभि वामं' इति याज्या। 'इन्द्रियाणि शतक्रतो' इति तृतीयस्य हविषः पुरोऽनुवाक्या। 'अनु ते दायि मह:' इत्येषा याज्या। तदेतत् षट्कं प्रथम-काण्डे षष्ठप्रपाठकेऽन्त्यानुवाके व्याख्यातं॥

अत्र विनियोगसङ्ग्रहः।

ज्योगामयाविनो ह्यायुरायुर्दाग्नेयके तथा।

आप्या सन्ते च सौम्ये स्यादवोद्दृत्येति वारुणे॥

सारस्वते प्र णो ह्याग्नेऽग्नाग्नाग्नावैष्णवे भवेत्।
इमं तत्त्वाश्वदाग्नीष्टा उदु चित्रं तु सौर्यके॥
अपां न समपोनप्त्रे इन्द्रावेत्यैन्द्रवारुणे।
मैत्रावरुण आमिक्षायागे त्वा नः प्र वेति च॥
पुनराधेयके त्वाग्निवारुणे त्वन्न इत्युभे।
प्र प्रेति प्रवदाग्नेये विद्वयं बाधसंयुते॥
स त्वं प्रतीकसंयुक्ते अꣳहविव्यैन्द्रयागके।
वीन्द्रेति वैमृधे ह्यौन्द्रियाग्नु ते त्विन्द्रियावते॥
मन्त्रा ह्यस्मिन्ननुवाके पञ्चत्रिंशदुदीरिताः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः॥ ० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे पञ्चमः प्रपाठकः सम्पूर्णः॥ ० ॥

---

अथ तैत्तिरीयसंहिताभाष्ये

द्वितीयकाण्डे षष्ठप्रपाठके

प्रथमोऽनुवाकः ।

॥ हरिः ॐ ॥

...। यजति वसन्तमेवर्तूनामवरुन्धे तनूनपातं यजति ग्रीष्ममेवावरुन्ध इडो यजति वर्षा एवावरुन्धे बर्हिर्यजति शरदमेवावरुन्धे स्वाहाकारं यजति हेमन्तमेवावरुन्धे तस्मात् स्वाहाकृता हेमन् पशवोऽवसीदन्ति समिधो यजत्युषस एव देवतानामवरुन्धे तनूनपातं यजति यज्ञमेवावरुन्धे ॥ १ ॥

इडो यजति पशूनेवावरुन्धे बर्हिर्यजति प्रजामेवावरुन्धे समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारं यजति वाचमेवावरुन्धे दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्धे समिधो यजत्यस्मिन्नेव लोके प्रतितिष्ठति तनूनपातं यजति ॥ २ ॥

यज्ञ एवान्तरिक्षे प्रतितिष्ठतीडो यजति पशुष्वेव प्रतितिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रतितिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रतितिष्ठत्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रतितिष्ठति देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त तत् प्रयाजानां ॥३॥

प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामं जुहोत्यभिजित्यै यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र ॥ ४ ॥

प्रजया पशुभिर्मिथुनैर्जायते देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघाꣳसन् ते देवा गायत्रीं व्यौहन् पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयो देवा वै पुरा रक्षोभ्यः ॥ ५ ॥

इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन् तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन् वि वा एतद्यज्ञं छिन्दन्ति यत् स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति यज्ञस्य सन्तत्या अथो हविरेवाकरथो यथापूर्वमुपैति पिता वै प्रयाजाः प्रजानूयाजा यत् प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत् पुत्रेण साधारणं ॥ ६ ॥

कुरुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा साधारणं पितुरित्यस्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय प्रजनयति ॥ ७ ॥

यज्ञमेवावरुन्धे तनूनपातं यजति प्रयाजानामेवं वेद प्र रक्षोभ्यः साधारणं पञ्चचिꣳशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
होत्रमाध्वर्यवं चाघारान्तं पञ्चम ईरितं।
प्रयाजाद्यवशिष्टन्तु वक्ति षष्ठे प्रपाठके ॥

तत्र प्रथमानुवाके प्रयाजा विधातव्याः। तेषां मन्त्रास्तु मन्त्रकाण्डे पञ्चमानुवाक एवमाम्नाताः "समिधो अग्न आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य वेतु। इडो अग्न आज्यस्य वियन्तु। बर्हिरग्न आज्यस्य वेतु। स्वाहाग्निं। स्वाहा सोमं। स्वाहाग्निं। स्वाहा प्रजापतिं। स्वाहाग्नीषोमौ। स्वाहेन्द्राग्नी। स्वाहेन्द्रं। स्वाहा महेन्द्रं। स्वाहा देवाꣳ आज्यपान्। स्वाहाग्निꣳ होत्राज्जुषाणाः। अग्न आज्यस्य वियन्तु" (ब्रा०का०२। प्र०५।अ०५) इति। एतेषां मन्त्राणां विनियोगं बोधायनो दर्शयति 'समिधो अग्न आज्यस्य वियन्तु' इति प्रथमं। 'तनूनपादग्न आज्यस्य वेतु' इति द्वितीयमित्यादि। हे अग्ने समिध्यमानास्तव मूर्तयः आज्यस्य वियन्तु हूयमानमिदमाज्यमश्नन्तु। तनूं शरीरं न पातयति न नाशयति किन्तु पालयतीति तनूनपात्। हे अग्ने द्वितीया तनूनपात् तव मूर्तिराज्यं पिबतु। हे अग्ने इडो ईड्या स्तुत्यास्तव मूर्तयः आज्यं पिबन्तु। बृंहणात् बर्हिः, हे अग्ने फलं बृंहयन्ती तव मूर्तिराज्यं पिबतु। अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतं

भविष्यति। एवं द्वितीयाज्यभागदेवं सोमं प्रति स्वाहाकृतमस्त्विति, भविष्यतीति क्रमेण द्रष्टव्यं। आवाहननिगदे या देवताः क्रमेण निर्दिष्टास्ता एवास्मिन् स्वाहाकारनिगदेऽपि निर्दिश्यन्ते इत्यवधेयं। होचात् होमनिमित्तं स्विष्टकरणार्थमित्यर्थः। हे अग्ने एते सर्वे देवाः प्रीयमाणा इदानीं स्वमुखेनाज्यं पिबन्तु। तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः साध्यान् प्रयाजान् विधत्ते "समिधो यजति वसन्तमेवर्तूनामवरुन्धे तनूनपातं यजति ग्रीष्ममेवावरुन्ध इडो यजति वर्षा एवावरुन्धे बर्हिर्यजति शरदमेवावरुन्धे स्वाहाकारं यजति हेमन्तमेवावरुन्धे तस्मात् स्वाहाकृता हेमन् पशवोऽवसीदन्ति" इति। अत्र समिदादिशब्दैर्यागविशेषनामान्युच्यन्ते। ऋतवो वै प्रयाजा इत्येवमृतुत्वेन स्तूयमानत्वात्, तैः प्रयाजैः क्रमेण वसन्ताद्यवरोध उच्यते। यस्मात् स्वाहाकारयागेन हेमन्तावरोधस्तस्मात् हेमन् हेमन्ते पशवोऽवसीदन्ति, द्विपादश्चतुष्पादश्च हिमेन पीड्यन्ते, तेन तत्र दृष्टान्तः स्वाहाकृता इति। स्वाहाकारेण प्रक्षिप्ताः समिधो यथा दाहेन पीड्यन्ते तद्वदित्यर्थः, तादृश उग्रोऽपि हेमन्तोऽस्माधीनो भवति इति यागस्तुतिः। पुनरपि विधानान्तरेण प्रशंसति "समिधो यजत्युषस एव देवतानामवरुन्धे तनूनपातं यजति यज्ञमेवावरुन्ध इडो यजति पशूनेवावरुन्धे बर्हिर्यजति प्रजामेवावरुन्धे" इति। समिच्छब्देन दीप्तिसूचनादुषसोऽवरोधः। तनूनपाच्छब्देनाविनाशसूचनात् तज्ज्यज्ञावरोधः। इट्शब्देनेस्माक्षीरादि-

सूचनात् पश्ववरोधः। प्रजा वै बर्हिरिति श्रुत्यन्तराद्बर्हि-र्यागेन प्रजावरोधः। चतुर्थप्रयाजार्थमौपभृतस्याज्यस्य जुह्वा-मानयनं विधत्ते “समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति” इति। उपभृतः सकाशा-ज्जुह्वामर्धमाज्यं सम्यगानयेत्। बर्हिर्यागस्य प्रजारूपत्वादाज्यस्य तेजस्त्वात् प्रजासु तेजः स्थापितं भवति। पञ्चमप्रयाजमव-शिष्टं प्रशंसति “स्वाहाकारं यजति वाचमेवावरुन्धे” इति। अस्मिन् प्रयाजे स्वाहाशब्दानामग्न्यादिशब्दानाञ्च बहूनामु-च्यमानत्वात् तेन वागवरोधः। पूर्वोक्तवसन्ताद्यवरोधाः पञ्चे-दानीमुक्ताः उषःकालाद्यवरोधाः पञ्चेति दशसङ्ख्याद्वारा यागान् प्रशंसति “दश सम्पद्यन्ते दशाक्षरा विराडन्नं विरा-ड्विराजैवान्नाद्यमवरुन्धे” इति। पुनरपि तत्तल्लोकप्रतिष्ठामुखेन प्रशंसति “समिधो यजत्यस्मिन्नेव लोके प्रतितिष्ठति तनूनपातं यजति यज्ञ एवान्तरिक्षे प्रतितिष्ठतीडो यजति पशुष्वेव प्रति-तिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रतितिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रतितिष्ठत्येतावन्तो वै देव-लोकास्तेष्वेव यथापूर्वं प्रतितिष्ठति” इति। समिद्यागस्य प्राथ-म्यात् तेनास्मिन् प्रथमलोके प्रतिष्ठा। ‘प्रच्युतो वा एषोऽस्माल्लो-कादगतो देवलोकं योऽदीक्षितः’ इत्युक्तत्वाद्दीक्षादिरूपो यज्ञो लोकद्वयमध्यवर्त्यन्तरिक्षरूपस्तस्मिन्नन्तरिक्षे द्वितीयत्वसाम्यात् तनूनपाद्यागेन प्रतिष्ठा। इड्यागस्य पशुसम्बन्धः पूर्वमेवोक्तः। बर्हिःशब्देन देवयानमार्गसाधनस्य यज्ञस्य सूचनात् तद्यागेन

ष्वपि पूर्वोक्तेषु देवयानमार्गेषु प्रतिष्ठा। स्वाहाकारयागस्य उत्तमत्वात् तेन स्वर्गप्रतिष्ठा। भूलोकमारभ्य स्वर्गान्ता यथोक्ता एतावन्त एव देवानां पूज्यानामपेक्षिता लोकास्तेषु सर्वेषु यथाक्रममेवैतैः प्रतिष्ठितो भवति। इदानीं नामनिर्वचनेन प्रशंसति "देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त तत् प्रयाजानां प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदते" इति। अस्माकमेवैते लोका भवेयुरित्युभयेषां परस्परं स्पर्धा, प्राणुदन्त विरोधिनो यैर्यागैस्ते यागाः प्रयाजाः। यदुक्तं सूत्रकारेण 'यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयात्' इति। अभितरमभिमुखतरमुत्तरोत्तरवृद्ध इत्यर्थः, तदेतत् सूत्रोक्तमभिक्रमणं विधत्ते "अभिक्रामं जुहोत्यभिजित्यै" इति। अभिक्रम्याभिक्रम्यादूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहुयात्, एवमुत्तरत्र, तदेतदभिक्रमणं। स्त्रीलिङ्गबहुवचननिर्देशं लिङ्गान्तरैकवचननिर्देशस्य सह प्रशंसति "यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते" इति। एकस्य पुरुषस्य बह्व्यः स्त्रियो लोके भवन्ति तत्साम्यादत्र मिथुनत्वोपचारः। मूर्तिबहुत्वेऽपि देवतैक्याद्बह्वीरिवेत्युपक्रमोक्तिः। कवचरूपत्वं सैन्यसादृश्यस्य सम्पाद्य प्रशंसति "देवानां वा अनिष्टा देवता

आसन्नथासुरा यज्ञमजिघांसन् ते देवा गायत्रीं व्यौहन् पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाऽभवद्वर्म यजमानाय यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयः" इति। पुरा देवा यदा यज्ञं कुर्वन्ति तदानीमाज्यभागादिदेवता अनिष्टा आसन्, तत्तदिज्यायाः प्रागेव तस्मिन्नवसरे समागत्यासुरा यज्ञं हनिष्याम इत्यैच्छन्। अतस्तदिज्याप्रतिबद्धास्तत्प्रतीकारत्वेन देवा अष्टाक्षरगायत्रीपादे व्यूहद्वयं कृतवन्तः। तत्राक्षरपञ्चकव्यूहो यज्ञानुष्ठानात् प्राचीनो रक्षकः, अक्षरत्रयव्यूहः प्रतीचीनो रक्षकः, ततो व्यूहद्वयं यज्ञस्य कवचमाच्छादनायाभवत्। तथा यजमानस्यापि। अतः पञ्चाक्षररूपत्वेन पञ्च प्रयाजाः पूर्वमिज्यन्ते। अक्षररूपत्वेन त्रयोऽनूयाजाः पश्चादिज्यन्ते। तदुभयं कवचं यज्ञयजमानयोरुभयतो रक्षणं। तेन रक्षणेन भ्रातृव्यस्याभिभूतिर्भवति। यस्माद्‌च प्राचीनान्यक्षराणि बहूनि प्रतीचीनान्यल्पानि तस्माल्लोकेऽपि युद्धार्थं गच्छन्त्यां सेनायां पुरस्ताद्वरूथं जनसङ्घः परकीयसैन्यस्य भयोत्पादनाय भूयान् अभिनिष्पाद्यते, पृष्ठभागे तु अल्पीयान्।

प्रयाजशेषेण हविरभिघारणं विधत्ते "देवा वै पुरा रक्षोभ्य इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन् तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन् वि वा एतद्यज्ञं छिन्दन्ति यत् स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳ-

अभिघारयति यज्ञस्य सन्तत्या अथो हविरेवाकरथो यथा-पूर्वमुपैति" इति। देवाः कदाचिद्यागं कुर्वन्तो यज्ञोपघातिनां रक्षसामागमनात् पुरा स्वाहाकारनामधेयेन पञ्चमप्रयाजेन यज्ञः समापनीय इति विचार्य तथैव समापयन्। तदयुक्तं यज्ञविच्छेदप्रसङ्गात्। अतः प्रयाजानिष्ट्वा तच्छेषेणाज्येन वेद्या-मासादितानां हविषामभिघारणे सति यज्ञः सन्ततो भवति। किञ्च तस्य पुरोडाशादिद्रव्यस्य हविष्ट्वं कृतं भवति। किञ्च यथा पूर्वमुत्तरमुपैति। प्रयाजा यथा निर्विघ्नेनानुष्ठितास्तथैवाज्य-भागाद्यनुष्ठानमपि निर्विघ्नेन प्राप्नोतीत्यर्थः। प्रकारान्तरेणा-भिघारणं प्रशंसति "पिता वै प्रयाजाः प्रजाऽनूयाजा यत् प्र-याजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत् पुत्रेण साधारणं कुरुते" इति। प्रथमभावित्वात् प्रयाजानां पितृत्वं। पश्चा-द्भावित्वादनूयाजानां पुत्रत्वं। अनूयाजार्थं हविरुपभृतीति गृहीतमस्ति, पुरोडाशादिहविरभिघारणवेलायामौपभृतमपि हविः प्रयाजशेषेणाभिघारयति, तथा सति पितृस्थानीयं प्र-याजानां सम्बन्धि यदवशिष्टमाज्यद्रव्यं तत् पुत्रस्थानीयानाम-नूयाजानामपि साधारणं कृतं भवति। इममेवार्थं लौकिको-दाहरणेन विस्पष्टयति "तस्मादाऊर्यस्यैवं वेद यस्य न कथा पुत्रस्य केवलं कथा साधारणं पितुरिति" इति। लोके हि बालेन पुत्रेण यदुपार्जितं तद्द्रव्यं स पुत्र उत्तरकाले स्वजीव-नार्थमसाधारणत्वेन सङ्गृह्य गुप्तं करोति न तु पित्रे प्रयच्छति न तु भ्रातृभ्यः, पित्रा तु यदुपार्ज्यते तत् पितुर्बालपुत्रस्य

तद्ब्राह्मणास्य साधारणं भवति, तेन हि द्रव्येण सर्वेऽपि जीवन्ति। तथा सति लौकिकः कश्चित् पुरुषो वेदमधीत्य प्रयाजानूयाजवृत्तान्तं जानाति अन्यस्त्वध्ययनरहितो न जानाति। तादृशानामुभयविधानां सभायामुपविष्टा अनभिज्ञाः पप्रच्छुः केन हेतुना पुत्रस्य द्रव्यं केवलमसाधारणं सम्पन्नं पितृद्रव्यं तु केन हेतुना साधारणं सम्पन्नमिति। तस्य च प्रश्नस्याभिज्ञाः प्रयाजानूयाजवृत्तान्तेनोत्तरं ददुरिति शेषः। प्रयाजानामाज्यं साधारणं तच्छेषेण इज्यमानत्वात्, अनूयाजानां त्वसाधारणं तच्छेषस्यान्यत्र विनियोगाभावात्। एवं लौकिकयोः पितृपुत्रयोरपि द्रष्टव्यं। पुनः प्रकारान्तरेणाभिघारणं प्रशंसति "अस्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति" इति। यागार्थस्य द्रव्यस्य यागात् प्रागेवान्यत्र पतनं विनाशो भवति, अत्र त्विष्टेषु प्रयाजेषु पश्चादन्येषु हविःषु शेषः प्रक्षिप्यते तस्मादेतदस्कन्नमविनष्टमेव। शङ्कितस्कन्दनदोषस्य परिहार एवात्र प्रशंसति। पुनरपि प्रकारान्तरेण प्रशंसति "गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय प्रजनयति" इति। एकतो गायत्र्याः पक्षाक्षररूपाः प्रयाजाः,अन्यतो गायत्र्यास्त्र्यक्षररूपा अनूयाजाः, मध्ये यदभिघारणं तेन गायत्र्येव स्वोदरे गर्भं धृतवती भवति। तेन च सा गायत्री यजमानार्थं प्रजां पशूनुत्पादयति।

अत्र मीमांसा। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

समिधो यजतीत्यादावेकत्वमुत भिन्नता।

धातुप्रत्ययोरैक्यादेकत्वे भिन्नता कुतः॥

अभ्यासात् कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे।
विधित्वं श्रुतितो भाति सन्निधेरनुवादता॥

दर्शपूर्णमासयोः श्रूयते 'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति। तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु यजतिददातीत्यादिपदेष्विव धातुभेदो नास्ति येन भावनाभेद आशङ्क्येत, तस्मात् आख्यातैक्यप्रयुक्तं भावनैक्यमनिवार्यमिति चेत्। मैवं, यजतिपदाभ्यासेन कर्मभेदावगमात्। कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। अथोच्येत समिधो यजतीत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते, ततोऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यमिति। तन्न, तनूनपादादिशब्दानां यागनामत्वेन गुणविधित्वाभावात्। न तावदत्र देवताविधिः चतुर्थीतद्धितयोरश्रवणात्। नापि द्रव्यविधिः तृतीयान्तत्वाभावात्। ततोऽग्निहोत्रं जुहोतीत्यादाविव द्वितीयान्तानां युक्तं नामत्वं। यत्तु चतुर्णामुपरितनानां यजतिपदानामनुवादत्वं तदसत्, तेषां विधायकत्वात्। यथा समिधो यजतीत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते तथान्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतं। अनुवादत्वं तु पुरोवादरूपस्य समिधो यजतीत्यस्य सन्निधानादवगम्यते, सन्निधिश्च श्रुतेर्दुर्बलो। विधित्वे च पूर्ववाक्यविहितस्य समिन्नामकस्य यागस्य पुनर्विधानायोगात् तनूनपादादिनामकानि यागान्तराणि

विधीयन्ते। नन्वेवं सति सञ्ज्ञाभेदात् कर्मभेदः सम्पद्यते, न त्वभ्यासात्, तथा सति वक्ष्यमाणाधिकरणेन सङ्कीर्येत। मैवं, वैषम्यात्। अथैष ज्योतिरित्यस्मिन् वक्ष्यमाणोदाहरणे यागावगमात् प्रागेव सञ्ज्ञात्वावगमात् सञ्ज्ञायाः कर्मभेदहेतुत्वं। इह तु विधायकैर्यजतिपदैर्यागेष्ववगतेषु भेदे चाभ्यासादवगते भिन्नानां यागानां समित्सञ्ज्ञाया अन्याः सञ्ज्ञा अपेक्षिता इति तनूनपादादीनां सञ्ज्ञात्वं पश्चादवगम्यते। तस्मादभ्यास एवात्र भेदहेतुः।

नवमाध्यायस्य द्वितीयपादे चिन्तितं*।

देवता यजयो वा स्युः प्रयाजे समिदादयः।
विष्ण्वादिवद्देवतात्वं न चतुर्थ्याद्यभावतः॥

दर्शपूर्णमासयोः प्रयाजपञ्चकमाम्नातं समिधो यजतीत्यादिना। तत्र यथा विष्णुं यजति, वरुणं यजतीत्यादौ द्वितीयानिर्दिष्टा विष्ण्वादयो देवतास्तथा समिदादीनां देवतात्वं, ततो यागैर्देवताः संस्क्रियन्त इति दृष्टार्थलाभ इति चेत्। मैवं, सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यते। तद्यथा यदग्नये सायं जुहुयात् आग्नेयोऽष्टाकपाल इति। न चात्र समिदादिषु चतुर्थीतद्धितौ विद्येते। तादर्थ्यप्रतीतौ देवता भवति, न च द्वितीयया तादर्थ्यं प्रतीयते, किन्त्वीप्सितत्वं, तच्च कर्मनामत्वादुपपद्यते, अग्निहोत्रं जुहोतीत्यादौ तद्दर्शनात्। यथा पाकं पचतीत्युक्ते पचिक्रियायाः कर्तव्यता प्रती-

---

* एतत् प्रकरणं न्यायमालाविस्तरपुस्तके नास्ति।

यते, तथा समिधो यजतीत्युक्ते समिद्याग: कर्तव्य इत्यर्थो भवति, विष्णुं यजतीत्यादौ तादर्थ्यमुपपद्यते। प्रयाजमन्त्रेषु 'समिधो अग्न आज्यस्य वियन्तु' इत्यादिषु समिदादिशब्दैः बहु-वचनैकवचनान्तैर्देवता निर्दिष्टाः, तदेव निमित्तीकृत्य तादृशै-रेव शब्दैरिह यागा अभिधीयन्ते 'समिधो यजति तनूनपातं यजतीडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति। त-स्मान्नात्र देवतासंस्कारविधिः, किन्तु यागाः केवला विधी-यन्ते। तेषाञ्च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणे-नारादुपकारकत्वं। पञ्चमप्रयाजस्य तु वक्ष्यमाणाज्यभागादि-देवतासंस्कारकत्वं दशमेऽभिधास्यते।

दशमाध्यायस्य प्रथमपादे चिन्तितं।

अन्त्यः प्रयाज आरात् किमुपकार्यथ संस्कृतिः।
स्वाहाकारेति देवोक्तेर्माद्ववत्मन्त्रवर्णनात्॥
आद्यो नैवं चतुर्थ्यादेरभावाद्यागमात्रके।
विधित्सया च सौर्यादावर्थोऽग्न्यादिनिवर्तनं॥

दर्शपूर्णमासेष्टौ पञ्चमप्रयाज एवमाम्नायते 'स्वाहाकारं यजति' इति। स किमिष्टेरारादुपकारक: उताज्यभागादिषु वक्ष्यमाणानामग्न्यादिदेवतानां संस्कार इति संशयः। तत्र स्वाहाकारशब्देन देवतोच्यते। यागस्य तदाकाङ्क्षणात्। न च प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णदेवताकल्पनमुचितं। नन्वेवं सति विधिमन्त्रयोर्वैयधिकरण्यं प्रसज्येत, विधिना हि स्वाहाकाराख्या देवता विहिता, मन्त्रे तु वक्ष्यमाणाज्यभागदेवता अग्न्यादि-

देवताः प्रतीयन्ते। स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा प्रजापतिं स्वाहाग्नीषोमावित्यादिको हि मन्त्रः पठितः। नायं दोषः मातृशब्दवन्माम्नवर्णिकाग्न्यादिशब्दानामनेकार्थत्व-सम्भवात्। यथा मातृशब्दः प्रस्थादिना धान्यस्य मातरं जन-नीञ्चाचष्टे तथाग्न्यादिशब्दाः स्वाहाकाराख्यदेवतामाचक्षन्तां। न च स्वाहाकाराख्यदेवतैव संस्क्रियतामिति वाच्यं, संस्कृ-तायास्तस्या अन्यत्रोपयोगाभावात्। तस्मादिष्टेराराद्उप-कारक इत्याद्यः पक्षोऽभ्युपगन्तव्यः। मैवं, चतुर्थ्या तद्धितेन वा सर्वत्र देवता विधीयते। न चात्र तौ विद्येते। किञ्चायं विधिर्देवतायागावुभौ विधत्ते, देवताविशिष्टं यागं वा, देवता-मात्रं वा, यागमात्रं वा। नाद्यः वाक्यभेदापत्तेः। न द्वितीयो गौरवप्रसङ्गात्। न तृतीयः, अप्राप्तस्य यागस्याननुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात्। तस्माच्चतुर्थः पक्षः परि-शिष्यते। तत्र हि द्वितीयान्तस्वाहाकारशब्दः पौर्णमासीं यजत इत्यादाविव कर्मनामधेयं भविष्यति, तस्मादाज्यभागादिदेव-तासंस्कार उत्तमः प्रयाजः, एवञ्च सति सौर्यादिविकृतिषूत्तम-प्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरित्यागो बाधविचा-रान्तर्गतस्याधिकरणस्य फलं भविष्यति। यत्तु पञ्चमाध्याये प्रयाजानामनुष्ठानक्रमे पाठः प्रमाणमिति चिन्तितं तदस्मा-भिः 'इषे त्वोर्जे त्वा' 'यज्ञस्य घोषदसि' इत्यनयोरनुवाकयोः पौर्वापर्ये पाठ एव प्रमाणमित्यभिप्रेत्य तत्रैवोदाहृतं।

तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

न फलं प्रयाजादि फलं वा न चाङ्गता।
प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः॥
प्रयाजादेः फलापेक्षा कथं भावोऽपि च क्रतोः।
तेन प्रकरणाम्नानं तस्मादङ्गाङ्गिता तयोः॥

सार्धपादद्वये विनियोजकत्वेनोक्तानि यानि श्रुतिलिङ्ग-वाक्यानि तेभ्योऽतिरिक्तं किञ्चित् प्रकरणनामकं प्रमाणं न वेदे पश्यामः। न हि पदतत्सामर्थ्यान्वयैरसंस्पृष्टो कश्चि-द्वेदभागः क्वचित् केनचिदाम्नायते। एकवाक्यतामापन्नो वाक्यसमूहः प्रकरणमिति चेत्। न, वाक्ययोः सतोः पश्चादेक-वाक्यताया अभावात्। न हि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत समिधो यजतीति अनयोर्वाक्ययोः परस्पराकाङ्क्षास्ति, येनैकवाक्यता कल्प्येत। तस्मात् प्रयाजादीनां न दर्शपूर्ण-मासाङ्गत्वमिति प्राप्ते ब्रूमः। प्रयाजादयः फलहेतवः पुरुष-प्रवृत्तिरूपत्वात् सेवादिवत्। दर्शपूर्णमासावुपकरणैरुपकार्यौ करणत्वात् प्रदीपोपकृतचक्षुर्वत्। तथा सति किं प्रयाजादेः फलं किं वा दर्शपूर्णमासयोरुपकरणमित्याकाङ्क्षायां सम्पन्नं वाक्यैकवाक्यतारूपं प्रकरणं तेन च प्रयाजादीनामङ्गत्वं प्रतीयते।

तृतीयाध्यायस्य प्रथमपादे चिन्तितं।

अभिक्रामं जुहोतीति युक्तं कर्माखिलस्य तत्।
किं वा प्रयाजमात्रस्य तत्त्वकर्तृयुतं भवेत्॥
प्रयाजाभिक्रमणयोः क्रियात्वमुभयोरपि।
मिथःसम्बन्धराहित्यान्नैवं तेऽपि समत्वतः॥

कर्तृयोगाददोषश्चेत् समानेयं समाहितिः ।

ततः प्रयाजसान्निध्यात् तत्कर्त्रैवास्य संयुतिः ॥

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते 'अभिक्रामं जुहोति' इति। तत्र होमकाले यदेतदाहवनीयस्याभिमुख्येन सञ्चरणं तत् कृत्स्नदर्शपूर्णमासकर्त्रा सम्बध्यते न तु प्रयाजमात्रकर्त्रा। कुतः। अभिक्रमणस्य क्रियारूपस्य कारकत्वाभावेन प्रयाजक्रियया सम्बन्धासम्भवादिति चेत्। मैवं, क्रियारूपत्वादेव दर्शपूर्णमास-क्रियया सम्बन्धासम्भवात्। अथोच्येत अभिक्रमणं कर्तृकारकेण साक्षात् सम्बध्यते तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा सम्बध्यत इति। तदेतत् समाधानं प्रयाजसम्बन्धेऽपि समानं। अतः सन्निधिबलात् प्रयाजकर्त्रा सम्बध्यते।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

अभिघार्यं प्रयाजानां शेषेण हविरत्र किं।

शेषधारणतत्पात्रे कार्ये नो वाऽभिघारणं ॥

नान्यथा तेन ते कार्ये न कार्ये प्रतिपत्तितः।

प्राजापत्यवपायास्तु न कोऽप्यर्थोऽभिघारणात् ॥

प्रकृतौ श्रुतं 'प्रयाजशेषेण हवींष्यभिघारयति' इति। तदेतद्विकृतावतिदिष्टं। विकृतयश्च वाजपेयगताः पशवस्ते च द्विविधाः क्रतुपशवः प्राजापत्याः पशवश्चेति। 'आग्नेयं पशु-मालभेत' इत्यादिना विहिताः क्रतुपशवः। इतरे तु 'सप्तदश प्राजापत्यान् पशूनालभते' इति विहिताः। ते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते। ततः सर्वेषामर्थे सकृदेव

प्रयाजा अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवालम्भ्य-त्वात् तदीयहविषां प्रयाजशेषेणाभिघारणं निर्विघ्नमेव सि-ध्यति। प्राजापत्यपशूनान्तु पर्यग्निकरणपर्यन्तमेव तदानी-मनुष्ठानं। आलम्भस्तु माध्यन्दिने सवने तत्कालविशेषस्य ब्रह्मसाम्न्यालभत इति विधानात्। तेषाञ्च प्राजापत्यानां हविषामभिघारणार्थं प्रातःकालीनप्रयाजशेषो धारयितव्यः। न चात्र जुह्वां तद्धारणं सम्भवति, क्रतुपश्वनुष्ठाने जुह्वा व्या-पृतत्वात्। अतः पात्रान्तरं सम्पाद्यं तस्मिन्नयं शेषो धार-यितव्यः। अन्यथा प्राजापत्यहविषां प्रयाजशेषेणाभिघारणा-सिद्धेः। तस्माच्छेषधारणतत्पात्रे सम्पादनीये इति प्राप्ते ब्रूमः। ते उभे न कर्तव्ये। कुतः, अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविःसंस्कारत्वाभावात्। न हि दृष्टे प्रतिपादने सति अदृ-ष्टार्थः संस्कारो युक्तः। दृष्टञ्च जुह्वा रिक्तीकरणमन्यथा प्रयाजशेषोपेतायां जुह्वामाज्यभागार्थतया गृह्यमाणं सङ्की-र्यंत। अतो रिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषेणाभि-घारणं। अस्तु वा तत्र हविःसंस्कारोऽपि। तथापि प्राजापत्य-वपायामभिघारणं व्यर्थं। रूक्षत्वनिवारणाय ह्यभिघार्यते। न च प्राजापत्यवपायां रूक्षतास्ति, ब्रह्मसाम्नैव तद्रूक्षताया निवारितत्वात्। अत एव श्रूयते 'अस्या वा एतर्हि वपा यदन-भिघृता ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते तेनास्या-स्तेनाभिघृताः' इति। अस्या रूक्षा इत्यर्थः। तस्माच्छेषधारण-तत्पात्रे न कर्तव्ये।

तत्रैवान्यच्चिन्तितं।

> चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतं।
> जुह्वामानयतीत्यौपभृतं नैषा प्रयोजयेत्॥
> प्रयोजयेद्गतानीतिप्रयाजाद्यखिलार्थता।
> अतौपभृत आज्येन जौहवेन विकल्पनात्॥
> न प्रयोजकता मैवं चितयार्थं हि जौहवं।
> अतिहायेड इत्युक्तेश्चतुर्थे सा प्रयोजयेत्॥

दर्शपूर्णमासयोः श्रूयते 'अतिहायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतं' इति। अस्यायमर्थः। पञ्चानां प्रयाजानां मध्ये हतीयः प्रयाज इट्शब्देन बहुवचनान्तेनाभिधीयते। तं हतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुमुपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वामानेतव्यमिति। तदेतदानयनमुपभृत्याज्यग्रहणस्य न प्रयोजकं। तथा हि जुह्वपभृद्ध्रुवासु तिसृषु स्रुक्ष्वाज्यग्रहणप्रकारस्तद्विनियोगश्चैवमाम्नायते "चतुर्जुह्वां गृह्णाति। अष्टावुपभृति। चतुर्ध्रुवायां। यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति। प्रयाजानूयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यं" इति। तत्र जौहवं केवलं प्रयाजार्थमौपभृतं तु प्रयाजानूयाजार्थमिति प्रयाजेषु जौहवमौपभृतञ्चोभयं विकल्प्यते। तथा सति यदा जौहवेन प्रयाजा इज्यन्ते तदानीमौपभृतस्यानयनमेव नास्ति। कुत आनयनस्य प्रयोजकत्वं। यदा त्वौपभृतेन प्रयाजहोमस्तदानीमौपभृतस्यार्धं प्रयाजार्थं इत-

रर्दनूयाजार्थं। तयोः प्रयाजसाधनमर्धं प्रथमप्रयाजकाल एव जुह्वामानीतमिति न तस्य चतुर्थप्रयाजं प्रति समानयनं विधीयते। यत्त्वनूयाजार्थमितरदर्धमुपभृत्यवशिष्टं तन्मध्ये किञ्चिच्चतुर्थप्रयाजं प्रति समानेतव्यं, तत्त्वनूयाजैरेव प्रयुक्तमिति। न तस्यानयनं प्रयोजकमिति प्राप्ते ब्रूमः। यश्चौहवं तत् प्रयाजचितयार्थं यदौपभृतं तदेवावशिष्टप्रयाजद्वयार्थं अनूयाजार्थञ्चेत्येवं वाक्यद्वयस्य व्यवस्थायां सम्भवत्यां अष्टदोषग्रस्तो विकल्पो नाश्रयितुं शक्यः। यदा जौहवस्वीकारः तदानीमौपभृतवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वीक्रियेत. पुनरपि कदाचिदौपभृतस्वीकारे त्यक्तं प्रामाण्यं स्वीक्रियेत, स्वीकृतमप्रामाण्यं त्यजेतेत्यौपभृतवाक्ये चत्वारो दोषाः। जौहववाक्येऽप्येवं चत्वार इत्यष्टौ दोषाः। यथोक्तव्यवस्था चातिहारयेद इतिवाक्यादध्यवसीयते। तथा सत्यौपभृतस्यानूयाजा यथा प्रयोजकास्तथैव चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि प्रयोजकमेव।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितं।

प्रयाजानूयाजसिद्धौ पात्रैक्यमुत भिन्नता।
एकोपभृद्द्वयोरर्थे दृष्टान्तो विकृतौ तथा॥
विकृतौ पात्रभेदोऽस्तु पृषदाज्यपृषदाज्ययोः।
एकपात्रे यथाशक्तेर्द्रव्यैक्यं प्रकृतौ द्वयोः॥

अग्नीषोमीयपशौ प्रयाजानूयाजसाधनं द्रव्यं धारयितुमेकमेव पात्रं कर्तव्यं। कुतः, प्रकृतावुभयार्थस्याज्यस्यैकस्यैवोप-

श्रुता घृतत्वेन विकृतावपि तदतिदेशादिति प्राप्ते ब्रूमः। प्रकृतिवत् केवलेनाज्येन प्रयाजा इज्यन्ते, अनूयाजास्तु पृषदाज्येन यष्टव्याः, 'पृषदाज्येनानूयाजान् यजति' इति तद्विधानात्। पृषदाज्यं नाम दधिमिश्रमाज्यं। न हि शुद्धमिश्रयोरेकेन पात्रेण धारणं सम्भवति, तस्मादत्र पृथक् पात्रं। यत्तु चतुर्थस्य प्रथमपादे चिन्तितं जुह्वामाज्यग्रहणं प्रयाजत्रयार्थमुपभृत्याज्यग्रहणमनूयाजार्थञ्चेति, यदप्यत्रैव चिन्तितं उपभृति चतुर्ग्रहणादष्टग्रहणञ्चेति, तदुभयमस्माभिराज्यग्रहणविधायके 'प्रत्युष्टꣳ रक्षः' इत्यनुवाके प्रदर्शितं॥ ० ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः॥ * ॥

---

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रतिदधाति पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी प्रबाहुग् जुहोति तस्मात् प्रबाहुक् चक्षुषी देवलोकं वा अग्निना यजमानोऽनुपश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै राजानौ वा एतौ देवतानां॥ १ ॥

यदग्नीषोमावन्तरा देवता इज्येते देवतानां वि-धृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वद-न्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार मूर्धन्वती पुरोऽनु-वाक्या भवति मूर्धानमेवैनꣳ समानानां करोति ॥ ॥ २ ॥

नियुत्वत्या यजति भ्रातृव्यस्यैव पशून् नियुवते केशिनꣳ ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शक्करीꣳ श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभ-योर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति पुरस्ताल्लक्ष्मा पुरोऽनु-वाक्या भवति जातानेव भ्रातृव्यान् प्रणुदत उपरि-ष्टाल्लक्ष्मा ॥ ३ ॥

याज्या जनिष्यमाणानेव प्रतिनुदते पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरि-ष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योति-

ष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ता-
ल्लक्ष्मा पुरोऽनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान्
भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य
एवं वेद भुङ्क्त एनमेतौ वज्र आज्यं वज्र आज्यभागौ ॥
॥ ४ ॥

वज्रो वषट्कारस्त्रिवृत्तमेव वज्रꣳ सम्भृत्य भ्रातृ-
व्याय प्रहरत्यच्छम्बट्कारमपगूर्य वषट् करोति स्तृत्यै
गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्या ब्रह्मन्नेव
क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति
य एवं वेद प्रैवैनं पुरोऽनुवाक्ययाह प्रणयति याज्यया
गमयति वषट्कारेणैवैनं पुरोऽनुवाक्यया दत्ते प्रयच्छ-
ति याज्यया प्रति ॥ ५ ॥

वषट्कारेण स्थापयति त्रिपदा पुरोऽनुवाक्या भव-
ति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति चतुष्प-
दा याज्या चतुष्पद एव पशूनवरुन्धे द्व्यक्षरो वषट्-
कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रतितिष्ठति
गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्यैषा वै सप्त-
पदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन्
य एवं वेद शक्नोत्येव यच्छिक्षति ॥ ६ ॥

देवतानां करोत्युपरिष्टादाज्यभागौ प्रति शृणोत्येव द्वे च॥ २॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

आद्यानुवाके विस्पष्टं प्रयाजाः पञ्च वर्णिताः।
अनुवाके द्वितीयेऽस्मिन् वक्ष्यावाज्यभागकौ॥

तत्र मन्त्रा याजमानकाण्डे समाम्नाताः। कल्पः। यदा आगात्यग्नयेऽनुब्रूहीति तदाग्नेयस्याज्यभागस्य पुरोऽनुवाक्यामन्वाहाग्निर्वृत्राणि जङ्घनदिति पौर्णमास्यामग्निः प्रत्नेन जन्मनेत्यमावास्यायां यदा आगात्यग्निं यजेति तच्छुपाणेन यजति जुषाणो अग्निराज्यस्य वेत्विति यदा आगाति सोमायानुब्रूहीति तत् सोमस्य पुरोऽनुवाक्यामन्वाह त्वꣳ सोमासि सत्पतिरिति पौर्णमास्यां सोमगीर्भिष्ट्वा वयमित्यमावास्यायां यदा आगाति सोमं यजेति तच्छुपाणेनैव यजति जुषाणः सोम आज्यस्य हविषो वेत्विति। तत्र प्रथमस्याग्नेयस्य पाठस्तु "अग्निर्वृत्राणि जङ्घनत्। द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः। जुषाणो अग्निराज्यस्य वेतु" (ब्रा०का०३।प्र०५।अ०६) इति। अयमग्निराज्यं जुषाणः पिबत्विति शेषः। कीदृशोऽग्निः वृत्राणि कर्मानुष्ठाननिवारकाणि पापानि जङ्घनत् अतिशयेन हतवान्। विपन्यया विशिष्टयाऽऽत्मस्तुत्या द्रविण-

स्तुरस्मदर्थं द्रविणेच्छुः समिद्धः सम्यक् ज्वालितः शुक्रः शोच-मानः आहुतः समन्तादस्माभिराराधितः, अनेनाज्येनाहुतो वा*। जुषाणः प्रीयमाणोऽयमग्निराज्यस्य वेतु अस्मद्दत्तमिदमाज्यमश्नातु। प्रथमस्य सौमस्य पाठस्तु “त्वꣳ सोमासि सत्पतिः। त्वꣳ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः। जुषाणः सोम आज्यस्य हविषो वेतु” (ब्रा०) इति। हे सोम त्वं सतां सद्भिरनुष्ठितानां कर्मणां पतिरसि। किञ्च त्वं राजासि दीप्तिमानपि च पापघाती। किञ्च भद्रः फलप्रदत्वेन मङ्गलरूपः क्रतुरसि तस्य क्रतोर्निष्पादकत्वात्। तादृशः सोम इदमाज्यं हविरश्नातु। द्वितीयस्याग्नेयस्य पाठस्तु “अग्निः प्रत्नेन जन्मना। शुम्भानस्तनुवꣳ स्वां। कविर्विप्रेण वावृधे। जुषाणो अग्निराज्यस्य वेतु” (ब्रा०) इति। अयमग्निः प्रत्नेन पुरातनेन स्वजन्मना स्वां तनुवं स्वतनुं शुम्भानः शोधयन् कविर्विपश्चित्पण्डितः पराभिप्रायज्ञः विप्रेणर्त्विजा कृतां स्तुतिं श्रुत्वा वावृधे वृद्धिं प्राप्तः। जुषाण इत्यादि पूर्ववत्। द्वितीयस्य सौम्यस्य पाठस्तु “सोम गीर्भिष्ट्वा वयं। वर्धयामो वचोविदः। सुमृडीको न आविश। जुषाणः सोम आज्यस्य हविषो वेतु” (ब्रा०) इति। हे सोम वचोविदो वाक्यतात्पर्याभिज्ञा वयं गीर्भिः स्तुतिरूपाभिर्वाग्भिर्वर्धयामः। त्वं तु सुमृडीकः सम्यक् सुखयन् नः अस्मानाविश। तादृशः सोम आज्यं हविरश्नातु। मन्त्रकाण्डोक्तैरेतैः ताभ्यामाज्यभागौ विधत्ते “चक्षुषी वा

---

* अस्माभिराराधितोऽनेनाज्येनाहुतो वा। इति पा०।

एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रतिदधाति" इति। याजमानब्राह्मणे 'अग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान्' इत्युक्तत्वादाज्यभागयोर्यज्ञचक्षुष्ट्वं। आहवनीयस्य पूर्वभागं होमदेशत्वेन विधत्ते "पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी" इति। लोकेऽपि शिरसः पूर्वभागे चक्षुषी तिष्ठतः, न तु पृष्ठभागे। उभयोराहुत्योः पङ्क्तिवक्रत्वं परिमाणवैषम्यञ्च वारयितुं साम्यं विधत्ते "प्रबाहुग् जुहोति तस्मात् प्रबाहुक् चक्षुषी" इति। प्रबाहुक् समं यथा भवति तथा जुहुयादित्यर्थः। एकस्यां पङ्क्तावुत्तरदक्षिणदेशं क्रमेण विधत्ते "देवलोकं वा अग्निना यजमानोऽनुपश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै" इति। देवलोक उत्तरदेशस्थः पितृलोको दक्षिणदेशस्थः, अतस्तथाविधेन होमेन तयोरनुख्यातिरभिज्ञानं भवति। उभयोराज्यभागयोर्मध्यदेशं प्रधानयागस्थानत्वेन विधत्ते "राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृताः" इति। इज्येते इत्यत्र बहुवचनव्यत्ययो द्रष्टव्यः। प्रधानदेवता हि तयोर्मध्य इज्यन्ते। अत एवाथर्वणिका आमनन्ति,

'यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत्' ॥ इति।

एवञ्च सत्युभयतोऽवस्थिताभ्यां राजभ्यां मध्येऽवस्थिताः

प्रधानदेवता विशेषेण धृता भवन्ति। अथ वात्र देवताशब्दे-नाङ्गान्तरदेवता* विवक्षिताः। ता अन्तरेण तासां मध्ये राजानावग्नीषोमाविज्येते, ताश्च देवताः परितोऽवस्थिताः सेव्य-भृत्यवद्देतौ राजानौ विशेषेण धारयन्ति। अथ वा राजभ्यां ताभ्यामन्या देवता जीवितप्रदानेनैव पोषिता भवन्ति। य-स्मादेवं तस्माल्लोकेऽपि मनुष्याः सर्वे राज्ञा विधृता वर्तन्ते। इत्थमाज्यभागौ निरूप्य तदीये याज्यानुवाक्ये उपरितन-स्याग्नेयस्य प्रधानस्य हविषो याज्यानुवाक्ये च क्रमेण विधत्ते "ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतो-दतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याज्यभागस्य जु-षाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार" इति। अन्यतोऽधोभाग एव दन्ता येषां ते गवादयोऽन्यतोदतः, तान् पशून् येन यज्ञाङ्गेन यजमानो दाधार प्राप्नोति तद्यज्ञाङ्गं किन्नाम यजमानः कुरुते। उभयत ऊर्द्धाधरयोर्दन्ता येषामश्वादीनां त उभयतोदतः, तान् येन प्राप्नोति तदपि किमित्येवं ब्रह्म-वादिष्वेके विप्राः पृष्टाः। इतरे विप्रा उत्तरमवदन्। आज्य-भागस्य होमकाले पुरोऽनुवाक्यारूपेण काञ्चिदृचं पठित्वा याज्यारूपेण जुषाण इत्यादियजुषा यागं करोति, तेनाधोभागे सम्पूर्णाया ऋचः पाठेनाधोभागस्थदन्तयुक्तान् पशूनाप्नोति। प्रधानस्याग्नेयस्य हविषो होमे पुरोऽनुवाक्यामप्यृचमेव पठित्वा

* अन्तरे देवता इति का०।

याज्ययाप्युभयैव यजति, तेनाज्यभागयोर्द्वयोः सम्पूर्णत्वेन भा-
गद्वयेऽपि इन्द्रयुक्तानग्न्यादीन् प्राप्नोति। तत्राज्यभागविषया
पुरोऽनुवाक्या यजुषेत्युभयं पूर्वमेवोक्तं व्याख्यातञ्च। आग्नेयविषये
च याज्यानुवाक्ये वक्ष्येते *तस्मादीदृशमेवोभयत्र वक्तव्यमिति
विधिः पर्यवस्यति। आग्नेययागस्य याज्यानुवाक्ये सामान्येन
विधाय विशेषाकारेण विधत्ते "मूर्धन्वती पुरोऽनुवाक्या भवति
मूर्धानमेवैनꣳ समानानां करोति नियुत्वत्या यजति भ्रातृव्य-
स्यैव पशून् नियुवते" इति। मूर्धञ्छब्दो यस्यामृच्यस्ति सा
मूर्धन्वती, तया समानानां मध्ये यजमानं मूर्धानं मूर्धवदुत्कृष्टं
करोति। नियुच्छब्दो यस्यामृच्यस्ति सा नियुत्वती, तया
वैरिणां पशून् नितरां नियोजयति। एते याज्यानुवाक्ये मन्त्र-
काण्डे समाम्नाते। तयोर्विनियोगं बोधायनो दर्शयति 'अथ
हविषामग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयस्य पुरोडाशस्य' इति।
तत्र प्रथमायाः पाठस्तु "अग्निर्मूर्धा दिवः ककुत्। पतिः पृ-
थिव्या अयं। अपाꣳ रेताꣳसि जिन्वति" (आ०का०१।प्र०५।
अ०७) इति। अयमग्निरादित्यरूपेण दिवः द्युलोकस्य ककुत्
उच्छ्रितो मूर्धा द्युलोकस्य शिरःस्थानीयः, पृथिव्याः पतिर्दीपपा-
कादिकारित्वेन पालकोऽप्ययं, किञ्चापां रेतांसि उदककार्याणि
स्थावरजङ्गमात्मकानि शरीराणि जाठराग्निरूपेण जिन्वति प्री-
णयति। द्वितीयस्याः पाठस्तु "भुवो यज्ञस्य रजसश्च नेता।
यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे सुवर्षां।

---

* तस्मादृचमेवेति का०।

जिह्वामग्ने चकृषे हव्यवाहं" (ऋ०) इति। अयमग्निर्भूर्लोकस्य तत्रानुष्ठेयस्य यज्ञस्य तस्मिन् यज्ञे प्रवर्तकस्य रजोगुणस्य च नेता निर्वाहकः। तादृश हे अग्ने यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुद्भी रथे नितरां योज्यमानाभिः शिवाभिरुत्तमाभिरश्वजातिभिः सचसे समवैषि, तस्मात् दिवि मूर्धानं शिरोवदुन्नतस्थितिं दधिषे धारयसि। कीदृशं मूर्धानं सुवर्षां सुवः स्वर्गलोके स्यति सर्वदा तिष्ठतीति सुवर्षाः तं सुवर्षां, सोमपावत् पुँलिङ्गोऽयं शब्दः। हे अग्ने त्वमस्मिन् यज्ञे हव्यवाहं हविषः प्रापिकां जिह्वां ज्वालां चकृषे करोषि। तदिदं याज्यानुवाक्यायुगलमनेकप्रकारेण प्रशंसति "केशिनꣳ ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शक्वरीꣳ श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति" इति। दर्भनाम्नः पुत्रः कश्चित् केशी, सत्यकामस्य पुत्रोऽपरः केशी, तयोर्दार्भ्यं प्रति सात्यकामिर्ब्रूते। हे दार्भ्य श्वः प्रयोक्ष्यमाणे ते त्वदीये यज्ञे सप्तभिः पदैरुपेतां शक्वरीच्छन्दस्कामृचं प्रयोक्ष्यसे। सा च ऋक् अत्यन्तवीर्यवती। अग्निर्मूर्धेत्यादयस्त्रयः पादाः, भुवो यज्ञस्येत्यादयश्चत्वारः पादाः, तदुभयं मिलित्वा सप्तपदा शक्वरी भवति। शक्तिरस्या अस्तीति शक्वरी, सा च शक्तिरेव द्रष्टव्या यस्याः शक्वर्याः सामर्थ्येन पूर्वमुत्पन्नान् भ्रातृव्यान् प्रणुदते निराकरोति, जनिष्यमाणांश्च यथा नोत्पत्स्यन्ते तथा

प्रतिनुदते प्रतिबध्नातीत्यर्थः। किञ्च तदीयेन वीर्येण भूर्लोकस्वर्गलोकयोर्ज्योतिरुत्कर्षं पुरुषो धत्ते। किञ्च तदीयेन वीर्येण बलीवर्दो लाङ्गलशकटवाहिना स्कन्धरूपेण पूर्वभागेन स्वामिनं पालयति, धेनुश्च क्षीरप्रदेनोधसाऽपरभागेन स्वामिनं पालयति, तथाविधेयं शक्तिः। याज्यानुवाक्ययोर्लक्षणं दर्शयति "पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति जातानेव भ्रातृव्यान् प्रणुदत उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रतिनुदते" इति। मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म, तद्यस्यामृचि पूर्वार्धे विद्यते सा पुरोऽनुवाक्या। तन्नाम यस्यामुत्तरार्धे विद्यते सा याज्या। तद्यथा 'अग्निर्मूर्धा' इति पूर्वार्धेऽग्निशब्दः। 'जिह्वामग्ने चकृषे हव्यवाहं' इत्युत्तरार्धेऽग्निशब्दः। पूर्वार्धगतेन लक्ष्मणा पूर्वोत्पन्नभ्रातृव्यनिराकरणं। उत्तरार्धगतेन लक्ष्मणा जनिष्यमाणवैरिप्रतिबन्धः। तदेव पूर्वोत्तरार्धगतं लक्ष्मद्वयमनूद्य पुनरपि द्वेधा प्रशंसति "पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ" इति। अस्य लोकस्य पूर्वभावित्वात् पूर्वभाविना लक्ष्मणा ज्योतिर्भवति। स्वर्गलोकस्योपरिवर्तित्वादुपरिवर्तिना लक्ष्मणा ज्योतिर्वेदितुरपि तदेव फलं, एवमनडुहो धेन्वाश्च पूर्वोत्तरार्धसाम्यं योज्यं। एतस्योभयस्य वेदितार-

मेतौ धेन्वनडुहौ स्वस्वोपकारेण पालयतः। अथ याज्यान्ते प्रयोज्यस्य वषट्कारस्य विधिमर्थवादेनोन्नयति "वज्र आज्यं वज्र आज्यभागौ वज्रो वषट्कारस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्रहरत्यच्छम्बट्कारं" इति। तान्नूनप्ताब्राह्मणे 'घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्' इत्युक्तत्वादाज्यस्य वज्रत्वं। 'वृत्राणि अघ्नत्' इति मन्त्राम्नानादाज्यभागयोर्वज्रत्वं। 'वषट्कारो वै गायत्रियै शिरोऽच्छिनत्' इत्युक्तत्वाद्वषट्कारस्य वज्रत्वं। तदेतत् त्रयमाज्यभागाख्यकर्मणि मिलित्वा त्रिगुणो वज्रः सम्पद्यते। तादृशेन भ्रातृव्यस्य प्रहरणे सति वषट्कारेण वैयर्थ्यं तस्य प्रहारस्य न भवति। वषट्कारस्योच्चध्वनिं विधत्ते "अपगूर्य वषट् करोति स्तृत्यै" इति। अपगूर्य उच्चैर्ध्वनिं कृत्वेत्यर्थः। स च ध्वनिर्भ्रातृव्यस्य हिंसायै सम्पद्यते। अयंच वषट्कारविधिराग्नेयादियाज्यास्वपि समानो द्रष्टव्यः। वषट्कारोऽन्त्यः सर्वत्रेत्याश्वलायनवचनात्। पुनरप्याग्नेयस्य याज्यानुवाक्ये छन्दोद्वारा प्रशंसति "गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यः" इति। 'अग्निर्मूर्धा' इति गायत्री, सा च ब्राह्मणेन सहोत्पन्नत्वाद्ब्रह्मस्वरूपा। 'भुवो यज्ञस्य' इति त्रिष्टुप्, सा च क्षत्रेण सहोत्पन्नत्वात् क्षत्ररूपा। तथा सति गायत्रीत्रिष्टुभोः पौर्वापर्येण ब्राह्मणमनु पश्चात् क्षत्रियः प्रवर्तितवान् भवति। यस्माद्ब्राह्मणः पूर्वं प्रवृत्तस्तस्मात् मुख्यो भवति। मुखे भवतीति व्युत्पत्तेः। तद्वेदनं प्रशंसति "मुख्यो भवति य एवं वेद"

इति। पुनरपि पुरोऽनुवाक्यादित्रयं देवतासमीपप्राप्तिद्वारेण प्रशंसति "प्रैवैनं पुरोऽनुवाक्ययाऽऽह प्रणयति याज्यया गमयति वषट्कारेण" इति। पुरोऽनुवाक्यापाठेन हविषो दातारमेव देवानामग्रे प्रकर्षेण कथितवान् भवति। याज्यया तं मार्गेण नयति। वषट्कारेण देवान् प्रापयति। पुनरपि तस्य प्रापितस्य यजमानस्य प्रतिष्ठापनद्वारेण प्रशंसति "प्रैवैनं पुरोऽनुवाक्यया दत्ते प्रयच्छति याज्यया प्रति वषट्कारेण स्थापयति" इति। एवं यजमानं त्रिभिर्मन्त्रैः क्रमाद्धस्तेन गृहीत्वा देवेभ्यः प्रदाय तत्रोपवेशयति। पादसङ्ख्यामक्षरसङ्ख्यां च प्रशंसति "त्रिपदा पुरोऽनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनवरुन्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रतितिष्ठति" इति। पशुषु प्राप्तेषु सत्सु पश्चादेव ब्राह्मणभोजनादौ चोरादिकं दातुं तत्पश्चौ द्वाभ्यां पादाभ्यां स्थिरस्तिष्ठति। पूर्वमुक्तं 'सप्तपदां ते शक्करीं' इति, तत्र पादोदाहरणेन प्रशंसति "गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्यैषा वै सप्तपदा शक्करी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एवं वेद शक्नोत्येव यच्छिक्षति" इति। देवा यत् कार्यमुद्दिश्याशिक्षन् शक्ता भवामेत्यैच्छन्, यद्वा परस्परमिदं कार्यं कर्तव्यमिति शिक्षितवन्तः, एतया शक्कर्या ते तत्कार्यं कर्तुं शक्ता अभवन्। एतद्वेदितापि यत्कार्यं कर्तुं शिक्षिष्यति तत्कार्ये शक्तो भवत्येव। तदेवमाग्नेयस्य याज्यापुरो-

ऽनुवाक्ययोर्द्विधालक्षणेन प्रशंसया च प्राजापत्योपांशुयाजा-दीनां याज्यानुवाक्याः सर्वाः मन्त्रकाण्डाम्नाता व्याख्याता द्रष्टव्याः। ताः स्वप्रमाम्नातक्रमेणोदाहृत्याचराथें वर्णयामः। कल्पः। प्रजापते न त्वदेतेति यस्य प्राजापत्य उपांशुयाजो भवतीति। पाठस्तु "प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु। वयꣳ स्याम पतयो रयीणां। स वेद पुत्रः पितरꣳ स मातरं। स सूनुर्भुवत् स भुवत् पुनर्मघः। स द्यामौर्णोदन्तरिक्षꣳ स भुवः। स विश्वा भुवो अभवत् स आभवत्" (ब्रा०) इति। हे प्रजापते त्वदन्यः कोऽपि पुरुषः उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं न समर्थोऽभूत्। परिभवः सृष्टेरप्युपलक्षणं, सृष्टिसंहारयोरसमर्थ इत्यर्थः। अतस्ते तव वयं यत्कामाः जुहुमस्तत् फलमस्माकमस्तु वयं धनपतयः स्याम। द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुरिति मन्त्रवर्णात् ब्रह्माण्डमध्ये सत्यलोके वर्तमानस्य प्रजापतेरण्डोपरितनं कपालं द्यौः पिता, अधस्तनकपालरूपा पृथिवी माता। स पुत्रः प्रजापतिस्तं पितरं तां च मातरं वेत्ति, अभिज्ञः स प्रजापतिः सूनुर्भवति तयोर्मातापित्रोः पुत्रो भवति, अत एव तयोर्वेदनं तत्रोपपन्नमेव। मघशब्दो धनवाची, पुनः पुनर्यजमानाय दातव्यं धनं यस्य स पुनर्मघस्तादृशोऽयं प्रजापतिर्भुवद्भवति। किञ्च स प्रजापतिः सर्वव्यापि विराड्रूपं भूत्वा द्यामुपरितनकपालमौ-र्णोदाच्छादितवान्। तथाऽन्तरिक्षं भूर्मञ्च स चौर्णोत्। किञ्च

स एव विश्वा भुवः इमं लोकमारभ्याधस्तनाः पूर्वा भूमीर-भवत् प्राप्तवानाच्छादितवानित्यर्थः। किञ्च सत्यलोके समा-गत्य चतुर्मुखत्वेन रूपान्तरेण आ परितो अभवत्। कल्पः। तथा-ग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयस्य पुरोऽनुवाक्येति। पाठस्तु "अग्नीषोमा सवेदसा। सहूती वनतं गिरः। सं देवत्रा बभूवथुः। युवमेतानि दिवि रोचनानि। अग्निश्च सोम सक्रतू अधत्तं। युवꣳ सिन्धूꣳरभिशस्तेरवद्यात्। अग्नीषोमा-वमुञ्चतं गृभीतान्" (ब्रा०) इति। हे अग्नीषोमौ गिरोऽस्म-दीयाः स्तुतीर्वनतं भजतं। कीदृशौ सवेदसा समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ, देवत्रा देवेषु मध्ये समभूवथुः। युवां सम्भूयैव स्थितौ न कदाचिदप्यन्योन्यवियुक्तावित्यर्थः। हे सोम त्वमग्निश्चेत्येतौ युवां सक्रतू समानसङ्कल्पौ सन्तौ दिव्येतानि रोचनानि नक्षत्राण्यधत्तं अस्थापयतं। हे अग्नीषोमौ युवां गृभीतान् सिन्धून् रथ्योदकादिनिमित्तेनापूतत्वापवादेन पङ्कादिरूपेणावद्येन दोषेण च गृहीताः सर्वा नदीः अभि-शस्तेरस्मादपवादात् अवद्यात् पङ्कादिदुष्टदोषाच्चामुञ्चतं मोचितवन्तौ। यद्यप्येतत् सर्वमीश्वरकृतं तथापि तद्रूपत्वेनैतौ स्तूयेते। कल्पः। इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्न-स्येति। पाठस्तु "इन्द्राग्नी रोचना दिवः। परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यं। श्नथद्वृत्रमुत सनोति वाजं। इन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरेः। सहस्तमा सहसा वाजयन्ता" (ब्रा०) इति। हे इन्द्राग्नी दिवस्परि स्वर्ग-

स्योपरि रोचना दीप्यमानौ युवां वाजेषु यजमानसम्बन्धिव्व-
न्नेषु निमित्तभूतेषु भूयसः दातारौ भवितुमिच्छथः तत्
तदीयं बुभूषणं वां युवयोः वीर्यं सामर्थ्यं प्रचेति चेतयति
प्रकर्षेण ज्ञापयतीत्यर्थः। इन्द्रा यो अग्नी इत्यत्र समस्तं पदं
विच्छिद्य मध्ये य इति पदमाम्नातं। तथा च हे इन्द्राग्नी
इति सम्बोधनं, यो यजमानो वृत्रं विरोधिनं पाप्मानं अथत्
निराकरोति, उत वाजं हविर्लक्षणमन्नं सनोति ददाति;
ह्वरिः कौटिल्यं, तेन सह विद्यमानौ सह्वरी, यजमानस्य
अङ्गाराचित्यादिच्छिद्रान्वेषणेन कुटिलावपि युवां सपर्यात्।
अप्रमत्तो यो यजमानः परिचरति तादृशं यजमानं युवा-
मेवानुगृह्णीतमिति शेषः। कीदृशौ युवां इरज्यन्ता अनु-
ग्रहेण भक्तचित्तं रञ्जयन्तौ* भूरेर्बहुलस्य वसव्यस्य धन-
समूहस्य दाताराविति शेषः। सहस्तमा अतिशयेन सहिष्णू,
सहसा बलवन्तौ, वाजयन्ता वाजं हविर्लक्षणमन्नं यन्तौ
प्राप्नुवन्तौ। कल्पः। एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूत
प्रभूनित्यैन्द्रस्य यथेन्द्रं साजात्यमिति। पाठस्तु "एन्द्र सान-
सिꣳ रयिं। सजित्वानꣳ सदासहं। वर्षिष्ठमूतये भर। प्रससा-
हिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभर
दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनां" (ब्रा०)
इति। हे इन्द्र रयिं धनमूतयेऽस्मद्रक्षणार्थं आभर आहर
आनय। कीदृशं धनं। सानसिं सनसो दानस्य सम्बन्धिनं, स्वजे-

---

* इज्यमानाविति का०।

भ्यो दातुं पर्याप्तमित्यर्थः। अजित्वानं जित्वभिर्जयशीलैः पुत्रा-दिभिरुपेतं। सदासहं सर्वदा विरोधिनां सोढारं तत्तिर-स्कारक्षममित्यर्थः। वर्षिष्ठमतिशयेन प्रवृद्धं। हे पुरुहूत पुरुषु बहुषु यज्ञेष्वाह्वयमान अचुम् प्रकर्षेण समाहिषे सर्वदा सहसे तिरस्कुरुषे इत्यर्थः। ते शुभ्मो ज्येष्ठः तव बलं प्रशस्तमित्यर्थः। इहास्मिन् कर्मणि रातिरस्तु फलदानमस्तु। हे इन्द्र दक्षिणेन हस्तेन वसूनि धनान्याभर समानय। सिन्धूनां धनवाहिनीनां समुद्रसमानानां* रेवतीनां प्रजानां पतिरसि। कल्पः। अथ वै माहेन्द्रं महाꣳ इन्द्रो य ओजसा महाꣳ इन्द्रो नृवदाचर्षणि-प्रा इति माहेन्द्रस्येति। पाठस्तु "महाꣳ इन्द्रो य ओजसा। पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वत्सस्य वावृधे। महाꣳ इन्द्रो नृवदाचर्षणिप्राः। उत द्विबर्हा अमिनः सहोभिः। अस्मद्रि-यग्वावृधे वीर्याय। उरुः पृथुः सुकृतः कर्तृभिर्भूत्" (ब्रा०) इति। वृष्टिमान् पर्जन्य इव य इन्द्रः ओजसा बलेन महान् स इन्द्रो वत्सस्यानीयस्य यजमानस्य स्तोमैः स्तोत्रैः वावृधे वर्धतां। अयं महानिन्द्रो नृवन्मनुष्यवदाचर्षणिप्राः चर्षणीन् मनु-ष्यान् प्रति तदभीष्टभोगैः पूरयतीति चर्षणिप्राः, यथा राजामात्यादिमनुष्यः सेवकानभीष्टभोगैरापूरयति तद्वत्। अपि चायं द्वयोः प्रकृतिविकृतिरूपयोर्यागयोर्बर्हा वृद्धिर्यस्ये-ति द्विबर्हाः, अमिनः उपमारहितः, सहोभिर्युक्तः बलवान्। अस्मद्रियक् अस्मदभिमुखः, वावृधे वृद्धिं प्राप्तः, यथा वय-

* सिन्धूनां समुद्रसमूहानामिति तै०।

मस्मानुग्रहाद् वृद्धिं प्राप्ताः तथायमप्यस्मदीयैर्हविर्भिर्विवृद्धः। एतदेव प्रपञ्च्यते। वीर्याय सामर्थ्यसिद्धये कर्तृभिर्यजमानैरयं सुकृतो भूत् सुष्ठु वर्धितोऽभूत्। कीदृशी तस्याभिवृद्धिः उरु-र्यस्या विपुलः, पृथुर्बलेन विस्तीर्णः। कल्पः। अथ स्विष्ट-कृतः पिप्रीहि देवानिति पुरोऽनुवाक्यामनूच्य ये यजामहे-ऽग्निꣳ स्विष्टकृतमयाडग्निरग्नेरिति यथादेवतं निगदमुक्ता जातवेदा जुषताꣳ हविरग्ने यदद्य विशो अध्वरस्येत्यृचमनूच्य* यजतीति। तत्र पुरोऽनुवाक्यायाः पाठस्तु "पिप्रीहि देवाꣳ उशतो यविष्ठ। विद्वाꣳ ऋतूꣳ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने। त्वꣳ होतृणामस्यायजिष्ठः" (ब्रा०) इति। हे अग्ने यविष्ठ युवतम उशतः कामयमानान् देवान् पिप्री-हि अतिशयेन प्रीणय। हे ऋतुपते सूर्यात्मना कालपरि-पालकाग्ने त्वमृतून् यागकालविशेषान् विद्वान् जानन् वर्तसे, तस्मादिहोचिते काले यज। देवेषु भवा ये दैव्या ऋत्विजः सन्ति, अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाग्नीदित्यादिनाम्नाताः, तेभिस्तैर्दैव्यैः सह त्वमस्य यजमानस्य सम्बन्धिनां होतृणामृ-त्विजां मध्ये आयजिष्ठः सर्वतो यष्टृतमोऽसि। निगदपाठस्तु "अग्निꣳ स्विष्टकृतं। अयाडग्निरग्नेः प्रिया धामानि। अयाट् सोमस्य प्रिया धामानि। अयाडग्नेः प्रिया धामानि। अयाट् प्रजापतेः प्रिया धामानि। अयाडग्नीषोमयोः प्रिया धामानि। अयाडिन्द्राग्नियोः प्रिया धामानि। अयाडिन्द्रस्य प्रिया

---

* सन्धायेति तै०।

धामानि। अयाळिन्द्रस्य प्रिया धामानि। अयाड् देवाना-माज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत् स्वं महिमानं। आयजतामेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः” (ब्रा०) इति। स्विष्ट-कृतमग्निं ये यजामह इति शेषः पूरणीयः। ये वयं होतारः स्मः ते वयं स्विष्टकृतमग्निं यजामहे। प्रथमाज्यभागदेवस्याग्ने-र्यानि प्रियस्थानानि तेषु सर्वेषु दैव्यहोतृरूपोऽग्निरयाडिष्ट-वान्। एवमयाट् सोमस्येत्यादिषु योज्यं। देवानामानुपूर्वी चावाहननिगदवद्व्याख्येया। होतुरग्नेः होमस्य स्विष्टकृत्त्वमस्या-इकस्याग्नेः प्रिया धामानि यानि सन्ति तेषु दैव्यो होता यक्षत् यजतु। उक्तानां सर्वेषां देवानां स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता यक्षत् यजतु। आयजतां आभिमुख्येन यागं कुर्वतां यजमानानां एज्याः आभिमुख्येन यष्टव्याः इषः अभीष्टा या देवताः सन्ति ताः सर्वा अध्वरा अस्मिन् यज्ञे स जातवेदाः स्विष्टकृत् सोऽग्निः कृणोतु स्विष्टाः करोतु। तद-र्थमयं स्विष्टकृदग्निरिदं हविर्जुषतां। याज्यायाः पाठस्तु “अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य” (ब्रा०) इति। हे स्विष्टकृदग्ने विशः प्रविष्टस्यानुष्ठितस्याध्वरस्य सम्बन्धि यद्धविरस्ति तदद्य वेः, वेरित्ययमनार्थः, अशान भक्षय। होतर्होमकर्तः, पावक शोधक, शोचे दीप्यमान। तान्येतान्य-ग्निविशेषणानि। हि यस्मात् कारणात् त्वं यज्वा यागस्य कर्ता

तस्मादृता ऋते अस्मदीये यज्ञे महिना महिम्ना देवान् यजासि प्रीणयसि। यत् यस्मात् कारणादिभूः विशिष्टो भवसि तस्मात् कारणात् हे यविष्ठ युवतम अद्य ते तव या हव्या यानि हव्यान्यस्माभिर्दीयन्ते तानि सर्वाणि वह स्वीकुरु। तावता उदाहृताः सर्वा याज्यानुवाक्या आग्नेययाज्यानुवाक्यादिकथनादेवावगन्तव्याः, इति मत्वा ब्राह्मणेन न पृथक् व्याख्याताः॥

अत्र मीमांसा। दशमाध्यायस्य प्रथमपादे चिन्तितं।

आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः।
आरादुतोपकारी स्यात् पूर्वन्यायेन संस्कृतिः॥
निगदेऽग्नेर्द्विरुक्तत्वाद्विधावेकपदोक्तितः।
उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते॥

दर्शपूर्णमासयोः श्रूयते 'आज्यभागावग्नीषोमाभ्यां यजति' इति। तयोः प्रथम आग्नेयो द्वितीयः सौम्यः, तत्र सौम्यस्य नास्ति सन्देहः, प्रधानदेवतासु केवलस्य सोमस्याभावात्। अग्निस्तु केवल आग्नेयपुरोडाशे विद्यते। तस्मादाग्नेय आज्यभागः पुरोडाशदेवताया अग्नेः किं संस्कारः, उतेष्टेरारादुपकारक इति सन्दिह्यते। तत्र यथोत्तमप्रयाजो मन्त्रोक्तानां यक्ष्यमाणदेवतानां संस्कारः, तथा प्रथमाज्यभागोऽप्यग्निमग्न आवहेति निगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः संस्कार इति पूर्वः पक्षः। अत्रोच्यते। निगदस्तावदेवं पठ्यते 'अग्निमग्न आवह सोममावहाग्निमावह' इति। अस्यायमर्थः। हे अग्ने

आहुत्यधिकरणीभूत हविर्याहिण आज्यभागद्वयाष्टाकपाल-पुरोडाशदेवतारूपान् अग्निः सोमोऽग्निरित्येतांस्त्रीन् इहेष्टा-वावहेति। तत्र पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेव-तारूपोऽग्निर्भिन्न इत्यवगम्यते, अन्यथा आवाह्यस्याग्नेरेकत्वे द्विरुक्तिवैयर्थ्यात्। अतः प्रथमाज्यभाग इज्यमानस्याग्नेः पुरो-डाशदेवतात्वाभावात् तत्संस्कारत्वमयुक्तं। किञ्चाज्यभागविधा-वग्नीषोमाभ्यां यजतीति देवताद्वयं समस्तेनैकेन पदेनोच्यते। तत्र यथा सोमस्य यागं प्रति गुणत्वं भवताभ्युपगतं तथाग्नेर-प्यभ्युपगन्तव्यं। तच्च संस्कारपक्षे विरुद्धं संस्कारत्वे प्राधान्या-वश्यम्भावात्। तस्मात् संस्कारपक्षासम्भवात् प्रथमाज्यभागो द्वितीयाज्यभागवदिष्टेरारादुपकारकः। एवञ्च सति सौर्य-यागेऽपि प्रथमाज्यभागेऽग्निर्न निवर्तत इति बाधापवादो वि-चारफलं भविष्यति।

तत्रैव चतुर्थपादे चिन्तितं।

अन्वाहेत्यर्थकर्म स्यात् संस्कारो वाऽर्थकर्मता।
प्रस्तवत् कार्यताज्ञानाद्दृष्टार्थत्वेन संस्कृतिः॥

'तिष्ठन् याज्यामन्वाहासीनः पुरोऽनुवाक्यां' इति दर्श-पूर्णमासयोराम्नातं तदेतत्प्रस्तावादिवदर्थकर्म स्यात्, यथा स्तौति शंसति इत्यत्र कर्तव्यताप्रतीतेः स्तोत्रशस्त्रयोरर्थकर्मत्वं तथानुवचनस्यापि। मैवं, चोदितदेवतास्मरणसंस्कारस्य दृष्ट-प्रयोजनत्वात्, तस्मिन् सति अदृष्टस्य कल्पयितुमशक्यत्वात्। ननु मन्त्रसामर्थ्यादेव देवतास्मरणसिद्धेरन्वाहेति तद्विधानं व्यर्थं।

एवं तर्हि प्रागनुवचनमनूच्य तिष्ठन्नासीन इति स्थानासनगुणौ विधीयेयाताम् ॥ * ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽस्त्वस्त्विति सोऽब्रवीद्यजान् व आज्यभागावुपस्तृणानभिघारयानिति तस्माद्यजन्त्याज्यभागावुपस्तृणन्त्यभिघारयन्ति ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्यं ॥ १ ॥

इति ब्रूयादयातयामा हि देवानां प्रजापतिरिति छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्त्यङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तदृषयो यज्ञवास्त्वभ्यवायन् ते ॥ २ ॥

अपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै तमब्रुवन् कथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाक्षोऽनुपाक्तः ॥ ३ ॥

अवार्छत्येवमवारमित्युपरिष्टादभ्यज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै सर्वाणि कपालान्यभिप्रथयति तावतः पुरोडाशानमुष्मिन् लोकेऽभिजयति यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतङ्कृत्यः सदेवत्वाय भस्मनाभिवासयति तस्मान्माꣳसेनास्थि छन्नं वेदेनाभिवासयति तस्मात् ॥ ४ ॥

केशैः शिरश्छन्नं प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्रमीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यज-

मानः प्रमीयेत सङ्घायोद्वासयति यजमानस्य ॥ ५ ॥

गोपीथाय यदि नश्येदाश्विनं द्विकपालं निर्वपे-द्यावापृथिव्यमेककपालमश्विना वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै ॥ ६ ॥

प्राजापत्यं तेऽक्ष्णोऽनुपाक्तो वेदेनाभिवासयति तस्मा-द्यजमानस्य द्वात्रिंशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

आज्यभागौ च याज्यानुवाक्या उक्ता द्वितीयके।

अथ तृतीयानुवाके प्रधानभूत आग्नेयपुरोडाशोऽभिधा-तव्यः। तत्रादौ तावदुपस्तरणाभिघारणे विधत्ते "प्रजापति-र्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रु-वन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुपस्तृणानभिघारयानिति तस्माद्यजन्त्याज्यभागावु-पस्तृणन्त्यभिघारयन्ति" इति। तवेदं तवेदमिति यज्ञसाधन-द्रव्याणि देवेभ्यो विभज्य दत्त्वा आत्मन्याज्यद्रव्यं प्रजापतिः स्थापितवान्। तं प्रजापतिं देवा एवमब्रुवन्, आज्यमिति य एष एव यज्ञो नाम, सर्वेषु यज्ञियेषु द्रव्येषु घृतस्यैव सारत्वात्,

तस्मादस्माकमप्यस्मिन्नाज्ये क्रियामपि भागोऽस्त्विति । ततः स प्रजापतिस्तान् देवानेवमब्रवीत्, हे देवा युष्मानुद्दिश्य यष्टार आज्यभागौ यजन्तु, प्रधाने च हविषि अधस्तादुपस्तरणमुपर्यभिघारणं कुर्वन्त्विति । उपस्तृणानुपस्तृणन्तु, अभिघारयानभिघारयन्तु इत्यर्थः । यस्मादेवं तस्मादाज्यभागावादौ यजेयुः, प्रधानहविषोऽधस्तादुपस्तृणीयुः उपरिष्टाच्चाभिघारयेयुः । तदेतदुपस्तरणादिसाधनमाज्यं प्रशंसति "ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्यमिति ब्रूयादयातयामा हि देवानां प्रजापतिः" इति । अन्यानि पुरोडाशचर्वादीनि हवींषि दिवैर्दिवसैर्यातयामानि गतसाराणि भवन्ति, आज्यं तु ससारमेव तिष्ठति, न तु स्वादिमानं परित्यजति, तत् कस्मादिति ब्रह्मवादिनः परस्परं पप्रच्छुः । तत्र कश्चिद्बुद्धिमान् ब्रह्मवादी प्राजापत्यमेतदाज्यमिति ब्रूयात् । इन्द्राग्न्यादयो देवाः कल्पे कल्पे विनश्वरत्वाद्गतसारास्तेषां मध्ये प्रजापतिस्तु जगदीश्वरत्वात् पुनः पुनस्तादृशानुत्पादयन्नुपसंहरंश्च यथापूर्वमेव तिष्ठतीत्यगतसारः, तदीयत्वादाज्यमपि सर्वदा ससारमिति । अत्र हविष उपस्तरणाभिघारणाभ्यां सह चतुरवदानं विधत्ते "छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति" इति । पुरो-

ऽनुवाक्यादिमन्त्रगतानि यानि गायत्र्यादिच्छन्दांसि तानि हविर्भाग्भ्यो देवताभ्यो विमुखानि सन्त्यपाक्रामन् वयं भागरहितानि भूत्वा युष्माकं हव्यानि न वक्ष्याम इति वदन्ति निर्गतानि। अत्र छन्दःशब्देन तदभिमानिदेवता उच्यन्ते। ततो हविर्भाजो देवाः तेभ्यश्छन्दोभ्यो देवताभूतेभ्यो भागत्वेन चतुरवत्तं दत्तवन्तः। तत्र पुरोऽनुवाक्यादिशब्दाभिधेयाः छन्दोऽभिमानिन्यः, आहुत्याधारभूतोऽग्निर्देवताशब्देनोच्यते। यस्मादेवं तस्मादेतच्छन्दसां प्रीत्यै चतुरवत्तं जुहुयात्। तेन प्रीतानि छन्दांसि हविर्भाग्भ्यो देवेभ्यो हव्यं वहन्ति। अथाग्नेयं पुरोडाशं विधत्ते "अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तदृषयो यज्ञवास्त्वभ्यवायन् तेऽपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै" इति। अङ्गिरोनामका ऋषयः इतो भूलोकादुत्तमा उद्गततमास्त्वरया निर्गताः स्वर्गं प्राप्ताः। तत्र स्वर्गे त ऋषयः यज्ञवास्तु यज्ञभूमिमभिलक्ष्य समागताः, तस्यां भूमौ पुरोडाशाभिमानी देवः स्वशरीरमन्तर्धाय कूर्मशरीरी भूत्वा प्रकर्षेण पलायते, तं दृष्ट्वा त ऋषयो ऽब्रुवन्, इन्द्रादीनां मध्येऽन्यतमस्मै त्वा दास्यामः त्वं ध्रियस्व त्वमवतिष्ठस्वेति। ततः स पुरोडाशो नातिष्ठत्। अग्न्यर्थं तिष्ठेत्युक्ते स्थितवान्। अतो दिनद्वयेऽप्यष्टाकपालः पुरोडाश आ-

ग्नेयः अच्युतः कर्तव्यः। तेन स्वर्गाभिजयो भवतीति। अथ कपालेभ्य उद्वासितस्य पुरोडाशस्याभ्यञ्जनेोपाञ्जनरूपमलङ्करणं विधत्ते "तमब्रुवन् कथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवी-द्यथाक्षोऽनुपाक्तोऽवार्च्छत्येवमवारमित्युपरिष्टादभ्यज्याधस्तादु-पानक्ति सुवर्गस्य लोकस्य समष्ट्यै" इति। तं पुरोडाशं त ऋषयोऽब्रुवन् केन हेतुना त्वमहास्थाः यत्त्वदेशं परित्यक्त-वानसि। ततः पुरोडाशोऽब्रवीत्। अनुपाक्तोऽभूवमञ्जनकृता-लङ्करणरहितोऽभूवं, तस्मात् त्यक्तवानस्मि। यथा लोके शकट-स्याक्षोऽञ्जनरहितोऽवार्च्छति विनश्यति। एवमहमप्यञ्जनरहितो ऽवारं विनष्टोऽस्मीति, तस्मात् पुरोडाशमुपरिष्टादधस्ताच्चाज्ये-नालङ्कुर्यात्। तेन स्वर्गस्य सम्यक् प्राप्तिर्भवति। अथोद्वास-नात् पुरा कपालेषु स्थापितस्य हस्तेन प्रसारणं विधत्ते "सर्वा-णि कपालान्यभिप्रथयति तावतः पुरोडाशानमुष्मिन् लोके ऽभिजयति" इति। यावन्ति कपालानि स्थापितानि तावन्ति सर्वाणि यथाऽभिव्याप्नोति तथा प्रसारयेत्, तथा सति कपाल-सङ्ख्याकान् बहून् पुरोडाशान् निर्वृत्तिसाधनत्वेन स्वर्गे प्राप्नोति। पाके सौकर्यविशेषं विधत्ते "यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतङ्कृत्यः स-देवत्वाय" इति। विपरीतत्वेन दग्धो विदग्धः क्वचित् पक्वः क्वचिदपक्व इति वाऽऽमभावेन वा विपरीतत्वं, तादृशो राक्षस-प्रियः। अशृतोऽपक्वो रुद्रस्य प्रियः। सुष्ठुपक्वो देवप्रियः। तस्मा-द्विपरीतदाहमकुर्वता पुरुषेण पुरोडाशः शृतङ्कृत्यः सम्यक् पक्वो

यथा भवति तथा कर्तव्यः, तथा सति देवप्रियो भवति। यदुक्तं सूत्रकारेण 'सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति' इति। तदेतद्विधत्ते "भस्मनाभिवासयति तस्मान्मा्ँसेनास्थि छन्नं वेदेनाभिवासयति तस्मात् केशैः शिरश्छन्नं" इति। पक्कस्य कठिनस्य पुरोडाशस्योपरि भस्मनाच्छादनमस्थ्न उपरि मांसाच्छादनमिव भवति, आच्छादनकाले वेदगतदर्भनाडीसंस्पर्शेन केशच्छन्नशिर इव भवति, पौरोडाशिककाण्डे विद्यमानस्यापि विधेरत्रोपन्यासः प्रत्यभिज्ञानार्थः। यद्वा ब्राह्मणयोः शाखाभेदमभिप्रेत्येयमीदृशी पुनरुक्तिः परिहर्तव्या। पूर्वमवदानकालेऽभिघारणं विहितमिदानीमुद्वासनकालीनमभिघारणं विधत्ते "प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृत्ँ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति" इति। हविषो मन्त्रेण पाके सति लौकिकत्वमपेतमित्यस्माल्लोकात् प्रच्युतिः। अभिघारणाभावे शास्त्रीयत्वमसम्पूर्णमिति स्वर्गाप्राप्तिः। तस्माच्छास्त्रीयत्वसम्पूर्त्यर्थमाज्येनाभिघार्य पश्चादुद्वासयेत्, तथा सति देवेष्वेनद्धविः प्रापितं भवति। कपालानामुद्वासनकाले गणनां विधत्ते "यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्रमीयेत यद्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्रमीयेत सङ्ख्यायोद्वासयति यजमानस्य गोपीथाय" इति। एककपालनाशेन मास एको न्यूनो भवेत्, ततो यजमानो म्रियेत। तथा द्विकपालनाशे-

ऽपि। अतो यजमानस्य रक्षणाय गणयेत्। अथ प्रमादादिना नाशे प्रायश्चित्तं विधत्ते "यदि नश्येदाश्विनं द्विकपालं निर्वपेत् द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्न-श्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै" इति। स्पष्टोऽर्थः।

अत्र मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितं।

यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथ वा।
नामाग्निहोत्रवन्नैवं नामत्वे देवता न हि॥
मन्त्रो हि नेह प्रत्यक्षस्तद्धिताद्देवताविधिः।
देवद्रव्यविशिष्टस्य विधानादेकवाक्यता॥

दर्शपूर्णमासयोः श्रूयते 'यदाग्नेयोऽष्टाकपालोऽमावास्या-यां च पौर्णमास्यां चाच्युतो भवति' इति। तत्र यथाग्निहोत्र-शब्दोऽग्नये होत्रमचेत्यमुमर्थं निमित्तीकृत्य कर्मनामधेयं, तथा-ग्नेयशब्दोऽप्यग्निसम्बन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेत्। नैवं, नामत्वे देवताराहित्यप्रसङ्गात्। अग्निहोत्रे त्वग्निर्ज्योति-र्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यनेन वचनेन विहितो मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिको देवता लभ्यते। इह तु न तादृशो मन्त्रोऽस्ति। आग्नेयशब्दस्तु देवतां विधातुं श-क्नोति, अग्निर्देवता अस्येत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात्। न च द्रव्यदेवतयोरुभयोर्गुणयोर्विधानाद्वाक्यभेद इति शङ्कनीयं। कर्मणोऽप्राप्तत्वेन गुणद्वयविशिष्टस्य कर्मण एकेन वाक्येन वि-धानात्। तस्मादाग्नेयशब्देन देवतागुणो विधीयते।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

याग हविर्यजेत् कृत्स्नं कोऽप्यंशः शिष्यतेऽथवा।
देवार्थत्वाद्यजेत् सर्वं शिष्यते द्विरवत्ततः॥

आग्नेयोऽष्टाकपाल इत्यत्र कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः, तद्धितेन कृत्स्नस्याग्निदेवतासम्बन्धावगतेस्त्यागमन्तरेण तदनुपपत्तेरिति चेत्। न, द्विर्हविषोऽवद्यतीत्यवदानद्वयं श्रूयते। अवदेयं चाङ्गुष्ठपर्वमात्रं। तथा च सूत्रकारः 'आग्नेयस्य पुरोडाशमध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीनमवद्यति' इति। तत्र हविषः सकाशात् अङ्गुष्ठपर्वमात्रद्वयं चोटयित्वा त्यक्तव्यं। इतरच्छेषणीयं। देवतासम्बन्धस्त्वंशद्वाराप्युपपद्यते।

दशमाध्यायस्याष्टमपादे चिन्तितं।

चतुर्द्विर्वा पुरोडाशेऽवदानं होमतोऽन्तिमः।
चतुर्मैवं सहाज्येन सिद्धस्यात्रानुवादतः॥

दर्शपूर्णमासयोराम्नायते 'चतुरवत्तं जुहोति' इति। तत्र किं पुरोडाशद्रव्यगतस्यावदानस्य चतुःसङ्ख्या किं वा तत्र द्विसङ्ख्या चतुष्ट्वं तु उपस्तरणाभिघारणाभ्यामाज्यावदानाभ्यां सह सम्पद्यत इति संशयः। तत्र चतुरवत्तस्य द्वितीयाविभक्त्या होमकर्मत्वमुच्यते, न चोपस्तरणार्थस्य होमकर्मत्वमस्ति, तस्मात् पुरोडाशावदाने चतुःसङ्ख्येति प्राप्ते ब्रूमः। *उपस्तरणाभिघा-

---

* न्यायमालाविस्तरपाठस्तु एतावान् 'न तावदत्र होमानुवादेन चतुरवत्तत्वं विधीयते होमस्याप्राप्तत्वात् होममात्रविधाने चतुरवत्तत्वमनुवाद्यं तच्चाज्यसहितस्यैव युक्तं, द्विर्हविषोऽवद्यतीति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात्, तस्मात् पुरोडाशे द्विरवदानं' इति।

रणाभ्यामवदानाभ्यां प्रसिद्धं चतुरवत्तमनूद्य होमस्य विधानात् हविषो मध्यात् पूर्वार्धादिति द्विरवदानस्यैव प्राप्तिः। तस्माद्विर्हविषोऽवदानं।

पञ्चमाध्यायस्य चतुर्थपादे चिन्तितं।

अवदानादि सान्नाय्ये पूर्वमाग्नेयकेऽथवा।
धर्मप्रवृत्तिक्रमतः सान्नाय्ये पूर्वतोचिता।
प्रदानं पूर्वमाग्नेयेऽवदानं तु तथोचितं।
अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबलत्वतः॥

दर्शपूर्णमासयोः सान्नाय्यधर्मा वत्सापाकरणदोहनादयः प्रथममाम्नाताः। पुरोडाशधर्मा निर्वापावघातादयः पश्चादाम्नाताः। तेनैव पाठक्रमेण धर्मानुष्ठानं प्रवृत्तं। ततः प्रावृत्तिकक्रमेणावदानमपि सान्नाय्ये पूर्वमेव कर्तव्यमिति प्राप्ते ब्रूमः। याज्यानुवाक्यादिमन्त्रबलादाग्नेये पूर्वं प्रदानमित्युक्तं। तत्र प्रदानं फलप्रत्यासत्त्या मुख्यमवदानं तु तदङ्गं। तथा सति मुख्यस्य क्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्तव्यं। मुख्यक्रमो हि प्रावृत्तिकक्रमात् प्रबलः। प्रावृत्तिके हि क्रमे सान्नाय्ये पूर्वमवदानमभिघारणमासादनञ्च कृत्वा प्रदानमकृत्वैवाग्नेयेऽवदानादीनि कर्तव्यानि। तथा सति सान्नाय्येऽनुष्ठितानि अवदानादीन्यङ्गानि मुख्यप्रदानादिप्रकृष्यन्ते। मुख्यक्रमाश्रयणे तु आग्नेये प्रथममवदानादि प्रदानान्तं कृत्वा पश्चात् सान्नाय्ये तदनुष्ठीयते। तत्र नास्त्यङ्गाङ्गिविप्रकर्षः। नन्ववदानादिप्रदानान्त एकः पदार्थ इत्युक्तं। तत्र कुतः क्रमविचारः। एवं

तर्हि कृत्वा चिन्तास्तु। अथवा स्विष्टकृदवदानादिविषयैव चिन्तास्तु।

तत्रैव द्वितीयपादे चिन्तितं।

अवदानेऽनुसमयो होमान्ते वाऽवदानके।
पदार्थत्वं विधेयत्वात् तेनानुसमयस्ततः॥
अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थतः।
अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात्॥

दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यति' इत्येकेन विधिना विहितत्वात् द्विसङ्ख्याविशिष्टमवदानमेकः पदार्थः, ततस्तेनावदानमात्रेणानुसमयः कर्तव्यः, आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात् प्रागेवाग्नीषोमीयस्य द्विरवदानमिति प्राप्ते ब्रूमः। अवदानन्तु होमपर्यन्तमेकः पदार्थः होमस्यावदानमन्तरेणानुपपत्तेः। होमविधिनैवाक्षिप्तं होमार्थमवदानं। अत एव चतुरवत्तं जुहोतीत्येकेन विधिना सावदानक एको होमपदार्थो विहितः। उपस्तरणाभिघारणाभ्यां सह यच्चतुरवत्तं तस्मिन् हविर्विषयमवदानद्वित्वं विधातुं द्विर्हविषोऽवद्यतीत्युच्यते। ततो होमान्तस्यावदानस्यैकपदार्थत्वात्, आग्नेयमवदाय हुत्वा पश्चादग्नीषोमीयावदानमित्यनुसमयः।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितं।

अवत्तनाशे तच्छेषात् पुरोडाशादवद्यति।
यद्वेदाज्येन वाऽऽद्योऽत्र मध्यपूर्वार्धसम्भवात्॥
कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः।

हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ॥

दर्शपूर्णमासयोः पुरोडाशावदाने श्रूयते 'मध्यादवद्यति पूर्वार्धादवद्यति' इति। तत्र यद्यवत्तं नश्येत् तदानीमवशिष्टात् पुरोडाशात् पुनरप्यवदातव्यं। कुतः, अवदानापादानयोर्मध्यपूर्वार्धयोः शिष्टेऽपि सम्भवादिति चेत्। मैवं, कृत्स्नपुरोडाशगते मध्यपूर्वार्धे अपादानत्वेन श्रूयेते, न त्ववशिष्टभागगते मध्यपूर्वार्धे। ततो मुख्यहविषो नाशादाज्यं प्रतिनिधाय यष्टव्यं। अत एव श्रूयते 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाज्येन ता देवताः परिसङ्ख्याय यजेत' इति। तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वात् नाशमात्रे सर्वत्राज्यस्य विधिः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः॥ * ॥

---

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत् संश्यति भ्रातृव्याय प्रहरिष्यन् स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति ॥ ॥ १ ॥

तस्मान्नाभागं निर्भजन्ति चिह्हरति चर्यं इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति तूष्णीं चतुर्थं हरत्यपरिमितादेवैनं निर्भजत्युद्धन्ति यदेवास्या अमेध्यं तदपहन्त्युद्धन्ति तस्मादोषधयः पराभवन्ति मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति पितृदेवत्यातिखातेयतीं खनति प्रजापतिना ॥ २ ॥

यज्ञमुखेन सम्मितामा प्रतिष्ठायै खनति यजमानमेव प्रतिष्ठां गमयति दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमकः पुरीषवतीं करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तं करोत्युत्तरं परिग्राहं परिगृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भज्यात्मन उत्तरं परिग्राहं परिगृह्णाति क्रूरमिव वै ॥ ३ ॥

एतत् करोति यद्वेदिं करोति धा असि स्वधा असीति योयुप्यते शान्त्यै प्रोक्षणीरासादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य सन्तत्यै यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति ॥ ४ ॥

भजति प्रजापतिनैव वै चयस्त्रिंशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीये प्रोक्त आग्नेयः पुरोडाशो हिनद्वये।

अथ चतुर्थेऽनुवाके वेदिर्विधातव्या। तस्यास्र वेदेः साधनभूतस्य स्फ्यस्य मन्त्रेणादानं विधत्ते "देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै" इति। आध्वर्यवप्रश्नेण पठितं (का०१।प्र०१।अ०१)। यदुक्तं सूत्रकारेण 'शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात् प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन्' इति। तत्रोक्तमेतं मन्त्रमुत्पाद्य तात्पर्यं दर्शयति "शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत् सꣳश्यति भ्रातृव्याय प्रहरिष्यन्" इति। हे स्फ्य त्वं शतभृष्टिरसि शतसङ्ख्याका भृष्टिः शत्रूणां सन्तापरूपं भर्जनं यस्य स शतभृष्टिः। वनस्पतेर्विकारो वानस्पत्यः, द्विषतो द्वेषं कुर्वतो वैरिणो वधो वधहेतुरसि। अनेन मन्त्रेण भ्रातृव्यार्थं वज्रं प्रहर्तुमिच्छन् सम्यक् तीक्ष्णीकरोति। यद्यपि स्फ्यस्यानेन मन्त्रेणोत्करे प्रक्षेपो वेदिनिर्माणादूर्ध्वंभावी तथाप्यादानप्रसङ्गेन बुद्धिस्थत्वादिदानीमेवोक्तं। वेदिस्थानात् खननस्य पांसोर्मन्त्रेणान्यत्र हरणं विधत्ते "स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति तस्मान्नाभागं निर्भजन्ति" इति। यजुषा मन्त्रेण हरणीयः पांसुसहितः स्तम्बः स्तम्बयजुः, तस्य हरणं कुर्यात्। पृथिवि देवयजनीत्यादिभिराध्वर्यवकाण्डोक्तैर्वेदिस्थाने स्थापितं दर्भं छित्त्वा पांसुसहितमुत्करदेशं नयेत्। तत्प्रकारः सर्वोऽपि पौरोडाशिककाण्ड एव (का०१।

प्र०१। अ०९) स्पष्टमभिहितः। वेदिर्यावती विद्यते तावत्येवोपयुक्ता पृथिवी, तस्याः पृथिव्या एतावतः प्रदेशात् अनेन स्तम्बयजुर्हरणेन भ्रातृव्यं निःसारितवानेव भवति। यस्माच्च भ्रातृव्यो भागार्थीति कृत्वा निःसार्यते, तस्माल्लोके अभागं भागाभिलाषरहितं विरोधित्वात् निःसारयन्ति। उक्तस्य स्तम्बयजुर्हरणस्यावृत्तिं विधत्ते "त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति" इति। चतुर्थे पर्याये तमन्त्रकं हरणं विधत्ते "तूष्णीं चतुर्थꣳ हरत्यपरिमितादेवैनं निर्भजति" इति। त्रिरावृत्त्यैव लोकत्रयान्निःसारितत्वाच्चतुर्थेन हरणेन लोकत्रयबहिर्भूतात् सर्वस्मादपि देशान्निःसारितो भवति। वेदिस्थाने स्थितस्योपरितनमृद्भागस्यापसारणं विधत्ते "उद्धन्ति यदेवास्या अमेध्यं तदपहन्ति" इति। उपरिभागस्योच्छिष्टादिस्पर्शसम्भवात् मेधानर्हत्वं। विहितमुद्धननमनूद्य प्रशंसति "उद्धन्ति तस्मादोषधयः पराभवन्ति" इति। तस्मादुद्धननादेवोत्पन्नास्तृणादयः पराकृता विनाशिता भवन्ति। तत्रत्यानामोषधीनां यानि मूलानि पुनः प्ररोहाय भूमौ स्थितानि तेषां छेदनं विधत्ते "मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति" इति। पुनः प्ररूढानां तृणानां दर्भास्तरणहविरासादनादिविरोधित्वात् भ्रातृव्यत्वं। चुबुकमारभ्य केशपर्यन्तं यजमानस्य यन्मुखपरिमाणं तद्दण्डेन प्रदर्शयित्वा तत्परिमितं खननं विधत्ते "पितृदेवत्यातिखातेयतीं खनति प्रजापतिना यज्ञमुखेन सम्मितां" इति। प्रादेशपरिमाणमतिक्रम्य खनने पैतृको

वेदिः स्यात्। यज्ञस्य यज्ञानुष्ठातुर्यजमानस्य मुखं यज्ञमुखं, तच्च प्रजापतिस्वरूपं यागद्वारा प्रजापालकत्वात्, तेन मुखेन यज्ञितां कृतवान् भवति। पश्चान्तरं विधत्ते "आ प्रतिष्ठायै खनति यजमानमेव प्रतिष्ठां गमयति" इति। अनायासेनापनेतुं शक्याः पांसवोऽप्रतिष्ठाः, या त्वधस्ताद्दृढा भूमिः सा प्रतिष्ठा, तत्पर्यन्तं खननेन यजमानः प्रतिष्ठां प्रापितो भवति। दक्षिणभागस्योन्नत्यं विधत्ते "दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमकः" इति। दक्षिणभागस्य निम्नत्वे पितृयजनस्य रूपं स्यात। मार्दवकारिपांसुयुक्तत्वं विधत्ते "पुरीषवतीं करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तं करोति" इति। यस्यां भूमौ प्रजापशुसञ्चारबाहुल्यं तस्यां पांसुबाहुल्यात् प्रजादीनां पुरीषत्वं। यजमानोऽपि प्रजादिभिः पुरीषवान् भवति। वेदिनिर्माणात् पूर्वं वसवस्त्वेत्यादिभिर्मन्त्रैः वेदिसीमनिर्देशः पूर्वपरिग्रहः। निर्माणादूर्द्धमृतमसीत्यादिभिर्मन्त्रैस्तन्निर्देश उत्तरपरिग्रहस्तमिमं विधत्ते "उत्तरं परिग्राहं परिगृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भज्यात्मन उत्तरं परिग्राहं परिगृह्णाति" इति। पूर्वपरिग्रहेणैव वेदिमर्यादायां सिद्धायामपि पुनरुत्तरपरिग्रह आत्मने स्वकीयत्वाय भवति। मन्त्रकाण्डोक्तेन मन्त्रेण समीकरणं विधत्ते "क्रूरमिव वा एतत् करोति यद्वेदिं करोति धा असि स्वधा असीति योयुयते शान्त्यै" इति। खननेन निम्नोन्नतभावापादनं क्रूरं,

समीकरणेन तच्छान्तिर्भवति। हे वेदे धा अपि धारयिष्यसि, तदेतदभिप्रेयते स्वधेति तव स्वरूपं बर्हिरादिकं धारयसीत्यर्थः। यदुक्तं सूत्रकारेण 'प्रोक्षणीरभिपूर्य्यादग्रं स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन् सादयति' इति। तदेतद्विधत्ते "प्रोक्षणीरासादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य सन्तत्यै" इति। *अर्घ्यविधिप्रस्तावे 'तानि ह वा एतानि रक्षांसि गायत्रियाभिमन्त्रितेनाम्भसा शाम्यन्ति' इति श्रुतत्वादेषां रक्षोघ्नत्वं। स्फ्यरेखाया अविच्छिन्नत्वात् तत्र सादनं यज्ञस्याविच्छेदाय भवति। सादनकाले द्वेष्यस्य पाप्मनोऽद्भिर्विनाशध्यानं विधत्ते "यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति" इति। योजयतीत्यर्थः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः॥ *॥

---

ब्र॒ह्म॒वा॒दिनो॑ वदन्त्य॒द्भिर्ह॒वीꣳषि॒ प्रौक्षीः॒ केना॑प इति॒ ब्रह्म॒णेति॑ ब्रूयाद॒द्भिर्ह्ये॑व ह॒वीꣳषि॑ प्रोक्षति॒ ब्रह्म॑णाप इ॒ध्माब॒र्हिः प्रोक्ष॑ति॒ मेध्य॑मे॒वैन॑त् क॒रोति॒ वेदिं॒ प्रोक्ष॑त्यृ॒क्षा वा ए॒षाऽलो॒मकाऽमे॒ध्या यद्वेदि॒र्मेध्या॑मे॒वैनां॑

---

* अन्यविभागप्रसङ्गे। इति तै०।

करोति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्र ॥ १ ॥

उक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति क्रूरमिव वा एतत् करोति यत् खनत्यपो निनयति शान्त्यै पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेवैनं करोतीयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन सम्मितं बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयत्यनतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति ॥ ॥ २ ॥

उत्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरोऽन्तर्दधाति व्यावृत्त्या अनक्ति हविष्कृतमेवैनꣳ सुवर्गं लोकं गमयति त्रेधाऽनक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति न प्रतिशृणाति यत् प्रतिशृणीयादनूर्ध्वम्भावुकं यजमानस्य स्यादुपरीव प्रहरति ॥ ३ ॥

उपरीव हि सुवर्गो लोको नियच्छति वृष्टिमेवास्मै नियच्छति नात्यग्रं प्रहरेद्यदत्यग्रं प्रहरेदत्यासारिण्यध्वर्योर्नासुका स्यान्न पुरस्तात् प्रत्यस्येद्यत् पुरस्तात्

प्रत्यस्येत् सुवर्गाल्लोकाद्यजमानं प्रतिनुदेत् प्राञ्चं प्रहरति यजमानमेव सुवर्गं लोकं गमयति न विष्वञ्चं वियुयाद्यद्विष्वञ्चं वियुयात् ॥ ४ ॥

स्त्र्यस्य जायेतोर्ध्वमुद्यौत्यूर्ध्वमिव हि पुꣳसः पुमानेवास्य जायते यत् स्फ्येन वोपवेषेण वा योयुप्येत स्तृतिरेवास्य सा हस्तेन योयुप्यते यजमानस्य गोपीथाय ब्रह्मवादिनो वदन्ति किं यज्ञस्य यजमान इति प्रस्तर इति तस्य क्व सुवर्गो लोक इत्याहवनीय इति ब्रूयाद्यत् प्रस्तरमाहवनीये प्रहरति यजमानमेव ॥ ५ ॥

सुवर्गं लोकं गमयति वि वा एतद्यजमानो लिशते यत् प्रस्तरं योयुप्यन्ते बर्हिरनुप्रहरति शान्त्या अनारम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवासीतीमामभिमृशतीयं वै ध्रुवाऽस्यामेव प्रतितिष्ठति न वेपनो भवत्यगाꣳ३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानꣳ सुवर्गाल्लोकाद्गच्छेदगन्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति ॥ ॥ ६ ॥

आसाद्य प्राञ्चमितिहरञ्चं करोति हरति वियुयाद्यजमानमेवाग्निरिति सप्तदश च ॥ ५ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

चतुर्थे वेदिनिर्माणमशेषेण प्रपञ्चितं।

अथ पञ्चमे तस्यां वेद्यां बर्हिर्विषयप्रयोगोऽभिधीयते। तत्र बर्हिषः प्रोक्षणं विधातुं प्रस्तौति "ब्रह्मवादिनो वदन्त्यद्भिर्हवीꣳषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवीꣳषि प्रोक्षति ब्रह्मणापः" इति। हे अध्वर्यो शुद्ध्यर्थं हवींषि त्वमद्भिः प्रौक्षीः प्रोक्षितवानसि। केनान्येन शुद्धेन द्रव्येणेमा आपः प्रोक्षितवानसीति ब्रह्मवादिभिः पृष्टे अध्वर्युर्ब्रह्मणा मन्त्रेणेत्युत्तरं ब्रूयात्। यस्मादेतदुभयं प्रोक्षणं यथोक्तं तथैव वर्तते, अत एव मन्त्रव्याख्याने श्रूयते 'प्रोक्षिताः स्थेत्याह। तेनापः प्रोक्षिताः' इति। तेन मन्त्रोच्चारणेनेत्यर्थः। इदानीं विधत्ते "इध्माबर्हिः प्रोक्षति मेध्यमेवैनत् करोति" इति। एतदिध्मा बर्हिरित्युभयं। इध्माबर्हिःप्रोक्षणवत् वेदेरद्भिः प्रोक्षणं विधत्ते "वेदिं प्रोक्षत्यृक्षा वा एषाऽलोमकाऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति" इति। लोमरहितत्वादृक्षा परुषा सती यागयोग्या न भवति तस्मा[द्यो]ग्यत्वाय प्रोक्षणं। यदुक्तं सूत्रकारेण 'अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलं' इति। तदेतद्विधत्ते "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति"

इति। दिवे त्वेत्यादिमन्त्रास्तत्काण्ड एव (का०१।प्र०१।अ०११) व्याख्याताः। यदुक्तं सूत्रकारेण 'प्रोक्षणीशेषं स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः सन्ततं निनयेत्' इति। तदेतद्विधत्ते "क्रूरमिव वा एतत् करोति यत् खनत्यपो निनयति शान्त्यै" इति। प्रस्तरस्य धारणं विधत्ते "पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेवैनं करोति" इति। वेदिपूर्वभागे ब्रह्मा यजमानो वा प्रस्तरं धारयेत् तच्च सूत्रेऽभिहितं 'ब्रह्मा प्रस्तरं धारयति यजमानो वा' इति। धारणाय मुखसमानमीमात्यं हस्तेनाभिनीय विधत्ते "इयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन सम्मितं" इति। वेदिखननवद्व्याख्येयं। वेद्यां स्तरणं विधत्ते "बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयति" इति। स्तरणे नीरन्ध्रत्वं विधत्ते "अनतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति" इति। अतिशयेन भूमेर्दर्शनमतिदृश्नं तद्यथा न भवति तथा स्तृणीयात्। तेन यजमानं प्रजया पशुभिश्च सर्वतो वेष्टितत्वादिति स्पष्टं द्रष्टुमयोग्यं करोति। स्तीर्णस्य बर्हिष उपरि प्रस्तरसादनं विधत्ते "उत्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवाऽयजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः" इति। स्तरणार्थस्य बर्हिषोऽधःस्थितत्वात् प्रजात्वं। प्रस्तरस्य प्रधानभूतत्वाद्यजमानत्वं। अधस्तादास्तीर्णस्य बर्हिष उपरिष्टात् साद्यमानस्य प्रस्तरस्य मध्ये तिर्यक्तया द्वाभ्यां दर्भाभ्यां व्यवधानं विधत्ते "अन्तर्दधाति व्यावृत्त्यै" इति। तदेतदन्तर्धानं

-मन्त्रकाण्डोक्तेन विष्णो पत्ने स्थ इति मन्त्रेण क्रियते । प्रस्त-
रस्यासादनप्रसङ्गेन बुद्धिस्थान् प्रहरणकालीनान् विशेषान्
विधित्सुरादौ प्रस्तरस्य घृतेनाञ्जनं विधत्ते "अनक्ति हवि-
ष्कृतमेवैनꣳ सुवर्गं लोकं गमयति" इति । *प्रस्तरस्यानद-
नीयद्रव्यत्वेन स्वरूपतो हविष्ट्वाभावेऽपि अञ्जनेन हविष्टं
कृतं भवतीति । तादृशमेनं प्रस्तरं स्वर्गप्राप्तियोग्यं करो-
ति । यदुक्तं सूत्रकारेण 'स्रुक्षु प्रस्तरमनक्त्यक्तꣳ रिहाणा
इति जुह्वामग्रं, प्रजां योनिमित्युपभृति मध्यं, आप्यायन्तामाप
ओषधय इति ध्रुवायां मूलमेवं त्रिः' इति । तदेतद्विधत्ते
"त्रेधानक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति"
इति । प्रस्तरस्य प्रहरणे हेयोपादेयौ प्रकारौ विधत्ते "न प्रति-
शृणाति यत् प्रतिशृणीयादनूर्ध्वम्भावुकं यजमानस्य स्यादुप-
रीव प्रहरत्युपरीव हि सुवर्गो लोकः" इति । †अङ्गारेषु कुशेषु
प्रतिक्षेपः प्रतिशरणं तन्न कुर्यात्, यदि कुर्याद्यजमानस्यानूर्ध्व-
म्भावुकं स्यात् स्वर्गप्राप्तिसाधनं न भवेदित्यर्थः । तस्मादू-
र्ध्वमुन्नतं कृत्वा प्रस्तरमग्नेरुपर्येव प्रहरेत् स्वर्गलोकस्योपर्येव
वर्तमानत्वात् तत्प्राप्तिसाधनं भवति । प्रस्तरयुक्तस्य हस्तस्याधो-
मुखत्वं विधत्ते "नियच्छति वृष्टिमेवास्मै नियच्छति" इति ।
हस्तो न्यग्भूतो यथा भवति तथा कुर्यात् तेन यजमानार्थं
वृष्टिमेव न्यग्भूतां करोति । प्रस्तरायस्याहवनीयातिक्रमं नि-

---

* प्रस्तरस्य दर्भमुष्टेरिति खा० ।
† अङ्गारेष्वाकर्षणेन प्रक्षेप इति तै० ।

षेधति "नात्ययं प्रहरेद्यदत्ययं प्रहरेदत्यासारिण्यध्वर्योर्नग्नंभुका स्यात्" इति। अतिक्रान्तमग्रं यस्य तदत्ययं। तद्यथा भवति तथा न प्रहरेत्, किन्तु प्रस्तराग्रमा*हवनीयस्योत्तरत एव नयेत्। अत्ययप्रहरणे हि वृष्टिरत्यासारिणी भवति तदाध्वर्योर्विनाशनशीला स्यात्। अत्याधिक्येन वर्षणमतिसारिणीत्वं, तेन सस्यानि फलितुमयोग्यानि भवन्ति, सोऽयमध्वर्योर्नाशः। अथवा व्याधिविशेषेणाध्वर्युर्नश्येत्। पूर्वस्यां दिशि प्रस्तरस्य मूलं पश्चिमस्यामग्रमित्येवंविधं प्रहरणं निषेधति "न पुरस्तात् प्रत्यस्येद्यत् पुरस्तात् प्रत्यस्येत् सुवर्गाल्लोकाद्यजमानं प्रतिनुदेत्" इति। पश्चिमाग्रत्वं निषिध्य प्रागग्रत्वं विधत्ते "प्राञ्चं प्रहरति यजमानमेव सुवर्गं लोकं गमयति" इति। प्रस्तरगतानां दर्भाग्राणां सर्वतो विश्लेषणं निषेधति "न विष्वञ्चं वियुयाद्यद्विष्वञ्चं वियुयात् स्त्र्यस्य जायेत" इति। विष्वञ्चं नानादिग्गतं यथा भवति तथा न वियुयात् न विश्लेषयेत्। तद्विश्लेषणे यजमानस्य स्त्र्यपत्यमेव जायेत, स्त्रीव्यञ्जनस्य विश्लिष्टरूपत्वात्। दर्भाग्राणां समूहरूपेणैकीभावं विधत्ते "ऊर्ध्वमुद्यौत्यूर्ध्वमिव हि पुरुषः पुमानेवास्य जायते" इति। ऊर्ध्वं दण्डाकारेणैकाग्रं यथा भवति तथा उद्यौति उत्कर्षेण मिश्रयेत्, पुंसां व्यञ्जनमूर्ध्वाकारं भवति, ततोऽस्य पुमानेव जायते। सोऽयमाग्नीध्रस्य व्यापारः। तथा च सूत्रकार आह 'विरप्शिन्नित्याग्नीध्रो विष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति' इति। तस्मिन्नेकीकरणे साधनान्तरं

---

* आहवनीयान्तर एवान्तर्धापयेदिति वै०।

निषिध्य हस्तं विधत्ते "यत् स्फ्येन वोपवेषेण वा योयुप्येत स्तृति-रेवास्य सा हस्तेन योयुप्यते यजमानस्य गोपीथाय" इति। योयुपनं विश्लिष्टभूतस्यैकीकरणं, अथवा प्रस्तरमूलस्य *सम्य-गविश्लिष्टं विहायोत्क्षेपणं। तद्यदि स्फ्येनोपवेषेण वा क्रियेत सेयं यजमानस्य हिंसा। हस्तेनैव योयुपनं रक्षायै भवति। प्रस्तर-प्रहरणस्याधारत्वेनाहवनीयं विधत्ते "ब्रह्मवादिनो वदन्ति किं यज्ञस्य यजमान इति प्रस्तर इति तस्य क्व सुवर्गो लोक इत्या-हवनीय इति ब्रूयाद्यत् प्रस्तरमाहवनीये प्रहरति यजमानमेव सुवर्गं लोकं गमयति" इति। यज्ञस्य सम्बन्धि किमङ्गं यज-मानस्थानीयमिति ब्रह्मवादिभिः पृष्टे बुद्धिमान् प्रस्तर इति उत्तरं ब्रूयात्। स्रुचु प्रस्तरस्याञ्जनं कृत्वा तन्नैकं तृणं पृथक्कृत्य प्रस्तातं स्थापयेत्, तस्येदानीमग्नौ प्रहरणं विधत्ते "वि वा एतद्यजमानो छिद्यते यत् प्रस्तरं योयुप्यन्ते बर्हिरनुप्रहरति शान्त्यै" इति। प्रस्तरमूलमुत्क्षिपन्तीति यत् एतेन यजमानो विच्छिद्यते विश्लेषेणाल्पीभवति रोगेण कृशो भवतीत्यर्थः। प्रस्ता-तत्वेन स्थापितस्य बर्हिषोऽनुप्रहरणे तस्याल्पीभावस्य शान्ति-र्भवति। तदेतद्बर्हिःप्रहरणं सूत्रकारेण स्पष्टीकृतं 'आयुषे त्वेत्यन्तस्य तृणमपादाय प्रस्तातं निधाय' इति। 'अथैनमाग्ना-ग्नीध्रोऽनुप्रहरेति यत् प्रस्तरात् तृणमपात्तं तदनुप्रहरति' इति च। मन्त्रकाण्डे पठितेन मन्त्रेण भूमिस्पर्शनं विधत्ते "अना-रम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवासीती-

---

* सम्यगुदाहायोत्क्षेपणमिति तै०।

मामभिप्रपतीयं वै ध्रुवाऽस्यामेव प्रतितिष्ठति न वेपनो भवति" इति। एतर्हि प्रस्तरप्रहरणादूर्द्ध्वं प्रस्तररूपस्य यजमानस्य स्वर्गेऽवस्थितत्वात् अध्वर्युरनारम्भण इव निरालम्बन इव भवति। स च वेपनो भवितोरीश्वरः पालनस्वामिराहित्यभयेन सर्वदा कम्पनशीलो भवितुं समर्थो भवति, निरन्तरं भवति कम्पमान इत्यर्थः। ध्रुवासीति भूमिस्पर्शनेन लब्ध-प्रतिष्ठो न कम्पते। यदुक्तं सूत्रकारेण 'अथैनमाहाग्नीभः संवदस्वेत्यगा३नग्नीदित्यध्वर्युरगन्नित्याग्नीध्रः' इति, अनयोः प्रश्नोत्तरमन्त्रयोः शाखान्तरपाठनिराकरणपूर्वकं मन्त्रद्वयो-च्चारणं विधत्ते "अगा३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्य-ग्नावग्निं गमयेन्निर्यजमानꣳ सुवर्गाल्लोकाद्भजेदगन्नित्येव ब्रूया-द्यजमानमेव सुवर्गं लोकं गमयति" इति। हे अग्नीत् हे आग्नीध्र किं यजमानः स्वर्गं गतवान्। प्रश्नद्योतनायेयं प्लुतिः। अगन्नग्निरित्येष शाखान्तरगतो मन्त्रपाठः, तस्मिन् पाठे वह्निः स्वर्गगत इत्यर्थो भवति, तत् त्वयुक्तं। आहवनीयोऽत्र स्वर्गत्वेन विवक्षितः, तस्मिन् स्वर्गरूपेऽग्नौ तमग्निमेव प्रापितवान् भवति, यजमानं स्वर्गाल्लोकान्निःसारितवान् भवति। तस्मादग्निरित्येतत् पदं मन्त्रे परित्यज्यागन्नित्येतावदेव ब्रूयात्। तेन यजमानः स्वर्गं लोकं गतवानित्यर्थो लभ्यते॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तः ॥ १ ॥

हि तमन्वविन्दन् तमब्रुवन्नुप न आवर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातॄणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति परिधीन् परिदधाति रक्षसामपहत्यै सꣳस्पर्शयति ॥ २ ॥

रक्षसामनन्ववचाराय न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यपहन्त्यूर्ध्वे समिधावादधात्युपरिष्टादेव रक्षाꣳस्यपहन्ति यजुषान्यां तूष्णीमन्यां मिथुनत्वाय द्वे आदधाति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्यार्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां ॥ ३ ॥

पत्नीं स्वाहेति स्रुचमनुमन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वायाग्निरमुष्मिन् लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ विपर्यूहामेत्यन्नाद्येन देवा अग्निं ॥ ४ ॥

उपामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितृणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति सकृत्सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषा वै रुद्रस्य ॥ ५ ॥

दिक् स्वायामेव दिशि रुद्रं निरवदयते द्विरभिघारयति चतुरवत्तस्याप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभिजुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥ ६ ॥

प्रत्तः स्पर्शयति भूतानामग्निꣳ रुद्रस्य सप्तचिꣳशच्च ॥
॥ ६ ॥

## इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

प्रयोगो बर्हिषः स्पष्टं पञ्चमे प्रतिपादितः।

अथ षष्ठेऽनुवाक उपांशुयाजस्विष्टकृतौ वक्तव्यौ। तत्रादौ तावत् परिधीनां परिधानं विधातुं प्रस्तौति "अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो हि तमन्वविन्दन् तमब्रुवन्नुप न आवर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति" इति। यथा भ्रातरस्त्रयो हविर्वहनेन मृता इत्थमेव स्य आर्तिमारिष्यतीति यो हविर्वहति स मरणं प्राप्नोतीति भीतोऽग्निर्निलायत यथा देवैर्न ज्ञायते तथा निलीनोऽभूत्। निलीय चोदकमध्ये प्राविशत्। तमुद्दिश्य प्रकर्षेणान्वेषणं कर्तुमैच्छन्। तदा जलस्थितो मत्स्यः तत्रस्थितमग्निं देवानामग्रेऽब्रवीत्, ततोऽग्निस्तं मत्स्यमेवमशपत्, हे मत्स्य यस्त्वं देवानामग्रे मामेवं ज्ञापितवानसि पिशुनो भूत्वा प्राब्रवीः तादृशं त्वां जालधारिणः कैवर्ताः धियाधिया वध्यासुः तेन तेन ज्ञाना-

दिना साधनेन, यदा यदा यदा हन्तुं धीर्भवति तदा तदा
रात्रावहनि वा वधं कुर्वन्तु इति। यस्मादेवं प्रश्नस्तस्मात् मत्स्यं
तदा तदा घ्नन्ति। मत्स्यमुखेन विज्ञाते वह्नौ देवास्तमग्निं प्रति
अस्मत्समीपे समागच्छ हव्यं चास्मदीयं वहेत्यब्रुवन्, तदा सो
ऽग्निर्वरमवृणोत् विगृहीतस्य हविषः सम्बन्धि यदेव द्रव्यं
होमात्पुरा परिधिभ्यो बहिः प्रच्यवेत् तदस्मदीयानां भ्रातॄणां
भागधेयमस्त्विति। ततस्तथैव देवैर्वरो दत्तः। तेन स्कन्नेन
तानग्निभ्रातॄन् यजमानः प्रीणयति। इदानीं विधत्ते “परि-
धीन् परिदधाति रक्षसामपहत्यै” इति। यस्मात् परिधिभ्यो
बहिर्देशोऽग्नेर्भ्रातॄणामुपयुक्तस्तस्मात् परिधीनग्नेः परितः स्थाप-
येत्। तच्च रक्षसामपघाताय भवति। पश्चिमदिशि स्थापितस्य
मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां संस्पर्शनं विधत्ते “सꣳस्प-
र्शयति रक्षसामनन्ववचाराय” इति। परिधीनां समीचीने स्पर्शे
सति रक्षसां प्रवेष्टुं छिद्राभावादग्निसमीपे सञ्चारो न भवति।
दिक्त्रयदृष्टान्तेन पूर्वस्यामपि दिशि प्रसक्तं परिधिं वारयति
“न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यप-
हन्ति” इति। रक्षसामपघातः परिधेः प्रयोजनं, तच्चादित्योदये-
नैव सिध्यति। आग्नेय्यामैशान्यां चाघारसमिधोः स्थापनं विधत्ते
“ऊर्ध्वे समिधावादधात्युपरिष्टादेव रक्षाꣳस्यपहन्ति” इति।
दक्षिणोत्तरपरिध्योरग्रदेशे स्थापनीये इति ऊर्ध्वे, तेन स्थापनेन
दिक्चतुष्टय इव ऊर्ध्वदेशेऽपि रक्षसामपघातो भवति। तयो-
र्दक्षिणसमिधः स्थापने मन्त्रकाण्डाम्नातं वीतिहोत्रं त्वा कव इति

(का०१।प्र०१।अ०११) मन्त्रं विधत्ते "यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय" इति। स्त्रीपुरुषयोरिव समन्त्रकामन्त्रकयोः परस्परं वैलक्षण्यान्मिथुनत्वं। समिधो द्वित्वं प्रशंसति "द्वे आदधाति द्विपाद्यजमानः प्रतिष्ठित्यै" इति। प्रायश्चित्तरूपेण स्कन्नानुमन्त्रणं विधत्ते "ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्यार्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनुमन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति" इति। हविषः स्कन्दने सति यज्ञस्य विनाशेन यो यजमानो विनाशाभिमुखो भवति स कथं तत्परिहारेण वसुमत्तरो भवेदिति ब्रह्मवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूते, त्रिभिरेतैर्मन्त्रैः स्कन्नमनुमन्त्रयेतेति। भूपत्यादयो देवताविशेषा अग्निभ्रातरो वा, तेभ्यः स्वाहेति यदनुमन्त्रणं तेन यज्ञस्यापि आर्त्या विनाशमप्राप्य यजमानो वसुमत्तरो भवति। यस्मादयं भूपत्यादिका भूयसीर्देवताः प्रीणयति तस्माद्युक्तं तस्य वसुमत्तरत्वं। अथोपांशुयाजं विधत्ते "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वाय" इति। यदन्वञ्चावनुक्रमगतौ आग्नेयाग्नीषोमीयपुरोडाशौ स्यातामेतेन यज्ञस्य जामि आलस्याय क्रियेत। अत आलस्यपरिहाराय तयोः पुरोडाशयोर्मध्ये उपांशुयाजं यजेत्। किञ्च पुरोडाशद्रव्यक एको याग आज्यद्रव्यकोऽपर इति मिथुनत्वं। अथ स्विष्टकृतं विधत्ते "अग्निरमुष्मिन् लोक

आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ विपर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितॄणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति" इति। पुरा कदाचिदग्निः स्वर्गे स्थितः, यमस्तु भूर्लोके, तदा मनुष्याणां पाकादिनिष्पादनाभावात् पितॄणां राजाभावाच्चाग्नियमयोर्विपरिवर्तनं कर्तुमिच्छावन्तो देवा आगच्छतेति परस्परमाह्वयान्नाद्येनोत्कोचेन तमग्निं भूलोके समागन्तुं उपच्छन्दितवन्तः, पितरस्तु राज्येनोत्कोचेन यमं स्वर्गलोके गन्तुं प्रलोभितवन्तः, यस्मादेवं तस्माद्देवानां मध्येऽग्निरन्नादो बह्वन्नभक्षकोऽभूत्, यमस्य पितॄणां राजाऽभूत्। य एतदुभयं वेद स प्रकृष्टराज्यमन्नाद्यञ्च प्राप्नोति। ततो देवास्तस्मा अग्नये भागं दत्तवन्तः, कोऽसौ भागः, यजमाना अग्नये स्विष्टकृते यद्धविरवद्यन्ति सोऽस्य भागः, तस्मादग्नये स्विष्टकृतेऽवद्येत्, तथा सति तदग्नये देवैः दत्तेन भागेन रुद्रं क्रूरमग्निं समृद्धं करोति। यदुक्तं सूत्रकारेण 'सर्वेषां हविषां उत्तरार्धात् सकृत् सकृदवद्यति स्विष्टकृते' इति। तदेतद्विधत्ते "सकृत् सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवदयते" इति। एक एव रुद्र इति श्रुत्यन्तरात् सकृदवदानसदृशो रुद्रः, येयमैशानी सैवैषा रुद्रस्य दिक्, सा चोत्तरभागवर्तिनी। तस्मादुत्तरार्धावदानेन

स्वकीयायामेव दिशि रुद्रं निःशेषेण तोषयति। इतरहविषामिव सकृदभिघारणं प्राप्तमपवदति "द्विरभिघारयति चतुरवत्तस्याप्त्यै" इति। उपस्तरणमेकं, हविरवदानं द्वितीयं, ततो द्विरभिघारणेन चतुरवत्तसम्पत्तिः। यदुक्तं सूत्रकारेण 'उत्तरार्धपूर्वार्धे जुहोत्यसंसृष्टामितराभिराहुतिभिः' इति। तदेतद्विधत्ते "पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभिजुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय" इति। पूर्वाः पुरोडाशाद्याहुतयः पशुस्वरूपाः, पशुवदिष्टार्थप्रापकत्वात्। अयन्त्वग्निः क्रूरत्वाद्रुद्रः। यदि पूर्वा आहुतीरभिसम्बध्य तासामुपरि जुहुयात् तदा पशून् सर्वान् घातुकाय रुद्राय प्रयच्छेत्, ततो यजमानोऽपशुः स्यात्। तस्मात् पूर्वा आहुतीः परित्यज्य दूरे जुहुयात्, एवं होमः पशूनां संरक्षणाय भवति।

अथ मीमांसा। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितं।

उपांशुयाज इत्येषोऽनुवादोऽथवा विधिः।
विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता॥
जामित्वोक्तेरन्तराल उपांशुगुणके विधौ।
सत्यर्थवादो विष्ण्वादिरूपं प्रोक्तमन्ततः॥

इदमाम्नायते 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' इति। 'विष्णुरुपांशुयष्टव्योऽजामित्वाय प्रजापतिरुपांशुयष्टव्योऽजामित्वायाग्नीषोमावुपांशुयष्टव्यावजामित्वाय' इति। तत्र विष्ण्वादिवाक्येषु विहि-

तस्य यागत्रयसमुदायस्यानुवाद इति चेत्। न, आग्नेयाग्नीषोमीयपुरोडाशद्वयनैरन्तर्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात् पुरोडाशयोरन्तराले किञ्चिद्विधित्सितं। न ह्यन्तरालगुणविशिष्टं विधेयं विष्ण्वादिवाक्येषु प्रतीयते। पूर्ववाक्ये तु तत् प्रतीयत इति विधायकं तद्वाक्यं। न चात्र यजतीति वर्तमाननिर्देशः शङ्कनीयः। पञ्चमलकारस्याश्रयणात्। अन्तरालकाले उपांशुत्वगुणस्यापि विशेषणत्वात् तद्विशिष्टकर्मण उपांशुयाजनामकत्वं। सत्येवं गुणद्वयविशिष्टकर्मण्याद्येन वाक्येन विहिते विष्ण्वादिवाक्यमर्थवादः स्यात्। न चात्र विहितयागानुवादेन देवताविधिः शङ्कनीयः। समाधातव्येन जामित्वदोषेणोपक्रमादजामित्वेन समाधानेनोपसंहाराच्च। जामि वा इत्यादेरजामित्वायेत्यन्तस्य सर्वस्य महावाक्यस्य एकवाक्यत्वप्रतीतेः। न ह्येकस्मिन् वाक्ये विधेयबाहुल्यं सम्भवति। न चात्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः। ध्रौवस्यैव द्रव्यत्वात्। नापि देवताया असम्भवः। नानाशाखासूपांशुयाजक्रमे पठिते वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देवतात्रयस्य प्रतीयमानत्वात्। तस्माद्यजतीत्येतद्विधायकं।

दशमाध्यायस्याष्टमपादे चिन्तितं।

> उपांशुयाजे यत्किञ्चिद्द्रव्यमाज्यमुतादिमः।
> विशेषानुक्तितो नैवं ध्रौवाज्यस्य विधानतः॥

उपांशुयाजमन्तरा यजतीत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यमिति चेत्। न, आज्यस्य श्रुतत्वात्। तावब्रूतामग्नी-

षोमावाज्यस्यैव तावुपांशुपौर्णमास्यां यजन्निति श्रुतं। न चैव-मप्यनियतं यत्किञ्चिदाज्यं स्यादिति शङ्कनीयं, ध्रौवस्य वि-हितत्वात्। सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति विहितं। विध्यश्रवणेऽपि ध्रौवाज्यस्य सप्रयोजनत्वाय विपरि-णामः कर्तव्यः।

तत्रैवान्यच्चिन्तितं।

तत्र यः कोऽपि देवः स्यात् तान्त्रिको वाग्निमो भवेत्।
अविशेषात् प्रकरणात् तान्त्रिकोऽत्र नियम्यते॥

तत्रोपांशुयाजे या काचिद्देवता स्यात् विष्णुरुपांशुयष्टव्य इत्यादेरर्थवादत्वेनाविधायकत्वात्, अन्यस्य च देवताविधेर-दर्शनात्, यागेन देवतामात्रस्यैव कल्पनाच्च। मैवं। उपांशु-याजस्य दर्शपूर्णमासप्रकरणे पठितत्वाद्दर्शपूर्णमासतन्त्रमध्यप-ठित एव कश्चिद्देवः प्रत्यासत्त्योपांशुयाजे नियम्यते।

तत्रैवान्यच्चिन्तितं।

कोऽपि देवस्तान्त्रिकेषु नियतो वा तदापि किं।
प्रजापतिरुताग्निः स्यादग्नीषोमावुतापि वा॥
विष्णुर्यद्वाग्निमुत्सृज्य विकल्प्यं देवतात्रयं।
कोऽप्यत्रानियमान्नैवमुपांशुत्वादियन्त्रणात्॥
प्रजापतिरुपांशुत्वान्न तूष्णीम्भावयोगतः।
अग्नेर्मुख्यत्वतो मैवं तद्याज्यादेरपाठतः॥
अग्नीषोमौ तदुक्तेर्नो तत्र कालविधानतः।
विष्णुर्याज्यादितस्तस्य प्राजापत्योक्तिबाधनात्॥

याज्याद्वैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः।
विधिशेषार्थवादेऽपि प्राप्तं त्रयमनूद्यते॥

तान्त्रिकदेवेषु नियामकाभावाद्यः कोऽपीति चेत्। न, वक्ष्यमाणानामुपांशुत्वादीनां नियामकत्वात्। यत्किंचित् प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत् क्रियत इति वचनादुपांशुत्वधर्मत्वास्येन प्रजापतिर्देवतेति चेत्। न, प्रजापतिं मनसा ध्यायेदिति विधेस्तूष्णींभावस्यैव प्रजापतिधर्मत्वात्। प्रथमयागदेवत्वेन मुख्यत्वादग्निर्देवतेति चेत्। न, तदुपांशुयाजक्रमे अग्निविषययाज्याद्यपाठात्। तावब्रूतामित्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति चेत्। न, तस्य वाक्यस्य पौर्णमासीकालविधायकत्वात्। कस्यांचिच्छाखायामुपांशुयाजक्रमे वैष्णवयाज्यापुरोऽनुवाक्ययोः पाठात् विष्णुर्देवतेति चेत्। न, तथा सति शाखान्तरप्रोक्तयोः प्राजापत्ययाज्यापुरोऽनुवाक्ययोर्बाधः प्रसज्येत। तस्मान्नानाशाखासु पठिताभ्यां विष्णुप्रजापत्यग्नीषोमविषयाभ्यां याज्यापुरोऽनुवाक्याभ्यां प्राप्तास्तिस्रो देवता विकल्प्यन्ते। अत एवोपांशुयाजविधिशेषेऽर्थवादेऽप्येतदेव प्राप्तं देवतात्रयमनूद्यते। विष्णुरुपांशुयष्टव्योऽजामित्वाय प्रजापतिरुपांशुयष्टव्योऽजामित्वायाग्नीषोमावुपांशुयष्टव्यावजामित्वायेति। तस्माद्देवताविकल्पः सिद्धान्तः।

तत्रैवान्यच्चिन्तितं।

दर्शादिर्वा तस्य कालो दर्श एवान्य एव वा।
द्विपुरोडाशसान्निध्यादाद्यो दर्शेऽग्रिमोऽयतः॥

विष्णुयाज्योक्तितो युक्तो मध्यमः पूर्णिमाविधेः।
स एव कालो याज्याया उत्कर्षः पूर्णिमादिने॥

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय' इति। पुरोडाशयोर्मध्येऽसौ यागो विहितः, पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ, अमावास्यायामाग्नेयैन्द्राग्नौ ततो द्विपुरोडाशसन्निधेः समानत्वात् दर्शः पूर्णिमा चेत्युभयमपि तस्योपांशुयाजस्य काल इत्याद्यः पक्षः। अमावास्यायां प्रकृत्य याज्याकाण्डे आग्नेययाज्याया ऊर्द्ध्वं ऐन्द्राग्नयाज्याया अधस्तात् वैष्णवयाज्यायाः पाठात् प्रकरणस्य सन्निधितः प्रबलत्वात् दर्श एव काल इति मध्यमः पक्षः। तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति पौर्णमास्यास्तत्कालत्वेन विधानादाम्नानिकस्य च विधेः प्रबलत्वात् पौर्णमास्येव कालः। तथा सति वैष्णवयाज्या प्रकरणादुत्कृष्यतां।

तत्रैवान्यच्चिन्तितं।

पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं न हि।
स्याद्वा नास्त्यन्तरेत्युक्तेर्लब्धे कालेऽस्ति मुख्यवत्॥

सोमात् प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति, स सोमेनेष्ट्वाग्नीषोमीयो भवतीति वाक्येनाग्नीषोमयोः सोमयागोत्तरकालीनत्वावगमात्, तस्मादुपांशुयाजो नास्ति। कुतः। उपांशुयाजमन्तरा यजतीति पुरोडाशद्वयान्तरालवर्त्तत्वस्य गुणत्वेन विधानात् इति

प्राप्ते ब्रूमः। किं यागे पुरोडाशावन्तरालकालस्य विशेषण-
भूतावुतोपलक्षणीभूतौ। नाद्यः अन्तरालवत् तद्विशेषणयोरप्यु-
पांशुयाजगुणत्वप्रसङ्गात्। न चैतद्युक्तं। उपांशुयाजवत् तयो-
रपि स्वातन्त्र्येणैव फलान्वयात्। द्वितीये तु शङ्खन्यायेनोपल-
क्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्षिते काले यागोऽस्ति
यथा शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यमित्युक्ते
कस्मिंश्चिद्दिने शङ्खं धमतः पुरुषस्याभावेनोपलक्षकस्य ध्वनेरभावे
ऽपि उपलक्षिते तस्मिन् काले सेवकः समागच्छति तथात्रापि
द्रष्टव्यं। यदि तत्र कालोपलक्षकमन्यदेव व्यापारान्तरं सूर्य-
गत्यादिकं सम्भाव्येत तर्ह्यत्रापि सम्भवत्येवाग्नेयपुरोडाश उपल-
क्षकः। तस्मादेकपुरोडाशायामपि पौर्णमास्यामस्त्युपांशुयाजः।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितं।

उपांशुयाजद्रव्येण शेषकार्यं भवेन्न वा।
भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः॥
उक्ताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत्।
अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथं॥

शेषादाज्यादुपांशुयाजार्थमवदाने कृते तच्छेषेण शेषेण
स्विष्टकृदादिकं शेषकार्यं कर्तव्यं। कुतः 'तद्यत् सर्वेभ्यो हविर्भ्यः
समवद्यति' इति वाक्येन प्रापितत्वादिति चेत्। मैवं, कृतार्थद्रव्य-
शेषो ह्युपयोगापेक्षः प्रतिपत्तिमर्हति, शेषं त्वाज्यं न कृतार्थं
तेन कर्तव्यानां भविष्यतामुपस्तरणादीनां सद्भावात्, तस्मान्न
तेन शेषकार्यं भवति।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितं।

स्विष्टकृत् संस्कृतौ चीण उतापूर्वोपयोग्यपि।
प्रयोजनैक्यमेकस्मिन् युक्तं कर्मण्यतः चयः॥
मन्त्रेण देवसंस्कारः प्रक्षेपाद्द्रव्यसंस्कृतिः।
त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत्॥

योऽयं स्विष्टकृद्यागः सोऽयमुपयुक्तहविःशेषसंस्कार इत्यविवादं। तत्र संस्कारस्य दृष्टप्रयोजनत्वेनावश्यम्भावे सति तावतैवोपचीणः स्विष्टकृद्यागो नापूर्वस्योपकरोति, न ह्येकस्मिन् कर्मणि प्रयोजनद्वयं युक्तमिति प्राप्ते ब्रूमः। कर्मण एकत्वेऽप्यंशभेदात् प्रयोजनभेदो न विरुध्यते, मन्त्रपाठो द्रव्यप्रक्षेपो देवतोद्देशेन त्यागश्चेति त्रयोऽंशाः, तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते। तस्मात् स्विष्टकृदुभयार्थः, एवमन्यप्रयाजपश्वपुरोडाशावप्युदाहार्यौ।

अत्रैवान्यच्चिन्तितं।

प्रयोजकः स्विष्टकृत् किं पुरोडाशोत्तरार्धयोः।
यद्वा प्रकृतोपजीवी स्यादाद्यः स्वस्य सिद्धये॥
उत्तरार्धेति शब्दस्य प्रकृताकाङ्क्षणे सति।
अन्यार्थ्यं पुरोडाशमुपजीव्यैष वर्ततां॥

दर्शपूर्णमासयोः श्रूयते 'उत्तरार्धात् स्विष्टकृते समवद्यति' इति, सोऽयं स्विष्टकृद्यागः कस्यचिद्भूतमस्य पुरोडाशस्य तदुत्तरार्धस्य च प्रयोजकस्तदुभयाभावे स्वसिद्ध्यभावादिति चेत्। नैवं, उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वाद्भागवाचित्वाच्च प्रकृतं

'कश्चित् भागिनमाकाङ्क्षतः, अग्न्यादिदेवतार्थः पुरोडाशः प्रकृतो भागवांश्च, तस्मात् तमेवोपजीव्य स्विष्टकृद्यागः प्रवर्त्तते स त्वन्यस्य प्रयोजकः।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितं।

शेषात् स्विष्टकृदेकस्मात् सर्वेभ्यो वैकतः कृते।
शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः संस्कारसाम्यतः॥

दर्शपूर्णमासयोः श्रूयते 'शेषात् स्विष्टकृते समवद्यति' इति। तत्राग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यं तावतैव शास्त्रार्थानुष्ठानसिद्धेरिति चेत्। मैवं, उपयुक्तं हविः संस्कर्तुमिदमवदीयते, संस्कारश्च सर्वेष्वपि हविःषु समानः। तस्मात् सर्वेभ्यो हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः॥ * ॥

---

मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्त्तोरिति ताव ब्रूतां मित्रावरुणौ गोरेवावमीश्वरौ कर्त्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्र यत्र न्यक्रामत् ततो

घृतमपीव्यत तस्माद्घृतपद्युच्यते तदस्यै जन्मोपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याह ॥ १ ॥

इयं वै रथन्तरमिमामेव सहान्नाद्येनोपह्वयत उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोपह्वयत उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोपह्वयत उपहूताः सप्त होत्रा इत्याह होत्रा एवोपह्वयत उपहूता धेनुः ॥ ॥ २ ॥

सहर्षभेत्याह मिथुनमेवोपह्वयत उपहूतो भक्षः सखेत्याह सोमपीथमेवोपह्वयत उपहूता३ हो इत्याहात्मानमेवोपह्वयत आत्मा ह्युपहूतानां वसिष्ठ इडामुपह्वयते पशवो वा इडा पशूनेवोपह्वयते चतुरुपह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येतां ॥३॥

अग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीव्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयतां ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोपह्वयते दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोपह्वयते य इमं यज्ञमवान् ये यज्ञपतिं वर्धानित्याह ॥ ४ ॥

यज्ञाय चैव यजमानाय चाशिषमाशास्त उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोपह्वयते पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे उपहूतोऽयं यजमान इत्याह यजमानमेवोपह्वयत उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूतः ॥५॥

इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामेदमसीदमसीत्येव यज्ञस्य प्रियं धामोपह्वयते विश्वमस्य प्रियमुपहूतमित्याहाच्छम्बट्कारमेवोपह्वयते ॥ ६ ॥

आह धेनुरेतां वर्धानित्याह धामन्नुपहूतस्त्वतुस्त्रिꣳशच्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

उपांशुयाजः षष्ठेऽस्मिन् स्विष्टकृच्च समीरितः।
आध्वर्यवं समाप्याथ हौत्रमेषो निरूप्यते ॥

तत्रास्मिन् सप्तमेऽनुवाके इडोपाह्वानविधिस्तन्मन्त्रव्याख्यानञ्च प्रस्तूयते। मन्त्रास्तु मन्त्रकाण्ड एव समाम्नाताः "उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उप मा रथन्तरꣳ सह पृथि-

व्या ह्वयतां। उपहूतं वामदेव्यꣳ सहान्तरिक्षेण। उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयतां। उपहूतं बृहत् सह दिवा। उप मा बृहत् सह दिवा ह्वयतां। उपहूताः सप्त होत्राः। उप मा सप्त होत्रा ह्वयतां। उपहूता धेनुः सहर्षभा। उप मा धेनुः सहर्षभा ह्वयतां। उपहूतो भक्षः सखा। उप मा भक्षः सखा ह्वयतां। उपहूताꣳ३ हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयतां। इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी। ब्रह्म देवकृतमुपहूतं। दैव्या अध्वर्यव उपहूताः उपहूता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपतिं वर्धान्। उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतोऽयं यजमानः। उत्तरस्यां देवयज्यायामुपहूतः। भूयसि हविष्करण उपहूतः। दिव्ये धामन्युपहूतः। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः। विश्वमस्य प्रियमुपहूतं। विश्वस्य प्रियस्योपहूतस्योपहूतः" (ब्रा०का०२।प्र०५।अ०८) इति। एतद्विनियोगं बोधायनो दर्शयति 'उक्ता इडाया अपास्तानुपाꣳशूक्तोच्चैरुपह्वयत उपहूतेडेति प्रतीचीमिडोपहूतेति पराचीं' इति। अस्यायमर्थः। गोशरीररूपाया इडाया देव्याः अपा वेदे स्पष्टं प्रोक्ताः उपहूतꣳ रथन्तरमित्येवमादय उपहूताꣳ३ हो इत्येवमन्तास्तान्मन्त्रानुपांशु जपेत्, तत ऊर्द्ध्वमिडोपहूतेत्यादिकं उच्चैः पठेत्। उपहूतशब्दस्य प्रथमप्रयोगेऽपीडा प्रतीचीनमुखा भवति, चरमप्रयोगे पराचीनमुखेत्युच्यत इति। तानेतान्मन्त्रान् व्याचिख्यासुरादाविडा-

जन्मप्रकारं दर्शयति "मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवावमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्र यत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्म" इति। पुरा कदाचिन्मनुः पृथिव्या उपरि यज्ञार्थं किं द्रव्यमस्तीति सर्वत्रान्वेषणमकरोत्, अन्विष्य च तत्र गोः पादाङ्कितेषु भूप्रदेशेषु निषिक्तं घृतं लब्धवान्। लब्ध्वा च देवानामग्रे स एवमब्रवीत्, अस्य गोः पदेषु स्थितस्य घृतस्य स्वरूपं यथा लौकिकभोजनादिषूपयुक्तं तथा यज्ञेषूपयुक्तं कर्तुं कः समर्थ इति। तच्छ्रुत्वा तत्र स्थितौ मित्रावरुणौ मनुं प्रत्यब्रूतां। किमनेन कार्यभूतेन घृतेन, तत्कारणभूताया गोरेव यज्ञाङ्गभावं कर्तुमावां समर्थौ स्व इति। एवमुक्त्वा तौ तत ऊर्द्ध्वं तामिडारूपां गां भूमौ समैरयतां समानयतां। सा च गौर्भूमौ यत्र यत्र नितरां पादं प्रक्षिप्तवती तत्र तत्र गोपदाङ्किते भूप्रदेशे घृतं निष्पीडितमासीत्। यस्मादस्याः पादेभ्यो घृतं निर्गतमासीत् तस्मादियं घृतपदीति प्रसिद्धाऽभूत्। एवमस्या इडाया यज्ञभूमौ जन्म सम्पन्नं। अथ मन्त्रं व्याचष्टे "उपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याहेयं वै रथन्तरमिमामेव सहान्नाद्येनोपह्वयते" इति। यद्रथन्तरं साम तत् पृथिव्या सह मयोपहूतं समीपे यथा तिष्ठति तथाह्वानं कृतमित्यर्थः। एतस्मिन्मन्त्रवाक्ये रथन्तरशब्देन भूमिरुपलक्ष्यते, यथा षट्सु पृष्ठ-

स्तोत्रसामसु रथन्तरं सामाद्यं, तथा त्रिषु लोकेषु भूमिः, आद्यमन्त्रगतेन पृथिवीशब्देन तत्कार्यमन्नाद्यमुपलक्ष्यते। तथा सत्यन्नाद्येन सह भूमिरुपह्वतेत्येष मन्त्रवाक्यस्यार्थः। एवमुत्तरेऽपि मन्त्रा अनूद्य व्याख्यायन्ते। तत्र सामविशेषवाचिना वामदेव्यशब्देन तत्साममसाध्याः पशव उपलक्ष्यन्ते, तदेतद्दर्शयति "उपह्वतꣳ वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोपह्वयते" इति। इराशब्दवाच्या पुष्टिः, तत्सम्बन्धि बृहत्सामेरं पुष्टेर्बृहत्सामसाध्यत्वादित्येतमर्थं दर्शयति "उपह्वतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोपह्वयते" इति। आश्वलायनेन ये होत्रका* दर्शिताः होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रोऽच्छावाक इति, तदुपह्वानपरत्वं दर्शयति "उपह्वताः सप्त होत्रा इत्याह होत्रा एवोपह्वयते" इति। सहर्षभेति पदेन सूचितमर्थं दर्शयति "उपह्वता धेनुः सहर्षभेत्याह मिथुनमेवोपह्वयते" इति। भक्षः सखेत्यनेन स्वोपकारकं सोमपानमुपलक्ष्यत इति दर्शयति "उपह्वतो भक्षः सखेत्याह सोमपीथमेवोपह्वयते" इति। होशब्दः प्रयुक्तः स्वरूपवाचीत्येतद्दर्शयति "उपह्वताꣳ३ हो इत्याहात्मानमेवोपह्वयते" इति। उपह्वतशब्दाद्रुप्लुतिः दूरादाह्वानस्य घटनेनादरार्था†। आत्मन उपह्वाने प्रयोजनं दर्शयति "आत्मा ह्युपह्वतानां वसिष्ठः" इति। यस्मादुपह्वतानां रथन्तर-

---

* ये होत्रकाख्ये। इति तै०।

† दूरादाह्वानस्यामेरादरार्था। इति का०।

पृथिव्यादीनां भचः सखेत्यन्तानां उपवासयिहतमः आत्मा तदधीनत्वादितरोपाह्वानस्य, तस्मादात्मनोऽप्युपाह्वानं कर्त्तव्यं। इडोपहूतेत्यारभ्य मानवीत्येतस्मात् प्राचीनस्य वाक्यसमूहस्य तात्पर्यं दर्शयति "इडामुपह्वयते पशवो वा इडा पशूनेवोपह्वयते चतुरुपह्वयते चतुष्पादो हि पशवः" इति। इडाशब्देन गोशरीरधारिणी देवतोच्यते। तस्या उपाह्वानं इडोपहूतेत्यादिवाक्येन कुर्यात्। इडायाः पशुरूपत्वात् तदुपाह्वानेन पशुप्राप्तिर्भवति। आरोहावरोहरूपयोर्वाक्ययोर्द्विराहृत्तत्वाच्चतुर्वारमुपाह्वानं सम्पद्यते। पशूनां चतुष्पदत्वादेतदुपपन्नं। तयोरावृत्त्या मध्ये सेयमिडाऽस्मानुपाह्वयतामित्येतदिडादेवतायाः प्रार्थना स्वस्मिन् देवतानुग्रहार्थं। मनुः पृथिव्या इत्यस्मिन्नुपाख्याने मानवीत्यादिशब्दार्थः प्रसिद्ध इत्येतद्दर्शयति "मानवीत्याह मनुर्ह्येतामग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयतां" इति। पुरा देवैर्निष्पादितमिडोपह्वानरूपं यत् कर्म तस्योपह्वानं दर्शयति "ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोपह्वयते" इति। अश्विनौ हि देवानामध्वर्यू आस्तामित्यादिश्रुतिषु श्रुता ये दैव्या अध्वर्यवः ये च दृश्यमाना मनुष्यास्तेषामुभयेषामुपाह्वानं दर्शयति "दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोपह्वयते" इति। पूर्वोक्ता ये दैव्या मानुषाश्च येऽध्वर्यवस्ते सर्वेऽपीमं यज्ञमवन्तु यज्ञपतिञ्च वर्धयन्तु इत्येव-

माशीःपरतां दर्शयति "य इमं यज्ञमवान् ये यज्ञपतिं वर्धानित्याह यज्ञाय चैव यजमानाय चाशिषमाशास्ते" इति। उपहूतꣳ रथन्तरꣳ सह पृथिव्येत्यत्र यथा पृथिवीशब्दोऽन्नलक्षकः नात्र तथा द्यावापृथिवीशब्दार्थौ किन्तु स्वार्थपरावित्येतद्दर्शयति "उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोपह्वयते" इति। ते च द्यावापृथिव्यौ देवतिर्यङ्मनुष्याद्युत्पत्तेः पूर्वमेवोत्पन्ने, ऋतशब्दवाच्यो यज्ञोऽनयोर्वर्तत इति ऋतावर्यौ, नैते केवलं जगादिरूपे किन्तु देव्यौ, देवाः पुत्राः ययोस्ते देवपुत्रे इत्येतां विशेषणार्थसिद्धिं दर्शयति "पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे" इति। यजमानः प्रस्तर इत्यादिवत् अत्र यजमानशब्दो नार्थान्तरलक्षक इत्येतद्दर्शयति "उपहूतोऽयं यजमान इत्याह यजमानमेवोपह्वयते" इति। येषां देवयज्यादीनामर्थं यजमानोपह्वानं तानेतान् विस्पष्टं दर्शयति "उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धाम" इति। सोमयागादिरूपाया उत्तरदेवयज्यायाः प्रजाहेतुत्वेन प्रजात्वं। अस्यामेवेष्टौ बहुहविःसम्पादकस्य पशुहेतुत्वेन पशुत्वं। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इत्यस्य स्पष्टार्थस्य मन्त्रवाक्यस्य विवक्षितं तात्पर्यं दर्शयति "इदमसीदमसीत्येव यज्ञस्य प्रियं धामोपह्वयते" इति। इदं प्रवर्तमानं मदीयं हविर्देवा

जुषन्तामिति वक्तुं तस्मिन् दर्शपूर्णमासकर्मणि यजमान उपहूत इत्येतावदेव न भवति किन्तु इदं निरूढपशुबन्धरूपं कर्म चिकीर्षुरसि सोमयागरूपमिदं कर्म चिकर्षुरसीत्येवं सर्वकर्मानुष्ठानविवक्षया यज्ञस्य प्रियमिदं धाम स्थानं प्रति यजमानं उपह्वयते, सर्वकर्मविवक्षाद्योतनार्था वीप्सा। अन्यद्यजमानस्य यत् प्रियं तत् सर्वमुपहूतं, तस्य चोपहूतस्य सर्वस्य प्रियस्य स्वामी यजमान उपहूत इत्यनेनोपाह्वानस्य न्यूनतां विचार्य सम्पूर्णता सम्पद्यत इत्येतद्दर्शयति "विश्वमस्य प्रियमुपहूतमित्याहाच्छम्बट्कारमेवोपह्वयते" इति। अपेक्षितस्यार्थस्य प्रच्छादनेनानुष्ठानवैयर्थ्यं छम्बट्कारः तद्यथा न भवति तथैवेनं यजमानमुपहूतवान् भवति।

अत्र मीमांसा। नवमाध्यायस्य प्रथमपादे चिन्तितं।

ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोत्साहतोऽग्रिमः।
प्रत्यक्षोक्त्या कृत्स्नमन्त्र इडार्थो नोहनं ततः॥

दर्शपूर्णमासयोरिडोपाह्वानमन्त्रे वाक्यमेतदाम्नायते 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये यज्ञपतिं वर्धान्' इति। ये दैव्या अध्वर्यवः यज्ञमवन्ति ये च मनुष्या यज्ञपतिं वर्धयन्ति ते सर्वेऽपि अत्रोपहूता इत्यर्थः। अस्मिन् वाक्ये यज्ञपतेरभिवृद्धिकथनेनोत्साहजनने समवेतोऽर्थः प्रतीयते। ततं इडोपह्वानमन्त्रात् पृथक्कृत्य अभिवृद्ध्यर्थे जपे मन्त्रवाक्यमिदं लिङ्गेन विनियुज्यतां। तथा सति सत्रे यज्ञपतीनां बहुत्वाद्बहुवचनान्ततया यज्ञपतिशब्द ऊहनीय

इति प्राप्ते ब्रूमः। प्रत्यक्षश्रुत्या कृत्स्नमन्त्र इडोपाह्वाने विनियुक्तः, एकवाक्यत्वञ्च कृत्स्नमन्त्र उपलभ्यते प्रकरणञ्चेदमिडायाः, अतः श्रुतिवाक्यप्रकरणैर्विरोधान्न लिङ्गविनियोगः सम्भवति। तदभावे च यज्ञपतिवृद्धिप्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन सहैकवाक्यतापन्नमिडां प्रशंसति, प्रशंसा च एकवचनान्तेनापि यज्ञपतिशब्देन सिध्यतीति नास्ति मन्त्रे तदूहः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः॥ *॥

---

पशवो वा इडा स्वयमादत्ते काममेवात्मना पशूनामादत्ते न ह्यन्यः कामं पशूनां प्रयच्छति वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तं यद्धोता प्राश्नीयाद्धोता॥ १॥

आर्तिमार्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह

पुरोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामी-त्याह स्वगाकृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति वि वा एतद्यज्ञं ॥२॥

छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सन्तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् तं देवा अभिसम-गच्छन्त कल्पतां न इदमिति तेऽब्रुवन् स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वं तस्याविद्धं निः ॥ ३ ॥

अकृन्तन् यवेन सम्मितं तस्माद्यवमात्रमवद्येद्यज्ज्या-योऽवद्येद्रोपयेत् तद्यज्ञस्य यदुप च स्तृणीयादभि च घा-रयेदुभयतःसꣳस्वायि कुर्यादवदायाभिघारयति द्विः सम्पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत् तिरश्चीनम-तिहरेदनभिविद्धं यज्ञस्याभिविध्येदग्रेण परिहरति तीर्थेनैव परिहरति तत् पूष्णे पर्यहरन् तत् ॥ ४ ॥

पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागो ऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रि-यो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभे-द्बृहस्पतिरित्थं वाव स्य आर्तिमारिष्यतीति स एतं म-

त्तमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्यब्रवी-न्न हि सूर्यस्य चक्षुः ॥ ५ ॥

किञ्चन हिनस्ति सोऽबिभेत् प्रतिगृह्णन्तं मा हिꣳसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यब्रवीत् सवितृप्रसूत एवै-नद्ब्रह्मणा देवताभिः प्रत्यगृह्णात् सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वास्येन प्राश्नामीत्यब्रवीन्न ह्य-ग्नेरास्यं किञ्चन हिनस्ति सोऽबिभेत् ॥ ६ ॥

प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्र-वीन्न हि ब्राह्मणस्योदरं किञ्चन हिनस्ति बृहस्पतेर्ब्र-ह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सम्मृशते ऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप-ह्वयते ॥ ७ ॥

प्राश्नीयाद्धोता यद्यं निरहरन्तच्चक्षुरास्यं किञ्चन हिनस्ति सोऽबिभेच्चतुश्चत्वारिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपा-ठकेऽष्टमोऽनुवाकः ॥ * ॥

इडोपाङ्कानमुदितमनुवाके हि सप्तमे।
इडाप्राशित्रभक्षौ द्वावुच्येते अष्टमे पुनः॥

यदुक्तं सूत्रकारेण 'पुरस्तात् प्रत्यङ्कासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यत्यध्वर्युः प्रथममवदानमवदधाति स्वयं होतोत्तरं' इति, तदिदं होतुरवदानं विधत्ते "पशवो वा इडा स्वयमादत्ते काममेवात्मना पशूनामादत्ते न ह्यन्यः कामं पशूनां प्रयच्छति" इति। गोरूपाया इडायाः पशुत्वेन तामिडामाददानो होता पशूनामभिलषितार्थं स्वीकृतवान् भवति, होतुरन्यो न कश्चिदपि पशूनामिडारूपाणां कामं दातुं समर्थः। इडाभागप्राशनमन्त्रानुत्पाद्य व्याचष्टे "वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै" इति। इडोपाङ्कानरूपा या वाक् तस्याः पतिर्होतुर्जीवात्मा तस्मै हुतं, हे पुरोडाश त्वां भक्षयामि। अनेन मन्त्रोच्चारणेन भागं दत्त्वा वाचं देवतां प्रीणयतीत्यर्थः। सदसो यज्ञसभायाः पतिर्होतुर्जीवात्मा तस्मै हुतं त्वां भक्षयामि। अनेन तस्य पुरोडाशस्य स्वोदरगतत्वं भवति। होतुर्हस्ते क्रियमाणस्यावदानस्य सङ्ख्यां विधत्ते "चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तं" इति। प्रधानस्य हविषश्चतुरवत्तत्वं पूर्वमेव दर्शितं तत्साम्यादिदमपि हविरेव भवति, चतुष्ट्वसङ्ख्यासाम्यात् तस्य पशुरूपत्वं। प्रकारान्तरेण भक्षणं प्रशंसति "यद्धोता आश्नीयाद्धोताऽऽर्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपिद-

ध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै” इति। देवतारूपाया इडाया भक्षणेन होता मरणं प्राप्नुयात्, प्राशनं परित्यज्याऽग्नौ तद्भागहोमे सति इडारूपगवादिपशूनग्निरूपाय क्रूराय रुद्राय समर्पितवान् भवति, ततो यजमानः पशुरहितः स्यात्। तस्माद्वाचस्पतये त्वा हुतमिति प्रथममुक्त्वा पश्चाद्भक्षणे सति साक्षादग्नौ हुतं न भवतीति रुद्राय पशुसमर्पणं न भवति। वाचस्पतिव्यवधानेन परोक्षमेव हुतत्वात् स्वयमपि साक्षादिडां न प्राश्नाति किन्त्वन्यस्मै हुतमेव प्राश्नातीति इडाप्राशनप्रयुक्तो मरणदोषो न भवतीति, ईदृशस्य भक्षितस्य स्वात्मगतत्वेन स्थापनाय सदसस्पतय इत्यादिकं पठनीयं। यदुक्तं सूत्रकारेण ‘यजमानपञ्चमा इडां प्राश्नन्ति” इति, तदिदं विधत्ते “प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति” इति। तीर्थे दुःखोत्तरणावसरे प्राशनेन हि दुःखमुत्तीर्यते। ऋत्विग्भिः प्राशने सति दक्षिणापि दत्ता भवति, तद्दानमेतस्मिन् प्रधानयागोत्तरणावसरे। यदुक्तं सूत्रकारेण ‘मनोज्योतिरित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वा’ इति, तदिदं विधत्ते “वि वा एतद्यज्ञं छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सन्तन्वन्ति” इति। ‘सर्वमापः सर्वा देवता आपः’ इति श्रुत्यन्तरादपां सर्वदेवतारूपत्वं। अथ प्राशित्रावदानपरिमाणं विधत्ते “देवा वै

यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् तं देवा अभिसमगच्छन्त कल्पतां न इदमिति तेऽब्रुवन् स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वं तस्याविद्धं निरकृन्तन् यवेन सम्मितं तस्माद्यवमात्रमवद्येत्" इति। देवाः पुरा यज्ञं प्रथममकुर्वन् तदा स्विष्टकृदग्निरूपं रुद्रमन्तरितवन्तः, तेनान्तरायेण कुपितः सन् रुद्रस्तदीयं यज्ञमविध्यत् विकलमकरोत्, तं रुद्रं देवा आभिमुख्येन गत्वा तदिदं यज्ञानुष्ठानमस्माकं कल्पतां सम्पूर्णं भवतु इति प्रार्थितवन्तः। तदानीं केचिद्बुद्धिमन्तो देवा इतरान् प्रत्येवमब्रुवन् यदि वयं तं रुद्रं हविःप्रदानेनाराधयिष्यामस्तर्ह्यस्माकमिदं कर्म स्विष्टं भविष्यतीति। ततो हविराराधनेन स्विष्टकरणात् रुद्ररूपस्याग्नेः स्विष्टकृत्त्वं सम्पन्नं। ततो देवास्समाराध्य तस्य सम्बन्धि यद्यवमात्रं पुरोडाशांशरूपमाविद्धमासीत् तदाविद्धमुपहतं निरकृन्तन् निष्कृष्य छिन्नवन्तः, यस्मादेवं तस्मात् प्राशित्रभागं यवमात्रमवद्येत्। अधिकावदानं प्रतिनिषेधति "यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य" इति। अधिकभागावदाने यज्ञस्य तदङ्गं रोपयेत् यज्ञप्रयोगे भ्रान्तिं जनयेदित्यर्थः। रुद्रेण कृतो योऽयं पुरोडाशस्य वेधस्तस्मादेव वेधदेशात् इदमत्र प्राशित्रभागावदानं प्रतीयते च। विस्पष्टमयमर्थः शाखान्तरे आम्नायते 'अज्यायो यवमात्रादवाधात् कल्पतामिदं। मा रूपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविः' इति। उपस्तरणादिचतुरवदाननिन्दापुरःसरं सकृदवदानाभिघारणे विधत्ते "यदुप च

गृह्णीयादभि च घारयेदुभयतःसंश्वायि कुर्यादवदायाभि-घारयति द्विः सम्पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै" इति। यद्यवदानात् पूर्वमुपस्तरणं पश्चाच्चाभिघारणं कुर्यात् तदा-नीमुपात्तस्य पुरोडाशस्योभयोः पार्श्वयोः संश्वायि कुर्यात् सम्यक् श्वाय उच्छूनत्वरूपो रोगविशेषो यस्याङ्गस्य तदङ्गं सं-श्वायि। सकृदवदानाभिघारणाभ्यां द्विपदो यजमानस्य प्रतिष्ठा भवति। यदुक्तं सूत्रकारेण 'अग्रेणाहवनीयं ब्राह्मणे प्राशित्रं परिहरति' इति, तदेतद्विधत्ते "यत् तिरश्चीनमतिहरेदनभि-विद्धं यज्ञस्याभिविध्येदग्रेण परिहृति तीर्थेनैव परिहरति" इति। वेदेरुत्तरत स्थितोऽध्वर्युर्वेदिमध्यस्थिते पुरोडाशे प्राशित्रभागमवदायाहवनीयस्य दक्षिणभागे स्थिताय ब्रह्मणे वेदेरुपरि हस्तं प्रसार्य तिरश्चीनं यथा भवति तथा यदि दद्यात् तदानीं यज्ञस्य यदङ्गं रुद्रेणानभिविद्धं तदप्यभिविद्धं भवेत्। तस्मादुत्तरस्यां दिश्यवस्थितोऽध्वर्युः प्राङ्मुखो गत्वा-ऽऽहवनीयस्याग्रेण देशेन ब्रह्मसमीपं प्राप्य तस्मै भागं परि-हरति परितो नयति सम्यग्दद्यादित्यर्थः। तथा सति तीर्थेनैव नद्यवतरणप्रदेशेनैव मार्गेणैवाप्नोतवान् भवति। अत्र सूत्रकारेण 'प्राशित्रमवदीयमानं प्रेक्षते' इत्युपक्रम्यैतदुक्तं 'सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणं सावित्रेण प्र-तिगृह्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदायाग्नेस्त्वास्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामी-त्यसंखाद्याभिगिरति' इति। असंखाद्य दन्तैरचूर्णीकृत्य। तच्च

दर्शनमन्त्रमुत्पाद्य विनियोक्तुं प्रस्तौति "तत् पूष्णे पर्यहरन् तत् पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमारिष्यतीति" इति। पुरा कदाचिद्देवास्तत् प्राशित्रं पूष्णे समर्पयन् स च पूषा मन्त्रमन्तरेण तस्य प्राशित्रस्य दन्तैर्बलाद्दंशनं कृत्वा *प्राश्य तदन्नं दंशनेनोपपाद्य तेन स्वकीयान्* दन्तान् पातितवान्। यस्मादेवं तस्मात् पूष्णः सर्वत्र चरोः पिष्टमेव भागं कुर्यात्। ततो देवास्तं दन्तहीनं पूषणमुद्दिश्य परस्परमब्रुवन् अयं पूषा व्याधिं समृद्धिरहितो ऽभूत् यस्मात् तस्मादयं प्राशित्रानर्होऽभूदिति विचार्य तत् प्राशित्रं बृहस्पतये समर्पयन्। स बृहस्पतिर्मनस्येवमबिभेत्, यथा पूषा प्राशित्रं प्राश्यार्तिमगमदित्थमन्योऽपि यः प्राश्नाति स आर्तिमारिष्यति गमिष्यतीति। अथ दर्शनमन्त्रमुत्पादयति "स एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः किंचन हिनस्ति" इति। मनुष्यचक्षुः केनापि रोगेण हिंसितं भवति। आरोग्यप्रदस्य सूर्यस्य चक्षुः न केनापि हिंस्यते, तस्मादनेन मन्त्रेण पश्यामीत्यर्थः। अथ प्रतिग्रहमन्त्रमुत्पादयति "सोऽबिभेत् प्रतिगृह्णन्तं मा हिंसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात्" इति।

---

* प्राश्य तेन दंशनेनोपभूतेन स्वकीयान्। इति तै०।

ब्रह्मणा मन्त्रेण देवताभिरश्विनादिभिस्त्वादृशः प्रतिग्रहो न हिनस्ति। तस्मात् तेन मन्त्रेण प्रतिगृह्णीयात्। अथ प्राशनमन्त्रस्य भागत्रयं क्रमेणोत्पादयति "सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वास्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किञ्चन हिनस्ति सोऽबिभेत् प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किञ्चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः" इति। प्रौढमरण्यं दहतोऽपि दावाग्नेर्मुखमास्यं शुष्ककाष्ठकण्टकादिना केनापि न हिंस्यते। श्राद्धादौ परान्नं भुञ्जानस्यापि ब्राह्मणस्योदरं केनापि प्रत्यवायेन न हिंसितं भवति। यस्मात् बृहस्पतिर्ब्रह्मिष्ठो मन्त्रवित्तमः, तस्माद्बृहस्पतेर्ब्रह्मणा इत्येतदपि मन्त्रभागं पठेत्। यदुक्तं सूत्रकारेण 'इन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति वाङ्म आसन्निति यथालिङ्गमङ्गानि' इति०। तदेतदभिमर्शनं शिरोमार्जनपूर्वकं विधत्ते "अप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्संमृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुपह्वयते" इति।

अत्र मीमांसा। षष्ठाध्यायस्य चतुर्थपादे चिन्तितं।

इडाद्यर्थस्य नाशेऽन्यः शेषाद्ग्राह्यो न वाग्रिमः।
शेषसत्त्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात्॥

इडाभक्षणार्थं प्राशित्रभक्षणार्थं वाऽवत्तं यदि नश्येत् तदा शेषस्य सद्भावात् तस्माच्छेषात् पुनरवदेयमिति चेत्। न, तस्य-

शेषस्यान्यथाप्रतिपत्त्या शंयुवाककालीनभक्षरूपयावद्धुत्वात्। तस्मादवत्तनाशे द्रव्याभावादिडादिकं लुप्यते।

तत्रैवान्यच्चिन्तितं।

शेषभक्षाः किमन्येषामृत्विजां वान्यभक्षणं।
इडायाः परिसङ्ख्यानात् स्वाम्यप्राप्तौ ततोऽन्तिमः॥

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षास्तेषां भक्षणमृत्विग्भ्योऽन्यैः कार्यं। कुतः, ऋत्विजां परिसङ्ख्यातत्वात्। ऋत्विजां कर्मकरत्वादेव भक्षप्राप्तौ सत्यां पुनरप्येवमाम्नायते 'यजमानपञ्चमा इडां भक्षयन्ति' इति तदेतत् पुनराम्नातं परिसङ्ख्यार्थं, यजमानसहिता ऋत्विजः प्राशित्रादिकं न भक्षयेयुरित्यर्थः। तस्मादृत्विग्भ्योऽन्येषां प्राशित्रादिभक्षणमिति चेत्। मैवं, यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते। तस्मादपरिसङ्ख्यातत्वादृत्विजामेव प्राशित्रादिभक्षणं।

तृतीयाध्यायस्य तृतीयपादे चिन्तितं।

प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत।
इष्टिप्रकरणादेव प्रकृताविति युज्यते॥
सन्तर्दनादिवद्वाक्यादिकृतौ पूषसम्भवात्।
सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया॥

दर्शपूर्णमासप्रकरणे श्रूयते 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इति। तत्र दन्तरहितस्य पूष्णः पिष्टभागत्वं सन्तर्दनाद्यधिकरणन्यायेन प्रकरणादुत्कृष्टतया विकृतिगामीत्यवगम्यते। तथाप्युत्तराधिकरणेषु तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते।

तत्रैवान्यच्चिन्तितं।

> चरौ पशौ पुरोडाशे चरावेवोत पेषणं।
> विशेषादर्शनादेतत् सर्वेष्वपि विधीयते॥
> प्राप्तत्वान्न पुरोडाशे दृदाद्याकारनाशनात्।
> न पशौ पारिशेष्येण चरावेव हि पेषणं।

पौष्णं चरुं निर्वपेदिति चरुर्विहितः। पौष्णं श्याममालभेतान्नकाम इति पशुविधिः। पशुमालभ्य पुरोडाशं निर्वपतीत्येतच्चोदकेन पौष्णपशौ प्राप्तं। तत्र यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इति न्यायेन पुरोडाशस्य पूषा देवता। तत्र पूर्वोक्तपेषणं विषयीकृत्योच्यमानाः संशयपूर्वोत्तरपक्षाः स्पष्टाः।

तत्रैवान्यच्चिन्तितं।

> द्विदेवत्येऽपि किं पिंष्यादुत पूषैकदेवते।
> द्विदेवकेऽपि तत् पूष्णः सत्त्वात् पेषणभागिनः॥
> देवताविफलत्वेन पेषणं न प्रयोजयेत्।
> यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत्॥

राजसूये श्रूयते 'सोमापौष्णं चरुं निर्वपेदैन्द्रापौष्णं चरुं' इति। तत्र द्विदेवके चरौ पिष्टभाजः पूष्णः सत्त्वात् पेषणं पूषार्थं कर्तव्यमिति चेत्। तत्रेदं वक्तव्यं। किं पेषणस्य देवता प्रयोजिका किं वा यागः। नाद्यः। यागमन्तरेण केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति; पौष्णस्य यागस्य पेषणप्रयोजकत्वे तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नार्हति। पूषा प्रपिष्टभाग इत्यत्र यागो न श्रुत इति चेत्। नैवं, याग-

शब्दान्यथानुपपत्त्या यागस्य कल्प्यत्वात्। न हि देवतात्वमन्तरेण पिष्टद्रव्यभाक्त्वं सिध्यति सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः कल्प्यते। तस्मादेकदेवकयागस्य पेषणप्रयोजकत्वान्न द्विदेवके यागे पेषणमस्ति।

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ * ॥

---

अग्नीध आदधात्यग्निमुखानेवर्तून् प्रीणाति समिधमादधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति परिधीन्त्सम्मार्ष्टि पुनात्येवैना'न्त्सकृत्सकृत् सम्मार्ष्टि पराङिव ह्येतर्हि यज्ञश्चतुः सम्पद्यते चतुस्पादः पशवः पशूनेवावरुन्धे ब्रह्मन् प्रस्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितः ॥ १ ॥

यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमारभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासम्प्रत्तो यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत एवैनꣳ सम्प्रयच्छति देवसवितरेतत् ते प्र ॥ २ ॥

आहेत्याह प्रसृत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायात्मने तेभ्य एवाशिषमाशास्तेऽनार्त्यै आश्राव्याह देवान् यजेति ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभं ॥ ३ ॥

जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तत्समिन्ध एतदुर्वै नामासुर आसीत् स एतर्हि यज्ञस्याशिषमवृङ्क्त यद्ब्रूयादेतत् ॥ ४ ॥

उ द्यावापृथिवी भद्रमभूदित्येतदुमेवासुरं यज्ञस्याशिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याशिषं गमयत्यार्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमराल्स्मेति वावैतदाहोपश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी ॥ ॥ ५ ॥

स्तामित्याहाशिषमेवैतामाशास्ते यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यान्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमाशास्ते न प्रमायुको भवति तयोराविद्यग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म ॥ ६ ॥

देवतास्ता अरीरधामेति वावैतदाह यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेदाशास्तेऽयं यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं गमयत्यायुराशास्ते सुप्रजास्त्वमाशास्त इत्याहाशिषमेवैतामाशास्ते सजातवनस्यामाशास्त इत्याह प्राणा वै सजाताः प्राणानेव ॥ ॥ ७ ॥

नान्तरेति तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाहेह गतिर्वामस्येदञ्च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै ॥ ८ ॥

श्रितस्ते प्र त्रिष्टुभमेतद्द्यावापृथिवी या अयाक्ष्म प्राणानेव षट्चत्वारिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥ * ॥

अष्टमे स्पष्टमुदितमिडाप्राशित्रभक्षणं।
अनूयाजाः सूक्तवाका नवमे द्वयमीर्यते ॥

तत्रादौ तावदाग्नीध्रभागस्य प्रदानं विधत्ते "अग्नीध आदधात्यग्निमुखानेवर्तून् प्रीणाति" इति। पौरोडाशिके तु काण्डे अग्नीधे प्रथमायादधातीति भागप्रदानस्य प्राथम्यमुक्तं। तस्मादाग्नीध्रेणेध्यमानस्याग्नेर्मुखत्वं। तस्मिन्नेव काण्डे सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयतीत्युक्तं षडवत्तविधानेन सङ्ख्यासामान्यादृतुसम्बन्धः। तस्मादग्निमुखानामृतूनां प्रीतिः। यदुक्तं सूत्रकारेण 'अनुज्ञातो ब्रह्मणाग्नीध्र आनुयाजिकीं समिधमादधात्येषा ते अग्ने समित्' इति, तदेतद्विधत्ते "समिधमादधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति" इति। अनूयाजा उत्तरा आहुतयस्तास्तस्यां समिधि प्रतितिष्ठन्ति। किञ्च समिद्युक्त एवाग्नावनूयाजान् जुहोति। शोधनं विधत्ते "परिधीन्त्संमार्ष्टि पुनात्येवैनान्" इति। पूर्ववदावृत्तिं प्रसक्तां वारयति "सकृत्सकृत् संमार्ष्टि पराङिव ह्येतर्हि यज्ञः" इति। योऽयमाघारयोर्मध्ये पूर्वोक्तः संमार्गः तस्य काले यज्ञः पराग्भूतो* न भवति, किन्तु प्रत्यग्भूतः तत ऊर्द्ध्वं प्रधानयागानां प्रवर्तिष्यमाणत्वात्। अनूयाजसमिध ऊर्द्ध्वं संमार्गकाले तु यज्ञः पराग्भूतस्तत ऊर्द्ध्वं प्रधानयागस्य

* पराभूत इति का०।

कस्वाय्यभावात्। अग्नेरपि सकृत् सम्मार्गमध्यावृत्यानेन सह परिधित्रयगतां सम्मार्गसङ्ख्यां प्रशंसति "चतुः सम्पद्यते चतुष्पादः पशवः पशूनेवावरुन्धे" इति। अनूयाजार्थं गमिष्यतोऽध्वर्योर्ब्रह्माणं प्रत्यनुज्ञापनमन्त्रमुत्पाद्य तस्य तात्पर्यं दर्शयति "ब्रह्मन् प्रस्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितो यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमारभते" इति। यस्मिन्नाहवनीयस्य दक्षिणे देशे ब्रह्मा वर्तते तत्रैवैतस्मिन् काले यज्ञ आश्रितस्तत्समीपे स्थित्वा होतव्यत्वात्, अतो ब्रह्मानुज्ञापनेन यज्ञो यस्मिन् देश आश्रितस्तत एव देशाद्यज्ञमुपाकृतवान्* भवति। ब्रह्मणो वाचैवानुज्ञाप्रदानं विधत्ते "यद्धस्तेन प्रमीवेदेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासम्प्रत्तो यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत एवैनꣳ सम्प्रयच्छति" इति। किमयं ब्रह्मा हस्तायसञ्चालनेनानुजानीते किंवा शिरश्चालनेनाथ वा तूष्णीमेवास्ते आहोस्वित् प्रतिष्ठेत्येतया वाचा। नाद्यः, कम्पप्रसङ्गात्। यदि हस्तचालनेन प्रमीवेत् प्रेरयेत् तदा शरीरे वातादिजन्यः कश्चित् कम्परूपो रोग उत्पद्येत। शिरसाभ्यनुज्ञाने शीर्षक्तिमान् शिरोरोगवान् भवेत्। तूष्णीमवस्थाने यज्ञः सम्प्रत्तः सम्यक् प्रवृत्तो न भवेत्। तस्मात् प्रतिष्ठेत्यनया वाचैवाभ्यनुज्ञानं परिशिष्यते। तथा सति यज्ञस्य मन्त्ररूपायां वाचि श्रितत्वात् तद्योग्याद्दाश्रयाद्यज्ञं प्रयच्छति। यदुक्तं सूत्रकारेण 'ब्रह्मन्

---

* उपक्रान्तवान् इति का०।

प्रस्थास्याम इत्युच्यमाने देवसवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीति ओं प्रतिष्ठेति प्रस्तौति' इति, सोऽयं शाखान्तर आम्नातो मन्त्रस्तस्यायमर्थः। हे सवितर्देव यदेतत् प्रस्थास्याम इत्यनुज्ञापनं तदेतत् तवाध्वर्युः प्राह तस्मात् त्वं प्रसुव च प्रयज च। बृहस्पतिरेवाच ब्रह्मा, हे बृहस्पते स त्वं यज्ञं पाहि, यज्ञपतिं मनुष्यं ब्रह्मरूपं मामपि पाहि, हे अध्वर्यो यत् त्वयोक्तं तदों तथास्तु अनूयाजान् यष्टुं प्रस्थानं कुर्विति। तस्यैतस्य शाखान्तरोक्तस्य मन्त्रस्य भागान् व्याचष्टे "देव सवितरेतत् ते प्राहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायात्मने तेभ्य एवाशिषमाशास्तेऽनार्त्यै" इति। यदुक्तं सूत्रकारेण 'औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाघारसम्भेदं प्रतीचस्तीननूयाजान् यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान् यजेति प्रथमꣳ सम्प्रेष्यति यज यजेतीतरान्' इति। आश्रावणपूर्वकं प्रथमयागसम्प्रेषं विधत्ते "आश्राव्याह देवान् यजेति" इति। अथ पूर्वोत्तरपक्षाभ्यामनूयाजार्थं देवतासद्भावं दर्शयति "ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभं जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति" इति। या देवता अग्निप्रजापत्यादयो यष्टव्यास्ताः सर्वाः पुरोडाशादिभिरेवेष्टाः, अथ यान् देवान् यष्टुमयमध्वर्युः प्रयतते ते देवाः

कतमे, न खल्ववशिष्टाः केचिद्देवाः सन्ति इति पूर्वः पक्षः। अत्र सिद्धान्तं 'छन्दांस्यवशिष्टानीत्युत्तरं ब्रूयात्, गायत्रीं त्रिष्टुभं जगतीञ्च यष्टुमध्वर्यीर्यत्नः' इति। अपि चान्ये तत्र विशेषमाहुः 'छन्दसां ब्राह्मणैरध्येतव्यत्वाद्ब्राह्मणा एव छन्दोरूपाः' इति। तस्माद्ब्राह्मणानेवाध्वर्युर्यजतीत्युत्तरं। ब्राह्मणजात्यभिमानी योऽग्निः स एवानूयाजदेवतेति तात्पर्यार्थः। अथानूयाजान् विधत्ते "देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्; यदनूयाजान् यजत्यग्निमेव तत् समिन्धे" इति। पुरा कदाचिद्देवा यागं कृतवन्तस्तत्राग्निप्रजापत्यादयो यदा देवैरिष्टास्तदा तद्यागादूर्द्धमाहुत्याधारभूतोऽग्निः प्रज्वलितो नाभूत, ततो देवा अनुयाजेषु प्रविश्य निलीनमग्निमन्विष्याहुतिभिर्लब्धवन्तः। तस्मादनूयाजान् यजेत्, तेनाग्निमेव प्रज्वालितवान् भवति। एतेषां चानूयाजानां मन्त्रास्तदीये मन्त्रकाण्डे एवाम्नाताः "देवं बर्हिः। वसुवने वसुधेयस्य वेतु। देवो नराशꣳसः। वसुवने वसुधेयस्य वेतु। देवो अग्निः स्विष्टकृत्। सुद्रविणा मन्द्रः कविः। सत्यमन्माऽऽयजी होता। होतुर्होतुरायजीयान्। अग्ने यान् देवानयाट्। याꣳ अपिप्रेः। ये ते होत्रे अमत्सत। ताꣳ ससनुषीꣳ होत्रां देवङ्गमां। दिवि देवेषु यज्ञमेरयेमं। स्विष्टकृच्चाग्ने होताभूः। वसुवने वसुधेयस्य नमोवाके वीहि" (ब्रा०का०२।प्र०५।अ०८) इति। देवं द्योतनशीलं बर्हिर्नामकं यदग्निस्वरूपं तदेतद्वसुधेयस्य वेतु, आज्यं वसुरूपं

यदेतदग्नावाधेयं तदेतद्भजतां। किमर्थं वसुवने धनस्य वननं भजनं वसुवन् तस्मै, यजमानस्य धनप्राप्त्यर्थमित्यर्थः। एवं नराशंसनामकेऽप्यग्नौ योजयितव्यं। स्विष्टकृन्नामकोऽग्निः सोऽयं सुद्रविणा शोभनधनः, मन्द्रो हर्षणशीलः, कविर्विद्वान्, सत्यमन्मा सत्यमननः, आयजी शास्त्रीयया मर्यादया यष्टा, होता देवानामाह्वाता। होतुर्होतुरायजीयान् लोके यो यो होता तस्मात् तस्मात् सर्वस्मादतिशयेन शास्त्रीयमर्यादानुसारेण यष्टा। हे अग्ने ईदृशस्त्वं यान् देवानयाट् यष्टवानसि, यांश्च देवानपिप्रेः प्रीणितवानसि, ये च देवास्ते तव होत्रे होतृत्वे अमत्सत यजनेऽमाद्यन् हृष्टवन्तः, दिविस्थितेषु देवेषु सम्नुषीं हविर्दत्तवतीं देवङ्गमां देवानवगच्छन्तीं तां होत्रां होतृक्रियामिममस्मदीयं यज्ञं एरय आभिमुख्येन प्रापय, अस्मदीये यज्ञे सर्वदेवतुष्टिकरीं होतृक्रियां त्वमनुतिष्ठेत्यर्थः। हे अग्ने त्वं स्विष्टकृद्धोता चाभूः यदस्माभिरिष्टं तच्छोभनं त्वया कृतं तादृशो होमस्य कर्ताभूः, अतो नमोवाके यजमानस्य नमस्कारोक्तौ सत्यां वसुवने धनस्य सम्भजनाय वसुधेयस्य वीहि, अग्नावाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय। तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः साध्या अनूयाजाः प्रपञ्चिताः। अथ प्रस्तरप्रहरणाङ्गभूतः सूक्तवाको व्याख्यातव्यः। सूक्तवाकस्यानूयाजानन्तरभावित्वं बोधायनेन दर्शितं 'अनूयाजानां प्रथमं यजति देवं बर्हिर्वसुवने वसुधेयस्य वेत्विति देवो नराशꣳसो वसुवने वसुधेयस्य वेत्विति द्वितीयं देवो अग्निः स्वि-

इष्टकृदिति तृतीयमनवानमनूयाजान् यजतीति ब्राह्मणमुक्तमे*वामत्यतेति व्यनिति यदा जानाति सूक्तवाकाननूक्त्वाऽनुब्रूहीति तदा सूक्तवाकमन्वाहेदं द्यावापृथिवीति प्रतिपद्य' इति। सोऽयं सूक्तवाकस्य प्रथमो भागो मन्त्रकाण्डे एवमाम्नातः "इदं द्यावापृथिवी भद्रमभूत्। आर्ध्म सूक्तवाकं। उत नमोवाकं। ऋध्यास्म सूक्तोच्यमग्ने। त्वꣳ सूक्तवागसि। उपश्रितो दिवः पृथिव्योः। ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम्। शङ्गये जीरदानू। अत्रस्नू अप्रवेदे। उरुगव्यूती अभयं कृतौ। वृष्टिद्यावा रीत्यापा। शम्भुवौ मयोभुवौ। ऊर्जस्वती च पयस्वती च। सूपचरणा च स्वधिचरणा च। तयोराविदि" (ब्रा०का०१।प्र०५।अ०१०) इति। हे द्यावापृथिवी इदमीदृशं भद्रं कल्याणमस्माकमभूत्। कीदृशमिति तदुच्यते। ते वयं सूक्तवाकमार्ध्म, अङ्कालुरयं यजमानः, सम्यगनेन हविर्दत्तमित्यादिवाक्यानि सूक्तानि, तेषां सूक्तानां देवैर्मनुष्यैर्वा वचनं वाकस्तद्यथा भवति तथा समृद्धिं गता स्मः। अथवा 'अग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत' इत्यादीनि सूक्तानि तेषां वचनमत्र यथा भवति तथा वयमृद्धिं गताः। अपि च 'नमो देवेभ्यः' इति उक्तिर्नमोवाकः, स यथा भवति तथा वयमृद्धिं प्राप्ताः। हे अग्ने त्वया सूक्तोच्यं, यजमानः समृद्धं हविर्दत्तवानित्येतादृशं सूक्तं वक्तव्यं, तेन वयमृध्यास्म समृद्धिं प्राप्ता भूयास्मः। यस्मात् त्वं द्यावापृथिव्योरुपश्रितोऽवस्थितो

* एतदंशस्य तै० पु० असम्पूर्णतयाऽसम्यग्भावो नापाकृतः।

ऽभूः सूक्तवागसि सूक्तं वक्तुं समोऽसि। हे यजमान तव सम्बन्धिन्यस्मिन् यज्ञे द्यावापृथिव्यौ श्रोमन्वती रक्षणवत्यौ स्तां। कीदृशे शङ्ग्ये सुखस्य प्रापयित्र्यौ। जीरदानू वृष्ट्यादि-द्वारेण जीवनप्रदात्र्यौ। अत्रस्नू भयरहिते। अप्रवेदे अस्मदी-यानां दोषाणामकथयित्र्यौ। उरुगव्यूती प्रभूततृणोदकयुक्त-त्वेन विस्तीर्णगोप्रचारेण अभयङ्कृतौ, अस्मास्वभयस्य कर्त्र्यौ। वृष्टिद्यावा वृष्टेः प्रकाशयित्र्यौ। रीत्यापा रीतेः सन्मार्गवृत्ति-प्रकारस्य प्रापयित्र्यौ। शम्भुवौ रोगाद्यनिष्टशान्तेः प्रापयित्र्यौ। मयोभुवौ अन्नपानादिसुखस्य प्रापयित्र्यौ। युवयोर्मध्ये द्यौरिय-मूर्जस्वती वृष्टिरूपरसवती, पृथिवीयं पयस्वती तृणोदकद्वारा बहुलक्षीरादियुक्ता। तथेयं द्यौः सूपचरणा देवताधिवासस्था-नत्वेन सुष्ठूपचरितव्या। इयं पृथिवी स्वधिचरणा सुखेनाश्रयितुं शक्या। तयोर्द्यावापृथिव्योराविदि आज्ञायां सत्यां अग्निरिदं हविरजुषतेत्यनेन वक्ष्यमाणेनान्वयः। अस्य सूक्तवाकस्य प्रथम-वाक्यं शाखान्तरेऽन्यथा पठितं 'एतदु द्यावापृथिवी भद्रमभूत्' इति, तदिदं दूषयित्वा स्वशाखापाठं प्रशंसति "एतदुर्वै ना-मासुर आसीत् स एतर्हि यज्ञस्याशिषमवृङ्क्त यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुमेवासुरं यज्ञस्याशिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याशिषं गमयति"इति। एतदुर्नामा कश्चिदसुर आसीत् स कस्यचिद्यज्ञे एतस्मिन् सूक्तवाककाले समागत्यायुराशास्ते सुप्रजास्त्वमा-शास्त इत्यादिकामाशिषं यजमानसम्बन्धिनीं विनाश्य स्वसम्ब-

न्विमीमकरोत्। तस्मादेतद् द्यावापृथिवीति यदि होता पठेत् तदासुरस्यैवाशीःप्राप्तिः स्यात्। ततः शाखान्तरपाठं परित्यज्येदं द्यावापृथिवी भद्रमित्येव पठेत्, तथा सति यजमानस्यैवाशीःप्राप्तिर्भवति। सूक्तवाकनमोवाकशब्दयोः क्रियाविशेषणत्वं दर्शयति "आर्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमराल्मेति वावैतदाह" इति। इदं द्वयं यथा भवति तथा समृद्धिं प्राप्ता इत्येवैतन्मन्त्रवाक्यं ब्रूते। यज्ञस्याग्निरूपेण पृथिव्यां फलरूपेण दिवि चाश्रितत्वं प्रसिद्धमित्येतद्दर्शयति "उपश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रितः" इति। रक्षणवत्यौ स्तामित्येतादृगाशीरत्र विवक्षितेति दर्शयति "ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तामित्याहाशिषमेवैतामाशास्ते" इति। शाखान्तरपठितमवसानशब्दं दूषयित्वा स्वपाठं प्रशंसति "यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमाशास्ते न प्रमायुको भवति" इति। यदा पुरुषो म्रियते तदानीं पर्यङ्कशयनादिपरित्यागेनेमां भूमिमुपेत्याऽवसानं गच्छति तस्मात् तादृशस्यार्थस्य सूचके सूपावसानशब्दे प्रयुक्ते सति मरणशीलो भवति। भूमिविषयकेण स्वधिचरणेतिशब्देन वरीयसीमतिबहुलां गव्यूतिं गोप्रचारभूमिं कामितवान् भवति। सूक्तवाकस्य द्वितीयभागपाठस्तु "अग्निरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। सोम इदꣳ हविरजुषत।

अवीवृधत महो ज्यायोऽक्त। अग्निरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽक्त। प्रजापतिरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽक्त। अग्नीषोमाविदꣳ हविरजुषेतां। अवीवृधेतां महो ज्यायोऽक्रातां। इन्द्राग्नी इदꣳ हविरजुषेतां। अवीवृधेतां महो ज्यायोऽक्रातां। इन्द्र इदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽक्त। महेन्द्र इदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽक्त। देवा आज्यपा आज्यमजुषन्त। अवीवृधन्त महो ज्यायोऽक्त। अग्निर्होत्रेणेदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽक्त" (ब्रा०) इति। आज्यभागदेवोऽयमग्निर्दत्तं हविरसेवत, सेवित्वा च यजमानं वर्धितवान् तस्य च यजमानस्याधिकं तेजः कृतवान्। एवं सोमादिषु स्विष्टकृदग्निपर्यन्तेषु योज्यं। देवताक्रमस्वात्रावाहननिगदवत् अवगन्तव्यः। तत्र होत्रेण होमनिमित्तेन होमस्य स्विष्टकृत्त्वं कर्तुमित्यर्थः। तस्यैतस्य मन्त्रकाण्डाम्नातस्य सूक्तवाकमध्यभागस्य तात्पर्यं दर्शयति "तयोराविरग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह" इति। पूर्वभागे सूक्तवाकमित्यनेन वयं वृद्धिं प्राप्ता इति स्वकीयैवाभिवृद्धिरुक्ता। इदानीमग्निरिदꣳ हविरजुषतेत्यादिभिर्देवताविषयाभिवृद्धिरुच्यते। या देवता वयमयाक्ष्म वयमिष्टवन्तस्ता देवता अरीरधाम यथा राध्यन्तः समृद्धा भवन्ति तथाऽकार्ष्म इत्येतमेवार्थमग्निरिदमित्यादिमन्त्रवाक्यं ब्रूते। सूक्तवाकस्य चरमभाग एवमाम्नातः "अस्यामृधद्धोत्रायां देवङ्गमायां। आशास्ते

ऽयं यजमानोऽसौ। आयुराशास्ते। सुप्रजास्त्वमाशास्ते। सजातवनस्यामाशास्ते। उत्तरां देवयज्यामाशास्ते। भूयो हविष्करणमाशास्ते। दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाशास्ते। तदश्यात्तदृध्यात्। तदस्मै देवा रासन्तां। तदग्निर्देवो देवेभ्यो वनते। वयमग्नेर्मानुषाः। इष्टञ्च वीतञ्च। उभे च नो द्यावापृथिवी अंहसः स्पातां। इह गतिर्वामस्येदञ्च। नमो देवेभ्यः"(ब्रा०) इति। अस्यां सूक्तवाकपाठपूर्विकायां होत्रायां प्रस्तरप्रहरणरूपायां होमक्रियायां देवकृमायां देवान् प्राप्नुवत्यां सत्यामृधत् ऋध्नोतु यजमानः समृद्धिं प्राप्नोतु। असौ विष्णुरुद्रादिशर्मा यजमानः स्वस्यायुः प्रार्थयते, सुप्रजास्त्वं शोभनापत्ययुक्तत्वं सजातवनस्यां समानजातीयैर्वननं सेव्यत्वमात्मन इच्छतीति व्युत्पत्तिमभिप्रेत्य एतत् सजातवनस्येत्युच्यते। उत्तरा देवयज्या कालान्तरभाविनी सेयमिष्टिः। भूयो हविष्करणं प्रभूतसोमयागादिरूपं। दिव्यं धाम स्वर्गस्थानं, किं बहुना विश्वं प्रियं यद्यत् तत्सर्वमात्मनः। अनेन हविषा प्रस्तराख्येन यजमानः यत् फलमाशास्ते तदश्यात् तत्फलं भुङ्क्तां। तच्च फलमृध्यात् समृद्धमस्तु भवतु। तत् सर्वमस्मै यजमानायाग्न्यादयो रासन्तां साधयन्तां। तत् फलमग्निर्देवो देवेभ्यः सर्वेभ्य आनीय वनते यजमानं तद्भागिनं करोति। वयञ्च होत्रादयो मानुषाः सन्तोऽग्नेः प्रसादात् सम्भावितफलं मनुष्येभ्य आनयाम इति शेषः। किन्तु दैवं मानुषञ्च फलमिति तदुच्यते। इष्टञ्च वीतञ्चेति। इष्टं यागनिमित्तं स्वर्ग-

साधनं पुण्यं यदस्ति तत् दैवं। वीतं अशनखाद्यादिरूपं यदस्ति तदेतन्मानुषं। किन्तु एते द्यावापृथिवी उभे अपि नोऽस्मा-नꣳहसः पापात् फलप्रतिबन्धकात् पातां रक्षतां। इहास्मिन् कर्मणि वामस्य कमनीयस्य धनस्य गतिः प्राप्तिरस्तु। इदञ्च हविर्देवैः स्वीक्रियतामिति शेषः। नमस्कारः सर्वेभ्यो देवेभ्यो ऽस्तु। मन्त्रगतेनासावितिपदेन यजमाननामनिर्देशो विवक्षित इत्येतद्दर्शयति "यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेदा-शास्तेऽयं यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं गम-यति" इति। यद्यत्र न यजमानस्य नाम निर्दिशेत् यज्ञसम्बन्धि-न्यायुरादिरूपा येयमाशीः सा प्रतिवेशं गच्छेत् यजमानप्रति-रूपकं यज्ञशालां प्रविष्टं पार्श्वस्थं यं कञ्चित् पुरुषं प्राप्नुयात्। असाविति नाम निर्दिशेत् यजमानमेव स्वर्गं प्रापयति। एत-मेव नामनिर्देशमभिप्रेत्यान्यत्राम्नातं 'यर्हि होता यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयादेमा अग्मन्' इति। आशास्तेऽयं यजमान इत्यस्मिन् वाक्ये यदाऽऽशासनीयं सङ्क्षेपरूपेण विव-क्षितं तदेवायुरादिवाक्यैः प्रपञ्चितमित्येतद्दर्शयति "आयुरा-शास्ते सुप्रजास्त्वमाशास्त इत्याहाशिषमेवैतामाशास्ते" इति। जीवात्मना सहोत्पन्नत्वात् प्राणाः सजातशब्देन विवक्षिता इत्ये-तद्दर्शयति "सजातवनस्यामाशास्त इत्याह प्राणा वै सजाताः प्राणानेव नान्तरेति" इति। सजातशब्दाभिधेयैः प्राणैर्वननस्य सम्भजनस्य प्रार्थ्यमानत्वात् प्राणानामन्तरायं न करोति, एतैश्च प्राणैरितरेऽपि सेवका उपलक्षिताः। अतः पूर्वोक्तं मन्त्रव्याख्यानं-

मविरुद्धं । देवसकाशान्मनुष्यसकाशाच्च फलमग्नौ होतरि व्यवस्थितमित्येतादृशमभिप्रायं दर्शयति "तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाह" इति । दिव्या मानुषाश्च भागा विवक्षिता इत्यर्थः । इह कर्मणि हविर्भिरसत्कृता अपि देवा नमस्कारेण सत्कृता भवन्तीत्येतद्दर्शयति "इह गतिर्वामस्येदञ्च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै" इति । उभयविधदेवप्रसादात् स्वस्यार्तिर्न भवेदिति ।

अत्र मीमांसा । दशमाध्यायस्य चतुर्थपादे चिन्तितं ।

अनूयाजोऽन्तिमो योऽसौ किमारादुपकारकः ।
स्विष्टकृत्संस्कृतिर्वाऽऽद्योऽनूयाजान्तरसाम्यतः ॥
स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञार्थवत्त्वतः ।
दृष्टार्थलाभ संस्कारो भवेदन्यप्रयाजवत् ॥

दर्शपूर्णमासयोस्त्रयोऽनूयाजाः समाम्नाताः, तत्र प्रथमद्वितीयानूयाजवत् तृतीयोऽप्यारादुपकारक इति पूर्वपक्षः । अस्ति प्रधानहोमनारिष्टहोमानन्तरभावी प्राशित्रादिभक्षणात् प्राचीनः पुरोडाशादिद्रव्यकः स्विष्टकृद्धोमः, सर्वेषां हविषामुत्तरार्धात् सकृत्सकृत् स्विष्टकृतेऽवद्यतीत्यादिना तदभिधानात्, प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनूयाजेषु तृतीये स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञास्ति, देवोऽग्निः स्विष्टकृदिति मन्त्रपाठात्, सा च पूर्वस्विष्टकृद्देवतास्मरणसंस्कारे सत्यर्थवती

स्यात्, प्रथमद्वितीययोस्तु नास्ति भेति वैषम्यं, किञ्च संस्कार-पक्षे दृष्टार्थस्तृतीयः स्यादन्यप्रयाजवदन्योऽनूयाजः स्यात् ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितं ।

प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः ।
अङ्गाङ्गिता वा स्यात् कालोऽजुषतेत्याद्यनन्वयात् ॥
प्रहृतेरिष्टदेवार्थसंस्कारत्वात्तदन्वयः ।
सम्यक्तो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥

दर्शपूर्णमासयोराम्नायते 'सूक्तवाकेन प्रस्तरं प्रहरति' इति। 'इदं द्यावापृथिवी' इत्यादिर्मन्त्रः सूक्तवाकः, तस्मिन् मन्त्रेऽग्निं सम्बोध्य 'त्वं सूक्तवागसि' इत्याम्नानात् । प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेपः, तच्च सूक्तवाकेनेत्येतत् पदं कालं लक्षयति, होताऽस्मिन् मन्त्रे पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत् । न तत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः, पूर्वोक्त-प्रैषमन्त्रवद्वाक्यान्वयाभावात्, 'अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत' इत्यादिकं मन्त्रे पठ्यते, पुरोडाशमेवया अतिहृष्टोऽग्निः स्वस्मिन् यजमाने वा तेजोबाहुल्यं कृतवानिति तस्यार्थः, न चासौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते ब्रूमः, सूक्तवाकेनेतितृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते, न चात्यन्तमन्वयाभावः, मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादिदेवाननु-स्मारयति प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः, अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते। ननु प्रहरणं नाम प्रक्षेपमात्रं न तु देवतोद्देशेन प्रक्षेपः हृञ्धातोरश्रवणात्?

तथा सति देवतानां मन्त्रेऽभावात् तद्द्वारापि नान्वय इति चेत्। मैवं, देवतानां सद्भावादग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रस्तरप्रहरणाङ्गत्वं बोध्यते। यदि प्रहरणेऽग्न्यादयो देवता भवेयुस्तदा तत्प्रकाशने दृष्टोऽर्थो मन्त्रस्य लभ्येत, ततो देवताप्रकल्पने तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्वं सिध्यति। तस्माद्देवताद्वारास्त्येवान्वयः।

तत्रैवान्यच्चिन्तितं।

> प्रस्तरेऽखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ।
> समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता न हि ॥
> दर्शपूर्णमसोर्देवानमनुसृत्य विभज्यतां ।
> आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥

पूर्वोदाहृते मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात्, ततः सर्वोऽपि प्रहरणाङ्गमिति चेत्। न, लिङ्गेन समाख्याया बाधितत्वात्, तस्मिन् मन्त्रे पूर्णमासदेवताम्नानं कस्मिंश्चिद्भागे दृश्यते 'अग्नीषोमाविदꣳ हविरजुषेतां, अवीवृधेतां महो ज्यायोऽक्रातां' इति। भागान्तरे तु दर्शदेवताम्नानं 'इन्द्राग्नी इदꣳ हविरजुषेतां' इति, 'इन्द्र इदं हविरजुषत' इति, 'महेन्द्र इदꣳ हविरजुषत' इति च इन्द्राग्नीन्द्रमहेन्द्राः पुरुषभेदेन दर्शे व्यवस्थिताः। तथा सति मन्त्रलिङ्गेन तत्तद्भागवान् तत्तत्काले व्यवतिष्ठते। सूक्तवाकशब्दस्य भागे यौगिकः, सूक्तं वक्तीति तद्व्युत्पत्तेः, यागकाले प्रत्तमन्त्रेण सम्यगुक्तं देवं वक्तीत्यर्थः। अत एव ब्राह्मणेन

व्याख्यातं 'अग्निरिदं हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह' इति। अरीरधाम आराधितांस्तुष्टान् कुर्मेत्यर्थः। तस्मादयं विभज्य विनियुज्यते।

नवमाध्यायस्य प्रथमपादे चिन्तितं।

यजमानो नोहितव्य ऊह्यो वा न हि पूर्ववत्।
मन्त्रः फलप्रधानोऽत ऊह्यः सर्वफलित्वतः॥

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रहरणकरणत्वेन विनियुक्ते सूक्तवाकमन्त्रे वाक्यमेतदाम्नायते 'अयं यजमानः आयुराशास्ते' इति। तत्र पूर्वोक्तयज्ञपतिशब्दवत् सत्रेषु यजमानशब्दो नोहितव्य इति चेत्। न, वैषम्यात्। तथा हि सर्वत्र प्रकरणे मन्त्रो द्विविधः क्रियाप्रकाशकः फलप्रकाशकश्चेति, पूर्वोदाहृतो मन्त्रः इडोपाह्वानक्रियाप्रकाशकः, 'उपहूतꣳ रथन्तरꣳ सह पृथिव्या' इत्यनुवाके तदुपाह्वानमन्त्ररूपे सर्वस्मिन्नपि तदवभासात्। 'इडोपहूता उपहूतेडा उपो अस्माꣳ इडाह्वयतां इडोपहूता उपहूतेडा दैव्या अध्वर्यव उपहूताः' इत्यादिभिरवान्तरवाक्यैरुपाह्वानक्रियाया एव प्राधान्यावभासात्, तन्मध्ये पतितं लोकमेव यज्ञपतिवाक्यं वृद्धिफलं गमयतीति न तस्य स्वार्थो विवक्षितः। सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति न तु प्रहरणक्रियां, 'इदं द्यावापृथिवी भद्रमभूत्' इत्येतस्मिन्ननुवाके सूक्तवाकमन्त्रे सर्वस्मिन्नपि फलावभासात्, 'अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते सजातवनस्यामाशास्त उत्तरां देव-

यच्चामाशास्त इत्यादिभिः सर्वैरप्यवान्तरवाक्यैः फलस्यैवाव-भासनात्। तस्माद्विवक्षितं फलं फलिनश्च सर्वे यजमानाः। ततः सर्वेषां फलसिद्धये यजमानशब्दो बहुवचनान्तत्वेन सर्वेषु सत्रेषूहनीयः।

दशमाध्यायस्य द्वितीयपादे चिन्तितं।

सूक्तवाकाशासनं स्यान्न वा नित्यप्रवृत्तितः।
स्यान्नैवं फलनिर्देशात् फलेच्छाशास्त्र्यां न युज्यते॥

इदं द्यावापृथिवी भद्रमभूदित्यादिसूक्तवाको होत्रा पठ्यते। तत्रैवं श्रूयते 'आशास्तेऽयं यजमानोऽसौ आयुराशास्ते सुप्रजा-स्त्वमाशास्ते' इत्यादिस्तत्र सूक्तवाकगतो योऽयं यजमानाशासन-प्रतिपादको मन्त्रभागस्तमस्थियज्ञे होता पठेन्न वेति संशयः। अस्थियज्ञगतायाः प्रायणीयादेरिष्टेः प्रस्तरप्रहरणमङ्गं, तस्य नित्यत्वात् तस्मिन् विनियुक्तस्य सूक्तवाकमन्त्रस्य नित्यप्रयुक्ततया तद्भागपाठोऽपि स्यादिति पूर्वः पक्षः। यथा 'स्वर्गकाम इत्यत्र कर्मियोगेन स्वर्गस्य साध्यताप्रतीतेः स्वर्गशब्देन फलनिर्देशः, एवमाशासनयोगादायुरादिशब्दैः फलं निर्दिश्यते। फलेच्छा चास्थ्नां न युक्ता। तस्मात्तद्भागपाठो बाध्यते।

तत्रैवान्यच्चिन्तितं।

मृतेः प्रागायुराशीर्नो स्याद्वा नो मृतिकामनात्।
प्रागाभवाज्जीविनार्थमायुराशासनं भवेत्॥

होत्रा पठितव्ये सूक्तवाके योऽयमायुराशास्त इति भागो यजमानविषयः, स किं सर्वस्मारे यजमानमरणात् पूर्वं वर्ज-

नीयः, पठितव्यो वेति संशयः। मुमूर्षोर्यजमानस्यायुर्निरपेक्षत्वे-नार्थलोपादवर्जनीय इति पूर्वः पक्षः। आर्भवाख्यस्य पवमानस्य स्तूयमानत्वं यजमानस्य मरणकालः, ततः पूर्वं जिजीविषुत्वात् पठनीयः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ ९॥

---

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याशीर्गच्छत्येतन्ममेत्यब्रवीत् किं मे प्रजायाः॥ १॥

इति योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानादिति तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छंयोरावृणीमह इत्याह यज्ञमेव तत् स्वगा करोति तत्॥ २॥

शंयोरावृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति गातुं यज्ञाय गातुं यज्ञपतय इत्याहाशिषमेवैतामाशास्ते सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि विकरोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते ॥ ३ ॥

यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति ॥ ४ ॥

प्रयाजाः करोति तत् क्रियते चयस्त्रिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ * ॥

अनूयाजाः सूक्तवाकव्याख्या नवम ईरिताः।

अथ दशमे शंयुवाकमन्त्रव्याख्या पत्नीसंयाजाश्च वक्ष्यन्ते। तत्र शंयुवाकमन्त्रान् व्याख्यातुं प्रस्तौति "देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा

कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजा-
तै सा मे यज्ञस्याशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो
यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याशीर्गच्छत्येतन्ममेत्यब्रवीत्
किं मे प्रजाया इति योऽपगुराते शतेन यातयाद्यो निह-
नत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पांसू-
न्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानादिति
तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यादे-
तावता हैनसा भवति" इति। यस्मै देवाय यद्धविर्विहितं तस्य
हविषः साङ्कर्यमन्तरेण तस्य तस्य देवस्य स्वगतं कुर्विति
बृहस्पतिपुत्रं शंयुनामानं प्रति देवा अब्रुवन्। तदानीं शंयुर-
प्येवं चिन्तितवान्। एतत्काम एतेन यज्ञेन यजेतेत्येतादृशेन
विधायकेन ब्राह्मणेनानुक्तो यः कश्चित् स्वेच्छयैव यजते
यश्चान्यः श्रद्धारहितो यजते तयोरुभयोर्यज्ञफलं ममास्त्विति
वरस्तत आरभ्य तत् फलद्वयं शंयुमेव प्राप्नोति। पुन-
रपि शंयुरेवमुवाच, तदेतदुभयं मम सम्मतं मदीयायाः
पुत्रपौत्रादिरूपायाः प्रजायाः किं दास्यतेति। ततो देवा
अपगोरणादिकर्तृयातना त्वत्पुत्राद्यधीना भवतु इति वरं द-
त्तवन्तः। अपगोरणं ताडनोद्योगः, तमुद्योगं ब्राह्मणविषये यः
करोति तं पुरुषं शतनिष्कदण्डेन यातयात् क्लेशयेत्। यो
निहनत् ताडयेत् तं सहस्रनिष्कदण्डेन क्लेशयेत्। यस्तु ब्रा-
ह्मणशरीरे लोहितं ताडनेन ग्राहयति, लोहितं भूमौ पति-
त्वा यावतः परमाणून् व्याप्नोति तावतः संवत्सरानयं पितृ-

लोकं न प्राप्नोति किन्तु यमयातनामनुभवति तत् सर्वं त्वत्प्रजाधीनमिति वरः। यस्मादुक्तरीत्या ब्राह्मणाधिक्षेपादौ प्रत्यवायोऽस्ति तस्मात् तन्न कुर्यात्। करणे चैतावता पूर्वोक्तपापेन युक्तो भवति। यस्य शंयुवाकस्य व्याख्यानायायं प्रस्तावः कृतः तस्य शंयुवाकमन्त्रस्य विनियोगं बोधायन आह 'यदानुजानाति शंयोऽनुब्रूहीति तच्छंयुवाकमन्वाह तच्छंयोरावृणीमह इत्येतदनुवाकस्य' इति। स चानुवाको मन्त्रकाण्डे समाम्नातः "तच्छंयोरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्द्ध्वं जिगातु भेषजं। शं नो अस्तु द्विपदे। शं चतुष्पदे" (ब्रा०३का०।५प्र०।११अ०) इति। तत् तादृशं प्रशस्तं फलं शंयोर्बार्हस्पत्यादावृणीमहे प्रार्थयामहे। किं तत् फलमिति क्रमेणोच्यते। यज्ञाय गातुं यज्ञस्य देवान् प्रति गमनमावृणीमहे। यज्ञपतये यजमानस्य गातुं देवान् प्रति गमनमावृणीमहे। नोऽस्माकं दैवी स्वस्तिः देवनिमित्तं विघ्नोपशमनं मानुषेभ्यः स्वस्तिः विघ्नोपशमनमस्तु। भेषजं सर्वपापानामौषधमिदं कर्म ऊर्द्ध्वं जिगातु अविघ्नेन समाप्तिं प्राप्नोतु। अस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे च शं सुखमस्तु। तस्यैतस्य मन्त्रस्य पाठं प्रशंसति "तच्छंयोरावृणीमह इत्याह यज्ञमेव तत् स्वगा करोति" इति। तत्रानेन मन्त्रपाठेन इमं यज्ञं तत्तद्देवानामसाङ्कर्येण स्वगतं करोति। प्रकारान्तरेण पुनः प्रशंसति "तच्छंयोरावृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन

समर्धयति" इति। मन्त्रपाठ एवास्य दातव्यो भागः त-त्तुष्टिहेतुत्वात्। आशीःपरत्वं मन्त्रभागस्य प्रशंसति "गातुं यज्ञाय गातुं यज्ञपतय इत्याहाशिषमेवैतामाशास्ते" इति। अथ चतुरः पत्नीसंयाजान् विधत्ते "सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि-करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै" इति। एतेषां चतुर्णां पत्नीसंयाजानां प्रत्येकं याज्यानुवाक्ये विधत्ते "जामि वा एतद्यज्ञस्य क्रियते यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजा-नामृचा यजत्यजामित्वायाथो मिथुनत्वाय" इति। प्रयाजानां पत्नीसंयाजानाञ्च तावद्द्रव्यकृतं वैषम्यं नास्ति, मन्त्रकृतमपि यदि न स्यात् तदानीमालस्यं भवति, तत्परिहाराय प्रयाजेषु यजुर्भिरिष्टेषु पत्नीसंयाजा ऋग्भ्यां याज्यानुवाक्याभ्यां यष्टव्याः। ते च याज्यानुवाक्ये क्रमेण मन्त्रकाण्डे समाम्नाते। तद्विनियोगं बौधायनो दर्शयति। 'अथ पत्नीसंयाजानामाप्यायस्व सम्ते इति सौम्यस्येह त्वष्टारमग्रियं तन्नस्तुरीयमीति त्वष्टुर्देवानां पत्नीरुत ग्ना व्यन्तु देवपत्नीरिति देवपत्नीनामग्निर्होता गृह-पतिः स राजा वयमु त्वा गृहपते जनानामिति गृहपतेः' इति। तत्र सोमस्य त्वष्टुश्चान्यत्राम्नातानां मन्त्राणां प्रतीकान्या-म्नायन्ते "आप्यायस्व सन्ते। इह त्वष्टारमग्रियं तन्नस्तुरीयं" (आ०१का०।५प्र०।१९अ०) इति। 'आप्यायस्व समेतु ते' इत्येषा सोमस्य पुरोऽनुवाक्या। 'सन्ते पयांसि' इति सोमस्य

याज्या। एतदुभयं चतुर्थकाण्डस्य द्वितीयप्रपाठके व्याख्या-
स्यते। 'इह त्वष्टारं' इति त्वष्टुः पुरोऽनुवाक्या। 'तन्नस्तुरीयं'
इति याज्या। एतच्चोभयं तृतीयकाण्डस्य प्रथमप्रपाठके व्या-
ख्यास्यते। देवपत्नीनां पुरोऽनुवाक्यां दर्शयति "देवानां पत्नी-
रुशतीरवन्तु नः। प्रावन्तु नस्तुजये वाजसातये। याः पा-
र्थिवासो या अपामपि व्रते। ता नो देवीः सुहवाः शर्म
यच्छत" (शा०) इति। इन्द्राण्यादयो देवपत्न्यो याः सन्ति
ता उशतीरस्मद्धितं कामयमाना अस्मानवन्तु रक्षन्तु परै-
रापादितमरिष्टं वारयन्त्वित्यर्थः। किञ्च तुजये अपत्याय
वाजसातये द्रव्यलाभाय नोऽस्मान् प्रकर्षेण रक्षन्तु। न केवलं
दिविस्थिता इन्द्राण्याद्याः किन्तु याः पार्थिवासः पृथिव्यां
स्थिता देवपत्न्यः, या अप्यन्या अपां व्रते वृष्ट्युदकस्थानत्वेनोप-
लक्षितेऽन्तरिक्षे वर्तन्ते ता देव्यः सर्वाः सुहवाः सुखेनाह्वातुं
शक्याः, यूयं नोऽस्माकं शर्म सुखं प्रयच्छत। तत्रैव याज्या-
माह "उत ग्ना वियन्तु देवपत्नीः। इन्द्राण्यग्नाय्यश्विनी राट्।
आरोदसी वरुणानी शृणोतु। वियन्तु देवीर्य ऋतुर्जनीनां"
(शा०) इति। अपि च ग्नाः छन्दोदेवता गायत्र्यादयो देव-
पत्न्यो वियन्तु इदं हविरश्नन्तु। ग्नाशब्दस्य छन्दोवाचित्वं
पञ्चमकाण्डे समाम्नातं 'ग्नास्त्वेत्याह छन्दांसि वै ग्नाः' इति।
इन्द्रस्य पत्नी इन्द्राणी, अग्नेः पत्नी अग्नायी, अश्विनोः पत्नी
अश्विनी, राज्ञः सोमस्य पत्नी राट्, रुद्रस्य पत्नी रोदसी, वरु-
णस्य पत्नी वरुणानी, एतासामेकैका विज्ञापनामस्मदीयामा-

शृणोतु, जनीनामिन्द्राण्यादीनां च ऋतुः कालविशेषो भोजनायोचितस्तस्मिन् काले वियन्तु अश्नन्तु। सोमत्वष्टाः पुरुषयोर्भुक्तवतोः सतोः पश्चाद्भुञ्जन्तामित्यर्थः। अग्नेर्गृहपतेः पुरोऽनुवाक्यामाह "अग्निर्होता गृहपतिः स राजा। विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानां। यजिष्ठः स प्रयजतामृतावा" (ब्रा०) इति। अयमग्निर्देवानामाह्वाता गृहाणां पालकः स च राजा दीप्यमानस्तादृशो जातवेदा देवानां विश्व जनिमा सर्वाणि जन्मानि वेद, अपि च यो जातवेदा मर्त्यानां जन्मानि वेद स जातवेदाः, प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये यजिष्ठोऽतिशयेन यष्टृतमः। ऋतावा सत्यवान्। तत्रैव याज्यामाह "वयमु त्वा गृहपते जनानां। अग्ने अकर्म समिधा बृहन्तं। अस्थूरि णो गार्हपत्यानि सन्तु। तिग्मेन नस्तेजसा सꣳशिशाधि" (ब्रा०) इति। हे गृहपते अग्ने जनानां मध्ये वयमेव त्वां समिधा समिन्धनेन बृहन्तमकर्म प्रौढं कृतवन्तः, तस्माद्गार्हपत्यानि गृहपतिना संयुक्तानि कर्माणि नोऽस्माकमस्थूरि सन्तु अक्षीणानि भवन्तु। तिग्मेन तीक्ष्णेन वैरिभिरप्रधृष्येण तेजसा त्वमस्मान् संशिशाधि तीक्ष्णीकुरु निर्भयान् कुर्वित्यर्थः। मन्त्रकाण्डे पत्नीसंयाजयाज्यापुरोऽनुवाक्यानामुपरिष्टादिडोपाह्वानमाज्यप्राशनायाम्नातं। तस्य विनियोगं बोधायनो दर्शयति 'अथोत्तरामिडामुपह्वयते यथा समाम्नातं' इति। पाठस्तु " उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उप मा रथन्तरꣳ सह पृथिव्या ह्वयतां। उपहूतं वाम-

देव्यं महान्तरिक्षेण। उप मा वामदेव्यं महान्तरिक्षेण ह्व-
यतां। उपहूतं बृहत् सह दिवा। उप मा बृहत् सह दिवा
ह्वयतां। उपहूताः सप्तहोत्राः। उप मा सप्तहोत्रा ह्वयन्तां।
उपहूता धेनुः सहर्षभा। उप मा धेनुः सहर्षभा ह्वयतां। उप-
हूतो भक्षः सखा। उप मा भक्षः सखा ह्वयतां। उपहूताꣳ-
३ हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयतां।
इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी। ब्रह्म
देवकृतमुपहूतं। दैव्या अध्वर्यव उपहूताः। उपहूता मनुष्याः।
य इमं यज्ञमवान्। ये यज्ञपतिं वर्द्धान्। उपहूते द्यावा-
पृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतेयं यज-
माना। इन्द्राणी वा विधवा। अदितिरिव सुपुत्रा। उत्त-
रस्यां देवयज्यायामुपहूता। भूयसि हविष्करण उपहूता।
दिव्ये धामन्नुपहूता। इदं मे देवा हविर्जुषन्तामिति तस्मि-
न्नुपहूता। विश्वमस्याः प्रियमुपहूतं। विश्वस्य प्रियस्योपहू-
तस्योपहूता" (ब्रा०३का०५प्र०१३अ०) इति। पूर्वोक्तमि-
डोपाह्वानं यजमानार्थं, इदन्तु पत्न्यर्थं, अत एव तत्र तत्र
स्त्रीलिङ्गप्रयोगः। ब्राह्मणे पत्नीसंयाजा आनुवाक्ये विधास्ये-
ोपाह्वानमन्त्रस्य पूर्ववद्व्याख्येयत्वात् अनावत्रोपेक्षितः। अथ
ामिष्टयजुर्विधिमर्थवादेनोन्नयति "पङ्क्तिप्रायणो वै यज्ञः
ाङ्क्तोदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्ट-
ाजुः पञ्चमं पङ्क्तिमेवानुप्रयन्ति पङ्क्तिमनूद्यन्ति" इति।
ाञ्चाक्षरा पङ्क्तिरित्यन्यत्र श्रुतत्वाद्च पङ्क्तिशब्देन पञ्चसङ्ख्या

सम्पद्यते। सेयं पङ्क्तिः प्रायणे प्रारम्भो यस्य सोऽयं पङ्क्तिप्रायणो यागः। पङ्क्तिरुदयने समाप्तौ यस्य सोऽयं पङ्क्त्युदयनः। अत्र दर्शपूर्णमासेष्टौ प्रारम्भे पञ्च प्रयाजा इज्यन्ते समाप्तौ पत्नीसंयाजास्त्वारः समिष्टयजुः पञ्चमं। तथा सति पङ्क्तिमेव प्रारभन्ते पङ्क्तिमेव सम्पादयन्ति। तस्मात् समिष्टयजुर्जुहुयादिति तात्पर्यार्थः। 'देवा गातुविदः' (वाज०सं०८।२१) इत्ययं मन्त्र इष्टिसम्पूर्तिकारित्वात् समिष्टयजुरित्युच्यते। स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च॥

अथ मीमांसा। तृतीयाध्यायस्य चतुर्थपादे चिन्तितं। अधि०१०।

विप्रायावगुरेत्नेति क्रत्वर्थो वा पुमर्थता।
फलवत्क्रतुसान्निध्यात् क्रत्वर्थः पूर्वमन्त्रवत्॥
यातनापरिहारस्य निषेधफलतोचिता।
निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यतां॥

दर्शपूर्णमासप्रकरणे श्रूयते। 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्तस्माद्ब्राह्मणाय नावगुरेत्' इति। तत्र यथा पूर्वाधिकरणे मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते एवमत्रापि ब्राह्मणावगुरणनिषेधस्य क्रतावङ्गत्वादिति चेत्। नैवं, वैषम्यात्। पूर्वत्र आत्मप्राणापानधारणं मन्त्रोच्चारणफलं न सम्भवति। इह त्ववगोरणे शतसंवत्सरयातनामुपन्यस्यावगोरणनिषेधाद्यातनापरिहारस्य निषेधफलत्वमुचितं। तस्मान्निषेधस्य केवलपुरुषार्थतया *प्रकरणादपकर्षो युक्तः॥

---

* प्रकरणादुत्कर्षो युक्त इति न्या० मा० वि०।

तत्रैव तृतीयपादे चिन्तितं॥ अधि०१५ ॥

संयाजयन्ति आघन्या पत्नीरेतत् पशावुत ।
दर्शादौ तत् पशौ युक्तं आघन्यासमवायतः ॥
आघनी नाम भागोऽसौ दर्शादौ समवैति हि ।
नोत्कृष्यं न संस्कार्यसाधनत्वात्तृतीयया ॥

दर्शपूर्णमासप्रकरणे श्रूयते । 'आघन्या पत्नीः संयाजयन्ति' इति । आघनी पशोः पुच्छं । पत्नीशब्दोऽत्राकृतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः । अत एव श्रूयते । 'पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजा देवपत्नीनां' इति । तत्र तृतीयाकृतौ देवतात्वात् तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः। तत्र आघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते, आघनी च पशौ समवेता न तु दर्शपूर्णमासयोः, अतः प्रकरणादुत्कृष्य पशौ निवेशनमिति प्राप्ते ब्रूमः । आघनीशब्देन पशोर्भागो विधीयते । स च दर्शपूर्णमासयोः पशुयागत्वाभावेऽपि *क्रयादिना सम्पादयितुं शक्यते । न चात्र पशौ विद्यमानाया आघन्याः पत्नीसंयाजैः संस्कार्यत्वं, तृतीयया साधनत्वावगमात्, तस्मान्न प्रकरणादुत्कर्षः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ ० ॥

---

* क्रमादिनेति व्या० मा० वि० ।

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव। नि होता पूर्व्यः सदः। उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः। श्रद्विश्वा वार्या कृधि। त्वꣳ ह यद्यविष्ठ सहसः सूनवाहुत। ऋतावा यज्ञियो भुवः। अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणां। तं नेमिमृभवो यथाऽऽनमस्व सहूतिभिर्नेदीयो यज्ञं॥ ॥ १ ॥

अङ्गिरः। तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिं। कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः। पणिङ्गोषु स्तरामहे। मा नो देवानां विशः प्रस्नातीरिवोस्राः। कृशन्न हासुरघ्नियाः। मा नः समस्य दूढ्यः। परिद्वेषसो अꣳहतिः। ऊर्मिर्न नावमावधीत्। नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैः॥ २ ॥

अमित्रमर्दय। कुवित् सु नो गविष्टयेऽग्ने संवेषिषो रयिं। उरुकृदुरु णस्कृधि। मा नो अस्मिन्महाधने परावर्ग्भारभृद्यथा। संवर्गꣳ सꣳ रयिं जय। अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः। यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा। तं घेदग्निर्वृधावति। परस्या अधि॥ ३॥

संवतोऽवराꣳ अभ्यातर। यत्राहमस्मिताꣳ अव। विद्माहि ते पुरा वयमग्ने पितुर्यथावसः। अधा ते सुम्नमीमहे। य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः। अग्ने पुरो रुरोजिथ। सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये। वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते। सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिध्यसे स नो वसून्याभर। प्रजापते स वेद सोमापूषणेमौ देवौ॥ ४॥

यन्नममैरधिवृषन्नेकान्नविꣳशतिश्च॥ ११॥

इति तैत्तिरीयसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः॥ ०॥

दशमे शंयुवाकस्य पत्नीसंयाजकाः स्थिताः।
या दर्शपूर्णमासाख्या सेष्टिरत्र समापिता॥

अथैकादशे संवर्गेष्टिहौत्रमन्त्रा अभिधीयन्ते। ननु सत्यं प्रपद्ये इत्यादिक एको हौत्रकाण्डः। उभा वामिन्द्राग्नीत्यादिरन्यानुवाकात्मकोऽपरः। तयोर्मध्ये युक्ष्वा हीत्यनुवाको न समाम्नातः। तत् कथमस्य हौत्रत्वं समाख्ययेति, वदामः। यथा तयोः काण्डयोर्याज्ञिकानां समाख्यया हौत्रत्वं तथाऽस्याप्यनुवाकस्येति द्रष्टव्यं। अत एवापस्तम्ब आह। 'अग्नये संवर्गाय पुरोडाशमष्टाकपालमित्युक्त्वा युक्ष्वा हि देवहूतमान्

इति पञ्चदश सामिधेनीरन्वाह त्रिष्टुभा परिदधाति क्षुवि-न्नु नो गविष्टय इति याज्यानुवाक्ये, यद्याजुषविद्या हि त इति संयाज्ये' इति। त्रिष्टुभा आजुह्वोत्तदुवस्यतेत्यनयेत्यर्थः। तत्र प्रथमायाः सामिधेन्याः पाठस्तु "युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव। नि होता पूर्व्यः सदः" इति। हे अग्ने त्वं देव-हूतमान् देवानामाह्वातृतमान् देवान् योजय। हिशब्दः प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः। योजने दृष्टान्तः रथीरश्वानिवेति। रथस्वामी यथाश्वान् योजयति तद्वत्। किञ्च त्वं पूर्व्यः पुरा-तनः। होता होमोत्पादको भूत्वा निषदः अस्मिन् यागस्थाने निषीद। अथ द्वितीया, "उत नो देव देवाꣳ अच्छावोचो विदुष्टरः। अद्विश्वा वार्या कृधि" इति। अपि च हे देवाग्ने त्वं विदुष्टरोऽतिशयेनास्मदभिप्रायं विद्वान् देवान् प्रत्यच्छा आ-भिमुख्येन गत्वा यजमानो हविर्दास्यतीति वोचो ब्रूहि। विश्वा वार्या सर्वाणि वरणीयानि अस्मदभिप्रेतानि अत्कृधि अद्धे-यानि विश्वसनीयानि यथा भवन्ति तथा कुरु। अथ तृतीया, "त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत। ऋतावा यज्ञियो भुवः" इति। हे यविष्ठ्य युवतम हे सहसः सूनो बलस्य पुत्र, मथनशक्त्योत्पन्नत्वाद्बलपुत्रत्वं। हे आहुत देवानामाह्वातः त्वं ह त्वमेव, यत् यस्मात् ऋतावा सत्यवान् तस्माद्यज्ञियो भुवः यज्ञसाधनो भव। अथ चतुर्थी, "अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणां" इति। अयमिध्यमानो-ऽग्निः सहस्रसङ्ख्याकस्य शतसङ्ख्याकस्य च वाजस्यान्नस्य पतिः, अत

एव मूर्द्धा शिरोवदुन्नतः कविर्विद्वान् रयीणां धनानां दाता भवतु। अथ पञ्चमी "तं नेमिमृभवो यथा नमस्व सह्रूतिभिः। नेदीयो यज्ञं अङ्गिरः" इति। हे अङ्गिरः अङ्गसोष्ठवयुक्ताग्ने समाना ह्रूतिर्देवानामाह्वानं *येषामृत्विजां ते सह्रूतयस्तैः सह्रूतिभिर्युक्तः तादृश त्वं तं यज्ञमस्माकं नेदीयः समीपं प्रति आनमस्व आनीय वशं कुरु। तत्र दृष्टान्तः ऋभवो यथा इति। यथा देवतक्षाणो रथचक्रस्य नेमिमानीय स्ववशत्वेन परिभ्राम्यमाणां कुर्वन्ति तद्वत्। अथ षष्ठी "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिं" इति। हे विरूप विविधरूपयुक्ताग्ने अभिद्यवे सर्वतो द्योतमानाय वृष्णे काम्यानां वर्षयित्रे तस्मै यष्टव्याय देवाय नित्यया वैदिकमन्त्ररूपया वाचा अस्माभिः क्रियमाणां सुष्टुतिं शोभनां स्तुतिं नूनं चोदयस्व सर्वथा प्रेरय, तदग्रे कथयेत्यर्थः। अथ सप्तमी, "कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः पणिं गोषु स्तरामहे" इति। पाकोऽल्पः चक्षो ज्ञानं, अपाकं चक्षो यस्यासावपाकचक्षाः सर्वज्ञ इत्यर्थः। सर्वं जानतोऽस्याग्नेः सेनया परिचारकजनेन सह गोषु गवादिद्रव्यविषये कमु पणिं स्तरामहे स्वित् कं नाम व्यवहारमाच्छादयामः, एतदीयं परिचारकजनं वञ्चयित्वा न कोऽपि व्यहारोऽस्माभिः कर्त्तुं शक्यते, तस्मात् सर्वमपि व्यवहारमस्यानुग्रहेणैव कुर्म इत्यर्थः।

---

* येषामृत्विजां तादृशोऽग्ने सह्रूतयस्तैः सह्रूतिभिर्युक्तस्त्वं इति पाठः का० पु०द्वये प्रामादिकः प्रतिभाति।

अथाष्टमी "मा नो देवानां विशः प्रस्नातीरिवोस्राः। कृशन्न हासुरघ्नियाः" इति। देवानां सम्बन्धिनो विशः वाणिज्यकारिण्यः प्रजा नोऽस्मान् *माहासुः नैव परित्यक्तवत्यः। का इव प्रस्नातीः प्रस्नुता उस्राः चीरादिप्रदानेन वासहेतवः अघ्निया इव। किमिव, कृशं न अल्पवयस्कं वत्समिव। यथा चीरपूर्णस्तनयुक्ता गावः शिशुं वत्सं न त्यजन्ति तद्वदित्यर्थः। अथ नवमी "मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः। ऊर्मिर्न नावमावधीत्" इति। समस्य समानस्य दूढ्यो दुर्धियः परिद्वेषसः सर्वतो द्वेषं कुर्वतः शत्रोरंहतिरस्मासु कृतो द्रोहः नोऽस्मान् आसमन्तान्मावधीत्। कां केव, नावमूर्मिर्न। यथा नद्याङ्गच्छन्तीं नावमूर्मिर्न नाशयति तद्वद्वैरिकृतो द्रोहोऽस्मान्मा विनाशयतु। सर्वशब्दपर्यायो वाऽयं समशब्दः। सर्वस्य वैरिणो द्रोहो मा विनाशयतु। अथ दशमी "नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैरमित्रं मर्दय" इति। हे देवाग्ने कृष्टयो मनुष्यास्ते तवौजसे बलाय नमो गृणन्ति नमस्कारवाचिनं शब्दं प्रयुञ्जते, यजमानादयस्त्वदीयं बलं नमस्कुर्वन्तीत्यर्थः। अतस्त्वममित्रमस्माकमपकारिणं मर्दय मारय अमैः रोगादिभिः। एवं दश सामिधनीरुक्त्वा पुरोऽनुवाक्यामाह "कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिं। उरुकृदुरु णस्कृधि" इति। हे अग्ने त्वं नोऽस्माकं रयिं धनं कुवित् बाहुल्यं यथा भवति तथा सुष्ठु संवेषिषः सम्यग्व्याप्तिमकरोः। किमर्थं गविष्टये, गोभिः सहितेष्टिर्गविष्टिस्तदर्थं। उरुकृत्

* अहासुरिति का॰ पु॰ द्वये।

प्रभूतकारी त्वं नोऽस्माकं कर्मफलं उरु अधि प्रभूतं कुरु। अथ याज्या "मा नो अस्मिन् महाधने परावर्ग्भारभृद्यथा। संवर्गꣳ सꣳ रयिं जय" इति। नोऽस्मभ्यं त्वया हेऽग्नेऽस्मिन् महाधने मा परावर्क् पराभवकारणं वर्जनं विनाशनं मा कुरु। तत्र दृष्टान्तः। भारभृद्यथेति, लोके यथा भारवाही बलीवर्दादिः द्रव्यादिकं न नाशयति तद्वत्। किञ्च संवर्गं संहृत्य *संहृत्य देये धनराशौ पुनः पुनः समानीय रयिं जय प्रभूतं धनं सम्यक् प्रापय। तत्रैव विकल्पितां याज्यामाह "अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः" इति। हे अग्ने इयं दुच्छुना रोगरूपा दारिद्र्यरूपाऽनेकरूपा वा पीडा अस्मदन्यमस्मत्तो व्यतिरिक्तं वैरिणं संबध्नातु। किमर्थं, भियै भीत्यर्थं। यथा पीडया वैरी भीतः पलायते तथा पीडां प्राप्नोतु। नोऽस्माकं शवो वर्धा बलं वर्धय। किं तत्, अमवत्। यथा वैरिणाममो रोगो वर्धितः तद्वत्। अथ स्विष्टकृतपुरोऽनुवाक्या। "यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा। तं घेदग्निर्वृधाऽवति" इति। दुष्टोऽङ्गविकलो मखो यज्ञो दुर्मखः न विद्यते दुर्मखो यस्य यजमानस्य सोऽयमदुर्मखः, सम्यगनुष्ठितयज्ञ इत्यर्थः, तस्य। नमस्विनो भक्त्या नमस्कुर्वतो यस्य यजमानस्य शमीं सुखकरीमाहुतिमजुषन्नग्निरसेवत। अदुर्मखस्य सम्यगनुष्ठायिनो वा यस्य यजमानस्य शमीमजुषत तं घेत् तमेवोभयं नमस्कुर्वन्तं सम्यगनुतिष्ठन्तं

---

* संहृत्येत्यत्र संबध्येति एकस्मिन् पु० पाठः।

वाऽयमग्निर्वृधा धनादिवर्धनेनावति रक्षति। तत्रैव विकल्पितां पुरोऽनुवाक्यामाह "परस्या अधि संवतोऽवराꣳ अभ्यातर। यत्राहमस्मि ताꣳ अव" इति। सम्यक् वनुते भजते यस्यां सा क्रिया संवत्, परस्याः संवतोऽधि उत्कृष्टाया अर्था इष्टेरधिष्ठानं अवरान् निकृष्टानपस्मान् अभ्यातर आभिमुख्येनागत्य दुःखानि नाशय, येषु बन्धुष्वहमस्मि तान् बंधूनप्यारक्ष। अथ स्विष्टकृतो याज्यामाह "विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः। अधा ते सुम्नमीमहे" इति। हे अग्ने यस्मात् पुरा वयन्ते तवावसो रक्षणं विद्म ज्ञातवन्तः। कस्येव, पितुर्यथा। लोके पुरा यथा पितुः पालनं जानन्ति तद्वत्। अधा तस्मात् कारणात् ते सुम्नं ईमहे त्वया सम्पादितं सुखं प्राप्नुमः। अथात्र तिस्र ऋच उपहोमार्थाः। तत्रेयं प्रथमा "य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः। अग्ने पुरो रुरोजिथ" इति। हे अग्ने, यस्त्वमुग्र इव क्रूरो राजेव, शर्यहा शर्याणां हिंसकानां हन्ता, तिग्मशृङ्गो न तीक्ष्णशृङ्गमृग इव, वंसगो वंसानि गच्छतीति वंसगः, दावाग्निरूपो भूत्वा वनेषु तिष्ठतीत्यर्थः। तादृशस्त्वं पुरो रुरोजिथ असुराणां पुराणि भञ्जितवानसि। अथ द्वितीया "सखायः सं वः सम्यञ्चमिषꣳ स्तोमञ्चाग्नये। वर्षिष्ठाय क्षितीनामूर्जोनप्त्रे सहस्वते" इति। हे सखायः परस्परसख्ययुक्ता ऋत्विग्यजमाना वो युष्माकं सम्यञ्चमीषं समीचीनमन्नमभीष्टार्थं सम्पादयन्तु। समित्युपसर्गस्यापेक्षितः शेषोऽध्याहृतः। यूयञ्चाग्नये स्तोमं स्तोत्रं सम्पादयन्तु। कीदृशायाग्नये

क्षितीनां निवासहेतूनां मध्ये वर्षिष्ठाय वृद्धतमाय । ऊर्जानमग्ने बलस्य नपात्यिन्ने विनाशनमकुर्वते । सहस्वते स्वयमतिशयेन बलवते । अथ तृतीया "सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्याभर" इति । हे वृषन् कामानां वर्षकाग्ने विश्वानि सर्वाणि फलानि सꣳसमित् सम्यगेव युवसे यजमानेन मिश्रयसि । अर्य आ ईश्वरस्त्वमागत्य इडस्पदे पृथिवीरूपाया वेद्याः स्थाने समिध्यसे सम्यक् ज्वाल्यसे स तादृशो महानुभावो नोऽस्मभ्यं वसूनि धनानि सम्भर सम्यगाहृत्य प्रयच्छ । 'यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् । पशुकामः स्यात् तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत्' इत्यनयोर्याज्यानुवाक्याप्रतीकानि दर्शयति "प्रजापते स वेद सोमापूषणेमौ देवौ" इति । 'प्रजापते न त्वदेतान्यन्यः' इति प्रजार्थस्य हविषः पुरोऽनुवाक्या । सा च 'सोमस्य त्विषिरसि' इत्यनुवाके व्याख्याता । 'स वेद पुत्रः पितरं' इत्येषा याज्या । सा च 'हिरण्यगर्भ आपो ह यत्' इत्यस्मिन्ननुवाके व्याख्याता । 'पश्वर्थस्य हविषः सोमापूषणा जनना' इति पुरोऽनुवाक्या । 'इमौ देवौ जायमानौ' इति याज्या । एतदुभयं 'अग्नाविष्णू महि' इत्यस्मिन्ननुवाके व्याख्यातं ॥

अत्र विनियोगसंग्रहः ।

संवर्गेष्टौ सामिधेन्यो द्व तिस्रस्तु याज्यकाः ।
संयाज्यास्तित्र उदिता उपहोमास्त्वयो मताः ॥

प्रजावते दृयं योज्यं नामुते प्रथमे भवेत्।

सोमेमौ तद्द्वितीये स्तयोर्विंशतिरीरिताः॥ इति।

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितं॥ अधि०६॥

वेदत्रयोक्तधर्माणामृत्विग्भिः सङ्गतिस्त्रिभिः।

अनियत्या नियत्या वा ऽनियतिर्नानिरूपणात्।

होत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः॥

निर्बाधं चान्यवत् तच्च तेनात्र विनियोजकं॥

याज्यापुरोनुवाक्यापाठादयो ये धर्मा ऋग्वेदे प्रोक्ताः, दोह-नानिर्वापादयो यजुर्वेदे,आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे,*एत-स्यैते धर्मा इति नियामकस्य दुर्निरूपत्वात् येन केनापि ऋत्वि-जा यः कोऽपि धर्म इच्छया सङ्गच्छत इति चेन्मैवं। होत्रमा-ध्वर्यवमौद्गात्रमिति समाख्यानेनानियतिर्बाध्यते। न च समा-ख्यानस्य बाधकं किञ्चित् पश्यामः। तस्मादबोधकत्वबाधित-त्वयोरप्रामाण्यकरणयोरभावात् श्रुतिलिङ्गादिपञ्चकवत् प्रमा-णेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्विती-यकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः॥

* तस्यैवैते इति न्या० मा० वि०।

उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे । त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थां । तव प्रणीती पितरो न इन्द्रो देवेषु रत्नमभजन्त धीराः । त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भव ॥ १ ॥

नः । त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणां । अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतयः । अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन । बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वं । त आगतावसा शन्तमेनाथास्मभ्यं ॥ २ ॥

शंयोररपो दधात । आहं पितॄन् सुविदत्राꣳ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्तु पित्वस्त इहागमिष्ठाः । उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तु ते अवन्त्वस्मान् । उदीरता-

मवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं॥
॥ ३ ॥

य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु। इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्यानिषत्ता ये वा नूनꣳ* सुवृजनासु विक्षु। अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः। शुचीदयन्दीधितिमुक्थशासः क्षामाभिन्दन्तो अरुणीरपव्रन्। यदग्ने ॥ ४ ॥

कव्यवाहन पितॄन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ। त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा।†प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि। मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः। याꣳश्च देवा वावृधुर्ये च देवान् स्वाहान्ये स्वधयान्ये मदन्ति॥ ५ ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः। आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्

---

* सुवृजनास्विति पदपाठे भाष्यसंगतः पाठः।

† क्षाम भिन्दन्तः इति पदपाठे भाष्यानुगतः पाठः।

हविषा मादयस्व। अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व। विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्यानिषद्य। अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥

भवास्मभ्यमसु यदग्ने मदन्ति सौमनसे एकञ्च ॥

समिधस्त्वष्टुषी प्रजापतिराज्यं देवस्य स्फ्यं ब्रह्मवादिनोऽङ्गिरग्नेस्त्रयो मनुः पृथिव्या पशवोऽग्नीधे देवा वै युञ्जीशन्तस्त्वा द्वादश ॥ १२ ॥

समिधो याज्या तस्मान्नाभागꣳ हितमन्वित्याह प्रजा वा आहेत्याह युञ्ज सप्ततिः ॥

हरिः ओम् ॥ श्रीरस्तु। श्रीशिवार्पणमस्तु ॥

इति तैत्तिरियसंहितायां द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

। द्वितीयकाण्डः सम्पूर्णः ॥

---

एकादशे तु कथितं संवर्गस्यादि वाचकं। द्वादशे पितृयज्ञस्य हविषां वाचमुच्यते। कल्पः। 'एकां सामिधेनीं त्रिर-

न्वाहोशन्तस्त्वा हवामह इत्येताम्' इति। पाठस्तु। "उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे" इति। हे अग्ने वयमुशन्तः पितॄन् कामयमानाः त्वामाह्वयामः, पुनरपि पितॄन् उशन्तस्त्वां समिधीमहि। त्वमपि काम्यमानः कामयमानस्य यजमानस्य पितॄनावह वह। किमर्थं, हविषे अत्तवे हविर्भोक्तुं। कल्पः। 'हे पुरोऽनुवाक्ये अन्वाहार्यमुक्त्वा प्रणीत्यपरामुक्त्वा प्रणीति त्वꣳ सोम प्रचिकित इत्येता आम्नातात् भवन्त्येका याज्या' इति। तत्र प्रथमां पुरोऽनुवाक्यामाह। "त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थां। तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः' इति। हे सोम त्वं मनीषा मनीषया त्वदीयया बुद्ध्या प्रचिकितः प्रकर्षेण ज्ञातः। किञ्च त्वं रजिष्ठं यमलोकसंपूर्त्या रञ्जकं मार्गमनुनेषि अनुक्रमेव प्रापयसि। हे इन्दो तव प्रणीत्या परिचरणेन नोऽस्माकं पितरो देवेषु मध्ये स्थिता धीराः सन्तो रत्नं रमणीयं हविरभजन्त। द्वितीयां पुरोऽनुवाक्यामाह।"त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः। वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भव नः' इति। हे पवमान शोधक सोम हि यस्मान्नोऽस्माकं पूर्वे पितरस्त्वयाऽनुगृहीताः कर्माणि चक्रुः, परिस्फुरन्तो जन्मानि धीरास्तिष्ठन्ति। त्वमप्यवातो वायुमनपेक्ष्य ज्वलनेनास्मदीयहविर्वन्वन् संभजयन् परिधीन् परिधिवत् सर्वतोऽवस्थितान् प्रतिबन्धकानपोर्णु निराकुरु। कैः साधनैः, वीरेभिर्युद्धकुशलैः

अग्नेः। तथा नोऽस्मदर्थं मघवा धनवान् भव। अथ याज्या-माह। "त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ। तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम्" इति। हे सोम त्वं पितृभिः संविदानः संविदं प्राप्तः अनुक्रमेण द्यावापृथिवी आततन्थ आतते व्याप्ते कृतवानसि। हे इन्दो हे सोम तस्मै ते तादृशाय तुभ्यं हविषा विधेम परिचरेम। त्वत्प्रसादाद्वयं धनानां पतयः स्याम। इत्थं सोमाय पितृमते पुरोडाशꣳ षट्कपालमित्यस्यानुवाक्याद्वयं याज्या चेति मन्त्रत्रयमुक्तं। अथ पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमित्येतस्य प्रथमा पुरोऽनुवाक्योच्यते। यद्यपि पाठक्रमेण तृतीयमिदं हविस्तथापि लिङ्गस्य बलवत्त्वात् तत्र विनियोगो द्रष्टव्यः। पाठस्तु। "अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतयः। अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन" इति। अन्यत्र ये वा अयज्वानो गृहमेधिनः ते पितरोऽग्निष्वात्ता इति श्रुतत्वात् यागमकृत्वैव प्रेत्य पितृलोकं गताः अग्निष्वात्ताः। शोभना प्रणीतिरस्मत्कृता परिचर्या येषान्ते सुप्रणीतयः। तथाविधा हे पितरः इह कर्मण्यागच्छत। सदः सदः तत्तदात्मीयं स्थानं सदत प्राप्नुत। अस्मिन् बर्हिषि यज्ञे प्रयतानि प्रयत्नेन सम्पादितानि हवींषि अत्त भक्षयत। अथानन्तरं रयिं सर्वेषु वैदिककर्मसु वीरः कुशलो यः पुत्रस्तद्युक्तं पुत्रञ्च दधातन सम्पादयत। अथ द्वितीया पुरो-

ऽनुवाक्या याज्या चेत्युभयमाम्नातं, तत्र ये अग्निष्वात्ता इत्या-
दिकं कौकिल्यां सौत्रामण्यामाम्नातं, अतस्तत्रैव व्याख्यास्य-
ते। अथ पितृभ्यो बर्हिषद्भ्यो धाना इत्यस्य प्रथमां पुरोऽनुवाक्या-
माह। "बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वं।
त आगतावसा शंतमेनाथास्मभ्यं शंयोररपो दधात" इति। ब-
र्हिषि यज्ञे सीदन्तीति बर्हिषदः, यद्यपि ये वै यज्वानः ते
पितरो बर्हिषद इत्युक्तत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता
बर्हिषदः। तादृशा हे पितरः अर्वागर्वाचीनानामस्माकमूती
रक्षा भवद्भिः कर्तव्येति शेषः। वो युष्मदर्थमिमा हव्या एतानि
हवींषि चकृम, अतस्तानि जुषध्वमिति। ते हविर्जुषवन्तो यूयमव-
सा रक्षणेन शंतमेन सुखतमेनाधुनागत, तन्निमित्तमागच्छ-
तेत्यर्थः। *अथास्मभ्यमप्रमयमनन्ते च शं सुखं दुःखवियोगञ्च अरपः
पापराहित्यञ्च दधात दत्त। अथ तत्रैव द्वितीया पुरोऽनुवाक्या।
"आहं पितॄन् सुविदत्राँ अवित्सि नपातञ्च विक्रमणञ्च वि-
ष्णोः। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाग-
मिष्ठाः" इति। अहं यजमानः सुविदत्रान् मदीयां भक्तिं
सुष्ठु जानतः पितॄनपि आऽवित्सि आभिमुख्येन लब्धवानस्मि।
विष्णोर्व्यापिनोऽस्य यज्ञस्य नपातं विनाशाभावं विक्रमणं वि-
शेषेण प्रवृत्तिं च लब्धवानस्मि। ये पितरो बर्हिषदस्ते इहा-
च कर्मणि आगमिष्ठा अतिशयेनागताः। आदरपूर्वकमागत्य
पित्वः प्रीतिं भजन्तु प्राप्नुवन्तु। केन साधनेन, सुतस्य स-

* अथास्मत्प्राप्यमनन्ते चेति आदर्श पु० पाठोऽसंगतः।

यथा सोमयागस्य हविषः स्वादुत्वेन। अथ तत्रैव याज्यामाह। “उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान्” इति। सोम्यासः सोम्याः अस्मदनुग्रहपराः पितरः। बर्हिष्येषु या-गार्हेषु हविष्करेषु निधिवद्गुप्तेषु हविःषु निमित्तभूतेषु सत्सु उपहूता अस्माभिराहूतास्ते पितरः आगमन्तु आगच्छन्तु। आ-गत्य च इहास्मिन् कर्मणि अस्माभिः प्रयुक्ताः स्तुतीः शृण्वन्तु, श्रु-त्वा चाधिब्रुवन्तु साधुरयं यजमान इत्यादरेण कथयन्तु। तत ईदृशाः पितरोऽस्मानवन्तु। अत्रैवोपहोमार्थास्वृक्षु षट्सु प्रथमामाह। “उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु” इति। त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति। यथा विविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। तथापि केचित् संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य ये अग्निदग्धा येऽनग्निदग्धा इत्यादि-मन्त्रे आम्नाताः तेऽत्रावरे निकृष्टाः। उदीरतां उत्तमं स्थानं प्राप्नुवन्तु। परासः उत्तमाः पितरः उदीरताम्। मध्यमाः पित-रश्चोदीरताम्। ते सर्वेऽप्यस्मिन् विषये सोम्यासः सोम्या अनुग्रह-पराः सन्तु। ये पितरः अवृकाः वृकवद्दस्युवद्वा हिंसा-मकुर्वन्तः, ऋतज्ञा अस्मदनुष्ठितं यज्ञं जानन्तः, असुं यजमान-प्राणमीयुः रक्षितुं प्राप्ताः, ते पितरो हवेषु अस्मदीयाह्वानेषु नोऽस्मानवन्तु। अथ द्वितीया। “इदं पितृभ्यो नमो अस्त्वद्य ये

पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्यानिषत्ता ये वा नूनꣳ सुवृजनासु विक्षु" इति। पूर्वासो यजमानोत्पत्तेः पूर्वमुत्पन्नाः ज्येष्ठभ्रातृपितृपितामहादयो ये ईयुः पितृलोकं प्राप्ताः। येऽप्यन्ये उपरासः यजमानजननादुपर्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः। येऽप्यन्ये पार्थिवे पृथिवीसम्बन्धिनि रजसि रजोगुणकार्येऽस्मिन् कर्मण्यानीताः हविः स्वीकर्तुमागत्योपविष्टाः, ये वा ये चान्ये बन्धुवर्गरूपाः पितरः बहुबन्धुरूपासु विक्षु प्रजासु आनिषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विक्षु सुवृजनासु, वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं, शोभनं वृजनं यासान्ताः सुवृजनास्तादृशीषु धनसम्पन्नासु श्राद्धादिकर्मपरास्वित्यर्थः। तेभ्यः सर्वेभ्य उक्तेभ्यः पितृभ्यः अस्मिन् कर्मणि इदं नमोऽस्तु। अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु। अथ तृतीया। "अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः। शुचीदयन्दीधितिमुक्थशासः क्षामाभिन्दन्तो अरुणीरपव्रन्" इति। हे अग्ने अध अधस्तादतीते काले नोऽस्माकं पितरः ऋतमाशुषाणाः यज्ञमश्नुवानाः शुचीत् शुद्धमेव स्थानं यथा येन प्रकारेण आयन् प्राप्तवन्तः, दीधितिं दीप्यमानां पितृरूपां देवतां उक्थशासः शस्त्रैः शंसन्तो वयमपि तथैवोत्तममेव स्थानं प्राप्ताः स्म इति। कीदृशाः पितरः, परासः अस्मत्त उत्कृष्टाः पितृपितामहादयः। प्रत्नासः पुरातनाः पित्रादिभ्योऽपि पूर्वभाविनः। किं च क्षाम क्षयहेतुं स्वकीयं क्षुदुपद्रवं भिन्दन्तः अन्नेन हविषा नाशयन्तः

अश्वीसेजोरूपासः प्राप्य अपघ्नन् फलप्रतिबन्धकं पापमपाकुर्वन्। *अस्मिन्निह पितृयज्ञकर्मणि। शाखान्तरेऽन्यदपि हविर्द्वयं विहितं तदग्नये कव्यवाहनायैकं, यमायाङ्गिरस्वते पितृमते द्वितीयमिति। अत एव सूत्रकार आह। 'अथैकेषां सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालं पितृभ्योऽग्निष्वात्तेभ्यो धानाः अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते' इति। तत्र कव्यवाहनस्य प्रथमां पुरोऽनुवाक्यामाह। "यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ" इति। कव्यं वहतीति कव्यवाहनः पितृभ्योऽग्निः। अत एवान्यत्र श्रुतं। 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाꣳ सहरक्षा असुराणाम्' इति। कव्यस्याख्य हविषो वाहक हे अग्ने यत् यस्मात् कारणादृतावृधः यज्ञवर्धकान् पितॄन् यक्षि यजसि तस्मादेव कारणात् त्वं देवेभ्यः पितृभ्यश्च हव्यानि प्रावक्ष्यसि पुनः पुनः प्रकर्षतः परमपि हविर्वहनं करिष्यसि। द्वितीयां पुरोऽनुवाक्यामाह। "त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि" इति। जातं सर्वं जगद्वेदेति जातवेदाः, तथाविध हे अग्ने त्वमीडितो यजमानेन स्तुतः सन् तदी-

*"अस्मिन्" इत्यस्येह पितृयज्ञकर्मणीति व्याख्यावदनुमीयते किन्तु कस्मिन्नपि मूलेऽस्मिन्निति पदं नास्ति। केवलं भाष्यपदपाठविरुद्धः 'स्वामाभिन्दन्तः' इति पाठो दृश्यते। स्वामास्मिन् भिन्दन्त इति पाठश्चेदभविष्यत् तदा पदपाठादिविरोधमपरिहाय सभाष्यमूलसंगतिरभविष्यत्।

यानि हव्यानि सुरभीणि सुगन्धीनि कृत्वा अवाट् वहनं कृतवानसि, कृत्वा च पितृभ्यः प्रादाः, ते च पितरः स्वधया स्वधाकारेण प्रत्तं हव्यमक्षन् अदन्तु। हे देव त्वमपि प्रयता प्रयत्नसम्पादितानि हवींष्यद्धि भक्षय। अथ याज्या। "मातलीकव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः। यांश्च देवा वावृधुर्ये च देवान् स्वाहान्ये स्वधयान्ये मदन्ति" इति। मातलिरिन्द्रस्य सूतस्तद्वानिन्द्रो मातली, स च कव्यैः कव्यभाग्भिः पितृभिः सह वावृधानो वर्धमानो भवति। यमश्चाङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति। बृहस्पतिश्च ऋक्वभिः ऋक्प्रतिपाद्यैः पितृविशेषैः सह वर्धमानो भवति। तत्र देवा यान् कव्यभागादीन् पितॄन् वावृधुः वर्धयन्ति, ये च कव्यभागादयः पितरः इन्द्रादीन् देवान् वर्धयन्ति, तेषां मध्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण तृप्यन्ति। अन्ये पितरः स्वधया स्वधाकारेण तृप्यन्ति। अथाङ्गिरस्वतो यमस्य प्रथमां पुरोऽनुवाक्यामाह। "इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः। आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व" इति। हे यमाङ्गिरोभिरेतन्नामकैः पितृभिः संविदान ऐकमत्यं प्राप्तः इमं प्रस्तरं प्रस्तीर्णं यज्ञविशेषमासीद आगत्योपविश। हि यस्मादुपविशसि तस्मात् कविशस्ता विद्वद्भिः ऋत्विग्भिः प्रयुक्ता मन्त्रास्त्वामावहन्तु। हे राजन् एनाऽनेन हविषा तुष्टो मादयस्व यजमानं हर्षयस्व। अथ द्वितीयां पुरोऽनुवाक्यामाह। "अङ्गिरोभि-

रागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व। विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य" इति। हे यम वैरूपैर्विविधरूपयुक्तैर्वैरूपनामभिर्यैर्वा यज्ञियेभिर्यज्ञयोग्यैः अङ्गिरोभिः सह आगहि आगच्छ। आगत्य च इह मादयस्व यजमानं हर्षय। यस्ते तव पिता विवस्वानस्ति तं विवस्वन्तमस्मिन् यज्ञे हुवे आह्वयामि। स च बर्हिष्यस्मिन् यज्ञे आनिषद्य आगत्योपविश्य यजमानं हर्षयतु। अथ याज्यामाह। "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम" इति। अङ्गिरोनामका अथर्वनामका भृगुनामकाश्च नोऽस्माकं पितरः नवग्वा अभिनवगमनयुक्ताः तदा तदा नूतनवत् प्रीतिजनका इत्यर्थः। ते च सोम्यासः सोममर्हन्ति सोम्याः, यज्ञियानां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपि च सौमनसे सौमनस्यकारणे भद्रे कल्याणे फले स्याम सर्वदा तिष्ठेम॥

अथ विनियोगसंग्रहः।

उशन्तः सामिधेन्येका पितृयज्ञे महत्यसौ।
त्वं सोमेत्यनुवाक्ये द्वे पितृमन्नामके तथा॥
त्वं याज्याग्निष्वेति मन्थेऽनुवाक्या प्रथमा भवेत्।
बर्हिदे अनुवाक्ये तु याज्यैका बर्हिषद्यजौ॥
उपहोमा उदीरेति चयस्तत्रयथागके।
कव्यवाहनयागे तु अद्यग्रे तिस्र ईरिताः॥

पुरोऽनुवाक्ये द्वे तत्र याज्यैका याम्ययागके ।
इमं पुरोऽनुवाक्ये द्वे याज्यैका पूर्ववन्मता ।
अस्मिन्मे अनुवाकेऽस्मिन् मन्त्राः सप्तदशेरिताः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये द्वितीयकाण्डे षष्ठः प्रपाठकः सम्पूर्णः ॥ ० ॥

ॐ तत्सत् ॐ ॥

